॥ श्रीः ॥



# अभिधानसंग्रहः

नाम

## संस्कृतप्राचीनकोशग्रन्थसमुच्चयः ।

प्रथमः खण्डः ।

अत्र

अमरसिंहकृतं

## नामलिङ्गानुशासनम्

पुरुषोत्तमदेवकृताः

## त्रिकाण्डशेष-हारावली-एकाक्षरकोश-द्विरूपकोशाश्च

संगृह्यन्ते ।

काव्यमालासंपादक-पण्डितदुर्गाप्रसाद-काशीनाथाभ्याम्,
जयपुरराजकीयसंस्कृतपाठशालाध्यापकदाधीच-
पण्डितबदरिनाथात्मजपण्डितशिवदत्तेन च
संशोधितः ।

स च

शाके १८११ वत्सरे

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

मूल्यमेको रूप्यकः ।

# ABHIDHÂNA-SANGRAHA.

It is a matter of congratulation that vigorous efforts are latterly being made in all directions to rescue from obscurity old Sanskrit literary works. It does not, however, appear, that adequate attention is paid to rescuing those old Sanskrit Lexicons, which alone can furnish the real key to the store of knowledge contained in the old Sanskrit works. As these lexicons are written in verse, they can be easily got up by heart, and are readily accessible for use whenever wanted. It is thus a duty of every gentleman who feels pride in the ancient Sanskrit literature to have by him such valuable lexicons. Tradition ascribes the existence of 56 such lexicons*. Unfortunately a large number of these are remembered by name only. Fearing that the few which are at present obtainable, if not rescued in time, might share the fate of others, we have succeeded, with great difficulty, in collecting a large number of them and are trying hard to get hold of others. Instead of waiting till the whole collection of available works is complete, we think it would serve the public better to publish as many works as we have succeeded in laying our hands upon. If all the works we have, are published in one volume, it will take a long time, the book will be unwieldy, and the price very heavy. To suit the convenience of buyers, therefore, we propose to publish one work full at a time. If it happens to be too small for a volume, we shall issue two or three works together in a handy volume. The books will be printed on good paper and in good type. Notice will be given from time to time as the volumes are ready. The pages of each Lexicon will be numbered separately.

In accordance with the arrangement above indicated, the First Volume is already printed. It includes Nâmalingânus'âsana (Amarakos'a) by Amarasimha, and its supplement Trikâṇdas'esha, and Hârâvalî, Ekâksharakos'a and Dvirûpakos'a by Purushottamadeva. All the five are complete and the whole collection will cost Rupee 1, Postage annas 2.

The Second Volume will contain Four Lexicons, *viz*: Abhidhânachintâmaṇinâmamâlâ, Abhidhânachintâmaṇinâmamâlâparis'ishta, Anekârthasangraha, and Lingânus'âsana by Hemachandra.

Those gentlemen who want these books will kindly send their names and subscriptions to us, so that when the books are ready they will be immediately despatched.

TUKARAM JAVAJI,

Proprietor, Nirṇaya-Sâgara Press.

---

* From the list given elsewhere it will be seen that these Lexicons number more than 56.

THE

# ABHIDHÂNA-SANGRAHA

OR

A COLLECTION OF SANSKRIT ANCIENT LEXICONS.

## No. 1.

## THE NÂMALINGÂNUS'ÂSANA

OF

## AMARASIMHA.

EDITED BY


PAṆDIT DURGÂPRASÂD,

KÂS'ÎNÂTH PÂṆDURANG PARAB

AND

PAṆDIT S'IVADATTA.



PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE NIRNAYA-SÂGARA PRESS.

BOMBAY.

1889.

*Price 7 Annas.*


2

॥ श्रीः ॥

# अभिधानसंग्रहः

नाम

## संस्कृतप्राचीनकोशग्रन्थसमुच्चयः ।

तत्र

(१)

अमरसिंहकृतं

## नामलिङ्गानुशासनम् ।

काव्यमालासंपादक-पण्डितदुर्गाप्रसाद-काशीनाथाभ्याम्,
जयपुरराजकीयसंस्कृतपाठशालाध्यापकदाधीच-
पण्डितबदरिनाथात्मजपण्डितशिवदत्तेन च
संशोधितम् ।

तच्च

शाके १८११ वत्सरे

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

मूल्यं ७ आणकाः ।

# नामलिङ्गानुशासनस्य विषयानुक्रमः ।

## प्रथमं काण्डम् ।



## द्वितीयं काण्डम् ।



## तृतीयं काण्डम् ।

# अमरसिंहः ।

अयं नामलिङ्गानुशासनप्रणेतामरसिंहः कदा कुत्र समुत्पन्न इत्यद्यापि न निश्चेतुं शक्यते । तत्र 'धन्वन्तरिक्षपणकामरसिंहशङ्कु–' इत्यादि नवरत्नश्लोकं ज्योतिर्विदाभरणान्तिमाध्यायस्थं पश्यन्तः खिस्ताब्दारम्भात्प्राक् प्रथमे शतकेऽमरसिंहसत्तां बहवः समर्थयन्ते । विल्सन्पण्डितः स्वकीयसंस्कृताभिधानस्य (१८१९ मिते खिस्ताब्दे मुद्रितस्य) भूमिकायां पञ्चशतमिते खिस्ताब्देऽमरसिंह आसीदिति स्थिरीकरोति । डॉक्टर् केर्न् नाम्ना विदुषा बृहत्संहितोपोद्घाते वराहमिहिरामरसिंहौ समकालिकौ, खिस्ताब्दीयषष्ठशतकपूर्वार्धसमुद्भूतौ चेति निर्णीतम् । वेबरपण्डितस्तु अमरकोषातिरिक्ताः सर्वेऽपि कोषाः खिस्ताब्दीयैकादशद्वादशशतकाधस्तना एव समुपलभ्यन्ते, अतोऽमरकोषोऽपि तेभ्यो नातिप्राचीनो भवितुमर्हतीति 'हिस्टरी ऑव् इण्डियन् संस्कृत लिटरेचर्' नाम्नि ग्रन्थे वदति । एवं संदिग्ध एवाद्याप्यमरकोषस्य समयः । सांप्रतमुपलभ्यमाने कोषकलापे नैकोऽप्यमरकोषात्प्राचीन इति सर्वसंमतम् । किं त्वासन्केचन कोषा अमरसिंहात्प्रागपि, 'समाहृत्यान्यतन्त्राणि' इति तदुक्तेः । अयममरसिंहो बौद्ध आसीदित्यनुमीयते, यतोऽनेनामरकोषे देवदैत्यसामान्यनामान्युक्त्वानन्तरं शिवविष्ण्वादिनामान्युपेक्ष्य 'सर्वज्ञः सुगतो बुद्धः' इत्यादि बुद्धनामान्येव वक्तुमुपक्रान्तानि । यथा हेमचन्द्रेण स्वकोषे जिननामानि । वैदिकमतानुयायी ब्राह्मणस्तु कदापि नैवं कुर्यात् ।

अग्निपुराणेऽमरकोषेण प्रायः समानः कोषः समुपलभ्यते । अतोऽग्निपुराणादेवामरसिंहेन समुद्धृतः संस्कृतश्चेति पुराणश्रद्धालवः । बहुशास्त्रसारभूतमग्निपुराणं निर्मित्सुना केनचन विदुषा कोषभागेऽमरकोषादेव सारमुद्धृत्य किंचित्परिवर्त्य स्थापितमिति तु नवीनविज्ञानविकासितबुद्धयः । एवमन्यपुराणेष्वपि दृश्यते । यथा वात्स्यायनीयकामसूत्रस्य भार्याधिकारिकमधिकरणमनुष्टुप्श्लोकबद्धं भविष्यपुराणे समुपलभ्यते । तत्र तत्तद्ग्रन्थकर्तृभिः पुराणेभ्यो विषय उद्धृतः, आहोस्वित्पुराणकर्तृभिस्तत्तद्ग्रन्थेभ्य इति संदिग्धम् । सांप्रतमुपलभ्यमानानि पुराणानि तु नाम्नैव पुराणानि, वस्तुतस्त्वर्वाचीनान्येव ।

तत्राग्निपुराण इत्थं कोषक्रमः—

| | | | | |
|---|---|---|---|---|
| ३५९ | अध्याये | स्वर्गपातालादिवर्गाः । | श्लोकाः | ८२ |
| ३६० | ,, | अव्ययवर्गाः । | ,, | ३८ |
| ३६१ | ,, | नानार्थवर्गाः । | ,, | ४० |
| ३६२ | ,, | भूमिवनौषध्यादिवर्गाः । | ,, | ७८ |
| ३६३ | ,, | नृवर्गः । | ,, | २९ |
| ३६४ | ,, | ब्रह्मवर्गः । | ,, | ११ |
| ३६५ | ,, | क्षत्रविट्शूद्रवर्गाः । | ,, | ४८ |
| ३६६ | ,, | सामान्यनामलिङ्गानि । | ,, | २७ |

एवमष्टस्वध्यायेषु ३५३ श्लोकात्मकः कोषो वर्तते ।

अमरकोषस्यातीव प्रचरितत्वात्तत्तद्देशेषु टीका अपि भूयस्यस्तस्य पण्डितैः प्रणीता विद्यन्ते । तासां नामानि सर् राजा राधाकान्तदेवबहादुरप्रणीतशब्दकल्पद्रुमोपोद्घाते, आनन्दराम बडुयाभिधेन विदुषा प्रणीते नानार्थसंग्रहोपोद्घाते, मुद्रितेषु नानाविधेषु सूचीपत्रेषु च प्राप्यन्ते । तानि कर्तृनामसमेतानि प्रदर्श्यन्ते । यथा—

| | |
|---|---|
| १ अच्युतोपाध्यायः .... .... .... .... .... | व्याख्याप्रदीपः । |
| २ अभिनन्दः .... .... .... .... .... ... | |
| ३ अरुणः .... .... .... .... .... .... | |
| ४ कलिङ्गः .... .... .... .... .... .... | |
| ५ काशीनाथः .... .... .... .... .... .... | काशिका । |
| ६ कोक्कटः .... .... .... .... .... .... | |
| ७ को[ला]हलाचार्यः .... .... .... .... .... | |
| ८ क्षीरस्वामी .... .... .... .... .... .... | अमरकोशोद्घाटनम् । |
| ९ गोवर्धनः .... .... .... .... .... .... | |
| १० जयादित्यः .... .... .... .... .... .... | |
| ११ द्राविडः .... .... .... .... .... .... | |
| १२ नयनानन्दः .... .... .... .... .... .... | कौमुदी । |
| १३ नारायणचक्रवर्ती .... .... .... .... .... | पदार्थकौमुदी । |
| १४ नारायणविद्याविनोदः .... .... .... .... | शब्दार्थसंदीपिका । |
| १५ नारायणवेदान्तवागीशः .... .... .... .... | अमरपञ्जिका । |
| १६ नीलकण्ठः .... .... .... .... .... .... | सुबोधिनी । |
| १७ परमानन्दमैथिलः .... .... .... .... .... | अमरचन्द्रिका । |
| १८ भगीरथः .... .... .... .... .... .... | |
| १९ भरतमल्लिकः .... .... .... .... .... | मुग्धबोधिनी । |
| २० भानुजीदीक्षितः (रामाश्रमः) .... .... .... | व्याख्यासुधा । |
| २१ भोजराजः.... .... .... .... .... .... | |
| २२ मथुरेशविद्यालंकारः .... .... .... .... | सारसुन्दरी (शारदासुन्दरी) । |
| २३ मल्लिनाथः.... .... .... .... .... .... | |
| २४ महादेववेदान्ती (स्वयंप्रकाशशिष्यः) .... .... | बुधमनोहरा (विद्वन्मनोहरा) । |
| २५ महेश्वरः .... .... .... .... .... .... | अमरविवेकः । |
| २६ माधवः .... .... .... .... .... .... | माधवी (मधुमाधवी ?) । |
| २७ मुकुटः (रायमुकुटः) .... .... .... .... | पदचन्द्रिका । |
| २८ रघुनाथचक्रवर्ती .... .... .... .... .... | त्रिकाण्डचिन्तामणिः । |

२९ रमानाथविद्यावाचस्पतिः .... .... .... .... त्रिकाण्डविवेकः ।
३० रमेश्वरः .... .... .... .... .... .... प्रदीपमञ्जरी ।
३१ राजदेवः .... .... .... .... .... .... ....
३२ रामतर्कवागीशः .... .... .... .... .... ....
३३ रामकृष्णदीक्षितः .... .... .... .... .... पीयूषम् ।
३४ रामनाथः .... .... .... .... .... .... ....
३५ रामप्रसादतर्कालंकारः .... .... .... .... वैषम्यकौमुदी ।
३६ रामस्वामी .... .... .... .... .... .... ....
३७ लिङ्गयसूरिः .... .... .... .... .... पदविवृतिः ।
३८ लोकनाथः .... .... .... .... .... .... पदमञ्जरी ।
३९ .... .... .... .... .... .... .... व्याख्यामृतम् ।
४० शबरस्वामी .... .... .... .... .... ....
४१ .... .... .... .... .... .... .... संदेहभञ्जिका ।
४२ सर्वधरः .... .... .... .... .... .... ....
४३ सर्वानन्दः (वन्दिघाटीयः) .... .... .... .... टीकासर्वस्वम् ।
४४ सुभूतिः .... .... .... .... .... .... ....
४५ सौगतमुनिः .... .... .... .... .... ....
४६ हट्टचन्द्रः .... .... .... .... .... .... ....
४७ हरदत्तः .... .... .... .... .... .... ....

एतेषु टीकाकर्तृनामसु कानिचित्संदिग्धानि सन्ति । कानिचिच्च पुनरुक्तान्यपि भान्ति ।

एतदतिरिक्ताः कर्णाट-काश्मीर-तिबेट-तेलङ्ग-महाराष्ट्रादिभाषानिबद्धास्तत्तद्देशोपयोगिन्योऽन्या अप्यमरकोषटीका वर्तन्ते । अमरकोषमपहायान्यः कोऽपि ग्रन्थोऽमरसिंहप्रणीतो नोपलभ्यते । मुकुटस्तु स्वटीकायां बृहदमरकोषमपि मुहुः स्मरति । सोऽप्यमरसिंहप्रणीत एव स्यादिति प्रतीयते । अथ च बौद्धश्रीधरदाससंकलिते सदुक्तिकर्णामृते 'प्रयोगव्युत्पत्तौ प्रतिपदविशेषार्थकथने प्रसत्तौ गाम्भीर्ये रसवति च काव्यार्थरचने । अगम्यायामन्यैर्दिशि परिणतेरर्थवचसोर्मतं चेदस्माकं कविरमरसिंहो विजयते ॥' इत्यमरसिंहप्रशंसापद्यं शालिकनाथनाम्ना समुद्धृतमस्ति । अथ च 'असंज्ञाः खल्वेते जलशिखिमरुद्धूमनिचयाः प्रकृत्या गर्जन्ति त्वयि तु भुवनं निर्मदमदः । प्रसीद प्रारम्भाद्विरम विनयेथाः क्रुधमिमं हरे जीमूतानां ध्वनिरयमुदीर्णो न करिणाम् ॥ कुचौ धत्तः कम्पं निपतति कपोलः करतले निकामं निःश्वासः सरलमलकं ताण्डवयति । दृशः सामर्थ्यानि स्थगयति मुहुर्बाष्पसलिलं प्रपञ्चोऽयं किंचित्तव सखि हृदिस्थं कथयति ॥ तोयं निर्मथितं घृताय मधुने निष्पीडितः प्रस्तरः पानार्थं मृगतृष्णिकोर्मितरला भूमिः समालोकिता । दुग्धा सेयमचेतनेन जरती दुग्धाशया सूकरी कष्टं यत्खलु दीर्घया धनतृषा नीचो जनः सेवितः ॥ ये कल्लोलैश्चिरमनुगता दक्षिणस्याम्बुराशेः पीतोच्छिष्टास्तदनु

मलये भोगिभिश्चन्दनस्थैः । अन्तर्भ्रान्ताः प्रतिकिसलयं पुष्पितानां लतानां संप्राप्तास्ते विरहशिखिनो गन्धवाहाः सहायाः ॥ सोऽनङ्गः कुसुमानि पञ्च विशिखाः पुष्पाणि बाणासनं स्वच्छन्दच्छिद्रुरा मधुव्रत-मयी पङ्क्तिर्गुणः कार्मुके । एतत्साधन उत्सहेत स जगज्जेतुं कथं मन्मथस्तस्यामोघममूर्भवन्ति नहि चेदस्त्रं कुरङ्गीदृशः ॥' एतत्पद्यपञ्चकमपि तत्रैवामरसिंहनाम्ना समुद्धृतमस्ति । तेन किमपि काव्यम-प्यमरसिंहेन प्रणीतं स्यात् । अथवा काव्यकर्ता कश्चिदन्योऽप्यमरसिंहः स्यादित्यपि भाति । काव्यक-ल्पलता-बालभरतयोः कर्ता त्वमरचन्द्रः श्वेताम्बरजैनोऽस्त्यर्वाचीनश्चेत्यपि ज्ञेयम् ।

अस्माभिस्त्वत्र क्षीरस्वामि-मुकुट-भानुदीक्षित-वेदान्तिमहादेवकृतटीकाभ्योऽमरकोषोद्घाटन-पदचन्द्रि-का-व्याख्यासुधा-बुधमनोहराभ्य एव पाठान्तराणि धृतानि सन्तीति ज्ञेयम् ॥



|| श्रीः ||

# अभिधानसंग्रहः ।

## (१)

अमरसिंहकृतं

## नामलिङ्गानुशासनम् ।

### प्रथमं काण्डम् ।

यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः । सेव्यतामक्षयो धीराः स श्रिये चामृताय च ॥ १

समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः । संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २

प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् । स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ३

भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः । कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥ ४

त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति । निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥ ५

---

स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः । सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥ ६

अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः । सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७

आदितेया दिविषदो लेखा अदितिनन्दनाः । आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ॥ ८

बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः । वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥ ९

आदित्यविश्ववसवस्तुषिताभास्वरानिलाः । महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥ १०

विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनराः । पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥ ११

असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः । शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥ १२

सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः । समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः ॥ १३

षडभिज्ञो दशबलोऽद्वयवादी विनायकः । मुनीन्द्रः श्रीघनः शास्ता मुनिः शाक्यमुनिस्तु यः ॥ १४

स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः । गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ॥ १५

ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः । हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः ॥ १६

धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः । स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः ॥[८] १७

विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः । दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ १८

दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः । पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ॥ १९

---

१ 'त्रिपिष्टपम्'. २ 'दिवोकसः'. ३ 'गीर्बाणाः'. ४ 'आसुराः'. ५ 'बुधः'. ६ 'द्रुघणः'. ७ 'विरिञ्चः'. ८ एतदग्रे 'नाभिजन्माण्डजः पूर्वोऽनिधनः कमलोद्भवः । सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः ॥' इति प्रक्षिप्तं क्वचित्. ९ 'नरायणः.' १० 'विश्वक्सेनः'.

4

उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः । पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ २०
देवकी[1]नन्दनः शौरिः[2] श्रीपतिः पुरुषोत्तमः । वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥ २१
विश्वंभरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः[3] ।[4] वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ॥ २२
बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः । रेवतीरमणो रामः कामपालो हलायुधः ॥ २३
नीलाम्बरो रौहिणेयस्तालाङ्को मुसली[5] हली । संकर्षणः सीरपाणिः कालिन्दीभेदनो बलः ॥ २४
मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः । कंदर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ॥ २५
शम्बरारि[6]र्मनसिजः कुसुमेषुरनन्यजः । पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥ २६
ब्रह्मसूर्विश्वकेतुः[7] स्यादनिरुद्ध उषापतिः[8] । लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥[9] २७
शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनः[10] । कौमोदकी[11] गदा खड्गो नन्दकः कौस्तुभो मणिः ॥[12] २८
गरुत्मान्गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः । नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ २९
शंभुरीशः पशुपतिः शिवः शूली महेश्वरः । ईश्वरः शर्व[13] ईशानः शंकरश्चन्द्रशेखरः ॥ ३०
भूतेशः खण्डपरशु[14]र्गिरीशो गिरिशो मृडः । मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ ३१
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् । वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥ ३२
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः । हरः स्मरहरो भर्ग[15]स्त्र्यम्बकस्त्रिपुरान्तकः ॥ ३३
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः । व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥[16] ३४
कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं[17] धनुः । प्रमथाः स्युः पारिषदा[18] ब्राह्मी[19]त्याद्यास्तु मातरः ॥ ३५
विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा । उमा कात्यायनी गौरी काली[20] हैमवतीश्वरा[21] ॥ ३६
शिवा[22] भवानी रुद्राणी शर्वाणी सर्वमङ्गला । अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ॥[23] ३७
विनायको विघ्नराजद्वैमातुरगणाधिपाः । अप्येकदन्तहेरम्बलम्बोदरगजाननाः ॥ ३८
कार्तिकेयो महासेनः शरजन्मा षडाननः । पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ३९
बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः । षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥[24] ४०
इन्द्रो मरुत्वान्मघवा विडौजाः[25] पाकशासनः । वृद्धश्रवाः सुनासीरः[26] पुरुहूतः पुरंदरः ॥ ४१
जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः । सुत्रामा[27] गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥ ४२

---

१ 'दैवकीनन्दनः'. २ 'सौरिः'.. ३ 'श्रीवत्सोऽपि' इति मुकुटः. ४ एतदग्रे 'पुराणपुरुषो यज्ञपुरुषो नरकान्तकः । जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः ॥' इति प्रक्षिप्तम्. ५ 'मुषली'. ६ 'संवरारिः'. ७ क्वचित् 'ऋश्यकेतुः' इति पाठः—इति मुकुटः, 'विश्वकेतुः' इत्यपपाठः—इति क्षीरस्वामी. ८ 'ऊषापतिः'. ९ एतदग्रे 'इन्दिरा लोकमाता मा क्षीरोदतनया रमा । भार्गवी लोकजननी क्षीरसागरकन्यका ॥' इति प्रक्षिप्तम्. १० 'सुदर्शनः पुंसि' इति क्षीरस्वामी, 'क्लीबत्वं च' इति मुकुटः. ११ संहितासु मेण्ठादौ 'कौपोदकी' इति पाठः—इति स्वामी. १२ एतदग्रे 'चापः शार्ङ्गं मुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम् । अश्वाश्च शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः ॥' इति प्रक्षिप्तम्. १३ 'सर्वः'. १४ 'खण्डपर्शुः'. १५ 'भर्ग्यः'. १६ एतदग्रे 'अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः' इति प्रक्षिप्तम्. १७ 'अजकवम्', 'आजगवम्', 'अजकावम्'. १८ 'पारिषद्याः'. १९ 'ब्रह्माण्याद्याः' इति स्वामिसंमतः पाठः. २० 'काला'. २१ 'ईश्वरी'. २२ 'पुंयोगे शिवी' इति स्वामी. २३ एतदग्रे 'आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा' इति प्रक्षिप्तम्. २४ एतदग्रे 'शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः । कर्ममोटी तु चामुण्डा चर्ममुण्डा तु चर्चिका ॥' इति प्रक्षिप्तम्. २५ 'विडोजाः'. २६ 'शुनाशीरः', 'शुनासीरः'. २७ 'सूत्रामा'.

वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः । जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४३
संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः । आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया ॥ ४४
पुलोमजा [1]शचीन्द्राणी नगरी त्वमरावती । हय उच्चैःश्रवाः सूतो मातलिर्नन्दनं वनम् ॥ ४५
स्यात्प्रासादो वैजयन्तो जयन्तः पाकशासनिः । ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ॥ ४६
ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः । शतकोटिः स्वरुः [2]शम्बो दम्भोलिरशनिर्द्वयोः ॥ ४७
व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः । स्यात्[3]सुधर्मा देवसभा पीयूषममृतं सुधा ॥ ४८
मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका । मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ४९
पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ ५०
सनत्कुमारो वैधात्रः स्वर्वैद्यावश्विनीसुतौ । नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ॥ ५१
स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः । [4]हाहा [5]हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ॥ ५२
अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः । कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५३
[6]बर्हिः [7]शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः । [9]आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥ ५४
रोहिताश्वो [10]वायुसखा शिखावानाशुशुक्षणिः । हिरण्यरेता हुतभुग्दहनो हव्यवाहनः ॥ ५५
सप्तार्चिर्[11][12]दमुनाः शुक्रश्चित्रभानुर्विभावसुः । शुचिरप्पित्तमौर्वस्तु वाडवो वडवानलः ॥ ५६
वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् । त्रिषु स्फुलिङ्गोऽग्निकणः संतापः संज्वरः समौ ॥[13] ५७
धर्मराजः पितृपतिः समवर्ती परेतराट् । कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ॥ ५८
कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः । राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः ॥ ५९
रात्रिंचरो रात्रिचरः कर्बुरो निकषात्मजः । यातुधानः पुण्यजनो नैरृतो यातुरक्षसी ॥ ६०
प्रचेता वरुणः पाशी यादसांपतिरप्पतिः । श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६१
पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः । समीरमारुतमरुज्[15]जगत्प्राणसमीरणाः ॥ ६२
नभस्वद्[16]वातपवनपवमानप्रभञ्जनाः ।[17] प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ ६३
शरीरस्था इमे रंहस्तरसी तु रयः स्यदः । जवोऽथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥ ६४
सत्वरं चपलं तूर्णमविलम्बितमाशु च । सततानारताश्रान्तसंततविरतानिशम् ॥ ६५
नित्यानवरताजस्रमप्यथातिशयो भरः । अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥ ६६
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च । क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां [18]सत्त्वगामि यत् ॥ ६७
कुबेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वरः । मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८
किंनरेशो वैश्रवणः पौलस्त्यो नरवाहनः । यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः ॥ ६९
अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः । कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ॥ ७०

---

१ 'शचिः', 'सचिः', 'सची'. २ 'सम्बः'. ३ नान्तः, आबन्तोऽपि. ४ 'हाहस्', 'हहा'. ५ 'हुहुः'. ६ शन्नन्तोऽपि, 'दान्तः' इति रामदासटीका. ७ इदन्तः, सान्तोऽपि, समस्तं नान्तम्. ८ अदन्तोऽपि. ९ 'आ-शयाशोऽपि'. १० 'वायुसखोऽपि'. ११ 'दमूनाः'. १२ सान्ता, इदन्तापि. १३ एतदग्रे 'उल्का स्यान्निर्गतज्वाला भूतिर्भसितभस्मनि । क्षारो रक्षा च दावस्तु दवो वनहुताशनः ॥' इति प्रक्षिप्तम्. १४ दन्त्यमध्यः, तालव्यमध्योऽपि. १५ 'जगत्-प्राणौ' पृथगपि. १६ 'वातिरपि.' १७ एतदग्रे 'प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः' इति प्रक्षिप्तम्. १८ 'भेद्यगामि.'

स्यात्किंनरः किंपुरुषस्तुरंगवदनो मयुः । निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेः ॥ ७१

इति स्वर्गवर्गः ॥ १ ॥

---

द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् । नभोऽन्तरीक्षं[1] गगनमनन्तं सुरवर्त्म खम् ॥ ७२
वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ॥[2] ७३

इति व्योमवर्गः ॥ २ ॥

---

दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः । प्राच्यवाची[3]प्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ॥ ७४
उत्तरा दिगुदीची स्याद्दिश्यं तु त्रिषु दिग्भवे ।[4] इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ ७५
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।[5] ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ७६
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः । करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् ॥ ७७
ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती । क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक्स्त्रियाम् ॥ ७८
अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम् । अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ७९
धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत् । घनजीमूतमुदिरजलमुग्धूमयोनयः ॥ ८०
कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम् । स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ॥ ८१
[6]शंपाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा । तडित्सौदामनीविद्युच्चञ्चलाचपला अपि ॥ ८२
स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरंमदः । इन्द्रायुधं शक्रधनुस्तदेव ऋजुरोहितम् ॥ ८३
वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ । धारासंपात आसारः शीकरोऽम्बुकणाः स्मृताः ॥ ८४
वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् । अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ॥ ८५
अपिधानतिरोधानपिधानाच्छादनानि च । हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ ८६
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः । अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ८७
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः । कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु ॥ ८८
भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके । चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ॥ ८९
कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् । सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्छविः ९०
अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् । प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः ॥ ९१
शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः । तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥ ९२
ध्रुव औत्तानपादिः स्यादगस्त्यः कुम्भसंभवः । मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी ॥ ९३
नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् । दाक्षायण्योऽश्विनीत्यादितारा अश्वयुगश्विनी ॥ ९४
राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया । समा धनिष्ठाः स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः ॥ ९५
मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी । इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः ॥ ९६

---

१ 'अन्तरिक्षम्'. २ एतदग्रे 'विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम् । तारापथोऽन्तरिक्षं च मेघाध्वा च महाबिलम् ॥' इति प्रक्षिप्तम्. ३ 'अपाची'. ४ एतदग्रे 'अवाग्भवमवाचीनमुदीचीनमुदग्भवम् । प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु ॥' इति प्रक्षिप्तम्. ५ एतदग्रे 'रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः । बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः ॥' इति प्रक्षिप्तम्. ६ 'शम्पा' इति प्राच्याः—इति स्वामी. ७ 'निष्पेषः'. ८ 'चन्दः'. ९ 'सोमा' नान्तोऽपि. १० 'इन्वकाः' इति स्वामी.

बृहस्पतिः सुराचार्यो गीर्पतिर्धिषणो गुरुः । जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ॥ ९७
शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः । अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥ ९८
रौहिणेयो बुधः सौम्यः समौ सौरिशनैश्चरौ । तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुंतुदः ॥ ९९
सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः । राशीनामुदयो लग्नं ते तु मेषवृषादयः ॥ १००
सूरः[1] सूर्यार्यमादित्यद्वादशात्मदिवाकराः । भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ १०१
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः । विकर्तनार्कमार्तण्ड[2]मिहिरारुणपूषणः ॥ १०२
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः । विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ १०३
भानुर्हंसः सहस्रांशुस्तपनः[3] सविता रविः ।[4] माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः ॥ १०४
सूरसूतोऽरुणोऽनूरुः काश्यपि[5]र्गरुडाग्रजः । परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ १०५
किरणोस्रमयूखांशुगभस्तिघृणि[6]धृष्णयः । भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥ १०६
स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः । रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः १०७
कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति । तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका ॥ १०८

इति दिग्वर्गः ॥ ३ ॥

---

कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिः । प्रतिपद्द्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः ॥ १०९
घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ । प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥[7] ११०
प्रभातं च दिनान्ते तु सायः[8] संध्या पितृप्रसूः । प्राह्णापराह्णमध्याह्नास्त्रिसंध्यमथ शर्वरी[9] ॥ १११
निशा निशीथिनी रात्रि[10]स्त्रियामा क्षणदा क्षपा । विभावरीतमस्विन्यौ रजनी[11] यामिनी तमी[12] ॥ ११२
तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता । आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ॥ ११३
गणरात्रं निशा बह्व्यः प्रदोषो रजनीमुखम् । अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ ॥ ११४
स पर्वसंधिः प्रतिपत्पञ्चदश्योर्यदन्तरम् । पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा ॥ ११५
कलाहीने सानुमतिः पूर्णे राका निशाकरे । अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः ॥ ११६
सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः । उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ११७
सोपप्लवोपरक्तौ द्वावग्न्युत्पात उपाहितः । एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ॥ ११८
अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला । तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ११९
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च । पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥ १२०
द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनं त्रिभिः । अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ १२१
समरात्रिंदिवे काले विषुवद्विषुवं च तत् ।[13] मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १२२

---

१ ‘शूरः’ तालव्यादिरपि. २ ‘मार्तोण्डः’. ३ ‘तापनः.’ ४ एतदग्रे ‘पद्माक्षस्तेजसां राशिश्छायानाथस्तमिस्रहा। कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ॥ प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः । इनो भागो धामनिधिश्चांशुमाल्यब्जिनीपतिः ॥’ इति प्रक्षिप्तम्. ५ ‘काश्यपः’ इति सभ्यः पाठः—इति क्षीरस्वामी. ६ ‘वृष्णिः’ इत्येके—इति स्वामी, ‘धृष्णिः’ इति मुकुटः. ७ एतदग्रे ‘व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते’ इति प्रक्षिप्तम्. ८ निर्यकारापि. ९ ‘शार्वरी’. १० ‘रात्री’. ११ ‘रजनिः’. १२ ‘तमा’. १३ एतदग्रे ‘पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा । नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥’ इति प्रक्षिप्तम्.

पौषे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने । स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः॥१२३
वैशाखे माधवो राधो ज्यैष्ठे[1] शुक्रः शुचिस्त्वयम् । आषाढे[2] श्रावणे तु स्यान्नभाः श्रावणिकश्च सः १२४
स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः । स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यात्तु कार्तिके ॥ १२५
बाहुलोर्जौ कार्तिकिको हेमन्तः शिशिरोऽस्त्रियाम् । वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म उष्मकः॥१२६
निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः[3] । स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम्॥१२७
षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् । संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः॥१२८
मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः । दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ॥ १२९
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः । संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥ १३०
अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम् । कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम् ॥ १३१
स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः । मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ॥ १३२
स्यादानन्दथुरानन्दः शर्मसातसुखानि च । श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ १३३
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् । शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥ १३४
मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः ॥ १३५
दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः । हेतुर्ना कारणं बीजं निदानं त्वादिकारणम् ॥ १३६
क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् । विशेषः कालिकोऽवस्था गुणाः सत्त्वं रजस्तमः[4]१३७
जनुर्जननजन्मानि[5] जनिरुत्पत्तिरुद्भवः । प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥ १३८
जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता । चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः॥१३९

इति कालवर्गः ॥ ४ ॥

बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः । प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥ १४०
धीर्धारणावती मेधा संकल्पः कर्म मानसम् ।[8] चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा ॥[9] १४१
अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः । संदेहद्वापरौ चाथ समौ निर्णयनिश्चयौ ॥ १४२
मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तनम् । समौ सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः १४३
संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः । अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ १४४
मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः । मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ १४५
मोक्षोऽपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियाम् । रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ॥ १४६
गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम् । कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम्॥१४७
तुवरस्तु[10] कषायोऽस्त्री मधुरो लवणः कटुः । तिक्तोऽम्लश्च[11] रसाः पुंसि तद्वत्सु षडमी त्रिषु॥१४८
विमर्दोत्थे परिमलो गन्धे जनमनोहरे । आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात् ॥ १४९
समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः । इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः ॥ १५०
पूतिगन्धिस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत् । शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ॥ १५१

---

१ 'ज्येष्ठः'. २ 'अषाढे'. ३ अदन्तः. ४ 'एनः' सान्तम्. ५ तालव्यादिरपि. ६ 'रज-तमौ' अदन्तावपि. ७ 'जन्मोऽदन्तोऽपि' इत्युणादौ. ८ एतदग्रे 'अवधानं समाधानं प्रणिधानं तथैव च' इति प्रक्षिप्तम्. ९ एतदग्रे 'विमर्शो भावना चैव वासना च निगद्यते' इति प्रक्षिप्तम्. १० 'तूवरः', 'कुवरः'. ११ 'ब-ल-संयोगवान्' इति मुकुटः. १२ हलन्तोऽपि.

अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः। हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः॥ १५२
कृष्णे नीलासितश्यामकालश्यामलमेचकाः। पीतो गौरो हरिद्राभः पालाशो हरितो हरित्॥ १५३
लोहितो रोहितो रक्तः शोणः कोकनदच्छविः। अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः॥ १५४
श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते। कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ॥ १५५
चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे। गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति॥ १५६

इति धीवर्गः॥ ५॥

---

ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती। व्याहार उक्तिर्लपितं भाषितं वचनं वचः॥ १५७
अपभ्रंशोऽपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः। तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता॥
श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः। स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी॥ १५९
शिक्षेत्यादि श्रुतेरङ्गमोंकारप्रणवौ समौ। इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्वराः॥ १६०
आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः। आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम्॥ १६१
प्रबन्धकल्पना कथा प्रवह्लिका प्रहेलिका। स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः॥ १६२
समस्या तु समासार्था किंवदन्ती जनश्रुतिः। वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः॥ १६३
आख्याह्वे अभिधानं च नामधेयं च नाम च। हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता॥ १६४
विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम्। उपोद्घात उदाहारः शपनं शपथः पुमान्॥ १६५
प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे। मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम्१६६
अभिशापः प्रणादस्तु शब्दः स्यादनुरागजः। यशः कीर्तिः समज्या च स्तवः स्तोत्रं नुतिः स्तुतिः॥
आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा। काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः॥१६८
अवर्णाक्षेपनिर्वादपरीवादापवादवत्। उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे॥ १६९
पारुष्यमतिवादः स्याद्भर्त्सनं त्वपकारगीः। यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्॥ १७०
तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति। स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः॥ १७१
अनुलापो मुहुर्भाषा विलापः परिदेवनम्। विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः॥ १७२
सुप्रलापः सुवचनमपलापस्तु निह्नवः।[४] संदेशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे॥ १७३
रुशती[५] वागकल्याणी स्यात्कल्या तु शुभात्मिका। अत्यर्थमधुरं सान्त्वं संगतं हृदयंगमम्॥ १७४
निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये। सत्येऽथ संकुलक्लिष्टे परस्परपराहते॥ १७५
लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम्। अम्बूकृतं सनिष्ठेवम[६]बद्धं[७]स्यादनर्थकम्[८]॥ १७६
अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम्।[९] अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः॥ १७७
सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति। शब्दे निनादनिनदध्वनिध्वानरवस्वनाः॥ १७८

---

१ 'गौः' इति पाठः—इति बुधमनोहरा. २ 'त्वसमासार्था' इत्यपि पाठः इति तु पूर्वटीकाकाराः। वयं तु 'समासार्था' इति पाठमेव क्षीरस्वामि-हट्टचन्द्र-कोक्कटादौ प्रायेणामरकोषेऽपि दृष्टवन्तः, अतस्तमेव बहु मन्यामहे—इति मुकुटः. ३ 'समशा' इति मुकुटे पुरुषोत्तमः, 'समाशा' इति स्वामी. ४ एतदग्रे 'चोद्यमाक्षेपाभियोगौ शापाक्रोशौ दुरेषणा। अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम्॥' इति प्रक्षिप्तम्. ५ 'उषती'. ६ 'सनिष्ठीवम्'. ७ 'अवध्यम्'. ८ 'अपार्थकम्.' ९ एतदग्रे 'सोल्लुण्ठनं तु सोत्प्रासं मणितं रतिकूजितम्। श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम्॥' इति प्रक्षिप्तम्.

स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः । आरवारावसंरावविरावा अथ मर्मरः ॥ १७९
स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम् । निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ॥ १८०
वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः । कोलाहलः कलकलस्तिरश्चां वाशितं रुतम् ॥ १८१
स्त्री प्रतिश्रुत्प्रतिध्वाने गीतं गानमिमे समे ॥ १८२

इति शब्दादिवर्गः ॥ ६ ॥

निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १८३
काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे । कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ॥[1] १८४
समन्वितलयस्त्वेकतालो वीणा तु वल्लकी । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ १८५
ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ १८६
चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् । मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ॥ १८७
स्याद्यशःपटहो ढक्का भेरी[3] स्त्री दुन्दुभिः पुमान् । आनकः पटहोऽस्त्री स्यात्कोणो वीणादिवादनम् ॥
वीणादण्डः प्रवालः स्यात्ककुभस्तु प्रसेवकः । कोलम्बकस्तु कायोऽस्या उपनाहो निबन्धनम् ॥ १८९
वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः । मर्दलः प्रणवो[4]ऽन्ये च नर्तकीलासिके समे ॥ १९०
विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् । तालः कालक्रियामानं लयः साम्यमथास्त्रियाम् ॥ १९१
ताण्डवं नटनं नाट्यं लास्यं नृत्यं[5] च नर्तने । तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ॥ १९२
भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः । स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका ॥ १९३
भगिनीपतिरावुत्तो भावो विद्वानथावुकः । जनको युवराजस्तु कुमारो भर्तृदारकः ॥ १९४
राजा भट्टारको देवस्तत्सुता भर्तृदारिका । देवी कृताभिषेकायामितरासु तु भट्टिनी ॥ १९५
अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु राष्ट्रियः । अम्बा माताथ बाला स्याद्वासूरार्यस्तु मारिषः[6] ॥ १९६
अत्तिका[7] भगिनी ज्येष्ठा निष्ठानिर्वहणे समे । हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति ॥ १९७
अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ । निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥ १९८
शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः । बीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः ॥ १९९
उत्साहवर्धनो वीरः कारुण्यं करुणा घृणा । कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो हसः ॥ २००
हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम् । विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ॥ २०१
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् । भयंकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु ॥ २०२
चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम् । विकारो मानसो भावोऽनुभावो भावबोधकः ॥ २०३
गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः ।[8] अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २०४
रीढावमाननावज्ञावहेलनमसूर्क्षणम्[9] । मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः ॥ २०५
क्षान्तिस्तितिक्षाभिध्या तु परस्य विषये स्पृहा । अक्षान्तिरीर्ष्यासूया तु दोषारोपो गुणेष्वपि ॥ २०६
वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक्स्त्रियाम् । पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २०७

१ एतदग्रे 'नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः । स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते ॥' इति प्रक्षिप्तम्. २ 'तालव्यादि' इति मुकुटः. ३ 'भेर्यामानकदुन्दुभी' इति पाठः. ४ पृषोदरादित्वाद्रलोपे णत्वे च केचित् 'पणवः' इति वर्णयन्ति इति भट्टस्वामिसर्वधरादयः—इति मुकुटः. ५ 'नृत्तम्'. ६ 'मार्षकः'. ७ 'अन्तिका'. ८ एतदग्रे 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः' इति प्रक्षिप्तम्. ९ 'असूक्षणम्', 'असुक्षणम्'.

कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ। शुचौ तु चरिते शीलमुन्मादश्चित्तविभ्रमः॥ २०८
प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्। इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः२०९
कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः। उपाधिर्ना धर्मचिन्ता पुंस्याधिर्मानसी व्यथा॥२१०
स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे। उत्साहोऽध्यवसायः स्यात्स वीर्यमतिशक्तिभाक्२११
कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे। कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता॥ २१२
कौतूहलं कौतुकं च कुतुकं च कुतूहलम्। स्त्रीणां विलासविव्वोकविभ्रमा ललितं तथा॥ २१३
हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः। द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च॥२१४
व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम्। घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता२१५
अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ। स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक्स्मितम्॥२१६
मध्यमः स्याद्विहसितं रोमाञ्चो रोमहर्षणम्। क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु त्रिषु जृम्भणम्॥२१७
विप्रलम्भो विसंवादो रिङ्गणं स्खलनं समे। स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि॥ २१८
तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्। अदृष्टिः स्यादसौम्येऽक्ष्णि संसिद्धिप्रकृती त्विमे२१९
स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः। कम्पोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः॥ २२०

इति नाट्यवर्गः॥ ७॥

---

अधोभुवनपातालं बलिसद्म रसातलम्। नागलोकोऽथ कुहरं शुषिरं विवरं बिलम्॥ २२१
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः। गर्तावटौ भुवि श्वभ्रे सरन्ध्रे शुषिरं त्रिषु॥ २२२
अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः। ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः॥२२३
विष्वक्संतमसं नागाः काद्रवेयास्तदीश्वरः। शेषोऽनन्तो वासुकिस्तु सर्पराजोऽथ गोनसे॥ २२४
तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ। अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ॥ २२५
मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकञ्चुकः। सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः॥ २२६
आशीविषो विषधरश्चक्री व्यालः सरीसृपः। कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी॥ २२७
दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः। उरगः पन्नगो भोगी जिह्मगः पवनाशनः॥[3] २२८
त्रिष्वाहेयं विषास्थ्यादि स्फटायां तु फणा द्वयोः। समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम् २२९
पुंसि क्लीबे च काकोलकालकूटहलाहलाः। सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः॥ २३०
दारदो वत्सनाभश्च विषभेदा अमी नव। विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिकः॥ २३१

इति पातालभोगिवर्गः॥ ८॥

---

स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्। तद्भेदास्तपनावीचिमहारौरवरौरवाः॥ २३२
संघातः कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः। प्रेता वैतरणी सिन्धुः स्यादलक्ष्मीस्तु निर्ऋतिः२३३

---

१ 'अमर्षो' ह्रस्वादिः, 'दीर्घादिरपि' इति हट्टचन्द्रः—इति मुकुटः. २ 'दन्त्यादिरप्ययं शब्दः' इति मुकुटः. ३ एतदग्रे 'लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा। कुम्भीनसः फणधरो हरिर्भोगधरस्तथा॥ अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका॥' इति प्रक्षिप्तम्. ४ 'फकारादिरपि' इति स्वामी—इति मुकुटः. ५ ह्रस्वादिः, 'दीर्घादिरपि' इति सर्वानन्दः—इति मुकुटः.



5

विष्टिराजूः कारणा तु यातना तीव्रवेदना । पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ॥ २३४
स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् ॥ २३५

इति नरकवर्गः ॥ ९ ॥

---

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः । उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ॥ २३६
रत्नाकरो जलनिधिर्यादःपतिरपांपतिः । तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे ॥ २३७
आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् । पयः कीलालममृतं जीवनं भुवनं वनम् ॥ २३८
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् । अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ॥ २३९
मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम् । भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥ २४०
महत्सूल्लोलकल्लोलौ स्यादावर्तोऽम्भसां भ्रमः । पृषन्तिबिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥ २४१
चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः । कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ २४२
पारावारे परार्वाची तीरे पात्रं तदन्तरम् । द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ २४३
तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् । निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ २४४
जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः । नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां नौस्तरणिस्तरिः ॥ २४५
उडुपं तु प्लवः कोलः स्रोतोऽम्बुसरणं स्वतः । आतरस्तरपण्यं स्याद्द्रोणी काष्ठाम्बुवाहिनी ॥ २४६
सांयात्रिकः पोतवणिक्कर्णधारस्तु नाविकः । नियामकाः पोतवाहाः कूपको गुणवृक्षकः ॥ २४७
नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः । अभ्रिः स्त्री काष्ठकुद्दालः सेकपात्रं तु सेचनम् ॥ २४८
क्लीबेऽर्धनावं नावोऽर्धेऽतीतनौकेऽतिनु त्रिषु । त्रिष्वागाधात्प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः २४९
निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये । अगाधमतलस्पर्शे कैवर्ते दाशधीवरौ ॥ २५०
आनायः पुंसि जालं स्यात्सणसूत्रं पवित्रकम् । मत्स्याधानी कुवेणी स्याद्बडिशं मत्स्यवेधनम् ॥ २५१
पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः । विसारः शकली चाथ गडकः शकुलार्भकः ॥ २५२
सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ । नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः ॥ २५३
क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः । रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ २५४
तिमिंगिलादयश्चाथ यादांसि जलजन्तवः । तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ॥ २५५
स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ । ग्राहोऽवहारो नक्रस्तु कुम्भीरोऽथ महीलता ॥ २५६
गण्डूपदः किंचुलको निहाका गोधिका समे । रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ २५७
मुक्तास्फोटः स्त्रियां शुक्तिः शङ्खः स्यात्कम्बुरस्त्रियौ । क्षुद्रशङ्खाः शङ्खनखाः शम्बूका जलशुक्तयः २५८
भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः । शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः ॥ २५९
मद्गुरस्य प्रिया शृङ्गी दुर्नामा दीर्घकोशिका । जलाशयो जलाधारस्तत्रागाधजलो ह्रदः ॥ २६०
आहावस्तु निपानं स्यादुपकूपजलाशये । पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥ २६१

---

१ 'अकूवारः' इत्यन्ये—इति मुकुटः. २ पवर्गादिमध्योऽपि. ३ 'कम्, अन्धम्' इति नामद्वयमित्येके, मकारमध्यं 'कमन्धम्' इत्यपरे—इति मुकुटः. ४ इकारान्तमेव गृह्यते, अतएव बहुवचनम्. ५ 'वक्राणि'. ६ 'द्रुणिः'. ७ दन्त्यान्त्योऽपि. ८ 'दन्त्यादिः' इति सर्वधरः, 'तालव्यादिरपि' इति पञ्जिका—इति मुकुटः. ९ चतुरिकाख्यानपि. १० दन्त्यादिरपि. ११ एकवचनान्तत्वेऽपि प्रयोगा उपलभ्यन्ते. १२ 'दन्त्यादिरपि' इति पञ्जिकासर्वधरौ—इति मुकुटः.

नेमिस्त्रिकास्य वीनाहो मुखबन्धनमस्य यत् । पुष्करिण्यां तु खातं स्यादखातं देवखातकम् ॥ २६२
पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः । वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका ॥ २६३
खेयं तु परिखाधारस्त्वम्भसां यत्र धारणम् । स्यादालवालमावालमावापोऽथ नदी सरित् ॥ २६४
तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी । स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा ॥[3] २६५
गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा । भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ २६६
कालिन्दी सूर्यतनया यमुना शमनस्वसा । रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ २६७
करतोया सदानीरा बाहुदा सैतवाहिनी । शैतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् स्त्रियाम् ॥ २६८
शोणो हिरण्यवाहः स्यात्कुल्याल्पा कृत्रिमा सरित् । शरावती वेत्रवती चन्द्रभागा सरस्वती ॥ २६९
कावेरी सरितोऽन्याश्च संभेदः सिन्धुसंगमः । द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ॥ २७०
देविकायां सरय्वां च भवे दाविकसारवौ । सौगन्धिकं तु कह्लारं हल्लकं रक्तसंध्यकम् ॥ २७१
स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च । इन्दीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे ॥ २७२
शालूकमेषां कन्दः स्याद्वारिपर्णी तु कुम्भिका । जलनीली तु शेवालं शैवलोऽथ कुमुद्वती ॥ २७३
कुमुदिन्यां नलिन्यां तु बिसिनीपद्मिनीमुखाः । वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥ २७४
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् । पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ २७५
बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च । पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ॥ २७६
रक्तोत्पलं कोकनदं नाला नालमथास्त्रियाम् । मृणालं बिसमब्जादिकदम्बे खण्डमस्त्रियाम् ॥ २७७
करहाटः शिफाकन्दः किंजल्कः केसरोऽस्त्रियाम् । संवर्तिका नवदलं बीजकोशो वराटकः ॥ २७८

इति वारिवर्गः ॥ १० ॥

---

उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् । पातालभोगि नरकं वारि चैषां च संगतम् ॥ २७९
इत्यमरसिंहकृतौ नामलिङ्गानुशासने । स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ २८०

---

## द्वितीयं काण्डम् ।

वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः । नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ २८१

---

भूर्भूमिरचलानन्ता रसा विश्वंभरा स्थिरा । धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ॥ २८२
सर्वंसहा वसुमती वसुधोर्वी वसुंधरा । गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥ २८३
मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका । उर्वरा सर्वसस्याढ्या स्यादूषः क्षारमृत्तिका २८४
ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली । समानौ मरुधन्वानौ द्वे खिलाप्रहते समे ॥ २८५
त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् । लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः ॥ २८६
देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः । प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः २८७

---

१ 'तडाकः', 'तटाकः'. २ 'आपगा' दीर्घादिः, 'ह्रस्वादिरपि' इति पञ्जिका—इति मुकुटः. ३ एतदग्रे 'कूलंकषा निर्झरिणी रोधोवक्रा सरस्वती' इति प्रक्षिप्तम्. ४ 'शितद्रुः' इति कौमुदी—इति मुकुटः. ५ 'चान्द्रभागी', 'चन्द्रभागी.' ६ 'बिशं' तालव्यान्तमपि. ७ 'कन्दम्' इति क्लीबपाठः पञ्जिकायाम्. ८ तालव्यमध्यमपि. ९ एतदग्रे 'विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा । भूतधात्री रत्नगर्भा जगती सागराम्बरा ॥' इति प्रक्षिप्तम्. १० 'विष्टपम्.'

आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः । नीवृज्जनपदो देशविषयौ तूपवर्तनम् ॥ २८८
त्रिष्वागोष्ठान्नडप्राये नड्वान्नड्वल इत्यपि । कुमुद्वान्कुमुदप्राये वेतस्वान्बहुवेतसे ॥ २८९
शाद्वलः शादहरिते सजम्बाले तु पङ्किलः । जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः ॥ २९०
स्त्री शर्करा शर्करिलः शार्करः शर्करावति । देश एवादिमावेवमुन्नेयाः सिकतावति ॥ २९१
देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ २९२
सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान् । गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् ॥ २९३
पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान् । वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम् ॥ २९४
अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः । सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ २९५
अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि । व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः २९६
अपन्थास्त्वपथं तुल्ये शृङ्गाटकचतुष्पथे । प्रान्तरं दूरशून्योऽध्वा कान्तारं वर्त्म दुर्गमम् ॥ २९७
गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम् । घण्टापथः संसरणं तत्पुरस्योपनिष्करम् ॥[1] २९८

इति भूमिवर्गः ॥ १ ॥

---

पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् । स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ॥ २९९
तच्छाखानगरं वेशो वेश्याजनसमाश्रयः । आपणस्तु निषद्यायां विपणिः पण्यवीथिका ॥ ३००
रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम् । प्राकारो वरणः सालः प्राचीनं प्रान्ततो वृतिः ३०१
भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् । गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ३०२
निशान्तवस्त्यसदनं भवनागारमन्दिरम् । गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ॥ ३०३
वासः कुटी द्वयोः शाला सभा संजवनं त्विदम् । चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ३०४
चैत्यमायतनं तुल्ये वाजिशाला तु मन्दुरा । आवेशनं शिल्पिशाला प्रपा पानीयशालिका ॥ ३०५
मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम् । गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ॥ ३०६
वातायनं गवाक्षोऽथ मण्डपोऽस्त्री जनाश्रयः । हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ॥ ३०७
सौधोऽस्त्री राजसदनमुपकार्योपकारिका । स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ ३०८
विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् । स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ३०९
शुद्धान्तश्चावरोधश्च स्यादट्टः क्षौममस्त्रियाम् । प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥ ३१०
गृहावग्रहणी देहल्यङ्गणं चत्वराजिरे । अधस्ताद्दारुणि शिला नासा दारूपरि स्थितम् ॥ ३११
प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तु पक्षकम् । वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः ॥ ३१२
गोपानसी तु वलभी छादने वक्रदारुणि । कपोतपालिकायां तु विटङ्कं पुंनपुंसकम् ॥ ३१३
स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका । तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ॥ ३१४
कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु । कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना ॥ ३१५

---

१ एतदग्रे 'द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी । दिवस्पृथिव्यौ गञ्जा तु रुमा स्याल्लवणाकरः ॥' इति प्रक्षिप्तम्. २ तालव्यादिरप्ययम्. ३ कौ द्योतते इति डप्रकरणे 'अन्यत्रापि' इति डः—इति सोमनन्दी, एतेन 'दकारोऽत्र, न डकारः' इति स्वामी—इति मुकुटः. ४ 'पस्त्यम्' इत्यपि. ५ 'संयमनम्' इति च पाठ इति टीकासमुच्चयकारः—इति मुकुटः. ६ 'शिल्पशाला' इत्यपि. ७ एतदग्रे 'कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम्' इति प्रक्षिप्तम्. ८ 'पृषोदरादित्वाण्णत्वम्' इति स्वामी, पञ्जिका च; 'नान्तम्' इति तु सर्वधरः—इति मुकुटः.

आरोहणं स्यात्सोपानं नि[1]श्रेणिस्त्वधिरोहिणी । संमार्जनी शोधनी स्यात्संकरोऽवकरस्तथा ॥ ३१६
क्षिप्ते मुखं निःसरणं संनिवेशो निकर्षणम् । समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियाम् ॥ ३१७
ग्रामान्तमुपशल्यं स्यात्सीमसीमे स्त्रियामुभे । घोष आभीरपल्ली स्यात्पक्कणः शबरालयः ॥ ३१८

इति पुरवर्गः ॥ २ ॥

---

महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः । अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ ३१९
लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ । अस्तस्तु चरमः क्ष्माभृदुदयः पूर्वपर्वतः ॥ ३२०
हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रकः । गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३२१
पाषाणप्रस्तरग्रावोपलाश्मानः शिला [2]दृषत् । कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वतटो भृगुः ॥ ३२२
कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम् । उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो [3]झरः ३२३
दरी तु कंदरो वा स्त्री देवखातबिले गुहा । गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ॥[4] ३२४
खनिः स्त्रियामाकरः स्यात्पादाः प्रत्यन्तपर्वताः । उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥ ३२५
धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः । निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ३२६

इति शैलवर्गः ॥ ३ ॥

---

अटव्यरण्यं विपिनं गहनं काननं वनम् । महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ॥ ३२७
आरामः स्यादुपवनं कृत्रिमं वनमेव यत् । अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ ३२८
पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् । स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥ ३२९
वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः । वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ॥ ३३०
वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ॥ ३३१
वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः । ओषध्यः फलपाकान्ताः स्युरवन्ध्यः फलेग्रहिः ॥ ३३२
वन्ध्योऽफलोऽवकेशी च फलवान्फलिनः फली । प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ३३३
फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु । स्थाणु वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ॥ ३३४
अप्रकाण्डे स्तम्बगुल्मौ [6]वल्ली तु [7]प्रततिर्लता । लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥ ३३५
नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः । अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ३३६
समे शाखालते स्कन्धशाखाशाले शिफाजटे । शाखाशिफावरोहः स्यान्मूलाच्चाग्रं गता लता ॥ ३३७
शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः । सारो [8]मज्जा [9]नरि त्वक्स्त्री वल्कं वल्कलमस्त्रियाम् ३३८
काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् । निष्कुहः कोटरं वा ना वल्लरि[10]र्मञ्जरिः स्त्रियौ ॥ ३३९
पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् । पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् ॥ ३४०
वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम् । आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु ॥ ३४१
क्षारको जालकं क्लीबे कलिका कोरकः पुमान् । स्याद्[11]गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम् ३४२

---

१ 'निःश्रेणिः'. २ 'तालव्यमध्यापि' इति सर्वधरः—इति मुकुटः. ३ 'झरा', 'झरिः', 'झरी'. ४ एतदग्रे 'दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः' इति प्रक्षिप्तम्. ५ मूर्धन्यान्त्योऽपि. ६ 'वेल्लिः' इत्यपि. ७ प्रतातिश्च. ८ नान्तः, टाबन्तापि. ९ 'समौ' इति मुकुटपाठः. १० तालव्याद्यपि. ११ दन्त्योष्मान्त्योऽपि.

स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं समम् । मकरन्दः पुष्परसः परागः सुमनोरजः ॥ ३४३
द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् । आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ॥ ३४४
बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् । पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीह्यः फले ३४५
विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला । बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥ ३४६
अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः । तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ॥ ३४७
उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः । कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ ३४८
सप्तपर्णो विशालत्वक्शारदो विषमच्छदः । आरग्वधे राजवृक्षशंपाक[2]चतुरङ्गुलाः ॥ ३४९
आरेवतव्याधिघातकृतमालसुवर्णकाः । स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ ३५०
वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः । पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ ३५१
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः । तिनिशे[3] स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ ३५२
वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ । आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ॥ ३५३
वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः । पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे ॥ ३५४
अक्षोटक[4]न्दरालौ द्वावङ्कोटे तु नि[5]कोचकः । पलाशे किंशुकः पर्णो वातपोथोऽथ वेतसे ॥ ३५५
[6]रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः । द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३५६
[7]शोभाञ्जने शिग्रुती[8]क्ष्णगन्धकाक्षीवमोचकाः । रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ ॥ ३५७
बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि । प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ॥ ३५८
गालवः [9]शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ । आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ॥ ३५९
[10]कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः । शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३६०
[11]राजादनं प्रि[12]यालः स्यात्सं[13]नकद्रुर्धनुः[14]पटः । ग[15]म्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३६१
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः । [16]कर्कन्धूर्बदरी कोलिः कोलं कुवलफेनिले ॥ ३६२
सौवीरं बदरं घोण्टाप्यथ स्यात्स्वादुकण्टकः । विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ॥ ३६३
ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका । तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ॥ ३६४
काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके । गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ॥ ३६५
तिलकः क्षुरकः श्रीमान्समौ पिचुलझावुकौ । श्रीपर्णिका कुमुदिका कुम्भी कैडर्यकट्फलौ ॥ ३६६
क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः । तू[17]दस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ३६७
तूलं च नीपप्रियककदम्बास्तु हलिप्रियः । वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ॥ ३६८
गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः । प्लक्षश्च तिन्तिडी चिञ्चाम्लिकाथो पीतसारके ॥ ३६९

---

१ पवर्गतृतीयमध्योऽपि. २ दन्त्यादिश्च, शम्याकश्च. ३ तिलिशश्च. ४ कर्परालोऽपि. ५ 'लिकोचकः'. ६ 'रथ-अभ्र-रथाभ्रपुष्प' इति नामत्रयम्. ७ 'दन्त्यादिरपि' इत्यन्ये. ८ तीक्ष्णगन्धक-आक्षीव इति; 'अक्षीव' इति ह्रस्वादिरापि; तीक्ष्णगन्ध-काक्षीर इति रान्तमित्यन्ये. ९ दन्त्यादिश्च. १० संघातविगृहीतम् । कुम्भम्, उलूखलकम्, इति व्यस्तम्; 'कुम्भोलुः, खलकम्' इति वा पाठः. ११ राजाननोऽपि. १२ नीरेफोऽपि. १३ 'सन्नकद्रुः' इति स्वामी, 'सन्नको द्रुश्च' इति सोमनन्दी—इति मुकुट. १४ संघातव्यस्तम् । धनुरुदन्तः, सान्तोऽपि. १५ 'कम्भारी.' १६ स्वामी तु 'कर्कन्धूर्वदरी कोलिर्घोण्टा कुवलफेनिले । सौवीरं वदरं कोलम्' इति पठित्वा 'आद्यास्त्रयो वृक्षार्थाः, शेषाः फलार्थाः, घोण्टा तूभयार्थाः' व्याचष्टे—इति मुकुटः. १७ 'नूद' इति मुकुटः.

सर्जकासनबन्धूकपुष्पप्रियकजीवकाः । साले तु सर्जकार्श्याश्वकर्णकाः सस्यसम्बरः ॥ ३७०
नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः । राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ॥ ३७१
इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ । पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ॥ ३७२
पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः । चिरबिल्वो नक्तमालः करजश्च करञ्जके ॥ ३७३
प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः । करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥ ३७४
रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः । गायत्री बालतनयः खदिरो दन्तधावनः ॥ ३७५
अरिमेदो विट्खदिरे कदरः खदिरे सिते । सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ॥ ३७६
एरण्ड उरुवूकश्च रुचकश्चित्रकश्च सः । चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥ ३७७
अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा । पिण्डीतको मरुवकः श्वसनः करहाटकः ॥ ३७८
शल्यश्च मदने शक्रपादपः पारिभद्रकः । भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ३७९
पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः । पाटलिः पाटलामोघा काचस्थाली फलेरुहा ॥ ३८०
कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया । लता गोवन्दनी गुन्द्रा प्रियंगुः फलिनी फली ॥ ३८१
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा । मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ॥ ३८२
स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः । शोणकश्चारलौ तिष्यफला त्वामलकी त्रिषु ॥ ३८३
अमृता च वयस्था च त्रिलिङ्गस्तु विभीतकः । नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥ ३८४
अभया त्वव्यथा पथ्या कायस्था पूतनामृता । हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥ ३८५
पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः । कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः ॥ ३८६
पनसः कण्टकिफलो निचुलो हिज्जलो[12]ऽम्बुजः । काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ॥ ३८७
अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः । पिचुमन्दश्च निम्बेऽथ पिच्छिलागुरु[13] शिंशपा ॥ ३८८
कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः । भण्डिलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः ॥ ३८९
एतस्य कलिका गन्धफली स्यादथ केसरे । बकुलो वञ्जुलोऽशोके समौ करकदाडिमौ ॥ ३९०
चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः । जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥ ३९१
श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका । जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका ॥ ३९२
एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले । कृष्णपाकफलाविग्नसुषेणाः करमर्दके ॥ ३९३
कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुके । सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥ ३९४
वेणी खरा गरी देवताडो जीमूत इत्यपि । श्रीहस्तिनी तु भूरुण्डी तृणशून्यं तु मल्लिका ॥ ३९५
भूपदी शीतभीरुश्च सर्वा[16]स्फोटा वनोद्भवा । शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ॥ ३९६
सितासौ श्वेतसुरसा भूतवेश्यथ मागधी । गणिका यूथिकाम्बष्ठा सा पीता हेमपुष्पिका ॥ ३९७
अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता । सुमना मालती जातिः सप्तला नवमालिका ॥ ३९८

---

१ 'अशनः' तालव्यादिरपि. २ 'राजाननम्' इति पाठान्तरम्; 'राशादनफलम्' इत्येकं नाम, 'अध्यक्षम्' इत्यन्ये—इति मुकुटः. ३ दीर्घमध्योऽपि. ४ 'कारकः'. ५ नान्तोऽपि. ६ 'बालपत्रश्च' इति मूलपाठः. ७ 'अमण्ड', आमण्डश्च. ८ मोघापि. ९ अरटुरपि. १० कायस्थापि. ११ 'पणस इत्यपि पाठः' इति सर्वधरः—इति मुकुटः. १२ इज्जलोऽपि. १३ 'अगुरुशिंशपा इत्येकं नाम' इति स्वामी—इति मुकुटः. १४ रेफान्तोऽपि. १५ 'सिन्धुकः' इति मुकुटः. १६ 'आस्फोता' इत्यपि.

माघ्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः । सहा कुमारी तरणिरम्लानस्तु महासहा ॥ ३९९
तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः । नीला झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा ॥ ४००
सैरेयकस्तु झिण्टी स्यात्तस्मिन्कुरबकोऽरुणे । पीता कुरण्टको झिण्टी तस्मिन्सहचरी द्वयोः ॥ ४०१
ओड्रपुष्पं जपापुष्पं[1] वज्रपुष्पं तिलस्य यत् । प्रतिहासशतप्रासचण्डातहयमारकाः ॥ ४०२
करवीरे करीरे तु क्रकरग्रन्थिलावुभौ । उन्मत्तः कितवो धूर्तो धत्तूरः[2] कनकाह्वयः ॥ ४०३
मातुलो मदनश्चास्य फले मातुलपुत्रकः । फलपूरो बीजपूरो रुचको मातुलुङ्गके ॥ ४०४
समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः । जम्बीरोऽप्यथ पर्णासे कठिञ्जरकुठेरकौ ॥ ४०५
सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः । अर्काह्ववसुकास्फोटगणरूपविकीरणाः ॥ ४०६
मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ । शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ॥ ४०७
वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि । वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता ॥ ४०८
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि । मूर्वा देवी मधुरसा मोरटा तेजनी स्रुवा[3] ॥ ४०९
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि । पाठाम्बष्ठा विद्धकर्णी[4] स्थापनी श्रेयसी रसा ॥ ४१०
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका । कटुः कटंभरा[5]शोकरोहिणी कटुरोहिणी ॥ ४११
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी । आत्मगुप्ताजहाव्यण्डा[7] कण्डुरा प्रावृषायणी ॥ ४१२
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी । चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ४१३
प्रत्यक्श्रेणी सुतश्रेणी रण्डा[6] मूषिकपर्ण्यपि । अपामार्गः शैखरिको धामार्गवमयूरकौ ॥ ४१४
प्रत्यक्पर्णी[8] केशपर्णी[9] किणिही खरमञ्जरी । हञ्जिका[10] ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ४१५
अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः । मञ्जिष्ठा विकसा[11] जिङ्गी समङ्गा कालमेषिका[12] ॥ ४१६
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि । यासो यवासो दुःस्पर्शो धन्वयासः[13] कुनाशकः ॥ ४१७
रोदनी कच्छुरानन्ता समुद्रान्ता दुरालभा । पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका ॥ ४१८
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा । निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका॥ ४१९
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि । नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ४२०
रञ्जनी श्रीफली तुत्था द्रोणी दोला[14] च नीलिनी । अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका॥ ४२१
कालमेषी कृष्णफला वाकुची[15] पूतिफल्यपि । कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ४२२
उषणा[16] पिप्पली शौण्डी कोलाथ करिपिप्पली । कपिवल्ली कोलवल्ली श्रेयसी वशिरः[17] पुमान्॥ ४२३
चव्यं तु चविका काकचिञ्चीगुञ्जे तु कृष्णला । पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ४२४
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि । विश्वा विषा प्रतिविषातिविषोपविषारुणा ॥ ४२५
शृङ्गी महौषधं चाथ क्षीरावी दुग्धिका समे । शतमूली बहुसुताभीरुरिन्दीवरी वरी ॥ ४२६
ऋष्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी । अहेरुरथ पीतद्रुकालीयकहरिद्रवः ॥ ४२७
दार्वी पचंपचा[18] दारुहरिद्रा पर्जनीत्यपि । वचोग्रगंन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥ ४२८
शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका[19] । वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ॥ ४२९

---

१ 'जवा' इत्यपि. २ धुस्तूरोऽपि. ३ 'स्रवा' इत्यपि. ४ 'अविद्धकर्णी'. ३ 'कटंवरा'. ६ 'जडा'. ७ 'अध्यण्डा'. ८ 'प्रत्यक्पुष्पी'. ९ 'कीशपर्णी'. १० 'फञ्जिका'. ११ 'विकषा'. १२ तालव्यशः १३ 'धनुर्यासः'. १४ 'मेला'. १५ 'वागुजी'. १६ 'ऊषणा'. १७ दन्त्यवान्. १८ 'पचंवचा'. १९ दन्त्यमध्यापि.

आस्फोटा[1] गिरिकर्णी स्याद्विष्णुक्रान्तापराजिता। इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः॥४३०
शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः। मिश्रेयाप्यथ सीहुण्डो वज्रः स्नुक्स्त्री स्नुही गुडा॥४३१
समन्तदुग्धाथो वेल्लममोघा चित्रतण्डुला[2]। तण्डुलश्च[3] कृमिघ्नश्च विडङ्गं पुंनपुंसकम्॥ ४३२
बला वाट्यालका घण्टारवा तु शणपुष्पिका। मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च॥ ४३३
सर्वानुभूतिः सरला[4] त्रिपुटा त्रिवृता त्रिवृत्। त्रिभण्डी रोचनी[5] श्यामापालिन्द्यौ तु सुषेणिका॥४३४
काला मसूरविदलार्धचन्द्रा कालमेषिका। मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका॥ ४३५
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री तु या सिता। अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका॥४३६
लाङ्गली शारदी तोयपिप्पली शकुलादनी। खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः[6]॥ ४३७
गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा। योगमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे॥ ४३८
कदली वारणबुसा[7] रम्भा मोचांशुमत्फला। काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि॥ ४३९
वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी। नाकुली सुरसा रास्ना[8] सुगन्धा गन्धनाकुली॥४४०
नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा। विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा॥ ४४१
तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च। भारद्वाजी तु सा वन्या शृङ्गी तु ऋषभो वृषः॥४४२
गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका। धामार्गवो घोषकः स्यान्महाजाली स पीतकः॥ ४४३
ज्यौत्स्नी[9] पटोलिका जाली नादेयी भूमिजम्बुका। स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका४४४
गोधापदी तु सुवहा मुसली तालमूलिका। अजशृङ्गी विषाणी स्याद्गोजिह्वादार्विके समे॥ ४४५
ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा। हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी॥ ४४६
एलावालुकमैलेयं सुगन्धि हरिवालुकम्। वालुकं चाथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू॥ ४४७
बालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च। कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु॥ ४४८
शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा। गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा॥ ४४९
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च। अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका॥ ४५०
पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुलाथ सा। सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः॥४५१
व्याधिः कुष्टं पारिभाव्यं वाप्यं पाकलमुत्पलम्। शङ्खिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः॥४५२
झटामलाज्झटा[10] ताली शिवा तामलकीति च। प्रपौण्डरीकं पौण्डर्यमथ तुन्नः कुबेरकः॥ ४५३
कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी। चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः॥ ४५४
व्याडायुधं व्याघ्रनखं करजं चक्रकारकम्। सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली॥ ४५५
धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी। शुक्तिः शङ्खः खुरः कोलदलं नखमथाढकी॥ ४५६
काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजे। कुटन्नटं दशपुरं[11] वानेयं परिपेलवम्॥ ४५७
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च। ग्रन्थिपर्णं शुकं[12] बर्हं पुष्पं स्थौणेयकुक्कुरे॥ ४५८
मरुन्माला[13] तु पिशुना स्पृक्का देवी लता लघुः। समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि॥ ४५९
तपस्विनी जटामांसी जटिला लोमशा मिसी। त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम्॥ ४६०

---

१ 'आस्फोता'. २ 'चित्रतन्तुला'. ३ 'तन्तुलः'. ४ 'सरणा', 'सवहा'. ५ 'रेचनी'. ६ 'लोचमर्कटः'. ७ 'वारणवुषा'. ८ 'नागसुगन्धा'. ९ 'ज्योत्स्ना'. १० 'झाटा'. ११ 'दशपुरम्', 'दशपूरम्'. १२ 'शुकवर्हम्', 'वर्हपुष्पम्' इति. १३ 'मरुत्' इति पूर्वान्वय्यपि.

कर्चूरको द्राविडकः काल्पको वेधमुख्यकः । ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ॥ ४६१
शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः । विशल्याग्निशिखानन्ता फलिनी शक्रपुष्पिका ॥ ४६२
स्यादृक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः । जुङ्गो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ॥ ४६३
पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती । हयपुच्छी तु काम्बोजी माषपर्णी महासहा ॥ ४६४
तुण्डिकेरी[1] रक्तफला बिम्बिका पीलुपर्ण्यपि । बर्बरा कबरी तुङ्गी खरपुष्पाजगन्धिका ॥ ४६५
एलापर्णी तु सुवहा रास्ना युक्तरसा च सा । चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ॥ ४६६
सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि । नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि ॥ ४६७
जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा । कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥ ४६८
किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ सप्तला । विमला सातला भूरिफेना चर्मकषेत्यपि ॥ ४६९
वायसोली स्वादुरसा वयस्थाथ मकूलकः । निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ॥ ४७०
अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका[2] । मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥ ४७१
अव्यथातिचरा पद्मा चारटी पद्मचारिणी । काम्पिल्यः[3] कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि[4] ॥ ४७२
प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः[5] । पद्माट उरणाख्यश्च पलाण्डुस्तु सुकन्दकः ॥ ४७३
लतार्कदुर्द्रुमौ तत्र हरितेऽथ महौषधम् । लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ ४७४
पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् । स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि[6] ॥ ४७५
पारावताङ्घ्रिः कटभी पैण्या[7] ज्योतिष्मती लता । वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ॥ ४७६
विष्वक्सेनप्रिया गृष्टिर्[8]वाराही बदरेत्यपि । मार्कवो भृङ्गराजः स्यात्काकमाची तु वायसी ॥ ४७७
शतपुष्पा सितच्छत्रातिच्छत्रा मधुरा मिसिः । अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी ॥ ४७८
तस्यां कटंभरा राजबला भद्रबलेत्यपि । जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ ४७९
संस्पर्शाथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि । कर्चूरोऽपि पलाशोऽथ कारवेल्लः कठिल्लकः ॥ ४८०
सुषवी[9] चाथ कुलकं पटोलस्तिक्तकः पटुः । कूष्माण्डकस्तु कर्कारुरुर्वारुः[10] कर्कटी स्त्रियौ ॥ ४८१
इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे । चित्रा गवाक्षी गोडुम्बा विशाला त्विन्द्रवारुणी ॥ ४८२
अर्शोघ्नः सूरणः[11] कन्दो गण्डीरस्तु समष्ठिला । कलम्ब्युपोदिका स्त्री तु मूलकं हिलमोचिका ॥ ४८३
वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका । सहस्रवीर्याभार्गव्यौ रुहानन्ताथ सा सिता ॥ ४८४
गोलोमी शतवीर्या च गण्डाली शकुलाक्षका । कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥ ४८५
स्याद्भद्रमुस्तको गुन्द्रा चूडाला चक्रलोच्चटा । वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ ४८६
शतपर्वा यवफलो वेणुमस्करतेजनाः । वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ॥ ४८७
ग्रन्थिर्नां पर्वपरुषी गुन्द्रस्तेजनकः शरः[12] । नडस्तु धमनः पोटगलोऽथो काशमस्त्रियाम् ॥ ४८८
इक्षुगन्धा पोटगलः पुंसि भूम्नि तु बल्वजाः । रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः ॥ ४८९
स्याद्वीरणं वीरतरं मूलेऽस्योशीर[13]मस्त्रियाम् । अभयं नलदं सेव्यममृणालं जलाशयम् ॥ ४९०
लामज्जकं लघुलयमवदाहेष्टकापथे । नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ ४९१
अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् । पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥ ४९२

१ 'तुण्डकेरी'. २ 'यमानिका'. ३ 'काम्पिल्लः'. ४ 'रेचनी'. ५ 'प्रपुनाडः'. ६ 'अशनपर्णी'. ७ 'पिण्या'. ८ 'घृष्टिः'. ९ तालव्यमध्या. १० 'इर्वारुः'. ११ 'शूरणः'. १२ 'सरः'. १३ मूर्धन्यमध्यं च.

छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे । [1]शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ॥ ४९३
तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः । तृणराजाह्वयस्तालो [2]नालिकेरस्तु लाङ्गली ॥ ४९४
घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु । फलमुद्वेगमेते च हिन्तालसहितास्त्रयः ॥ ४९५
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ॥ ४९६

इति वनौषधिवर्गः ॥ ४ ॥

---

सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः [3]केसरी हरिः ।[4] शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः ॥ ४९७
वराहः [5]सूकरो घृष्टिः कोलः पोत्री [6]किरिः किटिः । दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ४९८
कपिप्लवंगप्लवगशाखामृगवलीमुखाः । मर्कटो वानरः कीशो वनौका अथ भल्लुके ॥ ४९९
ऋक्षाच्छभल्ल[7]भल्लूका गण्डके खड्गखड्गिनौ । लुलायो महिषो वाहद्विषत्कासरसैरिभाः ॥ ५००
स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः । [8]शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५०१
ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् । त्रयो गौधेरगौधारगौधेया गोधिकात्मजे ॥ ५०२
श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् । वातप्रमीर्वातमृगः कोकस्त्वीहामृगो वृकः ॥ ५०३
मृगे कुरङ्गवातायुहरिणाजिनयोनयः । ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ॥ ५०४
कदली कन्दली चीनश्चमूरुप्रियकावपि । समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ५०५
कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहि[11]षाः । गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ ५०६
गन्धर्वः शरभो रामः सृमरो गवयः शशः । इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः ॥[12] ५०७
उन्दुरुर्मू[13]षकोऽप्याखुर्गिरिका बालमूषिका । सरटः कृकलासः स्यान्मुसली गृहगोधिका ॥ ५०८
लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः । नीलङ्[14]गुस्तु कृमिः कर्णजलौकाः शतपद्युभे ॥ ५०९
वृश्चिकः शूककीटः स्या[15]दलिद्[16]रुणौ तु वृश्चिके । पारावतः कलरवः कपोतोऽथ शशादनः ॥ ५१०
पत्री श्येन उलूकस्तु वायसारातिपेचकौ ।[17] व्याघ्राटः स्याद्भरद्वाजः खञ्जरीटस्तु खञ्जनः ॥ ५११
लोहपृष्ठस्तु कङ्कः स्यादथ चाषः कि[18]कीदिविः । कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रकः ॥ ५१२
दार्वाघाटोऽथ [19]सारङ्गस्तोककश्चातकः समाः । कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ ५१३
चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः । पुमपत्ये चाटकैरस्त्र्यपत्ये चटकैव सा ॥ ५१४
[20]कर्करेटुः [21]करेटुः स्यात्कृकणक्रकरौ समौ । वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ ५१५
काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः । ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥[22] ५१६
द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः । [23]आतायिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ॥ ५१७
कुङ्क्रौञ्चोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः । कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ ५१८

---

१ 'शस्पम्'. २ 'नारिकेलः'. ३ 'केशरी'. ४ एतदग्रे 'कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः । पुण्डरीकः पञ्चनखश्चित्रकायमृगद्विषः ॥' इति प्रक्षिप्तम्. ५ 'शूकरः.' ६ 'किरिः.' ७ 'भालूकः', 'माल्लूकः'. ८ 'सृगालः'. ९ दीर्घमध्योऽपि. १० तालव्यमध्योऽपि. ११ 'रौहिट्' हलन्तोऽपि. १२ एतदग्रे 'अधोगन्ता तु खनको वृकः पुंध्वज उन्दुरः' इति प्रक्षिप्तम्. १३ इकारमध्योऽपि. १४ आकारमध्योऽपि. १५ नान्तोऽपि; आलिरपि. १६ 'द्रोणः'. १७ एतदग्रे 'दिवान्धः कौशिको घूको दिवाभीतो निशाटनः' इति प्रक्षिप्तम्. १८ दीर्घतृतीयेकारश्चायम्, चतुर्थह्रस्वश्च; 'किकिः', 'दिविः'. १९ तालव्यादिरपि. २० 'कर्कराटुः'. २१ 'करटुः'. २२ एतदग्रे 'स एव च चिरंजीवी चैकदृष्टिश्च मौकुलिः' इति प्रक्षिप्तम्. २३ 'आतापि'.

कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ । हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ ५१९
राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः । मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः ॥ ५२०
शरारिराटिराडिश्च बलाका बिसकण्ठिका । हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा ॥ ५२१
जतुकाजिनपत्रा स्यात्परोष्णी तैलपायिका । वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥ ५२२
पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका । दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः ॥ ५२३
भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः । समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः ॥ ५२४
मधुव्रतो मधुकरो मधुलिण्मधुपालिनः । द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ ५२५
मयूरो बर्हिणो बर्हीं नीलकण्ठो भुजंगभुक् । शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ ५२६
केका वाणी मयूरस्य समौ चन्द्रकमेचकौ । शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ ५२७
खगे विहंगविहगविहंगमविहायसः । शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ५२८
पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः । नगौकोवाजिविकिरविविष्किरपतत्रयः ॥ ५२९
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः । तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ५३०
[1]तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः । कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥ ५३१
गरुत्[2]पक्षच्छदाः पत्रं पतत्रं च तनूरुहम् । स्त्री पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ५३२
प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः । पे[3]शीकोषो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम् ॥ ५३३
पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः । स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम् ५३४
समूहो निवहव्यूहसंदोहविसरव्रजाः । स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ ५३५
समुदायः समुदयः समवायश्चयो गणः । स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ५३६
वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः । सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम् ॥ ५३७
पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् । स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ५३८
कापोतशौकमायूरतैत्तिरादीनि तद्गणे । गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥ ५३९

इति सिंहादिवर्गः ॥ ५ ॥

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः । स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ ५४०
स्त्री योषिदबला [4]योषा नारी सीमन्तिनी वधूः । प्रतीपदर्शिनी वामा वनिता [5]महिला तथा ॥ ५४१
विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना । प्रमदा [6]मानिनी कान्ता ललना च नितम्बिनी ॥ ५४२
सुन्दरी रमणी रामा कोपना सैव भामिनी । वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ५४३
कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः । पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५४४
भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी । पुरंध्री सुचरित्रा तु सती साध्वी पतिव्रता ॥ ५४५
कृतसापत्निकाध्यूढाधिविन्नाथ स्वयंवरा । पतिंवरा च वर्याथ कुलस्त्री कुलपालिका ॥ ५४६
कन्या कुमारी गौरी तु नग्निकानागतार्तवा । स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे ॥ ५४७
समाः स्नुषाजनीवध्वश्चिरिण्टी तु [7]स्ववासिनी । इच्छावती कामुका स्याद्वृषस्यन्ती तु कामुकी ५४८
कान्तार्थिनी तु या याति संकेतं साभिसारिका । पुंश्चली [8]धर्षिणी बन्धक्यसती कुलटेत्वरी ॥ ५४९

---

१ अदन्तोऽपि. २ 'पक्षः' सान्तं क्लीबं च. ३ संघातविगृहीतश्चायम्. ४ 'जोषा'. ५ महेलापि. ६ 'भाविनी'. ७ 'सुवासिनी'. ८ 'चर्षणी'.

स्वैरिणी पांशुला च स्यादशिश्वी शिशुना विना। अवीरा निष्पतिसुता विश्वस्ताविधवे समे॥५५०
आलिः सखी वयस्याथ पतिवत्नी सभर्तृका। वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती॥५५१
शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च। आभीरी तु महाशूद्री जातिपुंयोगयोः समा॥५५२
अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि। उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः॥५५३
आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा। उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा॥५५४
वीरपत्नी वीरभार्या वीरमाता तु वीरसूः। जातापत्या प्रजाता च प्रसूता च प्रसूतिका॥ ५५५
स्त्री नग्निका कोटवी स्याद्दूतीसंचारिके समे। कात्यायन्यर्धवृद्धा या काषायवसनाधवा॥ ५५६
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका। असिक्नी स्यादवृद्धा या प्रेष्यान्तःपुरचारिणी॥ ५५७
वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः। सत्कृता वारमुख्या स्यात्कुट्टनी शम्भली समे॥५५८
विप्रश्निका त्वीक्षणिका दैवज्ञाथ रजस्वला। स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि॥ ५५९
ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम्। श्रद्धालुर्दोहदवती निष्कला विगतार्तवा॥ ५६०
आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी। गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे॥ ५६१
पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः। स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी॥ ५६२
कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः। सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः॥ ५६३
पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः। सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः॥ ५६४
अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः। कौलटेरः कौलटेयो भिक्षुकी तु सती यदि॥ ५६५
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः। आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ५६६
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे। स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता॥ ५६७
जनयित्री प्रसूर्माता जननी भगिनी स्वसा। ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा॥ ५६८
भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्। प्रजावती भ्रातृजाया मातुलानी तु मातुली॥ ५६९
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः। पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ५७०
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ। स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः॥५७१
पितामहः पितृपिता तत्पिता प्रपितामहः। मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः॥ ५७२
समानोदर्यसोदर्यसगर्भ्यसहजाः समाः। सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः॥ ५७३
ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः। धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ॥ ५७४
अमृते जारजः कुण्डो मृते भर्तरि गोलकः। भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ॥ ५७५

मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ।
श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च॥ ५७६

दंपती जंपती जायापती भार्यापती च तौ। गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम्॥ ५७७
सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ। तृतीयाप्रकृतिः शण्ढः क्लीबः पण्डो नपुंसके॥ ५७८
शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे। स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम्॥ ५७९
पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा। स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी॥५८०

---

१ दन्त्यमध्या च. २ निर्विकारा च. ३ 'कोट्टवी'. ४ 'सैरिन्ध्री.' ५ 'वेष्या' मूर्धन्यमध्यापि. ६ दन्त्यादिरपि. ७ 'अवीः'. ८ 'निष्कली'. ९ 'यौवनम्'. १० ह्रस्वमध्यापि. ११ दन्त्यादिरपि.

बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा । प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ५८१
वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः । जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥ ५८२
अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसलः । तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ॥५८३
अवटीटोऽवनाटश्चावभ्रटो नतनासिके । केशवः केशिकः केशी वलिनो वलिभः समौ ॥ ५८४
विकलाङ्गस्त्वपोगण्डः खर्वो ह्रस्वश्च वामनः । खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः ॥ ५८५
खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः । ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहतजानुकः ॥ ५८६
स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः । पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते ॥ ५८७
बलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः । जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ॥ ५८८
अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया । भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५८९
स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः । क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः ॥ ५९०
स्त्री क्षुत्क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान् । शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका ५९१
किलाससिध्मे कच्छ्वां तु पाम पामा विचर्चिका । कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटका स्त्रियाम् ५९२
व्रणोऽस्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् । कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी ॥ ५९३
आनाहस्तु निबन्धः स्याद्ग्रहणीरुक्प्रवाहिका । प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५९४
व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगंदराः ।[10] अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे शुक्रवधेस्त्रिषु ॥ ५९५
रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके । वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ५९६
ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः । आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ ५९७
दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः । वातकी वातरोगी स्यात्सातिसारोऽतिसारकी ॥ ५९८
स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी । उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी ५९९
न्युब्जो भुग्ने रुजा वृद्धनाभौ तुन्दिलतुन्दिभौ । किलासी सिध्मलोऽन्धोऽदृङ्मूर्छाले मूर्तमूर्छितौ ६००
शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च । मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा ॥ ६०१
पिशितं तरसं मांसं पललं क्रव्यमामिषम् । उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥ ६०२
रुधिरेऽसृग्लोहितास्रक्तक्षतजशोणितम् । बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ॥ ६०३
पश्चाद्ग्रीवाशिरा मन्या नाडी तु धमनिः शिरा । तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियाम् ६०४
अन्त्रं पुरीतद्गुल्मस्तु प्लीहा पुंस्यथ वस्नसा । स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे ॥ ६०५
सृणिका स्यन्दिनी लाला दूषिका नेत्रयोर्मलम् ।[18] मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् ॥ ६०६
पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ । स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ॥ ६०७
स्याच्छरीरास्थ्नि कंकालः पृष्ठास्थ्नि तु कशेरुका । शिरोऽस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ६०८
अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् । गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ६०९

---

१ 'अग्रिमः'. २ 'शातः'. ३ 'प्रज्ञः'. ४ 'ऊर्ध्वज्ञः'. ५ 'संज्ञः'. ६ 'काशः'. ७ 'सिध्मा' नान्तोऽपि. ८ 'पामा' इति नान्तडाबन्तयोः स्त्रीलिङ्गयोर्निर्देशः. ९ 'पिटकस्त्रिषु' इत्यपि पाठः; विटकापि. १० एतदग्रे 'श्लीपदं पादवल्मीकं केशघ्नस्त्विन्द्रलुप्तकः' इति प्रक्षिप्तम्. ११ 'दर्द्रुणः'. १२ 'दर्द्रुः'. १३ 'असृग्वरा'. १४ 'वुक्का' नान्तः पुंलिङ्गः, टावन्तो वा; नान्तं क्लीबं वा. १५ 'सिरा'. १६ अदन्तमपि. १७ टाबन्तापि. १८ एतदग्रे 'नासामलं तु सिङ्घाणं पिञ्जूषं कर्णयोर्मलम्' इति प्रक्षिप्तम्.

कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः। पादाग्रं प्रपदं पादः पदंङ्घ्रिश्चरणोऽस्त्रियाम् ॥ ६१०
तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः। जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ॥ ६११
सक्थि क्लीबे पुमानूरुस्तत्संधिः पुंसि वङ्क्षणः। गुदं त्वपानं पायुर्ना वस्तिर्नाभेरधो द्वयोः ॥ ६१२
कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती। पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः६१३
कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे। स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ॥ ६१४
भगं योनिर्द्वयोः शिश्नो मेढ्रो मेहनशेफसी। मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ॥ ६१५
पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ। चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ ६१६
उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः। स्कन्धो भुजशिरोंसोऽस्त्री संधी तस्यैव जत्रुणी ॥ ६१७
बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः। मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः ॥ ६१८
भुजबाहू प्रवेष्टो दोः स्यात्कफोणिस्तु कूर्परः। अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः ॥ ६१९
मणिबन्धादाकनिष्ठं करस्य करभो बहिः। पञ्चशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशिनी ॥ ६२०
अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी। मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ६२१
पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्। प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ६२२
अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः। पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ६२३
द्वौ संहतौ संहतलप्रतलौ वामदक्षिणौ। पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ॥ ६२४
प्रकोष्ठे विस्तृतकरे हस्तो मुष्टया तु बद्धया। स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ६२५
व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्। ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥ ६२६
कण्ठो गलोऽथ ग्रीवायां शिरोधिः कंधरेत्यपि। कम्बुग्रीवा त्रिरेखा सावटुर्घाटा कृकाटिका ॥ ६२७
वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्। क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ६२८
ओष्ठाधरौ तु रदनच्छदौ दशनवाससी। अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुः ॥ ६२९
रदना दशना दन्ता रदास्तालु तु काकुदम्। रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्किणी ॥ ६३०
ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ। कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका ॥६३१
लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ॥ ६३२
अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने। कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ ६३३
उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्। चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः६३४
तद्वृन्दे कैशिकं कैश्यमलकाश्चूर्णकुन्तलाः। ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः ॥ ६३५
कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः। शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा ॥६३६
वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ६३७
तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे। आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ६३८
दशैते त्रिष्वलंकर्तालंकरिष्णुश्च मण्डितः। प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥ ६३९

१ सान्तापि. २ 'अंह्रोरंह्रोद्रुहिणाः संहर्षाह्वी च घश्रुतयः'. ३ 'शेपः'. ४ 'च विलग्नं च'. ५ अदन्तोऽपि. ६ 'शमः'. ७ 'अङ्गुरी.' ८ 'चर्पट'. ९ 'रशना'. १० इदन्तक्लीबद्विवचनम्, 'सृकन्', 'सृकन्', अदन्तं सृक्कमपि; 'सृक्कणी' ङ्यन्ता च; 'सृकणि'; इतीदन्तोऽपि. ११ अदन्तः, सान्तमपि. १२ सान्तम्, अदन्तोऽपि. १३ 'शिखाण्डकः'. १४ 'वेशः'.

विभ्राड् भ्राजिष्णुरोचिष्णू भूषणं स्यादलंक्रिया । अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥ ६४०
मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम् । चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ ६४१
वालपाश्या पारितथ्या पत्रपाश्या ललाटिका । कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम् ॥ ६४२
ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका । स्वर्णैः प्रालम्बिकाथोरःसूत्रिका मौक्तिकैः कृता ॥ ६४३
हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिका । हारभेदा यष्टिभेदाद्गुच्छगुच्छार्धगोस्तनाः ॥ ६४४
अर्धहारो माणवक एकावल्येकयष्टिका । सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ ६४५
आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् । केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका ॥ ६४६
साक्षराङ्गुलिमुद्रा स्यात्कङ्कणं करभूषणम् । स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ॥ ६४७
क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु । पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥ ६४८
हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका । त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ॥ ६४९
वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत् । कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् ॥ ६५०
अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरम् । तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ६५१
पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् । क्षौमं दुकूलं स्याद्द्वे तु निवीतं प्रावृतं त्रिषु ॥ ६५२
स्त्रियां बहुले वस्त्रस्य दशाः स्युर्वस्तयो द्वयोः । दैर्घ्यमायाम आरोहः परिणाहो विशालता ॥ ६५३
पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ । वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥ ६५४
सुचेलकः पटोऽस्त्री स्याद्वराशिः स्थूलशाटकः । निचोलः प्रच्छदपटः समौ रल्लककम्बलौ ॥ ६५५
अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके । द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ६५६
संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम् । नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ॥ ६५७
अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् । स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥ ६५८
अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि । प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥ ६५९
परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा । उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः ॥ ६६०
स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम् । अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे ॥ ६६१
तमालपत्रतिलकचित्रकाणि विशेषकम् । द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ॥ ६६२
काश्मीरजन्माग्निशिखं वरं बाल्हीकपीतने । रक्तसंकोचपिशुनं धीरं लोहितचन्दनम् ॥ ६६३
लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः । लवङ्गं देवकुसुमं श्रीसंज्ञमथ जायकम् ॥ ६६४
कालीयकं च कालानुसार्यं चाथ समार्थकम् । वंशिकागुरुराजार्हलोहं कृमिजजोङ्गकम् ॥ ६६५
कालागुर्वगुरु स्यात्तन्मङ्गल्या मल्लिगन्धि यत् । यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ ६६६
बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपकौ । तुरुष्कः पिण्डकः सिल्हो यावनोऽप्यथ पायसः ॥ ६६७
श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ । मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ॥ ६६८
कक्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ ६६९
गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् । तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ ६७०

१ 'मकुटम्'. २ हारापि. ३ 'गुत्सगुत्सार्ध' इत्यपि. ४ 'रसना.' ५ 'आनाहः'. ६ 'वराशिः'. ७ 'यमनिका'. ८ 'कालेयकम्'. ९ 'वंशकम्.' १० 'रालः'. ११ 'मृगः, नाभि'. १२ 'सिताभः'.

तिलपर्णी तु पत्त्राङ्गं[1] रञ्जनं रक्तचन्दनम् । कुचन्दनं चाथ जाती[2]कोष[3]जातीफले समे ॥ ६७१
कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः । गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ ६७२
चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु । संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥ ६७३
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः । प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् ॥ ६७४
प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षिकं तु तत् । यत्तिर्यक्क्षिप्तमुरसि शिखास्वापीडशेखरौ ॥ ६७५
रचना स्यात्परिस्यन्द आभोगः परिपूर्णता । उपधानं तूपबर्हः शय्यायां शयनीयवत् ॥ ६७६
शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः । गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम् ॥ ६७७
समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः । प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ॥ ६७८
दर्पणे मुकुरा[4]दर्शौ व्यजनं तालवृन्तकम् ॥ ६७९

इति मनुष्यवर्गः ॥ ६ ॥

संततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः संतानो वर्णाः स्युर्ब्राह्मणादयः ॥ ६८०
विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् । राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः ॥ ६८१
महा[5]कुलकुलीनार्यसभ्यसज्जनसाधवः । ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ६८२
आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः । विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्वृतः ॥ ६८३
विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः । धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः ६८४
धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः । दूरदर्शी दीर्घदर्शी श्रोत्रियच्छान्दसौ समौ ॥[7] ६८५
उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिकृद्गुरुः । मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ॥ ६८६
यष्टा च यजमानश्च स सोमवति दीक्षितः । इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ॥ ६८७
स गीर्पतीष्ट्या स्थपतिः सोमपीथी तु सोमपाः । सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ६८८
अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः । लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते ॥ ६८९
छात्त्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः । एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ६९०
सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित् । पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ ६९१
उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः । यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ ६९२
पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते पञ्चमहायज्ञा ब्रह्मयज्ञादिनामकाः ॥ ६९३
समज्या परिषद्[8]गोष्ठी सभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥ ६९४
प्राग्वंशः प्राग्घविर्गेहात्सदस्या विधिदर्शिनः । सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते ६९५
अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् । आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥ ६९६
वेदिः परिष्कृता भूमिः समे स्थण्डिलचत्वरे । चषालो यूपकटकः कुम्बा सुगहना वृतिः ॥ ६९७
यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः । दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ ६९८
अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोऽनलः । समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ ६९९

---

१ 'पत्त्राङ्गम्', 'पतङ्गम्'. २ 'जातिः' ह्रस्वान्ता च. ३ 'जाती, फलम्'. ४ 'मकुरः', 'मकुरः'. ५ 'माहा' कुलः'. ६ इन्नन्तोऽपि. ७ एतदग्रे 'मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि । वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि ॥ नैयायिकस्त्वक्षपादः स्यात्स्याद्वादिक आर्हकः । चार्वाकलौकायतिकौ सत्कार्ये सांख्यकापिलौ ॥' इति प्रक्षिप्तम्. ८ 'पर्षत्'.

४

7

यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते । तस्मिन्नानाय्योऽथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ ७००
ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने । गायत्रीप्रमुखं छन्दो हव्यपाके चरुः पुमान् ॥ ७०१
आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः । [1]धुवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ ७०२
पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम् । हव्यकव्ये दैवपित्र्ये अन्ने पात्रं स्रुवादिकम् ॥ ७०३
ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः [2]स्त्रियः । उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ ७०४
परम्पराकं शमनं प्रोक्षणं च वधार्थकम् । वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥ ७०५
सांनाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम् । दीक्षान्तोऽवभृथो यज्ञे तत्कर्मार्हं तु यज्ञियम् ॥ ७०६
त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादि कर्म यत् । अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ ७०७
त्यागो विहापितं दानमुत्सर्जनविसर्जने । विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ ७०८
प्रादेशनं निर्वपणमपवर्जनमं[3]हतिः । मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ॥ ७०९
पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः । अन्वाहार्यं मासिकेंऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥
पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा । सनिस्त्वध्येषणा याच्ञाभिशस्तिर्याचनार्थना ॥ ७११
षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि । क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ७१२
स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ।[4] पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः ॥ ७१३
वरिवस्या तु शुश्रूषा परिचर्याप्युपासना । व्रज्या[5]टाट्या पर्यटनं चर्या त्वीर्यापथे स्थितिः ॥ ७१४
उपस्पर्शस्त्वाचमनमथ मौनमभाषणम् ।[6] आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः ॥ ७१५
पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः । नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ॥ ७१६
औपवस्त्रं तूपवासो विवेकः पृथगात्मता । स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथाञ्जलिः ॥ ७१७
पाठे ब्रह्माञ्जलिः पाठे विप्रुषो ब्रह्मबिन्दवः । ध्यानयोगासने ब्रह्मासनं कल्पे विधिक्रमौ ॥ ७१८
मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः । संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ॥ ७१९
समे तु पादग्रहणमभिवादनमित्युभे । भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥ ७२०
तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः । तपःक्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः ॥ ७२१
[7]ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतो व्रती । ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ ७२२
यः [8]स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ । स्थाण्डिलश्चाथ विरजस्तमसः स्युर्द्वयातिगाः ॥ ७२३
पवित्रः प्रयतः पूतः पाषण्डाः सर्वलिङ्गिनः । पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः ॥ ७२४
अस्त्री कमण्डलुः कुण्डी व्रतिनामासनं वृषी । अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम् ॥ ७२५
स्वाध्यायः स्याज्जपः सुत्याभिषवः सवनं च सा । सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ७२६
दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् । शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥ ७२७
नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम् ।[9] उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥ ७२८
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ॥ ७२९

---

१ धवित्रमपि. २ 'स्त्रियाः'. ३ अंहितिरपि. ४ एतदग्रे 'प्राघूर्णिकः प्राघुणकश्चाभ्युत्थानं तु गौरवम्' इति प्रक्षिप्तम्. ५ 'अटा, अट्या' इति पृथगपि. ६ एतदग्रे 'प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः । वाल्मीकश्चाथ गाधेयो विश्वामित्रश्च कौशिकः ॥ व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः ॥' इति प्रक्षिप्तम्. ७ 'रिषिः' व्यञ्जनादिरपि. ८ दन्त्यवत्यपि. ९ एतदग्रे 'क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु' इति प्रक्षिप्तम्.

अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम् । मध्येऽङ्गुष्ठाङ्गुल्योः पि[1]त्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम् ॥ ७३०
स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि । देवभूयादिकं तद्वत्कृच्छ्रं सांतपनादिकम् ॥ ७३१
संन्यासवत्यनशने पुमान्प्रायोऽथ वीरहा । नष्टाग्निः कुहना लोभान्मिथ्येर्यापथकल्पना ॥ ७३२
व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः । धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ॥ ७३३
सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ॥ ७३४
परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् । परिवित्तिस्तु तज्ज्यायान्विवाहोपयमौ समौ ॥ ७३५
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् । [2]व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ॥ ७३६
[3]त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः । सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धा वरस्य ये ॥ ७३७

इति ब्रह्मवर्गः ॥ ७ ॥

---

मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् । राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ ७३८
राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः । चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः ॥ ७३९
येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् ॥ ७४०
राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् । मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः ॥ ७४१
महामात्राः प्रधानानि पुरोधास्तु पुरोहितः । द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ७४२
प्रतीहारो द्वारपालद्वास्थद्[4]वास्थितदर्शकाः । रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौ समौ ॥ ७४३
स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु । भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः ॥ ७४४
अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः । सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ७४५
शण्ढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः । विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ॥ ७४६
उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः । रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ ७४७
द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः । अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ७४८
वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत् । सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥ ७४९
यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ ॥ ७५०
सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि । स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥ ७५१
तान्त्रिको ज्ञातसिद्धान्तः सत्री गृहपतिः समौ । लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ ७५२
लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ । स्यात्संदेशहरो दूतो दूत्यं तद्भावकर्मणी ॥ ७५३
अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ ७५४
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च । संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ ७५५
षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः । क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ ७५६
स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम् । भेदो दण्डः साम दानमित्युपायचतुष्टयम् ॥ ७५७
साहसं तु दमो दण्डः साम सान्त्वमथो समौ । भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् ॥ ७५८
पञ्च त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः । विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥ ७५९

---

१ 'पैत्रम्'. २ 'व्यवायो ग्राम्यधर्मश्च रतं निधुवनं तथा' इति मुकुटस्थः पाठः. ३ त्रिगणोऽपि. ४ द्वास्थितो दर्शकश्च. ५ तालव्याद्यपि.

रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु । समौ विस्रम्भविश्वासौ भ्रेषो भ्रंशो यथोचितात् ॥ ७६०
अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् । युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ ७६१
न्याय्यं च त्रिषु षट् संप्रधारणा तु समर्थनम् । अववादस्तु निर्देशो निदेशः शासनं च सः ॥७६२
शिष्टिश्चाज्ञा च संस्था तु मर्यादा धारणा स्थितिः । आगोऽपराधो मन्तुश्च समे तूद्दानबन्धने ॥७६३
द्विपाद्यो द्विगुणो दण्डो भागधेयः करो बलिः । घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं तु प्रदेशनम् ॥७६४
उपायनमुपग्राह्यमुपहारस्तथोपदा । यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ ७६५
तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः । सांदृष्टिकं फलं सद्य उदर्कः फलमुत्तरम् ॥ ७६६
अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् । महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ७६७
प्रक्रिया त्वधिकारः स्याच्चामरं तु प्रकीर्णकम् । नृपासनं यत्तद्भद्रासनं सिंहासनं तु तत् ॥ ७६८
हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत् । भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका ॥ ७६९
निवेशः शिबिरं षण्ढे सज्जनं तूपरक्षणम् । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ७७०
दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः । मतङ्गजो गजो नागः कुंजरो वारणः करी ॥ ७७१
इभः स्तम्बेरमः पद्मी यूथनाथस्तु यूथपः । मदोत्कटो मदकलः कलभः करिशावकः ॥ ७७२
प्रभिन्नो गर्जितो मत्तः समावुद्वान्तनिर्मदौ । हास्तिकं गजता वृन्दे करिणी धेनुका वशा ॥ ७७३
गण्डः कटो मदो दानं वमथुः करशीकरः । कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान् ॥७७४
अवग्रहो ललाटं स्यादीषिका त्वक्षिकूटकम् । अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका ॥ ७७५
अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत् । आसनं स्कन्धदेशः स्यात्पद्मकं बिन्दुजालकम् ७७६
पार्श्वभागः पक्षभागो दन्तभागस्तु योऽग्रतः । द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥ ७७७
तोत्रं वेणुकमालानं बन्धस्तम्भेऽथ शृङ्खले । अन्दुको निगडोऽस्त्री स्यादङ्कुशोऽस्त्री सृणिः[1] स्त्रियाम् ॥
दूष्या[2] कक्ष्या[3] वरत्रा स्यात्कल्पना सज्जना समे । प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥७७९
वीतं त्वसारं हस्त्यश्वं वारी तु गजबन्धनी । घोटके वीतितुरगतुरंगाश्वतुरंगमाः ॥ ७८०
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः । आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ॥ ७८१
वनायुजाः पारसीकाः काम्बोजा बाह्लिका हयाः । ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः ॥ ७८२
पृष्ठ्यः स्थौरी सितः कर्को रथ्यो वोढा रथस्य यः । बालः किशोरो वाम्यश्वा वडवा वाडवं गणे ॥
त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते । कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः ॥ ७८४
निगालस्तु गलोद्देशो वृन्दे त्वश्वीयमाश्ववत् । आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥७८५
गतयोऽमूः पञ्च धारा घोणा तु प्रोथमस्त्रियाम् । कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान् ॥
पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः । त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ७८७
याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः । असौ पुष्यरथश्चक्रयानं न समराय यत् ॥ ७८८
कर्णीरथः प्रवहणं डयनं[4] च समं त्रयम् । क्लीबेऽनः शकटोऽस्त्री स्याद्गन्त्री कम्बलिवाह्यकम् ॥७८९
शिबिका याप्ययानं स्याद्दोला प्रेङ्खादिका स्त्रियाम् । उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ७९०
पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली । रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥ ७९१
त्रिषु द्वैपादयो रथ्या रथकट्या रथव्रजे । धूः स्त्री क्लीबे यानमुखं स्याद्रथाङ्गमपस्करः ॥ ७९२

१ तालव्यादिश्च. २ 'चूषा'. ३ 'कक्षा'. ४ 'डयनम्'.

चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान् । पिण्डिका नाभिरक्षाग्रकीलके तु द्वयोरणिः ७९३
रथगुप्तिर्वरूथो ना कूबरस्तु युगंधरः । [1]अनुकर्षो दार्वधःस्थं प्रासङ्गो ना युगाद्युगः ॥ ७९४
सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् । परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ७९५
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः । नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ॥ ७९६
सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः । रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः ॥ ७९७
भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः । सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥ ७९८
बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः । परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ॥ ७९९
कञ्चुको [2]वारबाणोऽस्त्री यत्तु मध्ये सकञ्चुकाः । बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शीर्षकम् ॥ ८००
शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् । उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥ ८०१
आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् । संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ८०२
त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे । पदातिपत्तिपदगपादातिकपदाजयः ॥ ८०३
पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः । शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥ ८०४
कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् । अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥ ८०५
धन्वी धनुष्मान्धानुष्को निषङ्ग्यस्त्री धनुर्धरः । स्यात्काण्डवांस्तु काण्डीरः शाक्तीकः शक्तिहेतिकः ॥
याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ । नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ प्रासिककौन्तिकौ ॥ ८०७
चर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः । अनुप्लवः सहायश्चानुचरोऽभिसरः समाः ॥ ८०८
पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः । पुरोगमः पुरोगामी मन्दगामी तु मन्थरः ॥ ८०९
[3]जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ । तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ८१०
जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके । जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति ॥ ८११
सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि । ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ८१२
स्यादुरस्वानुरसिलो रथिको रथिरो रथी । कामंगाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम् ॥ ८१३
शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः । सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥ ८१४
ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः । वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ ८१५
व्यूहस्तु बलविन्यासो भेदा दण्डादयो युधि । प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ ८१६
एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८१७
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी दशानीकिन्योऽक्षौहिण्यथ संपदि ॥ ८१८
संपत्तिः श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ । आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥ ८१९
[4]धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥ ८२०
कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ । कोटिरस्याटनी गोधातले ज्याघातवारणे ॥ ८२१
लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः । स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८२२
लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् । पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८२३
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः । प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिपूत्तरे ॥ ८२४
निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ । तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८२५

१ 'अनुकर्षा' नान्तोऽपि. २ बाणवारश्च. ३ 'जङ्घिलः'. ४ उकारान्तः पुंलिङ्गोऽपि.

तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः । कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ॥ ८२६
त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् । फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः ॥ ८२७
द्रुघणो मुद्गरघनौ स्यादीली करवालिका । भिन्दिपालः सृगस्तुल्यौ परिघः परिघातनः ॥ ८२८
द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः । स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥ ८२९
वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम् । प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥
सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः । लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥ ८३१
यत्सेनयाभिगमनमरौ तदभिषेणनम् । यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः ॥ ८३२
स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम् । अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ८३३
वैतालिका बोधकराश्चाक्रिका घाण्टिकार्थकाः । स्युर्मागधास्तु मधुका बन्दिनः स्तुतिपाठकाः ॥ ८३४
संशप्तकास्तु समयात्सङ्ग्रामादनिवर्तिनः । रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ॥ ८३५
चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले । पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ॥ ८३६
सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा । अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम् ॥ ८३७
आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ॥ ८३८

अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः ।
द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ॥ ८३९

शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता । वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे ॥ ८४०
युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् । मृधमास्कन्दनं संख्यं समीकं सांपरायिकम् ॥ ८४१
अस्त्रियां समरानीकरणाः कलहविग्रहौ । संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥ ८४२
अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः । समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥ ८४३
नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले । क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना घटा ॥ ८४४
क्रन्दनं योधसंरावो बृंहितं करिगर्जितम् । विस्फारो धनुषः स्वानः पटहाडम्बरौ समौ ॥ ८४५
प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम् । अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ॥ ८४६
मूर्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् । अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः ॥ ८४७
वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा । प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ॥ ८४८
अपक्रमोऽपयानं च रणे भङ्गः पराजयः । पराजितपराभूतौ त्रिषु नष्टतिरोहितौ ॥ ८४९
प्रमापणं निबर्हणं निकारणं विशारणम् । प्रवासनं परासनं निषूदनं निहिंसनम् ॥ ८५०
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् । निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥ ८५१
निर्वापणं विशसनं मारणं प्रतिघातनम् । उद्वासनप्रमथनक्रथनोज्जासनानि च ॥ ८५२
आलम्भपिञ्जविशरघातोन्माथवधा अपि । स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ॥ ८५३
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् । परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ॥ ८५४
मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् । कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ॥ ८५५
श्मशानं स्यात्पितृवनं कुणपः शवमस्त्रियाम् । प्रग्रहोपग्रहौ बन्द्यां कारा स्याद्बन्धनालये ॥ ८५६
पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम् । आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ॥ ८५७

इति क्षत्रियवर्गः ॥ ८ ॥

---

१ 'ऋष्टिः' अजादिरपि. २ 'करपालः'. ३ 'परस्वधः'. ४ तालव्यादिरपि. ५ पांसुरपि. ६ 'सांपरायकम्.' ७ निगन्धनमपि.

ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः । आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ ८५८
स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः । सेवा श्ववृत्तिरनृतं कृषिर्[1]उञ्छशिलं त्वृतम् ॥ ८५९
द्वे याचितायाचितयोर्यथासंख्यं मृतामृते । सत्यानृतं वणिग्भावः स्याद्दृणं पर्युदञ्चनम् ॥ ८६०
उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका । याच्ञयाप्तं याचितकं निमयादापमित्यकम् ॥ ८६१
उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् । कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ॥ ८६२
क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः । क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ८६३
यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत् । तिल्यं तैलीनवन्माषोमाणुभङ्गा द्विरूपता ॥ ८६४
मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।[2] बीजाकृतं तूप्तकृष्टे सीत्यं कृष्टं च हल्यवत् ॥ ८६५

त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।
द्विगुणाकृते तु सर्वं पूर्वं [3]शम्बाकृतमपीह ॥ ८६६

द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः । खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ ८६७
पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु । कैदारकं स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे ॥ ८६८
लोष्टानि लेष्टवः पुंसि कोटिशो लोष्टभेदनः । प्राजनं तोदनं तोत्रं खनित्रमवदारणे ॥ ८६९
दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम् । निरीशं [4]कुटकं फालः [5]कृषको लाङ्गलं हलम् ॥ ८७०
गोदारणं च सीरोऽथ शम्या स्त्री युगकीलकः । [6]ईषा लाङ्गलदण्डः स्यात्[7]सीता लाङ्गलपद्धतिः ॥ ८७१
पुंसि मेधिः खलेदारु न्यस्तं यत्पशुबन्धने । [8]आशुर्व्रीहिः पाटलः स्या[9]च्छितशूकयवौ समौ ॥ ८७२
तोक्मस्तु तत्र हरिते कलायस्तु [10]संतीनकः । हरेणुखण्डिकौ चास्मिन्कोरदूषस्तु कोद्रवः ॥ ८७३
मङ्गल्यको मसूरोऽथ मकुष्टक[11]मयुष्टकौ । वनमुद्गे सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥ ८७४
सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ । स्याद्यावकस्तु [12]कुल्माषश्चणको [13]हरिमन्थकः ॥ ८७५
द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले । क्षवः [14]क्षुताभिजननो राजिका कृष्णिकासुरी ॥ ८७६
स्त्रियौ कङ्गुप्रियङ्गू द्वे अतसी स्यादुमा क्षुमा । मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः पुमान् ॥ ८७७
किंशारुः सस्यशूकं स्यात्कणिशं सस्यमञ्जरी । धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छस्तृणादिनः ॥ ८७८
नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः । कडङ्गरो [15]बुसं क्लीबे धान्यत्वचि तुषः पुमान् ॥
शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी [16]शिम्बा त्रिषूत्तरे । [17]ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ॥ ८८०
माषादयः शमीधान्ये शूकधान्ये यवादयः । शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥ ८८१
तृणधान्यानि नीवाराः स्त्री [18]गवेधुर्गवेधुका । अयोग्रं [19]मुसलोऽस्त्री स्यादुदूखलमुलूखलम् ॥ ८८२
प्रस्फोटनं [20]शूर्पमस्त्री चालनी तितउः पुमान् । स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ ॥ ८८३
समानौ रसवत्यां तु पाकस्थानमहानसे । पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवाः ॥ ८८४
आरालिका आन्धसिकाः सूदा औदनिका गुणाः । आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥ ८८५
अश्मन्त[21]मुद्धानमधिश्रयणी चुल्लिरन्तिका । अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि ॥ ८८६

---

१ 'उञ्छः, शिलम्' इत्यपि. २ एतदग्रे 'शाकक्षेत्रादिके शाकशाकटं शाकशाकिनम्' इति प्रक्षिप्तम्. ३ दन्त्यादि च. ४ 'कूटकम्'. ५ 'कृषिकः'. ६ 'ईशा'. ७ 'शीता'. ८ 'आशुव्रीहिः'. ९ 'सितशूकः' दन्त्यादिश्च. १० 'सतीलकः'. ११ 'मयष्टकः'. १२ दन्त्यान्त्योऽपि. १३ 'हरिमन्थजः'. १४ क्षुधाभिजननश्च. १५ बुषं च. १६ दन्त्यादिरपि. १७ रिद्धमपि. १८ गवेडुरपि. १९ मुषलोऽपि. २० सूर्पमपि. २१ उद्ध्मानमपि.

हसन्यप्यथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम् । क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम् ॥
अलिञ्जरः स्यान्मणिकः कर्कर्यालुर्गलन्तिका । पिठरः स्थाल्युखा कुण्डं कलशस्तु त्रिषु द्वयोः ॥ ८८८
घटः कुटनिपावस्त्री शरावो वर्धमानकः । [3]ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजनम् ॥ ८८९
कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान् । सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् ॥ ८८०
दर्विः कम्बिः खजाका च स्यात्तर्दूर्दारुहस्तकः । अस्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका ८९१
कलम्बश्च कडम्बश्च वेसवार उपस्करः । तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥ ८९२
मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम् । जीरको जरणोऽजाजी कणा कृष्णे तु जीरके ॥ ८९३
सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका । आर्द्रकं शृङ्गवेरं स्यादथ छत्रा वितुन्नकम् ॥ ८९४
कुस्तुम्बुरु च धान्याकमथ शुण्ठी महौषधम् । स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ८९५
आरनालकसौवीरकुल्माषाभिषुतानि च । अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ॥ ८९६
सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम् । तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ८९७
निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी । सामुद्रं यत्तु लवणमक्षीवं [10]वंशिरं च तत् ॥ ८९८
सैन्धवोऽस्त्री [11]शीतशिवं [12]मणिमन्थं च सिन्धुजे । रौमकं वसुकं पाक्यं बिडं च कृतके द्वयम् ॥ ८९९
सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके । मत्स्यण्डी फाणितं खण्डविकारः शर्करा सिता ॥ ९००
कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता । स्यात्तेमनं तु निष्ठानं त्रिलिङ्गा वासितावधेः ॥ ९०१
शूलाकृतं भटित्रं स्याच्छूल्यमुख्यं तु पैठरम् । प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम् ॥ ९०२
स्यात्पिच्छिलं तु [13]विजिलं संमृष्टं शोधितं समे । चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते ॥ ९०३
आपक्वं पौलिरभ्यूषो लाजाः पुंभूम्नि चाक्षताः । पृथुकः स्याच्चिपिटको धाना भृष्टयवे स्त्रियः ॥ ९०४
पूपोऽपूपः पिष्टकः स्यात्करम्भो दधिसक्तवः । भिःसा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः ॥
भिःसटा दग्धिका सर्वरसाग्रे मण्डमस्त्रियाम् । मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ९०६
यवागूरुष्णिका श्राणा विलेपी तरला च सा । [14]गव्यं त्रिषु गवां सर्वं गोविट् गोमयमस्त्रियाम् ९०७
तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयः समम् । पयस्यमाज्यदध्यादि [15]द्रप्सं दधि घनेतरत् ॥ ९०८
घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् । तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम् ॥ ९०९
दण्डाहतं कालशेयमरिष्टमपि गोरसः । तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ९१०
मण्डं दधिभवं मस्तु [16]पीयूषोऽभिनवं पयः । अशनाया बुभुक्षा क्षुद्ग्रासस्तु [17]कवलः पुमान् ॥ ९११
सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् । उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम्
जेमनं लेह आहारो निघासो न्याद इत्यपि । सौहित्यं तर्पणं तृप्तिः [18]फेला भुक्तसमुज्झितम् ॥ ९१३
कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् । गोपे गोपालगोसंख्य[19]गोधुगाभीरबल्लवाः ॥ ९१४
गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरे । गोमान्गोमी गोकुलं तु गोधनं स्याद्गवां व्रजे ॥ ९१५

---

१ दन्त्यान्त्यश्च. २ दन्त्यादिश्च. ३ ऋचीषमपि. ४ उषणमपि. ५ सुशवी च. ६ काञ्जिकमपि. ७ त्वक्पत्री च. ८ वाष्पीका च. ९ कर्वरी च. १० वसिरं च. ११ सितशिवमपि. १२ मणिबन्धं च. १३ विजयिलमपि. १४ एतदग्रे 'म्रक्षणाभ्यञ्जने तैलं कृसरस्तु तिलौदनः' इति प्रक्षिप्तम्. १५ त्रप्स्यमपि. १६ पेयूषोऽपि. १७ 'कवलार्थकः' इति मुकुटाद्दृतः पाठः. १८ फेलिरपि. १९ 'गोदुहः' अन्तोऽपि. २० 'यादवं धनम्' इति सुभूतिः—इति मुकुटः.

त्रिष्वाशितंगवीनं तद्गावो यत्राशिताः पुरा । उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ९१६
अनड्वान्सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् । गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके ॥ ९१७
वृषो महान्महोक्षः स्याद्वृद्धोक्षस्तु जरद्गवः । उत्पन्न उक्षा जातोक्षः सद्यो जातस्तु तर्णकः ॥ ९१८
शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ । आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः॥९१९
स्कन्धदेशे त्वस्य वहः सास्ना तु गलकम्बलः । स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड्युगपार्श्वगः ॥ ९२०
युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः । खनति तेन तद्वोढास्येदं हालिकसैरिकौ ॥ ९२१
धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः । उभावेकधुरीणैकधुरावेकधुरावहे ॥ ९२२
स तु सर्वधुरीणः स्याद्यो वै सर्वधुरावहः । माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥ ९२३
अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी । वर्णादिभेदात्संज्ञाः स्युः शबलीधवलादयः ॥ ९२४
द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी । चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायणी ॥ ९२५
वशा वन्ध्यावतोका तु स्रवद्गर्भाथ संधिनी । आक्रान्ता वृषभेणाथ वेहद्गर्भोपघातिनी ॥ ९२६
काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी । स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका ॥ ९२७
चिरप्रसूता बष्कयणी धेनुः स्यान्नवसूतिका । सुव्रता सुखसंदोह्या पीनोघ्नी पीवरस्तनी ॥ ९२८
द्रोणक्षीरा द्रोणदुघा धेनुष्या बन्धके स्थिता । समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ९२९
ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ । न पुंसि दाम संदानं पशुरज्जुस्तु दामनी ॥ ९३०
वैशाखमन्थमन्थानमन्थानो मन्थदण्डके । कुठरो दण्डविष्कम्भो मन्थनी गर्गरी समे ॥ ९३१
उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः । करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ९३२
अजा छागी शुभच्छागबस्तच्छगलका अजे । मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ९३३
उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् । चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ॥ ९३४
वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् । पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ९३५
विक्रेता स्याद्विक्रयिकः क्रायकक्रयिकौ समौ । वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः९३६
नीवी परिपणो मूलधनं लाभोऽधिकं फलम् । परिदानं परीवर्तो नैमेयनिमयावपि ॥ ९३७
पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम् । क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥ ९३८
विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु । क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियाम् ॥ ९३९
विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु । विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः९४०
संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः । पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥ ९४१
यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् । मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ॥ ९४२
ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् । सुवर्णबिस्तौ हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले ॥ ९४३
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः । आचितो दश भाराः स्युः शाकटो भार आचितः ॥
कार्षापणः कार्षिकः स्यात्कार्षिके ताम्रिके पणः । अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः॥९४५
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् । पादस्तुरीयो भागः स्यादंशभागौ तु वण्टके ॥९४६
द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु । हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९४७

१ अयमर्धश्लोको मुकुटपुस्तकेषु नोपलभ्यते. २ स्यादित्यन्तं पादद्वयं मुकुटे नास्ति. ३ इत्वरश्च. ४ 'पष्ठवाट्'. ५ 'वष्कयिणी'. ६ 'बन्धनी'. ७ 'कुटपः' इत्यपि.

स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद्द्वयमाहतम् ॥ ९४८
गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः । शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम् ॥ ९४९
मुक्ताथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम् । रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९५०
स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ ९५१
चामीकरं जातरूपं महारजतकाञ्चने । रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५२
अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः । दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९५३
रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् । शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्टोदुम्बराणि च ॥ ९५४
लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी । अश्मसारोऽथ मण्डूरं सिंहाणमपि तन्मले ॥ ९५५
सर्वं च तैजसं लोहं विकारस्त्वयसः कुशी । क्षारः काचोऽथ चपलो रसः सूतश्च पारदे ॥ ९५६
गवलं माहिषं शृङ्गमभ्रकं गिरिजामले । स्रोतोञ्जनं तु सौवीरं कापोताञ्जनयामुने ॥ ९५७
तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके । कर्परी दार्विका क्वाथोद्भवं तुत्थं रसाञ्जनम् ॥ ९५८
रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि तु गन्धिकः । सौगन्धिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका ॥ ९५९
रीतिपुष्पं पुष्पकेतु पुष्पकं कुसुमाञ्जनम् । पिञ्जरं पीतनं तालमालं च हरितालके ॥ ९६०
गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु । बोलगन्धरसप्राणपिण्डगोपरसाः समाः ॥ ९६१
ढिँण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम् । नागसीसकयोगेष्टवप्राणि त्रपु पिच्चटम् ॥ ९६२
रङ्गवङ्गे अथ पिँचुस्तूलोऽथ कमलोत्तरम् । स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ॥ ९६३
मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि । मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थकम् ॥ ९६४
मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका । नैपाली कुनटी गोला यवक्षारो यवाग्रजः ॥ ९६५
पाक्योऽथ सर्जिकाक्षारः कापोतः सुखवर्चकः । सौवर्चलं स्याद्रुचकं त्वक्क्षीरी वंशरोचना ॥ ९६६
शिग्रुजं श्वेतमरिचं मोरटं मूलमैक्षवम् । ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥ ९६७
गोलोमी भूतकेशो ना पत्राङ्गं रक्तचन्दनम् । त्रिकटु त्र्यूषणं व्योषं त्रिफला तु फलत्रिकम् ॥ ९६८

इति वैश्यवर्गः ॥ ९ ॥

---

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः । आ चण्डालात्तु संकीर्णा अम्बष्ठकरणादयः ॥ ९६९
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्द्विजन्मनोः । शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः ॥ ९७०
माहिष्योऽर्याक्षत्रिययोः क्षत्तार्याशूद्रयोः सुतः । ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहको विशः ९७१
रथकारस्तु माहिष्यात्करण्यां यस्य संभवः । स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ९७२
कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः । कुँलकः स्यात्कुलश्रेष्ठी मालाकारस्तु मालिकः ९७३
कुम्भकारः कुलालः स्यात्पलगण्डस्तु लेपकः । र्तन्तुवायः कुविन्दः स्यात्तुन्नवायस्तु सौचिकः ॥ ९७४
रङ्गाजीवश्चित्रकरः शस्त्रमार्जोऽसिधावकः । पादूकृच्चर्मकारः स्याद्व्योकारो लोहकारकः ॥ ९७५
नाडिंधमः स्वर्णकारः कलादो रुक्मकारकः । स्याच्छाङ्खिकः काम्बविकः शौल्बिकस्ताम्रकुट्टकः ॥ ९७६
तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् । ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ॥ ९७७
क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः । निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः ॥ ९७८

---

१ पारतोऽपि. २ समस्तं व्यस्तमपि. ३ 'पिण्डीरः', दिण्डीरश्च. ४ बभ्रमपि. ५ पिचुतूलोऽपि. ६ 'शिरः' पुंलिङ्गोऽदन्तोऽपि. ७ कुलिकोऽपि. ८ तन्त्रवायोऽपि.

जाबालः स्यादजाजीवो देवाजीवस्तु देवलः। स्यान्माया शाम्बरी मायाकारस्तु प्रतिहारकः॥९७९
शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः। भरता इत्यपि नटाश्चारणास्तु कुशीलवाः॥ ९८०
मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिघाः। वेणुध्माः स्युर्वैणविका वीणावादास्तु वैणिकाः॥९८१
जीवान्तकः शाकुनिको द्वौ वागुरिकजालिकौ। वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम्॥९८२
भृतको भृतिभुक्कर्मकरो वैतनिकोऽपि सः। वार्तावहो वैवधिको भारवाहस्तु भारिकः॥ ९८३
विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः। निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः॥ ९८४
भृत्ये दासेरदासेयदासगोप्यकचेटकाः। नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः॥ ९८५
पराचितपरिस्कन्दपरजातपरैधिताः॥ ९८६

मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः।
दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च॥ ९८७

चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः। निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः॥ ९८८
भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः। व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः॥ ९८९
कौलेयकः सारमेयः कुक्कुरो मृगदंशकः। शुनको भषकः श्वा स्यादलर्कस्तु स योगितः॥ ९९०
श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी। विट्चरः सूकरो ग्राम्यो वर्करस्तरुणः पशुः॥ ९९१
आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्। दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः॥ ९९२
चौरैकागारिकस्तेनदस्युतस्करमोषकाः। प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः॥ ९९३
चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धने। वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम्॥ ९९४
उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी। शुल्बं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः॥ ९९५
उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः। पुंसि वेमा वायदण्डः सूत्राणि नरि तन्तवः॥ ९९६
वाणिर्व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्यादिकर्मणि। पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता॥९९७
जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु। पिटकः पेटकः पेडा मञ्जूषाथ विहङ्गिका॥ ९९८
भारयष्टिस्तदालम्बि शिक्यं काचोऽथ पादुका। पादूरुपानत्स्त्री सैवानुपदीना पदायता॥ ९९९
नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी कशा। चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी॥१०००
नाराची स्यादेषणिका शाणस्तु निकषः कषः। व्रश्चनः पत्रपरशुरीषिका तूलिका समे॥ १००१
तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका। आस्फोटनी वेधनिका कृपाणी कर्तरी समे॥ १००२
वृक्षादनी वृक्षभेदी टङ्कः पाषाणदारणः। क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेदिका॥ १००३
सूर्मी स्थूणायःप्रतिमा शिल्पं कर्म कलादिकम्॥ १००४

प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया।
प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्॥ १००५

वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक्। साधारणः समानश्च स्युरुत्तरपदे त्वमी॥१००६
निभसंकाशनीकाशप्रतीकाशोपमादयः। कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम्॥ १००७
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि। सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा॥ १००८
गन्धोत्तमाप्रसन्नेराकादम्बर्यः परिस्रुता। मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणम्॥ १००९

१ 'प्रैषः', 'प्रेषः', 'प्रेष्यः'. २ कुर्कुरोऽपि. ३ पञ्चालिका च. ४ विहंगमापि. ५ ताळव्यादिरपि.

शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः । मध्वासवो माधवको मधु माध्वीकमद्वयोः ॥ १०१०
मैरेयमासवः सीधुर्मेदको जगलः समौ । संधानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः ॥ १०११
कारोत्तरः[1] सुरामण्ड आपानं पानगोष्ठिका । चषकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम् ॥ १०१२
धूर्तो[2]ऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः । स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः ॥ १०१३
द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि । पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते ॥ १०१४
परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् । अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः ॥ १०१५
उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः । ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते ॥ १०१६

इति शूद्रवर्गः ॥ १० ॥

इत्यमरसिंहकृतौ नामलिङ्गानुशासने । द्वितीयकाण्डो[3] भूम्यादिः साङ्ग एव समर्थितः ॥ १०१७

## तृतीयं काण्डम् ।

विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि । लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १०१८
स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः । गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ १०१९

सुकृती पुण्यवान्धन्यो महेच्छस्तु महाशयः । हृदयालुः सुहृदयो[4] महोत्साहो महोद्यमः ॥ १०२०
प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः । वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ १०२१
पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः । दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥ १०२२
स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे । जैवातृकः स्यादायुष्मानन्तर्वाणिस्तु शास्त्रवित् ॥ १०२३
परीक्षकः कारणिको वरदस्तु समर्धकः । हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ १०२४
दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः । दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि ॥ १०२५
तत्परे[5] प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः । प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥ १०२६
गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ[6] । इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता ॥ १०२७
अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः । अधिकर्द्धिः समृद्धः[7] स्यात्कुटुम्बव्यापृतस्तु यः ॥ १०२८
स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् । वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥ १०२९
निर्वार्यः कार्यकर्ता यः संपन्नः सत्त्वसंपदा । अवाचि मूकोऽथ मनोजवसः[8] पितृसंनिभः ॥ १०३०
सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः । लक्ष्मीवाँल्लक्ष्मणः श्रीलः श्रीमान्स्निग्धस्तु वत्सलः ॥
स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः । स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥ १०३२
परतन्त्रः पराधीनः परवान्नाथवानपि । अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥ १०३३
खलपूः स्याद्बहुकरो दीर्घसूत्रश्चिरक्रियः । जाल्मोऽसमीक्ष्यकारी स्यात्कुण्ठो मन्दः क्रियासु यः ॥
कर्मक्षमोऽलंकर्मीणः क्रियावान्कर्मसूद्यतः । स कार्मः कर्मशीलो यः कर्मशूरस्तु कर्मठः ॥ १०३५
भरण्यभुक्कर्मकरः कर्मकारस्तु तत्क्रियः । अपस्नातो मृतस्नात आमिषाशी तु शौष्कलः[9] ॥ १०३६
बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः । परान्नः परपिण्डादो भक्षको घस्मरोऽद्मरः ॥ १०३७

१ कारोत्तमोऽपि. २ धार्तोऽपि. ३ 'द्वितीयो भूमिकाण्डोऽयम्'. ४ 'सहृदयः'. ५ क्वचित्तु 'तत्परे प्रसितासक्ताविष्टा उद्युक्त उत्सुकः' इति पाठः, तदाविष्टान्तं तत्परे—इति मुकुटः. ६ 'आहतलक्षण' इति दीर्घादिः. ७ 'संयुक्तः'. ८ 'मनोजवः स पितृसंनिभः'. ९ 'शाष्कलः'.

आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते । उभौ त्वात्मंभरिः कुक्षिंभरिः स्वोदरपूरके ॥ १०३८
सर्वान्नीनस्तु सर्वान्नभोजी गृध्नुस्तु गर्धनः । लुब्धोऽभिलाषुकस्[1]तृष्णक्समौ लोलुपलोलुभौ ॥ १०३९
[2]सोन्मादस्तून्मदिष्णुः स्यादविनीतः समुद्धतः । मत्ते शौण्डोत्कटक्षीबाः कामुके कमितानुकः १०४०
कम्रः कामयिताभीकः कमनः कामनोऽभिकः । विधेयो विनयग्राही वचनेस्थित आश्रवः ॥ १०४१
वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः । धृष्टे [3]धृष्णग्वियातश्च प्रगल्भः प्रतिभान्विते ॥ १०४२
स्यादधृष्टे तु शालीनो विलक्षो विस्मयान्विते । अधीरे कातरस्त्रस्नौ भीरुभीरुकभीलुकाः ॥ १०४३
आशंसुराशंसितरि गृहयालुर्ग्रहीतरि । श्रद्धालुः श्रद्धया युक्ते पतयालुस्तु पातुके ॥ १०४४
लज्जाशीलेऽपत्रपिष्णुर्वन्दारुरभिवादके । शरारुर्घातुको हिंस्रः स्याद्वर्धिष्णुस्तु वर्धनः ॥ १०४५
उत्पतिष्णुस्तूत्पतितालंकरिष्णुस्तु मण्डनः । भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तनः समौ ॥ १०४६
निराकरिष्णुः क्षिप्नुः स्यात्सान्द्रस्निग्धस्तु मेदुरः । ज्ञाता तु विदुरो बिन्दुर्विकासी तु विकस्वरः १०४७
विसृत्वरो विसृमरः प्रसारी च विसारिणि । सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी १०४८
क्रोधनोऽमर्षणः कोपी चण्डस्त्वत्यन्तकोपनः । जागरूको जागरिता घूर्णितः प्रचलायितः ॥ १०४९
स्वप्नक्शयालुर्निद्रालुर्निद्राणशयितौ समौ । पराङ्मुखः पराचीनः स्यादवाङप्यधोमुखः ॥ १०५०
देवानञ्चति देवद्र्यङ् विष्वद्र्यङ् विश्वगञ्चति । यः सहाञ्चति सध्र्यङ् स स तिर्यङ् यस्तिरोऽञ्चति १०५१
वदो वदावदो वक्ता वागीशो वाक्पतिः समौ । वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि ॥ १०५२
स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् । दुर्मुखे मुखराबद्धमुखौ शक्लः प्रियंवदे ॥ १०५३
लोहलः स्यादस्फुटवाग्गर्ह्यवादी तु कद्वदः । समौ कुवादकुचरौ स्यादसौम्यस्वरोऽस्वरः ॥ १०५४
रवणः शब्दनो नान्दीवादी नान्दीकरः समौ । जडोऽज्ञ एडमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥ १०५५
तूर्ष्णीशीलस्तु तूष्णीको नग्नोऽवासा दिगम्बरे । निष्कासितोऽवकृष्टः स्यादपध्वस्तस्तु धिक्कृतः १०५६
[4]आत्तगर्वोऽभिभूतः स्याद्[5]दापितः साधितः समौ । [6]प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः ॥
निकृतः स्याद्विप्रकृतो विप्रलब्धस्तु वञ्चितः । मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ १०५८
अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ । आपन्न आपत्प्राप्तः स्यात्कांदिशीको भयद्रुतः ॥ १०५९
आक्षारितः क्षारितोऽभिशस्ते संकसुकोऽस्थिरे । व्यसनार्तोपरक्तौ द्वौ विहस्तव्याकुलौ समौ १०६०
विक्लवो विह्वलः स्यात्तु विवशोऽरिष्टदुष्टधीः । कश्यः कशार्हे संनद्धे त्वाततायी वधोद्यते ॥ १०६१
द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ । विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः १०६२
शिश्विदानोऽकृष्णकर्मा चपलश्चिकुरः समौ । दोषैकदृक्पुरोभागी निकृतस्त्वनृजुः शठः ॥ १०६३
कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः । नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः ॥ १०६४
अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः । कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः ॥ १०६५
निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः । वनीयको याचनको मार्गणो याचकार्थिनौ ॥ १०६६
अहंकारवानहंयुः शुभंयुस्तु शुभान्वितः । दिव्योपपादुका देवा नृगवाद्या जरायुजाः ॥ १०६७
स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः । उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम् ॥ १०६८
सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् । कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ १०६९

१ तृष्णकोऽपि. २ सून्मादोऽपि. ३ धृष्णुरित्यपि. ४ आत्तगन्धोऽपि. ५ दायितोऽपि. ६ इतः सार्धश्लोको मुकुटे नोपलभ्यते.

तदा[1]सेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् । अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ १०७०
निकृष्टप्रतिकृष्टार्वरे[2]फयाप्यावमाधमाः । कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥ १०७१
मलीमसं तु मलिनं कच्चरं मलदूषितम् । पूतं पवित्रं मेध्यं च वीध्रं तु विमलार्थकम्[3] ॥ १०७२
निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् । असारं फल्गु शून्यं तु वशिकं तुच्छरिक्तके १०७३
क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः । मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत् ॥ १०७४
पराध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् । श्रेयाञ्छ्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ॥ १०७५
स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थ[4]गोचराः ॥ १०७६
अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने । विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ॥ १०७७
वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे । स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ॥ १०७८
स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः । [5]अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि॥ १०७९
प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु । पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ॥ १०८०
परःशताद्यास्ते येषां परा संख्या शतादिकात् ॥ १०८१

गणनीये तु गणेयं संख्याते गणितमथ समं सर्वम् ।
विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ॥ १०८२

समग्रं सकलं पूर्णमखण्डं स्यादनूनके । घने निरन्तरं सान्द्रं पेलवं विरलं तनु ॥ १०८३
समीपे निकटासन्नसंनिकृष्टसनीडवत् । सदे[6]शाभ्याशसविधसमर्यादसवेशवत् ॥ १०८४
उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् । संसक्ते त्वव्यवहितम[7]पदान्तरमित्यपि ॥ १०८५
नेदिष्ठमन्तिकतमं स्याद्दूरं विप्रकृष्टकम् । दवीयश्च दविष्ठं च सुदूरं दीर्घमायतम् ॥ १०८६
वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम् । उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने ॥ १०८७
न्यङ्नीचखर्वह्रस्वाः स्युरवाग्रेऽवनतानतम् । अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ॥ १०८८
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि । ऋजावजिह्मप्रगुणौ व्यस्ते त्वप्रगुणाकुलौ ॥ १०८९
शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः । स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः ॥ १०९०
कालव्यापी स कूटस्थः स्थावरो जङ्गमेतरः । चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् ॥ १०९१
चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् । चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ॥ १०९२
अतिरिक्तः समधिको दृढसंधिस्तु संहतः । कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ॥ १०९३
[8]जठरं मूर्तिमन्मूर्तं प्रवृद्धं प्रौढमेधितम् । पुराणे प्रतनप्रत्नपुरातनचिरंतनाः ॥ १०९४
प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः । नूत्नश्च सुकुमारं तु कोमलं मृदुलं मृदु ॥ १०९५
अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् । प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम् ॥ १०९६
एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि । अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि सः ॥ १०९७
पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् । अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः ॥ १०९८
मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् । साधारणं तु सामान्यमेकाकी त्वेक [9]एककः ॥ १०९९
भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि । उच्चावचं नैकभेदमुद्दण्ड[10]मवलम्बितम् ॥ ११००

१ असेचनकमपि. २ 'रेपः' अदन्तोऽपि, 'रेपाः' सान्तोऽपि. ३ 'विमलात्मकम्'. ४ 'वाचकाः'. ५ अयमर्धश्लोको मुकुटे नोपलभ्यते. ६ दन्त्यान्त्योऽपि. ७ अपटान्तरमपि. ८ जरठमपि. ९ एकलोऽपि. १० अवलम्बनमपि.

अरुंतुदं तु मर्मस्पृगबाधं तु निरर्गलम् । प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ॥ ११०१
वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम् । संकटं ना तु संबाधः कलिलं गहनं समे ॥ ११०२
संकीर्णे संकुलाकीर्णे मुण्डितं परिवापितम् । ग्रन्थितं संदितं दृब्धं विसृतं विस्तृतं ततम् ॥ ११०३
अन्तर्गतं विस्मृतं स्यात्प्राप्तप्रणिहिते समे । वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ॥ ११०४
नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः । परिक्षिप्तं तु निवृतं मूषितं मुषितार्थकम् ॥ ११०५
प्रवृद्धप्रसृते न्यस्तनिसृष्टे गुणिताहते । निदिग्धोपचिते गूढगुप्ते गुण्ठितरूषिते ॥ ११०६
द्रुतावदीर्णे उद्गूर्णोद्यते काचितशिक्यिते । घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृते समे ॥ ११०७
वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम् । रुग्णं भुग्नेऽथ निशितक्ष्णुतशातानि तेजिते ॥ ११०८
स्याद्विनाशोन्मुखं पक्वं ह्रीणह्रीतौ तु लज्जिते । वृत्ते तु वृतवावृत्तौ संयोजित उपाहितः ॥ ११०९
प्राप्यं गम्यं समासाद्यं स्यन्नं रीणं स्नुतं स्रुतम् । संगूढः स्यात्संकलितोऽवगीतः ख्यातगर्हणः ॥ १११०
विविधः स्याद्बहुविधो नानारूपः पृथग्विधः । अवरीणो धिक्कृतश्चाप्यवध्वस्तोऽवचूर्णितः ॥ ११११
अनायासकृतं फाण्टं स्वनितं ध्वनितं समे । बद्धे संदानितं मूतमुद्दितं संदितं सितम् ॥ १११२
निष्पक्के क्वथितं पाके क्षीराज्यहविषां शृतम् । निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिले ॥ १११३
पक्वं परिणते गूनं हन्ने मीढं तु मूत्रिते । पुष्टे तु पुषितं सोढे क्षान्तमुद्वान्तमुद्गते ॥ १११४
दान्तस्तु दमिते शान्तः शमिते प्रार्थितेऽर्दितः । ज्ञप्तस्तु ज्ञपिते छन्नश्छादिते पूजितेऽञ्चितः ॥ १११५
पूर्णस्तु पूरिते क्लिष्टः क्लिशितेऽवसिते सितः । प्रुष्टप्लुष्टोषिता दग्धे तष्टत्वष्टौ तनूकृते ॥ १११६
वेधितच्छिद्रितौ विद्धे विन्नवित्तौ विचारिते । निष्प्रभे विगतारोकौ विलीने विद्रुतद्रुतौ ॥ १११७
सिद्धे निर्वृत्तनिष्पन्नौ दारिते भिन्नभेदितौ । ऊतं स्यूतमुतं चेति त्रितयं तन्तुसंतते ॥ १११८

स्यादर्हिते नमस्यितनमसितमपचायितार्चितापचितम् ।
वरिवसिते वरिवस्यितमुपासितं चोपचरितं च ॥ १११९
संतापितसंतप्तौ धूपितधूपायितौ च दूनश्च ।
हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ॥ ११२०
छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ।
स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ॥ ११२१
लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च ।
अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ॥ ११२२
आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च ।
त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च ॥ ११२३
अवगणितमवमतावज्ञाते अवमानितं च परिभूते ।
त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे ॥ ११२४
उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् ।
बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते ॥ ११२५

१ प्रोतमित्यपि. २ व्यावृत्तोऽपि. ३ मूर्णमपि. ४ 'उद्वानम्', उद्वानमपि.

ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ।
संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ॥ ११२६
ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि ।
अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि ॥ ११२७
भक्षितचर्वितलीढप्रत्यवसितगिलितखादितप्सातम् ।
अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ॥ ११२८
क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ।
क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः ॥ ११२९
साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ।
बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ॥ ११३०

इति विशेष्यनिघ्नवर्गः ॥ १ ॥

---

प्रकृतिप्रत्ययार्थाद्यैः संकीर्णे लिङ्गमुन्नयेत् । कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः ॥ ११३१
साकल्यासङ्गवचने पारायणतुरायणे । यदृच्छा स्वैरिता हेतुशून्या त्वास्या विलक्षणम् ॥ ११३२
शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः । अवदानं कर्म वृत्तं काम्यदानं प्रवारणम् ॥ ११३३
वशक्रिया संवननं मूलकर्म तु कार्मणम् । विधूननं विधुवनं तर्पणं प्रीणनावनम् ॥ ११३४
पर्याप्तिः स्यात्परित्राणं हस्तवारणमित्यपि । सेवनं सीवनं स्यूतिर्विदरः स्फुटनं भिदा ॥ ११३५
आक्रोशनमभीषङ्गः संवेदो वेदना न ना । संमूर्छनमभिव्याप्तिर्याच्ञा भिक्षार्थनार्दना ॥ ११३६
वर्धनं छेदनेऽथ द्वे आनन्दनसभाजने । आप्रच्छन्नमथाम्नायः संप्रदायः क्षये क्षिया ॥ ११३७
ग्रहे ग्राहो वशः कान्तौ रक्ष्णस्त्राणे रणः क्वणे । व्यधो वेधे पचा पाके हवो हूतौ वरो वृतौ ११३८
ओषः प्लोषे नयो नाये ज्यानिर्जीर्णौ भ्रमो भ्रमौ । स्फातिर्वृद्धौ प्रथा ख्यातौ स्पृष्टिः पृक्तौ स्नवः स्रवे ॥
एधा समृद्धौ स्फुरणे स्फुरणा प्रमितौ प्रमा । प्रसूतिः प्रसवे श्च्योते प्राघारः क्लमथः क्लमे ॥ ११४०
उत्कर्षोऽतिशये संधिः श्लेषे विषय आश्रये । क्षिपायां क्षेपणं गीर्णिर्गिरौ गुरणमुद्यमे ॥ ११४१
उन्नाय उन्नये श्रायः श्रयणे जयने जयः । निगादो निगदे मादो मद उद्वेग उद्भ्रमे ॥ ११४२
विमर्दनं परिमलोऽभ्युपपत्तिरनुग्रहः । निग्रहस्तद्विरुद्धः स्यादभियोगस्त्वभिग्रहः ॥ ११४३
मुष्टिबन्धस्तु संग्राहो डिम्बे डमरविप्लवौ । बन्धनं प्रसितिश्चारः स्पर्शः स्प्रष्टोपतप्तरि ॥ ११४४
निकारो विप्रकारः स्यादाकारस्त्विङ्ग इङ्गितम् । परिणामो विकारो द्वे समे विकृतिविक्रिये ॥ ११४५
अपहारस्त्वपचयः समाहारः समुच्चयः । प्रत्याहार उपादानं विहारस्तु परिक्रमः ॥ ११४६
अभिहारोऽभिग्रहणं निर्हारोऽभ्यवकर्षणम् । अनुहारोऽनुकारः स्यादर्थस्यापगमे व्ययः ॥ ११४७
प्रवाहस्तु प्रवृत्तिः स्यात्प्रवहो गमनं बहिः । वियामो वियमो यामो यमः संयामसंयमौ ॥ ११४८
हिंसाकर्माभिचारः स्याज्जागर्या जागरा द्वयोः । विघ्नोऽन्तरायः प्रत्यूहः स्यादुपघ्नोऽन्तिकाश्रये ११४९
निर्वेश उपभोगः स्यात्परिसर्पः परिक्रिया । विधुरं तु प्रविश्लेषेऽभिप्रायश्छन्द आशयः ॥ ११५०

---

१ कामदानमपि. २ संवदनमपि, संवपनमपि. ३ 'आमन्त्रण' इत्यपि. ४ विधापि. ५ आशय इत्यपि. ६ गूरणमपि, गोरणमपि.

संक्षेपणं समसनं पर्यवस्था विरोधनम् । परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ॥ ११५१
विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः । संवाहनं मर्दनं स्याद्विनाशः स्याददर्शनम् ११५२
संस्तवः स्यात्परिचयः प्रसरस्तु विसर्पणम् । नीवाकस्तु प्रयामः स्यात्संनिधिः संनिकर्षणम् ॥ ११५३
लवोऽभिलावो लवने निष्पावः पवने पवः । प्रस्तावः स्यादवसरस्त्रसरः सूत्रवेष्टनम् ॥ ११५४
प्रजनः स्यादुपसरः प्रश्रयप्रणयौ समौ । धीशक्तिर्निष्क्रमोऽस्त्री तु संक्रमो दुर्गसंचरः ॥ ११५५
प्रत्युत्क्रमः प्रयोगार्थः प्रक्रमः स्यादुपक्रमः । स्यादभ्यादानमुद्धात आरम्भः संभ्रमस्त्वरा ॥ ११५६
प्रतिबन्धः प्रतिष्टम्भोऽवनायस्तु निपातनम् । उपलम्भस्त्वनुभवः समालम्भो विलेपनम् ॥ ११५७
विप्रलम्भो विप्रयोगो विलम्भस्त्वतिसर्जनम् । विश्रावस्तु प्रतिख्यातिरवेक्षा प्रतिजागरः ॥ ११५८
निपाठनिपठौ पाठे तेमस्तेमौ समुन्दने । आदीनवास्रवौ क्लेशे मेलके सङ्गसंगमौ ॥ ११५९
संवीक्षणं विचयनं मार्गणं मृगणा मृगः । परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ११६०
निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् । प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ११६१
उपशायो विशायश्च पर्यायशयनार्थकौ । अर्तनं च ऋतीया च हृणीया च घृणार्थकाः ॥ ११६२
स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये । पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ११६३
प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् । स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥ ११६४
निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्धनः । स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ ११६५
आविधो विध्यते येन तत्र विष्वक्समे निघः । उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ११६६
निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु ॥ ११६७

आरत्यवरतिविरतय उपरामेऽथास्त्रियां तु निष्ठेवः ।
निष्ठ्यूतिर्निष्ठेवननिष्ठीवनमित्यभिन्नानि ॥ ११६८
जवने जूतिः सातिस्त्ववसाने स्यादथ ज्वरे जूर्तिः ।
उदजस्तु पशुप्रेरणमकरणिरित्यादयः शापे ॥ ११६९

गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् । आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ॥ ११७०
माणवानां तु माणव्यं सहायानां सहायता । हल्या हलानां ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ११७१
द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमनुक्रमात् । खलानां खलिनी खल्याप्यथ मानुष्यकं नृणाम् ११७२
ग्रामता जनता धूम्या पाश्या गल्या पृथक्पृथक् । अपि साहस्रकारीषवार्मणाथर्वणादिकम् ॥ ११७३

इति संकीर्णवर्गः ॥ २ ॥

---

नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः । भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ ११७४
आकाशे त्रिदिवे **नाको** **लोक**स्तु भुवने जने । पद्ये यशसि च **श्लोकः** शरे खड्गे च **सायकः** ॥ ११७५
**जम्बुकौ** क्रोष्टुवरुणौ **पृथुकौ** चिपिटार्भकौ । **आलोकौ** दर्शनद्योतौ भेरीपटहमा**नकौ** ॥ ११७६
उत्सङ्गचिह्नयोर**ङ्कः** **कलङ्को**ऽङ्कापवादयोः । **तक्षको** नागवर्धक्योर**र्कः** स्फटिकसूर्ययोः ॥ ११७७
मारुते वेधसि ब्रध्ने पुंसि **कः** **कं** शिरोऽम्बुनोः । स्यात्**पुलाक**स्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ ११७८
उलूके करिणः पुच्छमूलोपान्ते च **पेचकः** । कमण्डलौ च **करकः** सुगते च **विनायकः** ॥ ११७९

---

१ प्रसरोऽपि.

किष्कुर्हस्ते वितस्तौ च शूककीटे च वृश्चिकः । प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥११८०
स्याद्भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च । ज्योत्स्निकायां च घोषे च कोशातक्यथ कट्फले ॥
सिते च खदिरे सोमवल्कः स्यादथ सिल्हके । तिलकल्के च पिण्याको बाल्हीकं रामठेऽपि च ११८२
महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः । रुक्तापशङ्कास्वातङ्कः स्वल्पेऽपि क्षुल्लकस्त्रिषु ॥ ११८३
जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य वर्तकः । व्याघ्रेऽपि पुण्डरीको ना यवान्यामपि दीपकः ११८४
शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम् । पीडार्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते ११८५
शीलान्वयावनूके द्वे शल्के शकलवल्कले । साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ ११८६
दीनारेऽपि च निष्कोऽस्त्री कल्कोऽस्त्री शमलैनसोः । दम्भेऽप्यथ पिनाकोऽस्त्री शूलशंकरधन्वनोः ॥
धेनुका तु करेण्वां च मेघजाले च कालिका । कारिका यातनावृत्त्योः कर्णिका कर्णभूषणे ॥११८८
करिहस्तेऽङ्गुलौ पद्मबीजकोष्यां त्रिषूत्तरे । वृन्दारकौ रूपिमुख्यावेके मुख्यान्यकेवलाः ॥ ११८९
स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः । लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ॥[5] ११९०
मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ । शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्रीन्द्रियेऽपि खम् ॥
घृणिज्वाले अपि शिखे शैलवृक्षौ नगावगौ । आशुगौ वायुविशिखौ शरार्कविहगाः खगाः ॥११९२
पतङ्गौ पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः । पशवोऽपि मृगा वेगः प्रवाहजवयोरपि ॥ ११९३
परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि । गजेऽपि नागमातङ्गावपाङ्गस्तिलकेऽपि च ॥ ११९४
सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु । योगः संनहनोपायध्यानसंगतियुक्तिषु ॥ ११९५
भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः । चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ॥ ११९६
कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे । यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ॥ ११९७
स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफसोः ॥ ११९८
शृङ्गं प्राधान्यसान्वोश्च वराङ्गं मूर्धगुह्ययोः । भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ ११९९
परिघः परिघातेऽस्त्रेऽप्योघो वृन्देऽम्भसां रये । मूल्ये पूजाविधावर्घोंऽहोदुःखव्यसनेष्वघम् ॥ १२००
त्रिष्विष्टेऽल्पे लघुः काचाः शिक्यमृद्भेददृग्रुजः । विपर्यासे विस्तरे च प्रपञ्चः पावके शुचिः ॥१२०१
मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु । अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ॥[6]
केकिताक्ष्यविहिभुजौ दन्तविप्राण्डजा द्विजाः । अजा विष्णुहरच्छागा गोष्ठाध्वनिवहा व्रजाः ॥
धर्मराजौ जिनयमौ कुञ्जो दन्तेऽपि न स्त्रियाम् । वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना ॥१२०४
समे क्ष्मांशे रणेऽप्याजिः प्रजा स्यात्संततौ जने । अब्जौ शङ्खशशाङ्कौ च स्वके नित्ये निजं त्रिषु ॥
पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः । संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ॥ १२०६

---

१ 'कट्फले'. २ कोषातकी च. ३ बाल्हिकमपि. ४ 'भावदर्शी'. ५ एतदग्रे 'भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम् । सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः ॥ पाकौ पक्तिशिशू मध्यरत्ने नेतरि नायकः । पर्यङ्कः स्यात्परिकरे स्याद्व्याघ्रेऽपि च लुब्धकः ॥ पेटकस्त्रिषु वृन्देऽपि गुरौ देश्ये च देशिकः । खेटकौ ग्रामफलकौ धीवरेऽपि च जालिकः ॥ पुष्परेणौ च किंजल्कः शुल्कोऽस्त्री स्त्रीधनेऽपि च । स्यात्कल्लोलेऽप्युत्कलिका वार्धकं भाववृन्दयोः ॥ करिण्यां चापि गणिका दारकौ बालभेदकौ । अन्धेऽप्यनेडमूकः स्याट्टङ्कौ दर्पाश्मदारणौ ॥' इति प्रक्षिप्तम्. ६ एतदग्रे 'प्रसन्ने भल्लुकेऽप्यच्छो गुच्छः स्तबकहारयोः । परिधानाञ्चले कच्छो जलप्रान्ते त्रिलिङ्गकः ॥' इति प्रक्षिप्तम्.

काकेभगण्डौ करटौ गजगण्डकटी कटौ । शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ १२०७
देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेऽपि न द्वयोः । रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ १२०८
रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाशुभे । मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥ १२०९
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् । सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि सा ॥
आत्युत्कर्षाश्रयः कोट्यो मूले लग्नकचे जटा । व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥
इष्टिर्यागेच्छयोः सृष्टं निश्चिते बहुनि त्रिषु । कष्टे तु कृच्छ्रगहने दक्षामन्दागदेषु च ॥ १२१२
पटुर्द्वौ वाच्यलिङ्गौ च नीलकण्ठः शिवेऽपि च । पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा १२१३
निष्ठा निष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि । त्रिषु ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽतियुवाल्पयोः ॥
दण्डोऽस्त्री लगुडेऽपि स्याद्गुडो गोलेक्षुपाकयोः । सर्पमांसात्पशू व्याडौ गोभूवाचस्त्विडा इलाः ॥
क्ष्वेडा वंशशलाकापि नाडी नालेऽपि षट्क्षणे । काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ॥ १२१६
स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने । भृशप्रतिज्ञयोर्बाढं प्रगाढं भृशकृच्छ्रयोः ॥ १२१७
शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ । भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ॥ १२१८
कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः । पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥ १२१९
मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसंध्यादिके गुणः । निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥ १२२०
वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे । अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ॥ १२२१
स्थाणुः शर्वेऽप्यथ द्रोणः काकेऽप्याजौ रवे रणः । ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥
ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः । हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥ १२२३
त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भेऽपि वेश्मनः । तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे १२२४
वणिक्पथे च विपणिः सुरा प्रत्यक्च वारुणी । करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम् ॥ १२२५
शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च । विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥ १२२६
प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु । करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि । १२२७
प्राण्युत्पादे संसरणमसंबाधचमूगतौ । घण्टापथेऽथ वान्तान्ने समुद्धरणमुन्नये ॥ १२२८
अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः । प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥ १२२९
संकीर्णौ निचिताशुद्धाविरिणं शून्यमूषरम् ।[1] देवसूर्यौ विवस्वन्तौ सरस्वन्तौ नदार्णवौ ॥ १२३०
पक्षिताक्ष्यौं गरुत्मन्तौ शकुन्तौ भासपक्षिणौ । अग्न्युत्पातौ धूमकेतू जीमूतौ मेघपर्वतौ ॥ १२३१
हस्तौ तु पाणिनक्षत्रे मरुतौ पवनामरौ । यन्ता हस्तिपके सूते भर्ता धातरि पोष्टरि ॥ १२३२
यानपात्रे शिशौ पोतः प्रेतः प्राण्यन्तरे मृते । ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः ॥ १२३३
स्थपतिः कारुभेदेऽपि भूभृद्भूमिधरे नृपे । मूर्धाभिषिक्तो भूपेऽपि ऋतुः स्त्रीकुसुमेऽपि च ॥ १२३४
विष्णावप्यजिताव्यक्तौ सूतस्त्वष्टरि सारथौ । व्यक्तः प्राज्ञेऽपि दृष्टान्तावुभौ शास्त्रनिदर्शने १२३५
क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे । वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः १२३६
आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः । कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ॥ १२३७
श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥ १२३८
कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे । कासूसामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः १२३९

---

१ एतदग्रे 'सेतौ च वरणो वेणी नदीभेदे कचोच्चये' इति प्रक्षिप्तम्.

विस्तारवल्ल्योर्व्रततिर्वसती रात्रिवेश्मनोः । क्षयार्चयोरपचितिः सातिर्दानावसानयोः ॥ १२४०
अर्तिः पीडाधनुष्कोट्योर्जातिः सामान्यजन्मनोः । प्रचारस्यन्दयो रीतिरीतिर्डिम्बप्रवासयोः १२४१
उदयेऽधिगमे प्राप्तिस्त्रेता लग्नित्रये युगे । वीणाभेदेऽपि महती भूतिर्भस्मनि संपदि ॥ १२४२
नदीनगर्योर्नागानां भोगवत्यथ संगरे । सङ्गे सभायां समितिः क्षयवासावपि क्षिती ॥ १२४३
रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः । जगती जगति च्छन्दोविशेषेऽपि क्षितावपि ॥ १२४४
पङ्क्तिश्छन्दोऽपि दशमं स्यात्प्रभावेऽपि चायतिः । पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः १२४५
प्रकृतिर्योनिलिङ्गे च कैशिक्याद्याश्च वृत्तयः । सिकताः स्युर्वालुकापि वेदे श्रवसि च श्रुतिः १२४६
वनिता जनितात्यर्थानुरागायां च योषिति । गुप्तिः क्षितिव्युदासेऽपि धृतिर्धारणधैर्ययोः ॥ १२४७
बृहती क्षुद्रवार्ताकी छन्दोभेदे महत्यपि । वासिता स्त्रीकरिण्योश्च वार्ता वृत्तौ जनश्रुतौ ॥ १२४८
वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृतामृते । कलधौतं रूप्यहेम्नोर्निमित्तं हेतुलक्ष्मणोः ॥ १२४९
श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् । अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥ १२५०
युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु । वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥ १२५१
महद्राज्यं चावगीतं जन्ये स्याद्गर्हिते त्रिषु । श्वेतं रूप्येऽपि रजतं हेम्नि रूप्ये सिते त्रिषु ॥ १२५२
त्रिष्वतो जगदिङ्गेऽपि रक्तं नील्यादिरागि च । अवदातः सिते पीते शुद्धे बद्धार्जुनौ सितौ ॥ १२५३
युक्तेऽतिसंस्कृते मर्षिण्यभिनीतोऽथ संस्कृतम् । कृत्रिमे लक्षणोपेतेऽप्यनन्तोऽनवधावपि १२५४
ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे । विविक्तौ पूतविजनौ मूर्छितौ मूढसोच्छ्रयौ ॥ १२५५
द्वौ चाम्लपरुषौ शुक्तौ शिती धवलमेचकौ । सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् १२५६
पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते । निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥ १२५७
जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी । वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ सादरार्चितौ ॥ १२५८
अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु । निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ ॥ १२५९
समर्थस्त्रिषु शक्तिष्ठे संबद्धार्थे हितेऽपि च । दशमीस्थौ क्षीणरागवृद्धौ वीथी पदव्यपि ॥ १२६०
आस्थानीयत्नयोरास्था प्रस्थोऽस्त्री सानुमानयोः ।[1] अभिप्रायवशौ छन्दावब्दौ जीमूतवत्सरौ १२६१
अपवादौ तु निन्दाज्ञे दायादौ सुतबान्धवौ । पादा रश्म्यङ्घ्रितुर्यांशाश्चन्द्राग्न्यर्कास्तमोनुदः १२६२
निर्वादो जनवादेऽपि शादो जम्बालशष्पयोः । आरावे रुदिते त्रातर्याक्रन्दो दारुणे रणे ॥ १२६३
स्यात्प्रसादोऽनुरागेऽपि सूदः स्याद्व्यञ्जनेऽपि च । गोष्ठाध्यक्षेऽपि गोविन्दो हर्षेऽप्यामोदवन्मदः
प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् । स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥ १२६५
धर्मे रहस्युपनिषत्स्यादृतौ वत्सरे शरत् । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥ १२६६
गोष्पदं सेविते माने प्रतिष्ठाकृत्यमास्पदम् । त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥ १२६७
मूढाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ तु शारदौ । प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ ॥ १२६८
व्यामो वटश्च न्यग्रोधावुत्सेधः काय उन्नतिः । पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥ १२६९
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके । बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः ॥ १२७०
स्युः समर्थननीवाकनियमाश्च समाधयः । दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिविनश्वरे ॥ १२७१
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने । विधुर्विष्णौ चन्द्रमसि परिच्छेदे बिलेऽवधिः ॥ १२७२

१ एतदग्रे 'शास्त्रद्रविणयोर्ग्रन्थः संस्थाधारे स्थितौ मृतौ' इति प्रक्षिप्तम्. २ अववादौ च.

**विधिर्**विधाने दैवेऽपि **प्रणिधिः** प्रार्थने चरे । **बुधवृद्धौ** पण्डितेऽपि **स्कन्धः** समुदयेऽपि च॥१२७३
देशे नदविशेषेऽब्धौ **सिन्धुर्ना** सरिति स्त्रियाम् । **विधा** विधौ प्रकारे च **साधू** रम्येऽपि च त्रिषु१२७४
**वधूर्**जाया स्नुषा स्त्री च **सुधा** लेपोऽमृतं स्नुही । **संधा** प्रतिज्ञा मर्यादा **श्रद्धा** संप्रत्ययः स्पृहा ॥ १२७५
**मधु** मद्ये पुष्परसे क्षौद्रेऽप्य**न्धं** तमस्यपि । अतस्त्रिषु **समुन्नद्धौ** पण्डितंमन्यगर्वितौ ॥ १२७६
**ब्रह्मबन्धुर्**अधिक्षेपे निर्देशेऽथावलम्बितः । अविदूरोऽप्य**वष्टब्धः प्रसिद्धौ** ख्यातभूषितौ ॥ १२७७
सूर्यवह्नी **चित्रभानू भानू** रश्मिदिवाकरौ । **भूतात्मानौ** धातृदेहौ मूर्खनीचौ **पृथग्जनौ** ॥ १२७८
**ग्रावाणौ** शैलपाषाणौ **पत्रिणौ** शरपक्षिणौ । तरुशैलौ **शिखरिणौ शिखिनौ** वह्निबर्हिणौ ॥ १२७९
**प्रतियत्नाव्**उभौ लिप्सोपग्रहावथ **सादिनौ** । द्वौ सारथिहयारोहौ **वाजिनो**ऽश्वेषुपक्षिणः ॥ १२८०
कुलेऽप्य**भिजनो** जन्मभूम्यामप्यथ **हायनाः** । वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का **विरोचनाः**॥१२८१
क्लेशेऽपि **वृजिनो विश्वकर्मा**र्कसुरशिल्पिनोः । **आत्मा** यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥
शक्रो घातुकमत्तेभो वर्षुकाब्दो **घनाघनः** । **अभिमानो**ऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ॥ १२८३
**घनो** मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे । **इनः** सूर्ये प्रभौ **राजा** मृगाङ्के क्षत्रिये नृपे ॥ १२८४
**वाणिन्यौ** नर्तकीदूत्यौ स्रवन्त्यामपि **वाहिनी** । **ह्लादिन्यौ** वज्रतडितौ वन्दायामपि **कामिनी** ॥
त्वग्देहयोरपि **तनुः सूना**धोजिह्विकापि च । क्रतुविस्तारयोरस्त्री **वितानं** त्रिषु तुच्छके ॥ १२८६
मन्देऽथ **केतनं** कृत्ये केतावुपनिमन्त्रणे । वेदस्तत्त्वं तपो **ब्रह्म ब्रह्मा** विप्रः प्रजापतिः ॥ १२८७
उत्साहने च हिंसायां सूचने चापि **गन्धनम्** । **आतञ्चनं** प्रतीवापजवनाप्यायनार्थकम् ॥ १२८८
**व्यञ्जनं** लाञ्छनं श्मश्रुनिष्ठानावयवेष्वपि । स्यात्**कौलीनं** लोकवादे युद्धे पश्वहिपक्षिणाम् ॥ १२८९
स्या**दुद्यानं** निःसरणे वनभेदे प्रयोजने । अवकाशे स्थितौ **स्थानं** क्रीडादावपि **देवनम्** ॥ १२९०
**उत्थानं** पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च । **व्युत्थानं** प्रतिरोधे च विरोधाचरणेऽपि च ॥ १२९१
मारणे मृतसंस्कारे गतौ द्रव्येऽर्थदापने । निर्वर्तनोपकरणानुव्रज्यासु च **साधनम्** ॥ १२९२
**निर्यातनं** वैरशुद्धौ दाने न्यासार्पणेऽपि च । **व्यसनं** विपदि भ्रंशे दोषे कामजकोपजे ॥ १२९३
**पक्ष्मा**क्षिलोम्नि किंजल्के तन्त्वाद्यंशेऽप्यणीयसि । तिथिभेदे क्षणे **पर्व वर्त्म** नेत्रच्छदेऽध्वनि ॥१२९४
अकार्यगुह्ये **कौपीनं मैथुनं** संगतौ रते । **प्रधानं** परमात्मा धीः **प्रज्ञानं** बुद्धिचिह्नयोः ॥ १२९५
**प्रसूनं** पुष्पफलयो**र्निधनं** कुलनाशयोः । **क्रन्दने** रोदनाह्वाने **वर्ष्म** देहप्रमाणयोः ॥ १२९६
गृहदेहत्विट्प्रभावा **धामान्**यथ चतुष्पथे । संनिवेशे च **संस्थानं लक्ष्म** चिह्नप्रधानयोः ॥ १२९७
**आच्छादने** संपिधानमपवारणमित्युभे । **आराधनं** साधने स्यादवाप्तौ तोषणेऽपि च ॥ १२९८
**अधिष्ठानं** चक्रपुरप्रभावाध्यासनेष्वपि । **रत्नं** स्वजातिश्रेष्ठेऽपि **वने** सलिलकानने ॥ १२९९
**तलिनं** विरले स्तोके वाच्यलिङ्गं तथोत्तरे । **समानाः** सत्समैके स्युः **पिशुनौ** खलसूचकौ ॥ १३००
**हीनन्यूनाव्**ऊनगर्ह्यौ वेगिशूरौ **तरस्विनौ** । **अभिपन्नो**ऽपराद्धोऽभिग्रस्तव्यापद्गतावपि ॥ १३०१
**कलापो** भूषणे बर्हे तूणीरे संहतावपि । परिच्छदे **परीवापः** पर्युप्तौ सलिलस्थितौ ॥ १३०२
गोधुग्गोष्ठपती **गोपौ** हरविष्णू **वृषाकपी** । **बाष्पमूष्माश्रु कशिपु** त्वन्नमाच्छादनं द्वयम् ॥ १३०३
**तल्पं** शय्याट्टदारेषु स्तम्बेऽपि **विटपो**ऽस्त्रियाम् । **प्राप्तरूपस्वरूपाभिरूपा** बुधमनोज्ञयोः ॥१३०४
भेद्यलिङ्गा अमी कूर्मी वीणाभेदश्च **कच्छपी** ।[1] रवर्णे पुंसि **रेफः** स्यात्कुत्सिते वाच्यलिङ्गकः ॥१३०५

---

१ एतदग्रे 'कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेंऽशके' इति प्रक्षिप्तम्.

अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने । कम्बुर्ना वलये शङ्खे द्विजिह्वौ सर्पसूचकौ ॥ १३०६
पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान् । कुम्भौ घटेभमूर्धांशौ डिम्भौ तु शिशुबालिशौ ॥
स्तम्भौ स्थूणाजडीभावौ शंभू ब्रह्मत्रिलोचनौ । कुक्षिभ्रूणार्भका गर्भा विस्रम्भः प्रणयेऽपि च ॥
स्याग्नेयी दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम् । स्यान्महारजने क्लीबं कुसुम्भं करके पुमान् ॥
क्षत्रियेऽपि च नाभिर्ना सुरभिर्गवि च स्त्रियाम् । सभा संसदि सभ्ये च त्रिष्वध्यक्षेऽपि वल्लभः ॥
किरणप्रग्रहौ रश्मी कपिभेकौ प्लवंगमौ । इच्छामनोभवौ कामौ शौर्योद्योगौ पराक्रमौ ॥ १३११
धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः । उपायपूर्व आरम्भ उपधा चाप्युपक्रमः ॥ १३१२
वणिक्पथः पुरं वेदो निगमो नागरो वणिक् । नैगमौ द्वौ बले रामो नीलचारुसिते त्रिषु ॥१३१३
शब्दादिपूर्वो वृन्देऽपि ग्रामः क्रान्तौ च विक्रमः । स्तोमः स्तोत्रेऽध्वरे वृन्दे जिह्मस्तु कुटिलेऽलसे॥
उष्णेऽपि घर्मश्चेष्टालंकारे भ्रान्तौ च विभ्रमः । गुल्मा रुक्स्तम्बसेनाश्च जामिः स्वसृकुलस्त्रियोः ॥
क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु । त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा ॥
ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु । सूक्ष्ममध्यात्ममप्याद्ये प्रधाने प्रथमस्त्रिषु ॥ १३१७
वामौ वल्गुप्रतीपौ द्वावधमौ न्यूनकुत्सितौ । जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् ॥ १३१८
तुरंगगरुडौ तार्क्ष्यौ निलयापचयौ क्षयौ । श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ भ्रातृजद्विषौ ॥ १३१९
पर्जन्यौ रसदब्देन्द्रौ स्यादर्यः स्वामिवैश्ययोः । तिष्यः पुष्ये कलियुगे पर्यायोऽवसरे क्रमे ॥ १३२०
प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु । रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः ॥ १३२१
स्थूलोच्चयस्त्वसाकल्ये नागानां मध्यमे गते । समयाः शपथाचारकालसिद्धान्तसंविदः ॥ १३२२
व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः । अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि ॥ १३२३
युद्धायत्योः संपरायः पूज्यस्तु श्वशुरेऽपि च । पश्चादवस्थायि बलं समवायश्च संनयौ ॥ १३२४
संघाते संनिवेशे च संस्त्यायः प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणो विरोधेऽपि समुच्छ्रयः॥१३२५
विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि । निर्यासेऽपि कषायोऽस्त्री सभायां च प्रतिश्रयः॥१३२६
प्रायो भूम्न्यन्तगमने मन्युर्दैन्ये क्रतौ क्रुधि । रहस्योपस्थयोर्गुह्यं सत्यं शपथतथ्ययोः ॥ १३२७
वीर्यं बले प्रभावे च द्रव्यं भव्ये गुणाश्रये । धिष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यं कर्म शुभाशुभम् ॥१३२८
कशेरुहेम्नोर्गाङ्गेयं विशल्या दन्तिकापि च । वृषाकपायी श्रीगौर्योरभिख्या नामशोभयोः ॥ १३२९
आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् । उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ॥
छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः । कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ॥ १३३१
कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः । जन्यं स्याज्जनवादेऽपि जघन्योऽन्त्येऽधमेऽपि च१३३२
गर्ह्याधीनौ च वक्तव्यौ कल्यौ सज्जनिरामयौ । आत्मवाननपेतोऽर्थादर्थ्यौ पुण्यं तु चार्वपि१३३३
रूप्यं प्रशस्तरूपेऽपि वदान्यो वल्गुवागपि । न्याय्येऽपि मध्यं सौम्यं तु सुन्दरे सोमदैवते॥१३३४
निवहावसरौ वारौ संस्तरौ प्रस्तराध्वरौ । गुरू गीर्पतिपित्राद्यौ द्वापरौ युगसंशयौ ॥ १३३५
प्रकारौ भेदसादृश्ये आकाराविङ्गिताकृती । किंशारू सस्यशूकेषु मरू धन्वधराधरौ ॥ १३३६
अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ पयोधरौ । ध्वान्तारिदानवा वृत्रा बलिहस्तांशवः कराः१३३७
प्रदरा भङ्गनारीरुग्बाणा अस्राः कचा अपि । अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूबरौ १३३८

---

१ यामिरन्तस्थादिरपि.

स्वर्णेऽपि राः परिकरः पर्यङ्कपरिवारयोः । मुक्ताशुद्धौ च तारः स्याच्छारो वायौ स तु त्रिषु १३३९
कर्बुरेऽथ प्रतिज्ञाजिसंविदापत्सु संगरः । वेदभेदे गुप्तवादे मन्त्रो मित्रो रवावपि ॥ १३४०
मखेषुयूपखण्डेऽपि स्वरुर्गुह्येऽप्यवस्करः । आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ॥ १३४१
अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च । स्याज्जङ्गमे परीवारः खड्गकोषे परिच्छदे ॥ १३४२
विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् । द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे ॥ १३४३
विपुले नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु । सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ॥ १३४४
दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्[1] । महारण्ये दुर्गपथे कान्तारं पुंनपुंसकम् ॥ १३४५
मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु । देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ॥ १३४६
वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना । ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् ॥ १३४७
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥ १३४८
शर्करा कर्परांशेऽपि यात्रा स्याद्यापने गतौ । इरा भूवाक्सुराप्सु स्यात्तन्द्री निद्राप्रमीलयोः॥१३४९
धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि । क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ॥ १३५०
त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रं मात्रा परिच्छदे । अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे १३५१
आलेख्याश्चर्ययोश्चित्रं कलत्रं श्रोणिभार्ययोः । योग्यभाजनयोः पात्रं पत्रं वाहनपक्षयोः ॥ १३५२
निदेशग्रन्थयोः शास्त्रं शस्त्रमायुधलोहयोः । स्याज्जटांशुकयोर्नेत्रं क्षेत्रं पत्नीशरीरयोः ॥ १३५३
मुखाग्रे क्रोडहलयोः पोत्रं गोत्रं तु नाम्नि च । सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ॥ १३५४
अजिरं विषये कायेऽप्यम्बरं व्योम्नि वाससि । चक्रं राष्ट्रेऽप्यक्षरं तु मोक्षेऽपि क्षीरमप्सु च १३५५
स्वर्णेऽपि भूरिचन्द्रौ द्वौ द्वारमात्रेऽपि गोपुरम् । गुहादम्भौ गह्वरे द्वे रहोऽन्तिकमुपह्वरे ॥१३५६
पुरोऽधिकमुपर्यग्राण्यगारे नगरे पुरम् । मन्दिरं चाथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ॥ १३५७
दरोऽस्त्रियां भये श्वभ्रे वज्रोऽस्त्री हीरके पवौ । तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ॥ १३५८
औशीरश्चामरे दण्डेऽप्यौशीरं शयनासने । पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ॥ १३५९
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ॥ १३६०

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥ १३६१

मुस्तेऽपि पिठरं राजकशेरुण्यपि नागरम् । शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम् ॥ १३६२
गौरोऽरुणे सिते पीते व्रणकार्यप्यरुष्करः । जठरः कठिनेऽपि स्यादधस्तादपि चाधरः ॥१३६३
अनाकुलेऽपि चैकाग्रो व्यग्रो व्यासक्त आकुले । उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तरः॥ १३६४
एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः पराः । स्वादुप्रियौ तु मधुरौ क्रूरौ कठिननिर्दयौ ॥ १३६५
उदारो दातृमहतोरितरस्त्वन्यनीचयोः । मन्दस्वच्छन्दयोः स्वैरः शुभ्रमुद्दीप्तशुक्लयोः ॥ १३६६
चूडा किरीटं केशाश्च संयता मौलयस्त्रयः । द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ॥ १३६७
कृतान्तानेहसोः कालश्चतुर्थेऽपि युगे कलिः । स्यात्कुरङ्गेऽपि कमलः प्रावारेऽपि च कम्बलः १३६८
करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् । स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः १३६९
वातूलः[2] पुंसि वात्यायामपि वातासहे त्रिषु । भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः ॥१३७०

१ दरोदरमपि. २ वातुलोऽपि.

मलोऽस्त्री पापविट्किट्टान्यस्त्री शूलं रुगायुधम् । शङ्कावपि द्वयोः कीलः पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु ॥

कला शिल्पे कालभेदेऽप्याली सख्यावली अपि । अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि॥ १३७२

बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु । लीला विलासक्रिययोरुपला शर्करापि च १३७३

शोणितेऽम्भसि कीलालं मूलमाद्ये शिफाभयोः । जालं समूह आनायगवाक्षक्षारकेष्वपि ॥ १३७४

शीलं स्वभावे सद्वृत्ते सस्ये हेतुकृते फलम् । छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना ॥ १३७५

अधःस्वरूपयोरस्त्री तलं स्याच्चामिषे पलम् । और्वानलेऽपि पातालं चैलं वस्त्रेऽधमे त्रिषु ॥ १३७६

कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले । निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ॥ १३७७

पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु । प्रवालमङ्कुरेऽप्यस्त्री त्रिषु स्थूलं जडेऽपि च ॥ १३७८

करालो दन्तुरे तुङ्गे चारौ दक्षे च पेशलः । मूर्खेऽर्भकेऽपि बालः स्याल्लोलश्चलसतृष्णयोः १३७९

दवदावौ वनारण्यवह्नी जन्महरौ भवौ । मन्त्री सहायः सचिवौ पतिशाखिनरा धवाः ॥ १३८०

अवयः शैलमेषार्का आज्ञाह्वानाध्वरा हवाः । भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥ १३८१

स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने । अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः ॥ १३८२

उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सवः । अनुभावः प्रभावे च सतां च मतिनिश्चये ॥ १३८३

स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये । शूद्रायां विप्रतनये शस्त्रे पारशवो मतः ॥ १३८४

ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने १३८५

स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च । शिवा गौरीफेरवयोर्द्वन्द्वं कलहयुग्मयोः ॥ १३८६

द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु । क्लीबं नपुंसकं षण्ढे वाच्यलिङ्गमविक्रमे ॥ १३८७

द्वौ विशौ वैश्यमनुजौ द्वौ चराभिमरौ स्पशौ । द्वौ राशी पुञ्जमेषाद्यौ द्वौ वंशौ कुलमस्करौ १३८८

रहःप्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः । कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु॥ १३८९

पदे लक्ष्ये निमित्तेऽपदेशः स्यात्कुशमप्सु च । दशावस्थानेकविधाप्याशा तृष्णापि चायता १३९०

वशा स्त्री करिणी च स्याद्दृग्ज्ञाने ज्ञातरि त्रिषु । स्यात्कर्कशः साहसिकः कठोरामसृणावपि ॥ १३९१

प्रकाशोऽतिप्रसिद्धेऽपि शिशावज्ञे च बालिशः । कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः १३९२

सुरमत्स्यावनिमिषौ पुरुषावात्ममानवौ । काकमत्स्यात्खगौ ध्वाङ्क्षौ कक्षौ तु तृणवीरुधौ ॥ १३९३

अभीषुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने । पक्षः सहायेऽप्युष्णीषः शिरोवेष्टकिरीटयोः ॥ १३९४

शुक्ले मूषके श्रेष्ठे सुकृते वृषभे वृषः । द्यूतेऽक्षे शारिफलकेऽप्याकर्षोऽथाक्षमिन्द्रिये ॥ १३९५

ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे । कर्षूर्वार्ता करीषाग्निः कर्षूः कुल्याभिधायिनी ॥ १३९६

पुंभावे तत्क्रियायां च पौरुषं विषमप्सु च । उपादानेऽप्यामिषं स्यादपराधेऽपि किल्बिषम् १३९७

स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् । प्रेक्षा नृत्येक्षणं प्रज्ञा भिक्षा सेवार्थना भृतिः ॥ १३९८

त्विट् शोभापि त्रिषु परे न्यक्षं कार्त्स्न्यनिकृष्टयोः । प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥

रविश्वेतच्छदौ हंसौ सूर्यवह्नी विभावसू । वत्सौ तर्णकवर्षौ द्वौ सारङ्गाश्च दिवौकसः ॥ १४००

शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः । पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ॥ १४०१

देवभेदेऽनले रश्मौ वसू रत्ने धने वसु । विष्णौ च वेधाः स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः १४०२

लालसे प्रार्थनौत्सुक्ये हिंसा चौर्यादिकर्म च । प्रसूरश्वापि भूद्यावौ रोदस्यौ रोदसी च ते १४०३

ज्वालाभासौ न पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु । पापापराधयोरागः खगबाल्यादिनोर्वयः ॥ १४०४
तेजःपुरीषयोर्वर्चो महस्तूत्सवतेजसोः । रजो गुणे च स्त्रीपुष्पे राहौ ध्वान्ते गुणे तमः ॥ १४०५
छन्दः पद्येऽभिलाषे च तपः कृच्छ्रादिकर्म च । सहो बलं सहा मार्गो नभः खं श्रावणो नभाः ॥
ओकः सद्माश्रयश्चौकाः पयः क्षीरं पयोऽम्बु च । ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारये १४०७
तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु । विद्वान्विदंश्च बीभत्सो हिंस्रोऽप्यतिशये त्वमी ॥ १४०८
वृद्धप्रशस्ययोर्ज्यायान्कनीयांस्तु युवाल्पयोः । वरीयांस्तूरुवरयोः साधीयान्साधुबाढयोः ॥ १४०९
दलेऽपि बर्हं निर्बन्धोपरागार्कादयो ग्रहाः । द्वार्यापीडे क्वाथरसे निर्व्यूहो नागदन्तके ॥ १४१०
तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च । पत्नीपरिजनादानमूलशापाः परिग्रहाः ॥ १४११
दारेषु च गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः । व्यूहो वृन्देऽप्यहिर्वृत्रेऽप्यग्नीन्द्वर्कास्तमोपहाः १४१२
परिच्छदे नृपार्हेऽर्थे परिबर्होऽव्ययाः परे । आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ॥ १४१३
आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात्कोपपीडयोः । पापकुत्सेषदर्थे कु धिङ्निर्भर्त्सननिन्दयोः ॥
चान्वाचयसमाहारेतरेतरसमुच्चये । स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेऽप्यति ॥ १४१५
स्वित्प्रश्ने च वितर्के च तु स्याद्भेदेऽवधारणे । सकृत्सहैकवारे चाप्याराद्दूरसमीपयोः ॥ १४१६
प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः । पुनःसहार्थयोः शश्वत्साक्षात्प्रत्यक्षतुल्ययोः ॥ १४१७
खेदानुकम्पासंतोषविस्मयामन्त्रणे बत । हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥ १४१८
प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः । इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ॥ १४१९
प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि । यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥ १४२०
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ । वृथा निरर्थकाविध्योर्नानाऽनेकोभयार्थयोः ॥ १४२१
नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु । प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ॥ १४२२
गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि । उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ॥ १४२३
अमा सह समीपे च कं वारिणि च मूर्धनि । इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ॥ १४२४
तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने । नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ १४२५
अलं भूषणपर्याप्तिशक्तिवारणवाचकम् । हुं वितर्के परिप्रश्ने समयान्तिकमध्ययोः ॥ १४२६
पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः । स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ॥ १४२७
ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् । स्वर्गे परे च लोके स्ववार्तासंभाव्ययोः किल १४२८
निषेधवाक्यालंकारजिज्ञासानुनये खलु । समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः ॥ १४२९
नामप्राकाश्ययोः प्रादुर्मिथोऽन्योन्यं रहस्यपि । तिरोऽन्तर्धौ तिर्यगर्थे हा विषादशुगर्तिषु ॥ १४३०
अहहेत्यद्भुते खेदे हि हेताववधारणे ॥ १४३१

इति नानार्थवर्गः ॥ ३ ॥

---

चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः । मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः ॥ १४३२
स्राग्झटित्यञ्जसाह्नाय द्राङ् मङ्क्षु सपदि द्रुते । बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥ १४३३
पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने । यत्तद्यतस्ततो हेतावसाकल्ये तु चिच्चन ॥ १४३४
कदाचिज्जातु सार्धं तु साकं सत्रा समं सह । आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा १४३५

आहो उताहो किमुत विकल्पे किं किमूत च । तु हि च स्म ह वै पादपूरणे पूजने स्वति ॥१४३६
दिवाह्नीत्यथ दोषा च नक्तं च रजनाविति । तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ॥ १४३७
स्युः प्याट् पाडङ्ग हे है भोः समया निकषा हिरुक् । अतर्किते तु सहसा स्यात्पुरः पुरतोऽग्रतः ॥
स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा । किंचिदीषन्मनागल्पे प्रेत्यामुत्र भवान्तरे ॥१४३९
व वा यथा तथेवैवं साम्येऽहो ही च विस्मये । मौने तु तूष्णीं तूष्णीकां सद्यः सपदि तत्क्षणे ॥१४४०
दिष्ट्या समुपजोषं चेत्यानन्देऽथान्तरेऽन्तरा । अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् १४४१
युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारते । अभावे नह्य नो नापि मास्म मालं च वारणे १४४२
पक्षान्तरे चेद्यदि च तत्त्वे त्वद्धाञ्जसा द्वयम् । प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते ॥ १४४३
समन्ततस्तु परितः सर्वतो विष्वगित्यपि । अकामानुमतौ काममसूयोपगमेऽस्तु च ॥ १४४४
ननु च स्याद्विरोधोक्तौ कच्चित्कामप्रवेदने । निःषमं दुःषमं गर्ह्ये यथास्वं तु यथायथम् ॥ १४४५
मृषा मिथ्या च वितथे यथार्थं तु यथातथम् । स्युरेवं तु पुनर्वै वेत्यवधारणवाचकाः ॥ १४४६
प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् । संवद्वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ॥ १४४७
अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः । सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने ॥ १४४८
अस्ति सत्त्वे रुषोक्तावु ऊं प्रश्नेऽनुनये त्वयि । हुं तर्के स्यादुषा रात्रेरवसाने नमो नतौ ॥ १४४९
पुनरर्थेऽङ्ग निन्दायां दुष्ठु सुष्ठु प्रशंसने । सायं साये प्रगे प्रातः प्रभाते निकषान्तिके ॥ १४५०
परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति । अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥ १४५१
तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः । उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥ १४५२
ह्यो गते नागतेऽह्नि श्वः परश्वस्तु परेऽहनि । तदा तदानीं युगपदेकदा सर्वदा सदा ॥ १४५३
एतर्हि संप्रतीदानीमधुना सांप्रतं तथा । दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ १४५४

इत्यव्ययवर्गः ॥ ४ ॥

---

सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः । अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १४५५
लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः । स्त्रियामीदूद्विरामैकाच्सयोनिप्राणिनाम च ॥ १४५६
नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् । अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ १४५७
तल्वृन्दे येनिकट्यत्रा वैरमैथुनिकादिवुन् । स्त्रीभावादावनिक्तिण्वुलणच्ण्वुच्क्यब्युजिञङ्निशाः ॥
उणादिषु निरूरीश्च ङ्याबूङन्तं चलं स्थिरम् । तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा ण दिक् १४५९
घञो ञः सा क्रियास्यां चेद्दाण्डपाता हि फाल्गुनी । श्यैनंपाता च मृगया तैलंपाता स्वधेति दिक् ॥
स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि । लङ्का शेफालिका टीका धातकी पञ्जिकाढकी १४६१
सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका । तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः १४६२
पिच्छावितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरत् । सातिः कन्था तथासन्दी नाभी राजसभापि च ॥
झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला । लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी १४६४
पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः । स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ १४६५

---

१ काकिनी च.

करगण्डोष्ठदोर्दन्तकण्ठकेशनखस्तनाः । अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ॥१४६६
श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः । कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥ १४६७
कषणभमरोपान्ता यद्यदन्ता अमी अथ । पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥ १४६८
नाम्न्यकर्तरि भावे च घञजबनङ्णघाथुचः । ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः १४६९
द्वन्द्वेऽश्ववडवावश्ववडवा न समाहृते । कान्तः सूर्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि च ॥ १४७०
वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः । पुङ्खो न्यूङ्खः समुद्गश्च विटपट्टघटाः खटाः ॥ १४७१
कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत् । गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १४७२
दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः । कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सयूपकौ ॥ १४७३
आतपः क्षत्रिये नाभिः कुणपक्षुरकेदराः । पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः ॥ १४७४
वेतालभल्लमल्लाश्च पुरोडाशोऽपि पट्टिशः । कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥ १४७५
द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् । शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम् ॥ १४७६
फलहेमशुल्बलोहसुखदुःखशुभाशुभम् । जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥ १४७७
कोट्याः शतादिसंख्यान्या वा लक्षा नियुतं च तत् । द्व्यच्कमसिसुसन्नन्तं यदनान्तमकर्तरि १४७८
त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम् । पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥१४७९
द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः । षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥१४८०
शालार्थापि परा राजामनुष्यार्थादराजकात् । दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥ १४८१
उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने । कोपज्ञकोपक्रमादि कन्थोशीनरनामसु ॥ १४८२
भावे नणकचिद्भ्योऽन्ये समूहे भावकर्मणोः । अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः ॥ १४८३
क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके । चोचं पिच्छं गृहस्थूणं तिरीटं मर्म योजनम् ॥ १४८४
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः । माणिक्यभाष्यसिन्दूरचीरचीवरपिञ्जरम् ॥ १४८५
लोकायतं हरितालं विदलस्थालबाल्हिकम् । पुंनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ १४८६
मोदकस्तण्डकष्टङ्कः शाटकः कर्पटोऽर्बुदः । पातकोद्योगचरकतमालामलका नडः ॥ १४८७
कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम् । संगमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ १४८८
कवियं केन्दकार्पासं पारावारं युगंधरम् । यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ १४८९
अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् । तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥ १४९०
स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः । जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ॥ १४९१
ऊर्मिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः । मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी ॥ १४९२
स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ्क्वचिच्च वुञ् । औचित्यमौचिती मैत्री मैत्र्यं वुञ्प्रागुदाहृतः ॥ १४९३
षष्ठ्यन्तप्राक्पदाः सेनाछायाशालासुरानिशाः । स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् १४९४
आबन्नन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् । त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ॥ १४९५
त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ । परं लिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ॥ १४९६
अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः । तद्धितार्थो द्विगुः संख्यासर्वनामतदन्तकाः ॥ १४९७

---

१ दन्त्यादिरपि. २ 'कर्म' इति क्वचित्पाठः–इति मुकुटः.

बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम् । गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः ॥ १४९८
कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि । अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ॥ १४९९
षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् । परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ १५००

इति लिङ्गादिसंग्रहवर्गः ॥ ५ ॥

इत्यमरसिंहकृतौ नामलिङ्गानुशासने । सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ॥ १५०१

# THE ABHIDHÂNA-SANGRAHA

OR

A COLLECTION OF SANSKRIT ANCIENT LEXICONS.

## NOS. 2, 3, 4, 5.

THE TRIKÂṆḌAS'ESHA, THE HÂRÂVALÎ, THE EKÂKSHARAKOSHA,

AND

THE DVIRÛPAKOSHA.

OF

## PURUSHOTTAMADEVA.

EDITED BY

PAṆḌIT DURGÂPRASÂD,

KÂS'ÎNÂTH PÂṆḌURANG PARAB

AND

PAṆḌIT S'IVADATTA.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE NIRṆAYA-SÂGARA PRESS.

BOMBAY.

1889.

*Price 9 Annas.*

॥ श्रीः ॥

# अभिधानसंग्रहः

नाम

## संस्कृतप्राचीनकोशग्रन्थसमुच्चयः ।

तत्र

(२, ३, ४, ५)

पुरुषोत्तमदेवकृताः

## त्रिकाण्डशेष-हारावली-एकाक्षरकोश-द्विरूपकोशाः ।

काव्यमालासंपादक-पण्डितदुर्गाप्रसाद-काशीनाथाभ्याम्,
जयपुरराजकीयसंस्कृतपाठशालाध्यापकदाधीच-
पण्डितबदरिनाथात्मजपण्डितशिवदत्तेन च
संशोधिताः ।

ते च

शाके १८११ वत्सरे

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीताः ।

मूल्यं ९ आणकाः ।

# त्रिकाण्डशेषस्य विषयानुक्रमः ।

## प्रथमं काण्डम् ।



## द्वितीयं काण्डम् ।



## तृतीयं काण्डम् ।



# हारावल्या विषयानुक्रमः ।

# पुरुषोत्तमदेवः ।

अमरकोषपरिशिष्टरूपस्य त्रिकाण्डशेषस्य कर्ता पुरुषोत्तमदेवो वङ्गदेशीयो हलायुधवंशोत्पन्नः स्त्रिस्ताब्दीयत्रयोदशशतकोत्तरार्धान्न प्राचीन इति नानार्थसंग्रहोपोद्घाते (१४ पृष्ठे) **श्रीआनन्दरामो** वक्ति । मराठीभाषानिबद्धकविचरित्राख्यग्रन्थे तु 'पुरुषोत्तमः कलिङ्गदेशमहीपतिः शालिवाहन-शकाब्दचतुर्दशशतक आसीत् । कटकाभिधानं नगरं च तद्राजधानी बभूव । स च ओरिसाक्षत्रिय आसीत् । तेनैव त्रिकाण्डशेषः, हारावली, एकाक्षरकोषः, इति ग्रन्थत्रयं स्वदेशीयपाठशालोपयुक्तं प्रणी-तम्' इत्याद्युक्तमस्ति । सकारभेदो जकारभेदश्चेति कोषद्वयमन्यदपि पुरुषोत्तमेन प्रणीतमस्तीति श्रीरा-जेन्द्रलालमिश्रप्रणीतसूचीपत्रतः प्रतीयते । हारावलीसमाप्तौ श्रीधृतिसिंहजनमेजययोः समं निरूप्य धृतिसिंहवचनाधारेण हारावली प्रणीतेति पुरुषोत्तमो वदति । तत्र कोऽयं धृतिसिंहो जनमेजयश्चेति न निश्चयः । राजेन्द्रलालमिश्रस्तु 'नोटिसिस् ऑव् संस्कृत म्यान्युस्क्रिप्ट्स्' नाम्नि सूचीपत्रे दशमे एकादशे वा स्त्रिस्ताब्दशतके पुरुषोत्तमसत्तां वदति । अस्माभिस्तु पुरुषोत्तमविषये किमपि न ज्ञायते । (१) त्रिकाण्डशेषः, (२) हारावली, (३) वर्णदेशना, इति ग्रन्थत्रयं पुरुषोत्तमदेवप्रणीतमुपलभ्यते । एका-क्षरकोष-द्विरूपकोषौ च पुरुषोत्तमदेवकृताविति संदिग्धम् । यतः क्वचिदेव तत्पुस्तके पुरुषोत्तमदेवना-मोपलभ्यते । विष्णुभक्तिकल्पलताभिधं काव्यमपि पुरुषोत्तमप्रणीतमस्ति । सोऽप्ययमेव त्रिकाण्डशे-पादिकर्ता पुरुषोत्तम इति भाति ।

तत्रास्माभिर्मुद्रणं येषां पुस्तकानामाधारेण कृतं तन्नामानि—

त्रिकाण्डशेषपुस्तकानि—

- क—जयपुरराजगुरुभट्टलक्ष्मीदत्तसूनुभट्टश्रीदत्तानां पुस्तकम्, १६९० मिते विक्रमसंवत्सरे काश्यां लिखितम् ।
- ख—जयपुरराजवैद्यश्रीकृष्णशर्मणाम् ।
- ग—जयपुरनिवासिदिगम्बरजैनपण्डितफतेलालानाम् ।
- घ—१७८८ मितेऽब्दे मुम्बय्यां चन्द्रप्रकाशयन्त्रालये मुद्रितम् ।

हारावलीपुस्तकानि—

- क—जयपुरमहाराजाश्रितमैथिलाभिजनधर्मशास्त्रिनैयायिकश्रीरघुवरशर्मणाम् ।
- ख—मुम्बय्यां मुद्रितम् ।
- ग—काश्यां मुद्रितम् ।

एकाक्षरकोषपुस्तकानि—

- क—पूर्वोक्तविशेषणविशिष्टश्रीरघुवरशर्मणाम् ।
- ख—मुम्बय्यां मुद्रितम् ।
- ग—कलिकत्तानगरे हृषीकेशभट्टाचार्येण मुद्रितम् ।

द्विरूपकोषपुस्तकानि—

- क—कलिकत्तामुद्रितम् ।
- ख—काश्यां मुद्रितम् ।

एतत्पुस्तकाधारेणास्मन्मुद्रणं संपन्नमिति शिवम् ॥

12

॥ श्रीः ॥

# अभिधानसंग्रहः ।

## (२)

श्रीपुरुषोत्तमदेवप्रणीतः

## त्रिकाण्डशेषः ।

### प्रथमं काण्डम् ।

जयन्ति सन्तः कुशलं प्रजानां नमो मुनीन्द्राय सुराः स्मृताः स्थः ।
स्तुतासि वाग्देवि दयस्व मातर्विधेहि विघ्नाधिप मङ्गलानि ॥ १
अलौकिकत्वादमरः स्वकोषे न यानि नामानि समुल्लिलेख ।
विलोक्य तैरप्यधुना प्रचारमयं प्रयत्नः पुरुषोत्तमस्य ॥ २
वर्गक्रमस्तथा नामलिङ्गयोस्तूपदेशता । परिभाषादिकं सर्वमत्राप्यमरकोषवत् ॥ ३

---

स्वर्लोको देवलोकः स्यादवरोहः फलोदयः । मन्दरः सैरिकः शक्रभवनं खं दिवं नभः ॥ ४
स्वाहाभुजस्तु वैसुलाः पूजिताश्च चिरायुषः । शौभा निलिम्पा द्युषदः स्वर्गिणश्च नभःसदः ॥ ५
कनामा त्वदितिर्देवमाता स्यादथ पूर्वजाः । पितरश्चन्द्रगोलस्था न्यस्तशस्त्राः स्वधाभुजः ॥ ६
कव्यवालादयस्ते च दैत्यास्तु प्रघसाः क्षवाः । क्रतुद्विषश्चेष्टिमुषो दैत्यमाता दितिर्दनुः ॥ ७
बुद्धाः कनिष्ठगमहामुनिधर्मवज्रकरागारयत्रिशरणाः खशमो दशार्हः ।
तापी गुणाकरमहासुखचक्रिणश्च मैत्रीबली समजितारिसमन्तभद्राः ॥ ८
महाबोधिर्धर्मधातुः श्वेतकेतुर्जिनः खजित् । त्रिमूर्तिर्दशभूमीशः पञ्चज्ञानो बहुक्षमः ॥ ९
संबुद्धः करुणाकूर्चः सर्वदर्शी महाबलः । विश्वबोधो धर्मकायः संगुप्तोऽर्हन्सुनिश्चितः ॥ १०
व्योमाभो द्वादशाक्षश्च वीतरागः सुभाषितः । सर्वार्थसिद्धस्तु महाश्रमणः कलिशासनः ॥ ११
गोपेशश्चाथास्य याशोधरेयो बाहुलः सुतः । देवदत्तोऽनुजोऽथ स्युः श्रावकाः शिष्यसंज्ञिनः ॥ १२
प्रत्येकबुद्धाः खड्गाः स्युः सुदान्ताश्चैकचारिणः । स्वयंभुवोऽथ मारीची त्रिमुखा वज्रकालिका ॥ १३
विकटा वेक्रवाराही गौरी पोत्रिरथा च सा । लोकनाथस्तु लोकेशः सरोजी गुणसागरः ॥ १४

---

१ ख-ग-पुस्तकयोः प्रारम्भे 'यो निर्गुणो गुणमयं वितनोति विश्वं तापत्रयं हरति यस्तपनोऽप्यजस्रम् । कालात्मको जगति जीवयते च जन्तून्ब्रह्माण्डसंपुटमणिं द्युमणिं तमीडे ॥' इत्ययमधिकश्लोक उपलभ्यते. २ 'योः सूपदेशता' क-ख-ग. ३ 'प्यमरसिंहवत्' क. ४ 'सैरिभः' ख-ग-घ. ५ 'सुबलाः' केशवे, 'सुबालाः' हैमे. ६ 'क्षराः' ख-ग, 'स्वराः' घ. ७ हैम-कैशवयोस्तु 'राहुलः'. ८ हैमे 'देवदत्ता प्रजा यस्य स देवदत्ताप्रजः' इति व्याख्यातत्वात् 'देवदत्तानुजा' इति पाठः प्रतिभाति. ९ 'वज्रवाराही' घ-ख, 'वक्रवाराही' ग.

लोकेश्वरः कृपाद्वैतः सुधावर्षी [1]हलाहलः । [2]सुखावतीश्वरः [3]कन्यारामोऽसिताभशेखरः ॥ १५
चिन्तामणिः पद्मपाणिर्बहुरूपः खसर्पणः । अवीचिदर्शी कारण्डव्यूहः पोतलकप्रियः ॥ १६
जटाधरो महावीर्यो [4]वक्रसूर्योऽवलोकितः । तारा महाश्रीरोंकारा स्वाहा श्रीश्च मनोरमा ॥ १७
तारिणी च जयानन्ता शिवा लोकेश्वरात्मजा । खदूरवासिनी भद्रा [5]वैश्याली च सरस्वती ॥ १८
शङ्खिनी च महातारा वसुधारा धनन्ददा । त्रिलोचना लोचना स्यान्मणिभद्रस्तु जम्भलः ॥ १९
पूर्वयक्षो जलेन्द्रोऽथ मञ्जुश्रीर्ज्ञानदर्पणः । [6]मञ्जुवज्रो मञ्जुघोषः कुमारोऽष्टारचक्रवान् ॥ २०
स्थिरचक्रो वज्रधरः प्रज्ञाकायश्च वादिराट् । नीलोत्पली [7]महाराजनीलः शार्दूलवाहनः ॥ २१
धियांपतिः पूर्वजिनः खड्गी दण्डी विभूषणः । बालव्रतः पञ्चवीरः सिंहकेलिः शिखाधरः ॥ २२
वागीश्वरोऽथ [8]हेवज्रो हेरुकश्चक्रसंवरः । देवो वज्रकपाली च निशुम्भी शशिशेखरः ॥ २३
[9]वज्रटीकोऽथ मैत्रेयो युवराजोऽजितश्च सः । चीवरी श्रमणो भिक्षुवन्द्यश्चैत्रोऽथ चेलुकः ॥ २४
श्रामणेरः प्रव्रजितो महोपासकगो[10]मिकौ । [11]प्रज्ञापारमिता बुद्धमाता तच्छास्त्रनाम च ॥ २५
अथ हंसरथो ब्रह्मा विरिञ्चोऽष्टश्रवाः सनत् । सञ्जः प्राणश्च वेदीशवेद[12]गर्भौ पुराणगीः ॥ २६
[13]द्रुजो विश्वरेताश्च कमलः प्रपितामहः । नाभिजन्मा शतधृतिर्ब्राह्मी तु ब्रह्मकन्यका ॥ २७
वाग्देवी शारदा शुक्ला महाश्वेता सरस्वती ॥ २८

अथ हरिशशबिन्दुश्रीकरश्रीवराहाजितपरपुरुषश्रीगर्भषड्बिन्द्वनन्ताः ।
नरकजिद्दतधामा केशटो जन्मकीलः क्रतुपुरुषनृसिंहश्रकथजह्नुघदेवाः ॥ २९
कोकः पुराणपुरुषो नलिनेशयश्च वासुर्नरायणपुनर्वसुविश्वरूपाः ।
अः श्रीनिवासधरणीधरवामनैकशृङ्गाश्च वृष्णिर्[14]वृषशत्रुदशावताराः ॥ ३०
सोमगर्भादिदेवादिवराहस्वर्णबिन्दवः । गदाग्रजो मुञ्जकेशी सदायोगी सनातनः ॥ ३१
रन्तिदेवशिवकीर्तनौ त्रिपात्सोमसिन्धुरपि राहुमूर्धभित् ।
कालनेमियव[15]नारिपाण्डवाभीलसिन्धुवृषकृष्णकेशिनः ॥ ३२
हेमशङ्खशतावर्तासन्दसात्वतवारिशाः । वर्धमानः शतानन्दो जगन्नाथः सुयामुनः ॥ ३३
पूतनाधेनुकारिष्टकेशिचाणूर[16]सूदनः । भूकश्यपस्त्वस्य पिता दुन्दुः क्षित्यदितिः प्रसूः ॥ ३४
स्यन्दनस्तु शतानन्दः सारथिश्चास्य दारुकः । तुरंगाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ ३५
ध्वजो भुजंगहा मन्त्री पवनव्याधिरुद्धवः । शैनेयस्तु शिनेर्नप्ता युयुधानश्च सात्यकिः ॥ ३६
बलभद्रस्तु हालः स्यात्सौनन्दी हलतालभृत् । संवर्तकी गुप्तचरो रुक्मिदार्येककुण्डलः ॥ ३७
मधुप्रियोऽथ प्रद्युम्नो जराभीरुः शमान्तकः । प्रसूनाशनिपञ्चेषू कंजनो मधुसारथिः ॥ ३८
रागरज्जुः कलाकेलिमधुदीपरवीषवः ॥ ३९

---

१ 'हलायुधः' क. २ 'सुखी रतीश्वरः' ख-ग. ३ 'कन्याशमो' ख-ग. ४ 'वज्रसूर्यः' घ, 'वक्रसूर्यावलोकितः' ख-ग. ५ 'वैश्या नीलसरस्वती' घ. ६ 'मञ्जुचक्री' ख-ग, 'मञ्जुभद्रः' घ. ७ 'महाराजो नीलः' घ. ८ 'हेरम्बः' घ. ९ 'वज्री कीटो' क. १० 'मेलिकौ' ख-ग, 'गोमिनौ' घ. ११ इदं नानार्थवर्गोचितमपि क-ख-ग-पुस्तकानुरोधेनोपन्यस्तम्. १२ 'वेदगर्भपुराणगाः' क-ख-घ, 'वेदगर्भपुराणजाः' ग. १३ 'अब्जजो' घ. १४ 'वृषशक्र' क-ख-ग. १५ अरिपदं यवन-कालनेमिपदाभ्यामन्वेति. १६ सूदनपदं पूतनादिभिश्चतुर्भिरन्वेति.

इः कन्तुर्मकराङ्कः संकल्पभवोऽङ्गजश्च रूपास्त्रः ।
रणरणको रतिरमणः संसारगुरुर्मनोजन्मा ॥ ४०
कार्ष्णिश्चास्य प्रिया रागलता [1]केलिकला रतिः । सेः केलती चास्य बाणा मदनो मोहनस्तथा ॥ ४१
संतापनः शोषणश्च निश्चेष्टीकरणोऽपि च । सुतोऽनिरुद्धः स्यादृश्यकेतुः प्रीतितृषौ सुते ॥ ४२
श्री च लक्ष्मी चला सा मा रमा जलधिजेन्दिरा । मणिः स्यमन्तको हस्ते विष्णोरुरसि कौस्तुभः ४३
तार्क्ष्यः शिलौकाः कामायुररुणावरजश्चिरात् । पक्षिसिंह उलूतीशो वज्रतुण्डः सुधाहरः ॥ ४४
स्वर्णपक्षः सुमुखसूः शाल्मली भुजगाशनः ॥ ४५
शंभुर्भगाली कपिशाञ्जनश्च हीरः कटप्रूर्भरुरेरिहाणौ ।
पुरारिपञ्चाननभैरवाट्टहासप्रहासाश्च खकुन्तलश्च ॥ ४६
कण्ठेकालजयन्त[2]गुह्यगुरवो [3]झोटिङ्गगोपालकौ
पिङ्गाक्षः कटमर्दरैवतकटाटङ्काव्ययाः फूटकृत् ।
चन्द्रापीडमहानटौ [4]च शमिरो हः शैलधन्वा जटा-
टीनोऽथर्वणनन्दिवर्धनगुडाकेशोग्रकालंजराः ॥ ४७
मिहिराणो जगद्योनिः कङ्कटीकोऽब्दवाहनः । [5]कृतंकरो [6]वरो बुद्धः सुप्रतापो[7]ऽकुतश्चलः ॥ ४८
उः स्थाणुः शिपिविष्टश्च मः कीलो धर्मवाहनः । [8]विरूपविषमत्र्यक्षः संध्यानाटी वृषाश्वनः ॥ ४९
एकपान्नौतिको भद्रोर्ध्वरेतःपांसुचन्दनाः । अस्थिमाली शिवश्चास्य खट्वाङ्गं तु [9]सुखंखणः ॥ ५०
अजीवकोऽजकावश्च वृषो भृङ्गी रिटिस्त्वसौ । भृङ्गिरीटः शलो भृङ्गी नाडीदेहोऽस्थिविग्रहः ॥ ५१
महाकालो महाभीमो महाकायो वृषाणकः । द्वाःस्थस्तु नन्दी शालङ्कायनस्ताण्डवतालिकः ॥ ५२
स्यान्नन्दिकेश्वरोऽथार्या हिण्डी शिखरवासिनी । शक्तिः सिंहरथा गोला सिनीवाली दृषद्वती ॥ ५३
सौः कृष्णपिङ्गला लम्बा शैलेयी गणनायिका । वारालिकैकानंशा च शिवदूती यमस्वसा ॥ ५४
कोटवी बाभ्रवी कैटभी कैटभा यादवी कर्बुरी चेश्वरी चेश्वरा ।
भ्रामरी दक्षकन्या च बर्हिध्वजा नन्दपुत्री च मारीचकालंजरी ॥ ५५
गौतमी तामसी षष्ठी जयन्ती शूलधृक्सती । सिंहस्त्वस्या मनस्तालः सख्यौ च विजयाजये ॥ ५६
वज्रशुण्डः करिमुखः पृश्निशृङ्गो गणाग्रणीः । त्रिधातुरेकदंष्ट्रश्च द्विदेहो मूषिकाश्वनः ॥ ५७
विघ्नहारी कुमारस्तु स्वामी द्वादशलोचनः । बालचर्यः सिद्धसेनः कृकवाकुध्वजश्च सः ॥ ५८
मार्जारकर्णी चामुण्डा कर्णमोटी च चर्चिका ॥ ५९
देवराजस्तुलः कौशिकोऽसन्महा बाहुदन्तेयदल्मी वराणोऽद्रिभित् ।
वज्रपाणिर्महेन्द्रः सुरग्रामणीर्यामनेमिर्वृषा नाकनाथो हरिः ॥ ६०
प्राचीनबर्हिः खदिरः कपिलाश्वो वरक्रतुः । प्राचीपति[10]स्तपस्तक्षः पुलोमारिश्च माहिरः ॥ ६१
पूतनाषाट् प्रिया त्वस्य [11]चारुधारा शतावरी । [12]शचिः सुता देवसेना मातलिस्तु हयंकषः ॥ ६२

---

१ 'केलिकिला' क-ख-ग, 'केलिकलावती' घ. २ 'गुह्य-गुरु' इति व्यस्तं समस्तं च. ३ 'झोटिङ्ग' ख-ग. ४ 'शशिधरो' क-ख-ग. ५ 'कृष्करो वरवृद्धश्च' घ. ६ 'वरबुद्धः' क-ख-ग. ७ 'ऽद्भुतश्वनः' घ. ८ विरूपाक्ष-विषमाक्षत्र्यक्षाः. ९ 'सुखं घुणः' घ, 'सुष्ठु खं सुनोति सुखंसुणः' इति हैमः. १० 'तपस्तभा' ख-ग. ११ 'चारुरावा.' १२ 'शची' ग-घ.

उच्चैःश्रवाः श्वेतहयो वृषणश्वोऽमरावती । वृषभासा सुरपुरी वनमैन्द्रं वृषण्वसु ॥ ६३
नन्दनं कन्दसारं स्यान्मिश्रकावणमित्यपि । हस्तिमल्लश्चतुर्दन्तो भद्ररेणुर्मदाम्बरः ॥ ६४
[1]श्वेतद्विपः सुदामाथ वज्रोऽस्त्री गिरिकण्टकः । वज्राशनिर्भिदुर्भिद्रो [2]जम्भावी त्रिदशायुधम् ॥ ६५
शतधारं शतारं चाभ्रोत्थं भिदिरमम्बुजम् । विद्याधरः कामरूपी खेचरः स्थिरयौवनः ॥ ६६
स्पर्शानन्दारतिमदाप्सरसः सुदमात्मजाः । दैवोद्यानानि वैभ्राजं मिश्रकं सिध्रकावणम् ॥ ६७
चैत्ररथं च नासिक्यौ युञ्जौ दस्रौ गदागदौ ॥ ६८

शुष्मघासिधैसवोऽश्वतिर्जुहुराण [4]ईषिरे[5]तुषप्रहाशिरैराः ।
छागवाहनपृदाकुबर्हिषः स्वर्णसप्तघृतमध्व[6]दीधितिः ॥ ६९
पर्परीक[7]हवनाद्यनिपीथाः सप्तजिह्वसमिधावसितार्चिः ।
नाचिके[8]तभुजि[8]र्भारथविश्वप्साः शुचिः [9]पेचिसमन्तभुजौ च ॥ ७०

वडवाग्नौ तु सलिलेन्धनः स्याद्वडवामुखः । [10]काकध्वजो वाणिजश्च स्कन्धाग्निः स्थूलकाष्ठधक् ॥ ७१
[11]छौगणस्तु करीषाग्निस्तृणाग्निः स्यात्तरत्समः । तुषानलः कुकूलः स्यान्मुर्मुरोथाग्निकुक्कुटे ॥ ७२
[12]शुष्कलो दहनोल्का स्यादङ्गारे कोकिलौ[13]ज्झलौ । धूमो[14]ऽम्भसूर्मरुद्वाहखतमालशिखिध्वजाः ॥ ७३
[15]अग्निवाहः स्तरी स्वाहा त्वग्नायी दहनप्रिया । जीवितेशो यमः शीर्णपादश्च महिषध्वजः ॥ ७४
मन्दोऽस्य कान्ता धूमोर्णा चित्रगुप्तस्तु लेखकः । भृत्यौ चण्डमहाचण्डौ [16]कालीची तु विचारभूः ७५
पञ्जिका त्वग्रसंधानी नृचक्षास्तु खसात्मजः । कीलालपाः पलाशी च क्षपाटो नरविष्वणः ॥ ७६
संध्याबलो रात्रिमटो हनूषः शमनीषदः । पलाशो विखुरः शङ्कुः कापिशेयस्तु पिङ्गकः ॥ ७७
पिशाचो मेघनादस्तु वरुणो वः परंजयः । दैत्यदेवस्तु वातिश्च नभः प्राणो जगद्बलः ॥ ७८
भोगिकान्तः कम्पलक्ष्मा यश्च धारावलिश्च वाः । खश्वासः क्षिपणुर्धूलिध्वजः शरयुरङ्कुतिः ॥ ७९
वातूलो वातगुल्मः स्या[17]द्वारवायुर्निदाघजः । झञ्झानिलः प्रावृषिजो वासन्तो मलयानिलः ॥ ८०
आःसङ्गिनी च वाताली स्याद्वात्या वातमण्डली ॥ ८१

श्रीदधनकेलिमयुराट्श्वेतोदररत्नगर्भनिधिनाथाः ।
कुतनुकुहेच्छावसवः पिशाचकी सत्यसंगरत्रिशिराः ॥ ८२

सुतोऽस्य मायुराजः स्यात्तथा वर्णकविर्निधौ ॥ ८३

इति स्वर्गवर्गः ॥ १ ॥

कुनाभिः स्याद्विहायस्तु खं मरुन्मे[18]घवर्त्म च ॥ ८४

इतिं व्योमवर्गः ॥ २ ॥

अक्षरं चाथ पाथोदः खतमालो गदाम्बरः । मदयित्नुर्वायुदारुर्व्योमधूमो नभोगजः ॥ ८५

१ 'श्वेतद्वीपः' क-ख-ग-घ. २ 'जम्भारिस्त्रिदशायुधम्' क-घ, 'जम्भारित्रिदशायुधम्' ख-ग. ३ 'सधयो' क-ख-ग-घ. ४ 'ईषिव' क. ५ 'शिवाः' क-ख-ग. ६ दीधितिशब्दस्य स्वर्णादिभिर्योगः. ७ 'हसनीमणि' घ, 'हवनायुनि' क-ख-ग. ८ 'भारत' क-ख-ग-घ. ९ 'पति' क-ख-ग. १० 'कायध्वजो' ख-ग, 'कारध्वजो' क. ११ 'इङ्गण' क-ख-ग. १२ 'सुस्कलो' क, 'संकिलो' घ. १३ 'लाज्वलौ' ख-ग. १४ 'धूमाश्मभः' क, 'धूममम्भ' घ, 'धूमभक्ति' ख-ग. १५ 'अग्निवाहु' क-ख-ग. १६ 'कानीची' क, 'कानिचित्खु-ख-ग. १७ 'चारवायुः' क-ख-ग. १८ मरुद्वर्त्म, मेघवर्त्म.

गह्वेरः कंदरो वातरथो वारिमसिः स्त्रियाम् । करका स्याद्घनकफो बीजोदकमिरावरम् ॥ ८६
मेघास्थि वर्षणं तु स्याद्द्रोघृतं च परामृतम् । सौदाम्नी [1]त्वशनिर्विद्युद्[2]दण्डभा चाचिरद्युतिः ॥ ८७
तिथिप्रणीर्दर्शविपन्निशामणिस्त्रिनेत्रचूडामणिरत्रिनेत्रभूः ।
सुधाङ्गपैप्लौ मृगपि[3]प्पुपक्षजौ दशाश्वसिप्रमहनेमिचन्द्रिराः ॥ ८८
छायामृगर्[4]धरो राजा माः परिज्ञो वलक्षगुः । द्विजदाक्षायणीतुङ्गीरोहिणीयज्वनां पतिः ॥ ८९
उडुपः [5]पर्वरिः क्लेदुर्जयन्तस्तपसो हरिः । तारापीडः खचमसो विकुसः सिन्धुनन्दनः ॥ ९०
चन्द्रिका चन्द्रशाला स्यान्नीहारः खनिशाजलम् । शीतं तु शीतलं पन्नहिमं तु हिमदुर्दिनम् ॥ ९१
कुज्झटिर्धूममहिषी रतार्था च कुहेटिका । धूमिका च नभोरेणुरथागत्याग्निमारुती ॥ ९२
सत्याग्निर्वा[6]रुणिर्विन्ध्यकूटो वातापिसूदनः । दीप्ताग्निरौर्वशेयश्च समुद्रचुलुकोऽस्य तु ॥ ९३
प्रिया कौशीतकी लोपामुद्राख्या च विदर्भजा । प्राक्फाल्गुनेयस्तूतथ्यानुजः पारुष्यगी[7]रथौ ॥ ९४
दीदिविर्द्वादशकरश्चक्षाः सुरगुरुर्गुरुः । शुक्रो भः शतपर्वेशो मघाभूर्भृगुरास्फुजित् ॥ ९५
षोडशार्चिर्नवार्चिस्तु मङ्गलः खोल्मुकः कुजः । बुधो हेमा राजपुत्र एकदेहः प्रहर्षुलः ॥ ९६
स्यात्पश्चार्चिः श्रविष्ठाजः श्यामाङ्गैकाङ्गरोधनाः । शनैश्चरो नीलवासा मन्दश्छायात्मजः शनिः ॥ ९७
राहुस्तु ग्रहकल्लोलोऽभ्रपिशाचोऽप्यथाहिकः । केतुर्ज्योतीरथस्तु स्याद्ग्रहाधारो ध्रुवश्च सः ॥ ९८
तत्क्षणं सूर्यमुक्ता दिग्धुधैरङ्गारिणी स्मृता । आसन्नास्तमया धीरैरुच्यते सोपधूपिता ॥ ९९
सुनीतिर्ध्रुवमाता स्यान्माता दक्षस्य मारिषा । छायापथो देवपथः सोमधारा नभःसरित् ॥ १००
दिनप्रणीस्त्वव्यथिषो भानेमिर[8]वरव्रतः । गभस्तिहस्तोंऽशुधरः खरांशुर्भारविर्भगः ॥ १०१
वेदोदयः प्रतिदिवा भान्तः पीतुस्तमोपहः ॥ १०२
दिनमणिहरिहेलिग्रभ्रभाकोष[9]भानूदरथिखगपतङ्गेनाद्रयः सप्तसप्तिः ।
[10]मिहिरंमहिरपीथाः कालकृत्पद्मपाणिः खमणिररुणसूरावंशुमानंशुमाली ॥ १०३
छाया स्यात्तपनी मन्दजननी भूमयी वरी । संज्ञा तु यमकालिन्दीरेवन्तमनुदस्र[11]सूः ॥ १०४
त्रसरेणुर्महावीर्या स्वातिः सूर्या सुवर्चला । [12]सुरेणुर्द्युमयी त्वाष्ट्री प्रिये चैते विवस्वतः ॥ १०५
आश्मनो रमणोऽनूरुर्जटायुस्त्वरुणात्मजः ॥ १०६

इति दिग्वर्गः ॥ ३ ॥

कालस्त्वपष्ठुर्जहको [13]भवन्तो भसदित्यपि । पीथः पीयुस्तिथश्चाथ वास्रो व्युष्टांशके दिनम् ॥ १०७
उषा प्रभातं गोसर्गः [14]सायोत्सूरौ विकालके ॥ १०८
रात्री रक्षोजननी निषद्वरी चक्रभेदिनी घोरा ।
श्यामा याम्या दोषा तुङ्गी भौती शताक्षी च ॥ १०९
[15]वासुरोषा निशाख्या च वासतेयी तमानिशौ । यस्यां मत्ता निशि श्वानः श्वनिशं श्वनिशा च सा ॥ ११०
निःसंपातोऽर्धरात्रः स्यात्सर्वावसर इत्यपि । उच्चन्द्रापररात्रौ द्वौ दर्शोऽमामावसी च सा ॥ १११

---

१ 'त्वशमी' क-ख. २ 'दण्डभावाचिरद्युतिः' क-घ. ३ 'पिप्लु' क-ख-ग-घ. ४ धरो द्वाभ्यामन्वेति. ५ 'पर्वधिः' ख-ग-घ. ६ 'वारुणी' क-ख-ग. ७ 'गौरथौ' घ. ८ 'अमरव्रतः' ख-ग. ९ 'भानूदवकि' क-ख-ग, 'भासूदरथि' घ. १० 'मिहर-मणिर' घ. ११ 'सूः' इति यमादिभिर्योज्यम्. १२ 'स्वरेणुः' घ. १३ 'भसन्तो' घ. १४ 'सायोत्सन्नौ' क-ख-ग-घ. १५ 'वायुरा' क-ख-ग, 'वास्तवोषा' घ.

भूतः कृष्णचतुर्दश्यां पूर्णिमा धर्मवासरः । शक्रोत्सवो ध्वजोत्थानं शारदी यूतपूर्णिमा ॥ ११२
कोजागरः शरत्पर्वे कौमुदीचारमस्त्रियाम् । यक्षरात्रिस्तु दीपाली चैत्रावल्यां मधूत्सवः ॥ ११३
सुवसन्तः काममहो वासन्ती कूर्दनी स्त्रियौ । श्रामस्तु मासो वर्षांशो वत्सरस्तु युगांशकः ॥ ११४
ऋतुवृत्तिर्मासमालः स्यात्कालग्रन्थिरुर्वटः । कालप्रभातं शरदा प्रावृषा तु जलार्णवः ॥ ११५
कौमुदः कार्तिको मासः फाल्गुनालस्तु फाल्गुनः । ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम् ११६
कृतं सत्ययुगं त्रेताग्नायी द्वापरयज्ञियौ । कलिर्मरकः कर्मयुगं पापं तु पातकम् ॥ ११७
शल्यं तूस्तं च कल्कोऽथ भद्रं भल्लं शिवं तथा । शं शुभं चाव्यये प्राणी सत्त्वो रूपं चतुष्पदे ११८
अथात्मा कर्मभुग्देही जीवः पुरुषपुद्गलौ । अन्तर्यामीश्वरश्चान्तःकरणं तु मनो निगु ॥ ११९

इति कालवर्गः ॥ ४ ॥

बुद्धिः पण्डा विदा चार्वी विचारे तर्कनिश्चयौ ॥ १२०

इति धीवर्गः ॥ ५ ॥

गुञ्जा चर्चाथ सिद्धान्तोत्तरपक्षसमाधयः । कृतान्तः पूर्वपक्षस्तु चोद्यं गीर्भणितिर्गिरा ॥ १२१
वाचा छन्दस्तु निगमः साम्न्युक्थं स्वरपत्तनम् । ब्रह्माक्षरं स्यादोंकारः प्रश्नदूती प्रहेलिका ॥ १२२
संज्ञाधिवचनं सैद्यःकृतं लक्षणनामनी । व्यपदेशः प्रसिद्धिस्तु टंकारोऽथ नवः स्तवः ॥ १२३
शब्दाभिलापौ त्वभिधाभिधानं वाचको ध्वनिः ॥ १२४

इति शब्दादिवर्गः ॥ ६ ॥

ह्रासः कुहरितं चाथ मन्मनो गद्गदध्वनौ । तूरं तु तूर्यं स्यात्ताड्यमानास्तु पटहादयः ॥ १२५
कर्वर्दिः करताली स्याद्धूनिनाला तु काहला । मड्डुको मर्दलो मञ्जो ढक्का विजयमर्दलः ॥ १२६
द्रगड्डः प्रतिपत्तूर्यं डमरुः सूत्रकोणकः । नाली घटी यामनाली दण्डढक्का यमेरुका ॥ १२७
यामघोष्यथ ताम्री स्यान्मानरन्ध्रा विकालिका । भवरुत्प्रेतपटहो मृत्युदण्डकरश्च सः ॥ १२८
रणतूर्यं तु संग्रामपटहो भयडिण्डिमः । भुक्ततूर्यं नृपाभीलं मल्लतूर्यं महास्वनः ॥ १२९
मुखवाद्यं वक्त्रतालं वेणौ विवरनालिका । वारवाणिः प्रेगाता स्यात्कथकैकनटौ समौ ॥ १३०
सर्ववेशी लयालम्भः स्यात्तलावचरो नटः । लयपुत्री नटी नर्तूः खड्गधारादिनर्तके ॥ १३१
प्लवकः केलकश्चाथ भण्डश्चाटुवटुः समौ । गायनो गाथकः स्त्रीणां हल्लीसं सह नर्तनम् ॥ १३२
वात्सल्यशान्तौ तु रसौ शृङ्गारः कैशिकः स्मृतः । संभोगो विप्रयोगश्च तद्भेदौ वर्णिका मसी १३३
मसिर्ना ध्यामलं तु स्याद्ध्यामेऽवज्ञा तु पांसनम् । डमरस्तु चमत्कारः प्रौढिस्तु किंयदेतिका ॥ १३४
स्वेदः प्रस्रवणं सिप्रो द्वयोर्व्रीडो नैटांधिका । भामः क्रोधे निःशमस्तु शोके वीर्यं शुटीरता ॥ १३५
छलं मिषं च वैदग्धी भङ्गिश्चेमनिमीलिका । उत्कण्ठा रुहरुहिका हव्यासस्त्वतिचिन्तिया ॥ १३६

१ 'सवसन्तः' क-ख. २ 'कर्दमी' घ. ३ 'मासमानः' क-घ, 'मासमनः' ख-ग. ४ 'कलप्रभा तु' ख-ग. ५ 'तूकमं' ख-ग. ६ 'मुद्गलौ' क-घ. ७ 'सत्यंकृत' ख-ग. ८ 'करधिः' घ, 'कर्पर्दिः' ख-ग. ९ 'ढकाथमेरुका' ख-ग. १० 'प्रणेता' घ, 'प्रभार्ते' क. ११ 'लयारम्भः' घ. १२ 'त्तलोवचरो' क, 'त्तलोवचनो' ख-ग. १३ 'विप्रलम्भ' ख-ग-घ. १४ 'व्यामनं तु व्यामे' घ. १५ 'पंसनम्' क-ख-ग. १६ 'कियदेहिका' क, 'कियदेतिहा' ख-ग. १७ 'नटान्धिका' घ. १८ उत्कण्ठेत्यर्धश्लोको घ-पुस्तके न. १९ 'हव्याशस्तुतिचिन्तिया' ख-ग.

स्याच्चिन्ता चिन्तियाथोद्वाहुलं रणरणं च तत् । सो[1]त्कण्ठा स्मृतिराध्यानं हेवाकोऽध्यवसायिता १३७
परिहासः केलिमुखः केलिर्देवननर्मणी । आटोपारोपटंकारा भवेदारभटी स्त्रियाम् ॥ १३८
रोमोद्गमस्तु पुलकस्त्वक्पुष्पं च त्वगङ्कुरः । स्वदोषगूहनं म्रक्षो रागसक्तौ तु गृध्नुता ॥ १३९
[3]कामचारः स यच्चित्ते पापमाधाय शंसनम् । कौकृत्यं वि[4]प्रतीसारो वि[5]बाधा तु विहेडनम् ॥ १४०
दुःखलोको भवश्चैव संसारः [6]कष्टचारकः । निर्वाणमन्तको मोक्षः [7]शीतीभावः शमोऽमृतम् ॥ १४१

इति नाट्यवर्गः ॥ ७ ॥

अधोऽव्ययं स्यात्पाताले [8]सप्तधा तदुदीरितम् । अतलं सुतलं चैव वितलं च गभस्तिमत् ॥ १४२
तलं प्रतलपाताले विरोकं श्वभ्रमस्त्रियाम् । तमसं तु निशाचर्म नीलपङ्कं रजोबलम् ॥ १४३
दि[9]क्कण्टको वियद्भूतिः [10]खलग्वृत्रोऽथ नागभित् । [11]दम्भूः स्त्री स्याद्वलूताजगरावथ हलाहलः ॥ १४४
ब्रह्मसर्पोऽश्वलाला च द्विमुखाहिरहीरणिः । राजाहिरलगर्दस्तु कालसर्पो महाविषः ॥ १४५
[12]भोण्डपुष्टस्तु भुजगो भवेत्कौ[13]क्कुटिकंदलः । गोनासगोनसौ हालाहलं हालहलं विषम् ॥ १४६
अथाब्भक्षो द्विरसनः समकोलश्च भेकभुक् । कुम्भीनसो मण्डली च गरलं [14]जैङ्गुलं विषम् ॥ १४७
अनन्तो वासुकिः पद्मो महापद्मोऽपि तक्षकः । कर्कोटः कुलिकः शङ्ख इत्यष्टौ नागनायकाः ॥ १४८
तद्वन्धवस्तु कुमुदकम्बलाश्वतरादयः । पुरी भोगवती चैषां भोगि[15]न्यो नागकन्यकाः ॥ १४९

इति पातालभोगिवर्गः ॥ ८ ॥

अकं दुःखमघं चैन्द्री त्वलक्ष्मीः कालकर्णिका ॥ १५०

इति नरकवर्गः ॥ ९ ॥

पाथोधिसिन्धुमकरालयवारिराशिगङ्गाधरेन्दुजनकास्तिमिरूर्मिमाली ।
वार्धिर्मि[16]र्तद्रुतिमिकोषमहाशयाश्च क्लीबं च शैलशिबिरं धरणीप्लवश्च ॥ १५१
पुमान्कचंगलो वाङ्कः कूलंकषप[17]रंगवौ । तरन्तो दारदः पे[18]रुर्महीप्राचीरमद्रुयोः ॥ १५२
नदीनश्चाथ कमलं [19]नीरं नाराः स्त्रियामिरा । कं दकं जलम[20]स्थाघमगाधेऽथाम्भसां भ्रमः ॥ १५३
तालूरो वायुगुल्मश्च [21]कललाभः कलंकुरः । पुरोटिः पत्रझंकारे [22]दरणिः कूलचुण्डुकः ॥ १५४
चुलुको घनजम्बाले दलाढ्ये पङ्ककर्वटः । तरणो भेलके वारिरथो नौ[23]स्तैरिकः प्लवः ॥ १५५
होडस्तरान्धुर्वहनं तरण्डो वार्वटः पुमान् । पादारकः स्यात्पोलिन्दः पत्रवाले तुलाधटः ॥ १५६
[24]कैवर्ते जालिकः कोटिः कुपिनी स्यादथ प्लवः । पलावः पञ्जराखेटः [25]कण्टकी तु जलेशयः ॥ १५७
आत्माशी शंवरो मूकोऽनिमेषो वल्कवानपि । मीने वदालः पाठीनो मत्स्यराजस्तु रोहितः ॥ १५८
तालाङ्कश्चाथ कुलिशः कटङ्काष्ठील इत्यपि । फलकी स्याच्चित्रफली वाजग्रीवो मदार्मदः ॥ १५९

---

१ घ-पुस्तकेऽस्याप्यर्धस्याभावः. २ अस्याप्यर्धस्य घ-पुस्तकेऽभावः. ३ 'कामाचारः' क, 'काप्यकारः' घ. ४ 'विप्रतीकारः' ख-ग. ५ 'रिवाधा तु रिहेटनम्' क. ६ 'कष्टकारकः' घ. ७ 'शान्तीभावः' क-ख-ग. ८ इतः पादचतुष्टयं घ-पुस्तके नास्ति. ९ 'दिनान्तको' घ. १० 'खलुक्' घ. ११ 'दम्फूः' क, 'डुण्डुः' घ. १२ 'भाण्डपुच्छ' ख-ग, 'भाण्डपुष्प' घ. १३ 'कौक्कुटिकन्नलः' क. १४ 'जाङ्गलं' ख-ग, 'जङ्गमं' घ. १५ 'भगिन्यो' ख. १६ 'शितद्रु' ख-ग. १७ 'पराङ्गवौ' घ. १८ 'महाप्रावार' ख-ग. १९ 'नैरं' ख. २० 'अस्थायम्' क-घ. २१ 'कलमाभः' ख-ग, 'कणलाभः' घ. २२ 'वदालः' घ. २३ 'स्तारिकोत्प्लषाः' क-ख-ग. २४ इतः पूर्वम् 'समुद्रकफ-डिण्डीर-जलहासास्तु फेनके' इत्यधिकं घ-पुस्तकेऽस्ति. २५ 'करण्डी' घ.

कवयी क्रकचपृष्ठी कङ्कत्रोटो जलव्यधः । शफरः श्वेतकोलः स्यात्खशोटस्तु खलेशयः ॥ १६०
इल्लिशो वारिकर्पूरगाङ्गेयशफराधिपाः । जलतालोऽप्यथ चलत्पूर्णिमा चन्द्रचश्चलौ ॥ १६१
जलवृश्चिक इश्वाके गङ्गाटेयो गलानिलः । शालः शकुलगण्डः स्यादन्धाहिः कूचिका द्वयोः ॥१६२
श्राद्धी तु पङ्कगण्डको लघुगर्गस्त्रिकण्टकः । तिर्यग्यानः कुलीरः स्यान्मुखाक्षो हरिलोचनः ॥ १६३
बहिःकुटीचरः पोताधानं तु स्याज्जलाण्डकम् । जलरूपस्तु मकरो मरोलिरसिदंष्ट्रकः ॥ १६४
मीनरस्तन्तुनागस्तु नक्रवाडवहारकः । नक्रस्तु वार्भटः स्यादम्बुकिरातोऽम्बुकण्टकः ॥ १६५
जलशूकरमीयादक्षेषाशनह्रदग्रहाः । जलकूर्मस्त्वम्बुकीशो वैसाढ्यः[३] शिशुकश्च सः ॥ १६६
उद्रस्तु जलमार्जारर्जलाखुनकुलप्लवाः । मृत्किरा घुर्घुरी वारिकृमिस्तु जलमक्षिका ॥ १६७
पटालुका जलौकाम्बुसर्पिणी वेणिवेधिनी । व्यङ्गस्तु नन्दको भेको गूढवर्चाः क्षेतालयः ॥ १६८
कोकोऽजिह्वोऽथ पश्चाङ्गगुप्ते क्रोडाङ्कितकच्छपौ । गण्डुः किंचुलिकोऽथान्धुविकिरश्चूडकश्च सः १६९
चुंण्टा चुण्टी च लूताथान्धकूपः कर्करान्धुकः । पल्वलं दीर्घिका वापी यष्टिका मीनगोधिका १७०
अवघट्टावटौ तुल्यौ तल्लं विल्लं तलं च तत् । द्विजप्रपालवालं स्यात्केदारः पांसुमर्दनः ॥ १७१
नदी निर्झरिणी रोधोवक्रा सागरगामिनी । तलोदा चम्पिला सिन्धुर्ऋषिकुल्या वहा च सा ॥१७२
ऽयध्वगा गांन्दिनी गङ्गा हैमवत्युग्रशेखरा । धर्मद्रवी सिद्धसिन्धुस्तापी तु यमुना यमी ॥ १७३
रेवा तु पूर्वगङ्गा स्यान्मुरला च मुरंदला । स्यादर्धगङ्गा कावेरी वासिष्ठी गौतमी समे ॥ १७४
अथ गोदावरी भीमोपला गोला च गौतमी । सप्तगोदावरं तत्र कुवलं तूत्पलं कुवम् ॥ १७५
कैरवं गन्धसोमं स्यात्कन्दोट्टश्च निशाह्वसः । श्रीकरं कृष्णकन्दं च रक्तोत्पलमलिप्रियम् ॥ १७६
लक्ष्मीगृहं कुमुद्वाथ शालूकः पङ्कसूरणः । पृश्नी तु कुम्भिका वारिमूलीपर्ण्यौ खमूलिका ॥ १७७
स्याद्वारिचत्वरोऽथाम्बुतालः सलिलकुन्तलः । शैवलो हठपर्णी स्त्री कावारं वारिचामरम् ॥ १७८
पद्मे कावारं पङ्केजं बिसनाभिस्तु पद्मिनी । पुटकिन्येवमेवान्याः कुंन्दिनीतालिनीमुखाः ॥ १७९
विसंण्डं[१२] तंन्तुलविलं[१३] शृङ्गाटो वारिकुब्जकः ॥ १८०

इति वारिवर्गः ॥ १० ॥

**इति त्रिकाण्डशेषे प्रथमं काण्डम् ।**

---

## द्वितीयं काण्डम् ।

भूर्भूतधात्री गिरिकर्णिकाब्धिद्वीपा सेमुद्राम्बरमेखला कुः ।
क्षमाद्रिकीला च जगद्वहा च पुंसि स्मृतौ मध्यमलोकमर्त्यौ ॥ १८१

सहा कान्ता गन्धवती रत्नगर्भा च मेर्दिनी । स्वस्थली भारताख्यं तु वर्षं हैमवतं विदुः ॥ १८२
भारतं नरभूः किंपूरुषं हरिवर्षं ततः । भद्राश्वमुत्तरकुरुर्हिरण्मयमिलावृतम् ॥ १८३

---

१ 'मत्स्याद.' २ 'बाधाशन' क-ख-ग. ३ 'रसाढ्यः' क-ख-ग. ४ 'जलात्प्लवाखुनकुलविडालशुनका अपि' इति केशवाज्जलशब्दस्याख्यादिभिस्त्रिभिरन्वयः. ५ 'कृतालयः' घ. ६ 'रेको' घ. ७ 'चुण्टः' क-ख-ग. ८ 'चूडा' घ. ९ 'अध्वगा' ख-ग-घ. १० 'गान्धिनी' घ. ११ 'कुंटिनी' ख-ग, 'कुंदिन्यम्लानिनीमुखाः' घ. १२ 'विसं तु' घ, 'विसंडतन्तु' क. १३ 'तन्तुलविसं' क-घ. १४ समुद्रशब्दस्य द्वाभ्यामप्यम्बर-मेखलाशब्दाभ्यां योगः. १५ 'देहिनी' क. १६ 'स्वस्थली' ख-ग, 'स्वस्तनी' घ.

केतुमालममूनि स्युर्भुवो वर्षाणि वै नव । जम्बूप्लक्षकुशक्रौञ्चशाकशाल्मलिपुष्करैः ॥ १८४
द्वीपाः सप्ताथ सप्तैव समुद्रा अपि कीर्तिताः । लवणेक्षुसुरासर्पिर्दधिदुग्धपयोमयाः ॥ १८५
उषरस्तूषवानूषो ब्रह्मावर्तस्तपोवटः । कुरुक्षेत्रं प्रयागं च हिमाद्रिं विन्ध्यमन्तरा ॥ १८६
मध्यदेशोऽथ पुण्ड्राः स्युर्वरेन्द्री गौडनीवृति । प्रभासः सोमतीर्थं स्यादन्तर्वेदी कुशस्थली ॥ १८७
प्राग्ज्योतिषः कामरूपे तीरभुक्तिस्तु निच्छविः । विदेहाश्चाथ कश्मीरे कीराः स्युः शास्त्रशिल्पिनः १८८
तुरुष्काः खशयष्टका वाह्लीकाश्च त्रिगर्तकाः । दशेरका मरुभुवो मालवाः स्युरवन्तयः ॥ १८९
डाहलाश्चेदयश्चैद्याः कारूषास्तु बृहद्गृहाः । यदवस्तु दशार्हाः स्युः सात्वताः कुकुराश्च ते ॥ १९०
ओण्ड्रा उत्कलनामानो मगधाः कीकटा मताः । वेलाकूलं तामलिप्तं तामलिप्ती तमालिका ॥ १९१
एकचक्रं हरिगृहं शंभुपुर्यथ वर्तनिः । पूर्वदेशोऽथ साकेतमयोध्योत्तरकोशला ॥ १९२
कुशस्थलं कान्यकुब्जं नागाङ्कं हस्तिनापुरम् । गजाह्वं हास्तिनं चाथ श्रावस्ती धर्मपत्तनम् ॥ १९३
कुरुक्षेत्रं विनशनं कौशाम्बी वत्सपत्तनम् । प्राजापत्यः प्रयागः स्याद्द्वारका वनमालिनी ॥ १९४
द्वारवत्यब्धिनगरी विदेहामिथिले समे । मथुरा तु मधूपघ्नं जित्वरी तु तपःस्थली ॥ १९५
वाराणसी तीर्थराजी त्रिशालोज्जयिनी समे । चम्पा तु मालिनी पुष्पपुरं पाटलिपुत्रकम् ॥ १९६
देवीकोटो बाणपुरं कोटीवर्षमुमावनम् । स्याच्छोणितपुरं चाथ योजनं मार्गधेनुकम् ॥ १९७
क्रिमिशैलस्तु वल्मीकः शक्रमूर्धाथ संचरः । धरणः पिण्डलः सेतुः पन्थास्तु क्षुल्लमो वहः ॥ १९८
वाटः पथश्च माथश्च खपुरं तूर्ध्वगं पुरम् । हरिश्चन्द्रपुरं शौभमुद्रङ्गः प्रतिमार्गकः ॥ १९९
त्रङ्गात्रङ्गौ निर्मुटं तु पण्याजीवकचङ्कले । पुंसि हट्टक्रयारोहौ जन्यं ग्राममुखं च तत् ॥ २००
स्यादभिष्यन्दिर्वमनं शाखानगरमित्यपि । शासनं धर्मकीलः स्यान्मकुतिः शूद्रशासनम् ॥ २०१
पैट्टोलिका क्षुप्तकीला पांसुकीलं न कस्यचित् । षड्भिर्यवैः स्यादङ्गुष्ठ एतैर्द्वादशभिर्भवेत् ॥ २०२
वितस्तिः स्यादतो द्वाभ्यां हस्तः स्यात्तच्चतुष्टयम् । दण्डो धन्वन्तरं तस्य सहस्रद्वितयेन तु ॥ २०३
क्रोशस्ताभ्यां तु गव्यूतिस्तद्द्वयं योजनं मतम् । चतुरष्टशतग्रामान्तर्द्रोणमुखकर्वटौ ॥ २०४

इति भूमिवर्गः ॥ १ ॥

गर्भागारापवरके वास्तु स्याद्गृहपोतकः । स्यात्प्रासादो देवकुलं पुत्रिका शालभञ्जिका ॥ २०५
ओको गृहं पिटं चालो वॅलभी चन्द्रशालिका । कूटागारं चाथ कपिशीर्षं घोंटकशीर्षकम् ॥ २०६
क्रमशीर्षं चाथ खरकुटी नापितशालिका । कुॅशालिका पक्षिशाला कारावेश्म वॅंधाङ्कम् ॥ २०७
कायमानं तृणकुटी दॅर्भेटो निभृतं गृहम् । कुॅडङ्गोद्घाटपिठरा इन्द्रकोषस्तु मञ्चकः ॥ २०८
वासागारं भोगगृहं कॅन्यापल्याटनिष्कुटाः । देवीगृहं तु वलभी लयनं सौगतालयः ॥ २०९
शिवस्य वृषमण्डप्यां बुधैर्गोपिटकं स्मृतम् । वातायनं गवाक्षः स्याद्वधूटशयनं तथा ॥ २१०
उपशल्योपकण्ठे द्वे कपाटो द्वारकण्टकः । कवाटश्चाररं कन्थावाटः प्राकार इत्यपि ॥ २११

इति पुरवर्गः ॥ २ ॥

१ 'जलान्तकाः' घ. २ 'रमणम्' घ. ३ 'पदोलिका' ख. ४ 'वडमी' घ. ५ 'खोडकशीर्षकम्' घ. ६ 'कुलायिका' घ. ७ 'वरांगरः' क-ख-ग. ८ 'दर्भेतो' ख-ग, 'दर्भटं' घ. ९ 'कुद्रङ्को' घ. १० 'कन्या-ट-पल्याट' इति व्याख्येयमिति भाति.

शैले स्थावरधातुभृद्धरकुकीलो व्यंशकः सानुमा-
जीमूतः पृथुशेखरश्च कटकी दन्ती नगो निर्झरी ।
कुट्टारोऽथ हिमालयो नगपतिर्मेनाधवोमागुरू
कैलासे गणपर्वतश्च रजतप्रस्थः कुबेराचलः ॥ २१२
हिरण्यनाभमैनाकसुनाभा हिमवत्सुते । शैलाग्रे शिखरं शृङ्गं दन्तः प्राग्भार इत्यपि ॥ २१३
पूर्वाद्रिर्दिनमूर्धा स्यादस्ताद्रिश्चरमाचलः । चन्दनाद्रिस्तु मलयः क्रौञ्चः क्रौञ्चश्च माल्यवान् ॥ २१४
महेन्द्रो मलयः सह्यः शुक्तिमान्पारियात्रकः । ऋक्षो विन्ध्यश्च सप्तैते जम्बूद्वीपकुलाचलाः ॥ २१५
अश्मा पैन्नरुकः पाटः पारटीटश्च मृन्मरुः । घर्षणालः शिलापुत्रो गृहाश्मा गृहकच्छपः ॥ २१६
गैरिकं तु वनालक्तं रक्तधातुर्गवेरुकम् । प्रैलश्मा गिरिमृत्स्नाथ शिलाधातुः सितोपलः ॥ २१७
मृत्कोलो वर्णलेखा च कठिनी कक्खटी खटी ॥ २१८

इति शैलवर्गः ॥ ३ ॥

---

वार्क्षं वनं तलं तल्कं हिङ्गुलं समजं त्रसम् । लीलोद्यानं देववनं स्याद्विञ्छोली पङ्क्तिरावली ॥ २१९
वृक्षः कारस्करो गच्छः पलाशी विष्टरः स्थिरः । चैत्यो देवतरुर्देवावासे करिभकुञ्जरौ ॥ २२०
छायातरुः स्थिरच्छायो वन्दा काकरुहा स्मृता । वनस्पतिर्निर्लुंटः स्यात्फुल्लोन्निद्रविकस्वराः ॥ २२१
स्मितोन्मुद्रौ किलिञ्जं तु सूक्ष्मदार्वथ पल्लवः । विसलं किसलं चाथोत्कलिकाङ्गारिते समे ॥ २२२
गुच्छो गुलुञ्छः क्षेपः स्याच्चमरी मञ्जरं न ना । मञ्जिश्च गोन्दी गुन्दी च मकरन्दो मरन्दवत् २२३
वेधकः कण्टके पत्रसूचिद्रुनखवङ्किलाः । पिप्पलो वादरङ्गः स्याच्चैत्यद्रुः केशवालयः ॥ २२४
यक्षोदुम्बरकं त्वस्य फलेऽथ गृहनाशनः । देववृक्षो दानगन्धिः सप्तपत्रः शिरोरुजा ॥ २२५
दन्तहर्षणजम्बीरौ कतकोऽम्बुप्रसादनः । वरुणस्त्वश्मरीघ्नोऽथाध्वगभोग्यो मधुद्रुमः ॥ २२६
कपिचूतोऽम्रातकेऽस्य फले पशुहरीतकी । पिकबन्धुस्तु चूतः स्यात्स्त्रीप्रियः षट्पदातिथिः ॥ २२७
मधुदूतो वसन्तद्रुर्महाकालोरुकालकौ । शोभाञ्जनस्तु स्त्रीचित्तहारी विद्रधिनाशनः ॥ २२८
प्राभाञ्जनोऽथ प्राचीनपनसो गोहरीतकी । महाकपित्थो विल्वश्च कोली गृध्रनखी स्मृता ॥ २२९
स्यात्पिच्छिलदला स्वादुफलाथो नागरङ्गकः । तैक्ष्णाधिवासी नारङ्गः किर्मीरस्त्वक्सुगन्धकः ॥ २३०
स्याद्वर्मणः पिच्छिलत्वग्धवस्तु मधुरत्वचः । पिशाचद्रुः पीतफलः शाखोटः कर्कशच्छदः ॥ २३१
अर्शोहितस्तु रक्षोघ्नो भल्लातक्यथ शाल्मली । दुरारोहा स्मृता पिण्डीतगरः कैफवर्धनः ॥ २३२
कौकचिश्वी तुलाबीजं खैदिरो बालपत्रकः । यूपद्रुः कुष्ठहृच्चाथ करञ्जो घृतपूर्णकः ॥ २३३
रसायनफला पथ्या शक्रसृष्टा सुधोद्भवा । सरलो धूपवृक्षः स्याच्छोणको न्यक्कुभूरुहः ॥ २३४

---

१ 'कुटीलोर्शशकाः' क, 'कुकीलो व्यंगकः' घ. २ 'गन्धमादनः । विन्ध्यश्च पारियात्रश्च' घ. ३ 'पवारुकः' घ, 'पन्नरः कः' ख-ग. ४ 'काठः' घ. ५ 'पूत्यश्मा' क. ६ 'गुहिनं' घ. ७ 'नीलोद्यानं' क-ख-ग. ८ 'तेवनं' क-ख-ग. ९ 'विञ्जोली' घ. १० 'स्थिरच्छायो' घ. ११ 'निलुंठः' ख-ग, 'निर्मुटः' घ. १२ 'किलिञ्जः' घ, 'कलिञ्जं' केशवे. १३ 'सूक्ष्मं' घ, 'रूक्षं' केशवे. १४ 'लिप्सलो' क. १५ 'किशुवालयः' ख-ग. १६ 'ग्रहनाशनः' क. १७ 'वरण' ख-ग. १८ 'चक्राधिवासी' घ. १९ 'किमेर' ख-ग. २० 'पीतकलः' क. २१ 'शः पुमान्' ख-ग. २२ 'ककवर्धनः' क, 'ककवर्धनः' ख-ग. २३ 'काकचिन्ती' ख-ग. २४ 'कथिरो' ख-ग. २५ 'कुष्ठकृत्' ख-ग.

चम्पकालुस्तु मुरजफलः स्यात्पनसश्च सः । डहुः क्षुद्राम्लपनसो निचुलो रक्तमञ्जरः ॥ २३५
निम्बोऽर्कपादपः पुण्यगन्धस्तु कुसुमाधिराट् । चम्पको वरलब्धश्च वकुलः सिंहकेसरः ॥ २३६
शीधुगन्धोऽथ कङ्केल्लिर्नटः कान्ताङ्घ्रिदोहदः । अशोकः पिण्डपुष्पस्तु दाडिमः फलशाडवः॥ २३७
दाडिम्बः पर्वरुट् च स्यात्स्वाद्वम्लः शुकवल्लभः । पिण्डीरोऽथ सुवर्णेभनागाख्यो नागकेसरः २३८
स्यात्पुष्परोचनश्चापि चूर्णं तस्य हरिद्रवः । निशिपुष्पा तु शेफाली कुटजः पाण्डुरद्रुमः ॥ २३९
लताशङ्कुतरुः शालो नीपो धाराकदम्बकः । कटंकटेरी हरिद्रा शिंशपा गुग्मपत्रिका ॥ २४०
पटोलं स्याद्राजफलं तस्य मूले तु रम्यकम् । सूत्रपुष्पस्तु कर्पासे जीर्णपर्णं कदम्बकम् ॥ २४१
प्रहसन्ती तु यूथी स्याद्दमनः पुष्पचामरः । मालतीपुष्पकलिकां सौमनस्यायनीं विदुः ॥ २४२
कुन्दे स्याद्बोरटः पुंसि ग्रैष्मी तु नवमालिका । रक्तपिण्डस्त्वोण्ड्रपुष्पं स्यादम्लानः कुरण्टकः॥ २४३

कन्दलशिलीन्ध्रपुष्पे श्लेष्मघ्नी त्रिपुरमल्लिका प्रोक्ता ।
एरण्डहस्तिकर्णे प्राचीनामलकवारिबदरे द्वे ॥ २४४

बृहत्पाटलिधुस्तूरौ कदली त्वायतच्छदा । स्यात्तन्तुविग्रहा मञ्जिफला वारणवल्लभा ॥ २४५
वातिङ्गणस्तु वार्ताकुर्वार्ताकः शाकबिल्वकः । क्लीबे वङ्गं च वार्ताकी स्यान्महाबृहतीत्यपि ॥ २४६
कुष्ठं गदाह्वयं मूलं त्वस्य पुष्करमूलकम् । वङ्गसेनस्त्वगस्तिद्रुः शुकनासो मुनिद्रुमः ॥ २४७
अनलिः कुनली पुत्रंजीवस्तु श्लीपदापहः । छत्रको मल्लिपत्रं स्यात्कुब्जको वज्रकण्टकः ॥ २४८
वास्तूकष्टक्कदेशीयः शाकवीरो घनामलः । शोथजिद्गरहा कालशाकोऽप्यथ महौषधी ॥ २४९
महीं विषघ्नी चक्राङ्गी मत्स्याक्षी हिलमोचिका । जलब्राह्मी च सालीचे पर्कूरो लोहमारकः ॥ २५०
केचुकं पेचुली पेचा नारीचो विश्वलोचनः । केशराजो नागमारः परुर्भङ्गसोदरः ॥ २५१
सुनिषण्णं चचुः पुंसि च्छत्रपत्रं तमालकम् । स्थलपद्ममथो देवपत्नीमध्वालुकं विदुः ॥ २५२
फलपुच्छो वरण्डालुः स्याद्रङ्गेष्टालुकं च यत् । श्रीमस्तकः स्वस्तिकः स्याद्राहूच्छिष्टो रसोनकः २५३
कूष्माण्डस्तु घृणावासस्तिमिषो ग्राम्यकर्कटी । वालुकी कर्कटीर्वारुमूत्रला रोमशा च सा ॥ २५४
स्याच्चेलालश्चित्रफलः सुखाशो राजतामिषः । लतापनसनाटाम्रौ सेटुरूर्ध्वासितस्तु यः ॥ २५५
परारुः कारवेल्लोऽसौ गोडुम्बा गजचिर्चिटः । मृत्युबीजस्तु वंशः स्यात्केतकः क्रकचच्छदः ॥ २५६
टक्कटो बहुमूलः स्यात्करीरे वेणुकर्कटः । काशोऽश्ववालः काकेक्षुर्वनहासश्च चूर्णला ॥ २५७
गुडदारुर्मधुतृणं स्यादिक्षुरसिपत्रकः । खानोदको नालिकेरः करकाम्भाः शिरःफलः ॥ २५८
सुरञ्जनो गोपदलो राजतालश्छटाफलः । करंमट्टस्तन्तुसारो गुवाको झोर इत्यपि ॥ २५९
रोमपूगस्तु कामीनो मुनिपूगः सुरेवटः । पूगरोटस्तु हिन्तालः क्लीबं तिरिटि तत्फलम् ॥ २६०
घनामयः स्यात्खर्जूरो द्वौ तु कौचिमभञ्जरू । तरौ देवकुलोद्भूते दूर्वा तु हरितालिका ॥ २६१

इति वनौषधिवर्गः ॥ ४ ॥

१ 'चम्रकालु' ख-ग, 'चम्पकोल्व' घ. २ 'क्षुद्राम्बुपनसौ' घ. ३ 'शाड्वलः' ख-ग. ४ 'सुपर्णेभ' घ. ५ 'गुरुपत्रिका' घ. ६ 'पच्छोलं' ख-ग. ७ 'मुनिः पुमान्' ख-ग. ८ 'मघी' क-ख-ग. ९ 'जलब्राह्मी' ख-ग. १० 'सालीचे' ख-ग, 'शालिंचे' घ. ११ 'पत्तूरो' घ. १२ 'चेलुकं' ख-ग. १३ 'पेचुर्' घ. १४ 'लकं' क-ख-ग. १५ 'वालुंगी' क-ख-ग. १६ 'चेलालः' घ. १७ 'राजतो मिषः' घ. १८ 'नाटाम्रौ' घ. १९ 'चूर्णला' ख-ग, 'जंतुला' घ. २० 'कलमट्ट' क, 'करंम' ख-ग. २१ 'शमपूग' ख-ग. २२ 'स्तुरेवटः' घ. २३ 'पूगवोट' घ. २४ 'कारिमभंजकः' क, 'कारीमभंजकः' ख-ग.

सिंहः कण्ठीरवो भीमविक्रान्तः [1]करिमाचलः । पञ्चशिखश्च शैलाटः पारीन्द्रः श्वेतपिङ्गलः ॥ २६२
[2]मरुत्प्लवश्च नादोऽस्य चुक्कारः क्ष्वेडितं च तत् । उत्पादकस्तु शरभः शार्दूलोऽष्टापदश्च सः ॥ २६३
अथ हिंस्रपशुर्व्याडः श्वापदः शिविरित्यपि । वाध्रीणसस्त्वेकचरो गणोत्साहश्च गण्डकः ॥ २६४
हिंसारुश्वापदौ व्याघ्रे महिषस्तु रजस्वलः । दंशभीरुर्जरन्तश्च लालिको यमवाहनः ॥ २६५
अथ शूकरे वनाहिरदन्तायुधवज्रवक्रदीर्घरताः ।
सूचीरोमा [3]वहुसूराखनिकः स्थूलनासिको भूक्षित् ॥ २६६
एणः कुरंगमो रिश्यः स्यादृश्यश्चारुलोचनः । गोलाङ्गूले कपित्थास्यदधिशोणनगाटनाः ॥ २६७
किखिश्च [4]फेरवस्तु स्याच्छृगालो [5]घोरवाशनः । [6]लोपाशो मृतमत्तश्च वनश्वाथ शृगालिका ॥ २६८
[7]लोपाशिका दीप्तजिह्वा किखिरुल्कामुखी च सा । विडालः कुंदमो नक्तंचारी दीप्ताक्षजाहकौ २६९
शशकस्तु वनाखुः स्यात्[8]खट्टाशी पूतिशालिका । गवयस्तु गवानूक एडकः शिशुबाह्यकः ॥ २७०
वनच्छागोऽथ गन्धोतुः खट्टाशो वनवासनः । उन्दुरुस्तु टुमो रन्ध्रबभ्रुर्दीना तु मूषिका ॥ २७१
स्याच्चिक्को वेश्मनकुलः पुंवृषो गन्धमूषिकः । स्याद्वेदारः क्रकचपात्कृकलासस्[9]तृणाञ्जनः ॥ २७२
प्रति[10]सूर्योऽञ्जिनामा तु चित्रकोलो हलाहलः । कारस्कराटिका कर्णजलौका स्यादथो वटिः ॥ २७३
उत्पादिको देहिका स्यादष्टपादस्तु [11]किंतनुः । प्रासादकुक्कुटो झिल्लीकण्ठो गृहकपोतकः ॥ २७४
पारावतोऽथ शक्राख्यो दिवान्धो वक्रनासिकः । हरिनेत्रो दिवाभीतो नखाशी पीयुघर्घरौ ॥ २७५
काकभीरुर्नक्तंचारी कणाटीनस्तु खञ्जनः । काकच्छदः खञ्जखेलस्[12]तोतलो मुनिपुत्रकः ॥ २७६
भद्रनामा रतनिधिः काष्ठकुट्टः शतच्छदे । दीर्घपादस्तु कङ्कः स्याद्गलेगण्डस्तु मर्कटः ॥ २७७
चातके बभ्रुवापीह[13]र्घनतोलत्रिशङ्कवः । वर्षप्रियोऽथ मेधावी [14]चिमिः कीरः फलाशनः ॥ २७८
कुक्कुटस्तु [15]विवृत्ताक्षो [16]रात्रिवेदी कलाविकः । उषाकलोऽथ ताम्राक्षः काकपुष्टः कुहूमुखः ॥ २७९
मधुकण्ठो घोषयित्नुः कामतालः सुतर्दनः । काको [17]रतंजरः सूत्री श्रावको गूढमैथुनः ॥ २८०
कारवः [18]परमृत्युश्च लुण्टाको मौकुलिर्द्विकः । शक्रजः सत्यवाक्काणो[19]ऽपकृष्टो नगरीबकः ॥ २८१
ऐन्द्रिश्च नाडीजङ्घोऽथ गृध्रः स्याद्दूरदर्शिनि । शितिकण्ठस्तु दात्यूहः काकमद्गुः [20]कंगेटुरः ॥ २८२
चिरंभणस्तु चिल्लः स्यात्खभ्रान्तिः कण्ठनीडकः ॥ २८३
सूक्ता मदनशलाका चित्राक्षी शारिका वचण्डा च ।
शकुनज्ञा तु ज्येष्ठा [21]गृहोलिका [22]टट्टनी मूली ॥ २८४
दीर्घजङ्घो नि[23]शैडः स्याद्बकोटः शुक्लवायसः । कङ्केरुर्दारुवलिभुक्शिखी चन्द्रविहंगमः ॥ २८५
वकेरुका वलाका स्यात्कुररो मत्स्यनाशनः । द्वन्द्वचारी चक्रवाकः सारसस्तु कलांकुरः ॥ २८६
[24]गोर्नर्दश्चित्रपक्षस्तु तित्तिरिः स्यात्कपिञ्जलः । लघुमांसो मयूरस्तु [25]चैन्द्रकी चित्रमेखलः ॥ २८७
प्रचलाकी शिखापाङ्गः शिखावलगरव्रतौ । मार्जारकण्ठोऽथ तिलमयूरः स्याद्गुरण्डकः ॥ २८८

१ 'करिमाठलः' क. २ 'मरुत्पव' क-घ. ३ 'बहुश्रू' क-ख-ग. ४ 'कुरवः' क-ख-ग, 'हूरवः' घ. ५ 'घोररासनः' घ. ६ 'लोपाको' क-ख-ग-घ. ७ 'लोमालिका' घ. ८ 'खदाशी' ख-ग. ९ 'तृणंजनः' क-ख-ग. १० 'सूर्योऽप्यञ्जनस्तु' घ. ११ 'कंत्वनुः' ख-ग. १२ 'तातनो' घ. १३ 'वनताल' क-ख-ग. १४ 'विमिः' ख-ग, 'चिरिः' घ. १५ 'विवृताख्यो' क-ख-ग. १६ 'दात्रिदेवी' क-ख-ग. १७ 'रजज्वरः' घ. १८ 'परभृत्युश्च' क, 'परभृत्कश्च' ख-ग. १९ 'अपकृष्ण्यो' घ. २० 'कचाटुरः' घ. २१ 'हहोलिका' केशवे. २२ 'हट्टली' क-ख-ग. २३ 'निशैतः' घ. २४ 'गोमर्दः' घ. २५ 'चित्रकी' ख-ग.

[1]झम्पाशनो मीनरङ्को नासाच्छिन्नी तु पूर्णिका । पिपीलिका तु [2]हारी स्याद्यमकीटस्तु घुर्घुरः ॥ २८९
स्यान्मर्कटस्तु [3]शलक आशाबन्धोऽस्य जालके । फालखेले [4]गरुद्रोधा भारती [5]व्योमलासिका ॥ २९०
[6]चञ्चुसूचिस्तु [7]सुगृहः पीतमुण्डोऽथ सर्षपा । हापुत्रिका खञ्जनिका तुलिका [8]स्फोटिका समे ॥ २९१
[9]करटो व्याधनः कर्चूर्नरः कूणिश्च वाग्गुदः । वर्तिका विष्णुलिङ्गा स्याल्लावको लघुजङ्गलः ॥ २९२
सरःकाकस्तु हंसः स्याज्जालपात्पुरुदंशकः । गोभण्डीरः पङ्ककीरः कोयष्टिर्जलकुक्कुभः ॥ २९३
जीवंजीवो [10]विषंमृत्युर्जीवजीवोऽथ मक्षिका । माचिका भम्भराली च दंशः स्याद्भ्राम्भरालिकः ॥ २९४
भांकारी चर्मचट्यां तु जतुनी गृहमाचिका । विषसृक्का भृङ्गरोलो वरोलस्तृणषट्पदः ॥ २९५
वरटी तु वरोली स्याद्ब्राह्मण्यथ तमोमणिः । ध्वान्तोन्मेषश्च खद्योतो ज्योतिर्बीजं निमेषरुक् ॥ २९६
भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः । इन्दिन्दिरः पुष्पकीटो [11]मधुद्रोग्मधुकेशटः ॥ २९७
वेणुवासोऽथ मशको घोषो रणरणश्च सः । पक्षी तु [12]नाडीचरणः स्याच्चञ्चुभृदनेकजः ॥ २९८
स्युः खगोत्पतव[13]रङ्ककण्ठाग्निव्योमचारिणः । युगलद्वन्द्वयुग्मानि युगं यमलयामले ॥ २९९

इति सिंहादिवर्गः ॥ ५ ॥

---

स्त्री वधूर्योषिता रामा मण्डयन्तो वधूजनः । कन्यकालकनन्दा सा[14]दूषिता धर्मकारिणी ॥ ३००
सस्वेदा चाथ तरुणी दिक्करी धनिका च सा । मरुण्डोच्चललाटा स्यात्सश्मश्रुर्नरमानिनी ॥ ३०१
स्नुषा वधूटी मधुरनिस्वना हंसगद्गदा । [15]सुखोष्णशीता तुहिनग्रीष्मयोर्वरवर्णिनी ॥ ३०२
क्रोधना भामिनी चण्डी दारुस्त्री शालभञ्जिका । वि[16]रक्ता दुर्भगा स[17]प्तपुत्रसूः सुतवस्करा ॥ ३०३
पतिव्रतैकपत्नी स्याद्विधवा जालिका मता । विश्वस्ता [18]लञ्जनी तु स्याल्लञ्जिका [19]कलकूजिका ॥ ३०४
वेश्या शूला वारवाणिर्झर्झराप्यथ कुट्टनी । [20]इज्या स्याद्रततालो च घटदास्यां गणेरुका ॥ ३०५
मलिष्टा सरजाः षाण्मातुरद्वैमातुरौ समौ । समदूर्दुहिता पुत्रो द्वितीयः कुलधारकः ॥ ३०६
पिता जनयिता वप्ता शिशुकः क्षी[21]रकण्ठकः । बालो मुष्टिंधयश्चाथ शालिका केलिकुञ्चिका ॥ ३०७
[22]वीगारो देवरः श्यालो वारकीरोऽथ साश्रुधीः । श्वश्रूर्वृद्धः शतानीको जरन्तः स्यादथांशकः ॥ ३०८
सगन्धज्ञातिदायादा मातुलो मातृके[23]शरः । भर्ता भरुर्नर्मकीलः प्राणनाथः सुखोत्सवः ॥ ३०९
हृदयेशो रतगुरुर्जारः पापपतिः समौ । कुमारभृत्या स्याद्बालतन्त्रं गर्भिण्यवेक्षणम् ॥ ३१०
गर्भोऽष्टमो देवमासो [24]नाभिनाला मला स्मृता । आधानिकं पुं[25]सवनं सीमन्तोन्नयनं च तत् ॥ ३११
खल्लीटः खलतिः [26]केल्लो बधिरः खोरखञ्जकौ । दोगर्डुर्बाहुकुण्ठः स्यादौषधं तु भिषग्जितम् ॥ ३१२
त्वक्पुष्पिका किलासं स्याच्छ्लीपदं पादगण्डिरः । योन्यर्शः कन्दसंज्ञः स्यात्किणः [27]सूक्ष्मव्रणोऽपि च ३१३

---

१ 'मत्स्याशनो' घ. २ 'होरा' घ. ३ 'शकक' ख-ग. ४ 'गरुद्योधी' घ. ५ 'व्योमनासिका' घ. ६ 'चञ्चुमूचि' घ. ७ 'सुगृहा' क. ८ 'स्कोकिके' घ. ९ 'करटव्याधनलः स्यात्तरकूणिस्तुः' क, 'करटव्याधतछः स्यात्तरकूणिस्तु' ख-ग, 'करेटव्याधनछूः स्यात्तरुकूणिस्तु' घ. इह तु 'वागुदस्तु गणाधिपः । करटो व्याधनः कर्चूर्नरः कूणिः कुमारकः' इति केशवानुरोधी पाठः स्थापितः. १० 'विषं मृत्युः' घ. ११ 'मधुद्रो' घ. १२ 'नाडीवरणः' ख-ग. १३ 'वाराङ्गि' हैमपरिशिष्टे. १४ 'भूषिता' घ. १५ घ-पुस्तके नास्ति. १६ 'विरक्ता' घ. १७ 'शस्त' ख-ग. १८ 'वाञ्छिनी' घ. १९ 'कलतूलिका' घ. २० 'रज्या' घ. २१ 'क्षीणकण्ठकः' घ. २२ 'नागरः' घ. २३ 'केशटः' क-ख-ग. २४ 'नाभिनाममला' क. २५ 'पौंसवनं' क. २६ 'खल्लो' क. २७ 'शुष्कं व्रणोऽपि च' घ.

अजीर्णे वायुगण्डोऽण्डं धम्मिल्ल पललाशयः । पापरोगो रक्तवटी मसूर्यथ तैमोव्रणः । ३१४
वल्मीकोऽथातिसारोऽप्रगन्धिः स्यादुदरामयः । कुरण्डवृद्धौ शिङ्घाणखेशे स्कन्दनरेचने ॥ ३१५
गर्भण्डो नाभिगुडकेऽभिमन्थो लोचनामये । युवगण्डोऽवैरण्डः स्यात्पित्तं मायुः पैलज्वरः ॥ ३१६
श्लेष्मा रैसाशो मांसं तु अरूपमथ शोणितम् । पलक्षारोऽथ मस्तिष्को मस्तुलुङ्गोऽप्यथ वसा ३१७
वक्षसाथाधरमधु क्लीबे वक्त्रासवः पुमान् । जिह्वामलं तु कुलुकं पिप्पिका दन्तजे मले ॥ ३१८
पिण्डोऽस्त्रियां कुलं क्षेत्रं शरीरं स्कन्धपञ्जरौ । जैस्तं वपुः पुद्गलं स्यादाङ्गमङ्गं तु कोमलम् ॥ ३१९
पायुस्तनुह्रदो मार्ग उच्चारस्तु पुरीषणः । भगं गुह्यं वराङ्गं च कलत्रं जन्मवर्त्म च ॥ ३२०
स्मरागारं रतगृहमधोऽधस्तादिमेऽव्यये । ना संधिरधरोऽवाच्यदेशश्च स्मरकूपकः ॥ ३२१
संसारमार्गश्च रतिकुहरं प्रकृतिः स्त्रियाम् । पुष्पापत्यपथौ चाथ नितम्बः स्यात्कटीरकः ॥ ३२२
लिङ्गं तु लाङ्गलं शेफः साधनं मदनाङ्कुशः । स्मरस्तम्भश्च कंदर्पमुसलो ध्वज इत्यपि ॥ ३२३
स्त्रियां रागलता चाण्डकोषस्तु फलकोषकः । नाभिर्द्वयोस्तुन्दकूपी तुन्दिस्तुण्डिर्गेडुः पुमान् ॥ ३२४
भुजा बाहा च बाहौ स्यात्कुलिर्हस्तो भुजादलः । कुचौ वक्षोरुहौ प्रोक्तौ हस्तपुच्छं तु कैल्पुषम् ३२५
नखः पुनर्भवः कामाङ्कुशः स्यात्करकण्टकः । कारटः करशूकश्च मुचुट्यङ्गुलिमोटनम् ॥ ३२६
स्यात्काकलं कण्ठमणिर्नसा नस्या च नासिका । गैन्धनाली च नासिक्यं वाग्दलं दन्तवाससि ३२७
दन्तः खरुर्वक्त्रखुरो जम्भो ह्लादुर्द्विजस्तथा । राजदन्तास्तु चत्वारो दशनानां पुरःस्थिताः ॥ ३२८
गोधिभालौ महाशङ्खो देवदीपस्तु लोचनम् । अम्बकं चाथ नेत्राम्बु बाष्पो नालीतमस्त्रियाम् ॥३२९
कटाक्षकाक्षौ काकुस्तु जिह्वाथ प्रतिजिह्विका । सुधास्रवा च कर्णस्तु श्रोतः क्लीबे ध्वनिग्रहः ॥३३०
स्याच्छब्दाधिष्ठानमथ कवरः केशगर्भकः । कवरी जूटकश्चाथ कोटीरः स्याज्जटा सटा ॥ ३३१
करारोटोऽङ्गुलीकः स्यात्ताटङ्कः कर्णदर्पणः । अन्दुकः पादकटकोऽभिषेकः स्नानमित्यपि ॥ ३३२
पटच्चरं जीर्णवस्त्रं सिचयप्रोतेशाटकाः । पटवापः पटमयं दूष्यं वस्त्रगृहं स्थैलम् ॥ ३३३
खरग्रहः खरगृहं शुश्रा तु स्थूलशाटकः । चेलोऽण्डकः शिरोवेष्टे निरिङ्गिण्यवगुण्ठिका ॥ ३३४
पटी जवनिका सूर्यरक्तसंज्ञं तु कुङ्कुमम् । जागुडं दीपनं चास्रं सौरभं घुसृणं च तत् ॥ ३३५
स्यादङ्गमातृका लाक्षा गन्धकाष्ठं तु जोङ्गकम् । कैपिचन्दनमैलाख्यः सिह्लोऽथ सरलद्रवः ॥ ३३६
दधिक्षीरघृताह्वः स्याद्धूणको वह्निवल्लभः । सालवेष्टः सर्जमणिः कस्तूरी गन्धचेलिका ॥ ३३७
मदाढ्यश्चाथ संचारी धूपो गन्धपिशाचिका । वेणुसारस्तु कर्पूरश्चन्द्रभस्म हिमाह्वयः ॥ ३३८
वेधको मालयस्तु स्याच्छ्रीखण्डो रौहिणश्च सः । विच्छित्तिस्तु कषायः स्यात्समालम्भनमित्यपि ३३९
ललाटिका शङ्खचर्चा विष्टरः पीठमस्त्रियाम् । निषद्या खट्विकासन्दी चातुरस्तु मसूरकः ॥ ३४०
प्रतियत्नस्तु रचना कटकोलः पतद्ग्रहः । पूगपीठं च दीपस्तु स्नेहाशः कज्जलध्वजः ॥ ३४१
दशेन्धनो गृहमणिर्दोषातिलक इत्यपि । शिखातरुर्दीपवृक्षो ज्योत्स्नावृक्षोऽथ लोचकः ॥ ३४२

१ 'तनुव्रणः' क-ख-ग. २ 'शेटौ' घ. ३ 'वगण्डः' घ. ४ 'पलंकरः' घ. ५ 'वलाशो' घ. ६ 'जकूथ' ख-ग. ७ 'शस्तं' घ. ८ 'दिहाव्यये' घ-युक्तः पाठः. ९ पुष्पपथः अपत्यपथः १० 'गरुः' ख-ग, 'करः' घ. ११ 'कल्मषम्' घ. १२ 'नान्धनाली' क-ख-ग. १३ 'अङ्गुलीयः' ख-ग, 'अङ्गुलीटः' घ. १४ 'प्रोथ' घ. १५ 'स्थूलम्' क, 'स्तुल्यम्' ख-ग. १६ 'निरिगिणी' ख-ग, 'विरिंगिनी' घ. १७ 'असृक्पर्यायि काश्मीरं सूर्यपर्यायि दीपनम्' इति केशवात् सूर्यसंज्ञम्, रक्तसंज्ञम्. १८ 'कपिचञ्चलतैलाख्यः' ख-ग-घ. १९ 'दीपमणिः' क-ख-ग.

कज्जले स्याद्गिरियके कन्दुकश्चोदना गुडः । निश्चुकनं दन्तशाणं पिष्टातो धूलिगुत्सकः ॥ ३४३

इति मनुष्यवर्गः ॥ ६ ॥

वंश्यः कुल्यश्च बीज्यश्च ब्रह्मचारी बटुः समौ । स्याद्बटूकरणं तूपनयनं गृहमेधिनि ॥ ३४४
ज्येष्ठाश्रमी गृही वानप्रस्थो वैखानसोऽगृहः । वक्त्रजस्त्वनमो विप्रो वर्णज्येष्ठः कठो द्विजः ॥३४५
मैत्रः पुनरुक्तजन्मा स्यादथ ब्राह्मणायनः । शुद्धसंतानजो विप्रः श्रौत्रं श्रोत्रियतां विदुः ॥ ३४६
स्यादक्षरमुखः कालाक्षरिकः शिक्षिताक्षरः । काव्यस्य कर्ता भविनो गुणनी शीलनं स्मृतम् ॥३४७
क्रियाकारो नवच्छात्रः कार्पटिकः स मर्मवित् । पर्षत्परिषदौ गोष्ठी राजसूयो नृपाध्वरः ॥ ३४८
क्रतूत्तमश्चाथ चान्द्रायणमिन्दुव्रतं स्मृतम् । हवनी होमकुण्डं स्यान्महावीरो मखानले ॥ ३४९
[3]होमधूमस्तु निर्गणो होमभस्म तु वैष्टुभम् । आर्यकं पिण्डदानादिपितृकार्यमथो हविः ॥ ३५०
होत्रं हविष्यं सांनाय्यं पाठको धर्मभाणकः । सभ्यास्तु प्राश्निका देवद्रोणी यात्रा दिवौकसाम् ३५१
इष्टापूर्तं तदेकोक्त्या यागखातादि कर्म यत् । यज्ञद्रव्यं तु पौत्रीयं प्राघुणस्त्वतिथिर्द्वयोः ॥ ३५२
कौशली कुशलप्रश्नः समीची वन्दना मता । उपोषणं तूपवासो रोगाद्यैर्लङ्घनं च तत् ॥ ३५३
ह्यन्तरे त्र्यन्तरे भुक्तमाहुः षष्ठान्नकालकम् । राद्धं सिद्धमथो चारुवृता मासोपवासिनी ॥ ३५४
स्याद्गायत्री तु सावित्री ब्रह्मारण्यं तु पाठभूः । पवित्रं यज्ञोपवीतं ब्रह्मसूत्रं द्विजायनी ॥ ३५५
कच्छा कच्छटिका कक्षापटी कौपीनमित्यपि । वैडालव्रतिकः सर्वाभिसंधी छद्मतापसः ॥ ३५६
कमण्डलुश्चैत्यमुखो जोटिङ्गस्तु महाव्रती । उरस्कुटः पञ्चवटो बालयज्ञोपवीतकम् ॥ ३५७
भाले तिस्रो भस्मरेखास्त्रिपुण्ड्रकमथर्षयः । शापास्त्राः सत्यवचसो व्यासाद्यास्तु महर्षयः ॥ ३५८
परमर्षयो भेलाद्या देवर्षयः कचादयः । ब्रह्मर्षयो वसिष्ठाद्याः सुश्रुताद्याः श्रुतर्षयः ॥ ३५९
ऋतुपर्णादयो राजर्षयः काण्डर्षयस्त्वमी । जैमिन्याद्या नारदस्तु कपिवक्त्रो विधातृभूः ॥ ३६०
देवब्रह्मा देवलश्च दुर्वासास्तु कुशारणिः । प्राचेतसस्तु वाल्मीकिः कविज्येष्ठः कुशी वशः ॥ ३६१
अपि वल्मीकवाल्मीकौ कृतकोटिस्तु काश्यपः । कृष्णद्वैपायनो वेदव्यासः स्यात्सत्यभारतः ॥ ३६२
पाराशरिः सात्यवतो माठरो बादरायणः । वसिष्ठोऽरुन्धतीनाथो विश्वामित्रश्च गाधिजः ॥ ३६३
गौतमस्तु शतानन्दः कणादः काश्यपः समौ । धन्वन्तरिर्दिवोदासः काशिराजः सुधोद्भवः ॥३६४
पालकाप्यो गणवतीकरेणुरुचिरासुतः । विष्णुगुप्तस्तु कौटिल्यश्चाणक्यो द्रामिलोऽङ्गुलः ॥ ३६५
वात्स्यायनो मल्लनागः पक्षिलस्वामिनावपि । उपवर्षो हलभूतिः कृतकोटिरयाचितः ॥ ३६६
पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्किपाणिनौ । सालातुरीयोऽथ व्याडिर्विन्ध्यस्थो नन्दिनीसुतः ॥३६७
मेधावी चाथ मेधाजित्कात्यः कात्यायनश्च सः । पुनर्वसुर्वररुचिर्गोनर्दीयः पतञ्जलिः ॥ ३६८
चूर्णिकृद्भाष्यकारश्च हरिर्भर्तृहरिः स्मृतः । रघुकारः कालिदासो मेधारुद्रश्च कोटिकृत् ॥ ३६९
भारविः शत्रुलुम्पः स्याद्भवभूतिस्तु विस्मृतः । भूगर्भोऽप्यथ यः प्रातः स्मर्यते शुभकाम्यया ॥ ३७०
स सुगृहीतनामा स्यात्पैण्डिन्यं भैक्षजीविका । पाखण्डकौलिकौ खञ्जनरतं यतिमैथुनम् ॥ ३७१
अभावादङ्गनात्यागस्तुरगब्रह्मचर्यकम् । मुखघण्टा हुलहुली नागरीटस्तु टांत्करः ॥ ३७२

१ 'गिरिपकः' ख-ग-घ. २ 'भविनी' घ. ३ 'धूमधूपः' क. ४ 'निगनो' क. ५ 'पात्रीवं' क. ६ 'सुत'शब्दो गणवत्यादिभिरन्वेयः. ७ 'भ्रग्मिणो' क-ख-ग, 'द्रोमिणो' घ. ८ 'अंशुनः' क-ख-ग, 'अंशुलः' घ. इह त्वभिधानचिन्तामण्यनुसारेण पाठः स्थापितः. ९ 'नागरीक' क-ख-ग, 'नागवीटः' घ. १० 'यत्करः' ख-ग, 'टांकरः' घ.

कटकवयक्षरश्चाथ दारकर्म करग्रहः। वाधुक्यं च विवाहः स्यात्कुहलिः पूगपुष्पिका॥ ३७३
नान्दीकौ तोरणस्तम्भौ सुरतं त्वभिमानितम्। धर्षितं संप्रयोगो ना रतं चाब्रह्मचर्यकम्॥ ३७४
उपसृष्टं त्रिभद्रं च क्रीडारत्नं महासुखम्॥ ३७५

इति ब्रह्मवर्गः॥ ७॥

द्विजलिङ्गी नृपः क्षत्रः क्षत्रियोऽथ प्रजेश्वरः। राजाधिपो मण्डलेश एकजन्मा भयापहः॥ ३७६
स्कन्धावारस्तु कटकः शिबिरं तु बलस्थितिः। आदिराजः पृथुर्वैन्यः काकुत्स्थस्तु परंजयः॥ ३७७
यौवनाश्वस्तु मांधाता खट्वाङ्गस्तु दिलीपराट्। रामो दाशरथिः कौशल्यायनिर्दशकण्ठजित्॥ ३७८
मैथिली जानकी सीता वैदेही भूमिजा च सा। रामपुत्रौ कुशलवावेकयोक्त्या कुशीलवौ॥ ३७९
सौमित्रिर्लक्ष्मणो मेघनादजिच्चाथ रावणः। राक्षसेन्द्रो दशमुखो लङ्केशो धनदानुजः॥ ३८०
मन्दोदरीशः पौलस्त्यो मेघनादस्तु शक्रजित्। हनूमान्हनुमानञ्जनेयो योगचरानिली॥ ३८१
हिडिम्बारमणो रामदूतश्चैवार्जुनध्वजः। ऐन्द्रिस्तु वाली वालिश्च सुग्रीवो रविनन्दनः॥ ३८२
ऐलः पुरूरवा बौधिरुर्वशीवल्लभश्च सः। ययातिर्नाहुषिः शाकुन्तलेयो भरतः स्मृतः॥ ३८३
दौष्यन्तिः सर्वदमनोऽर्जुनो बाहुसहस्रभृत्। हैहयः कार्तवीर्यश्च पुण्यश्लोकस्तु बाहुकः॥ ३८४
नलोऽश्वविन्नैषधश्च महाभीष्मस्तु शान्तनुः। प्रतीपोऽस्य प्रिया काली दासेयी च झषोदरी॥ ३८५
विचित्रवीर्यचित्राङ्गदसूर्योजनगन्धिका। व्यासमाता सत्यवती गाङ्गेयो गान्दिनीसुतः॥ ३८६
देवव्रतः शान्तनवो गाङ्गो गाङ्गायनिश्च सः। भीष्मः कोणपदन्तश्च स्वेच्छामृत्युः पुरावसुः॥ ३८७
धृतराष्ट्रस्त्वाम्बिकेयः पाण्डुर्माद्रीपृथापतिः। दुर्योधनस्तु कुरुराड्गान्धारेयः सुयोधनः॥ ३८८
धर्मपुत्रोऽजमीढः स्यात्कर्णानुजयुधिष्ठिरौ। अजातशत्रुः कङ्कोऽथ भीमसेनः कटप्रणः॥ ३८९
वीररेणुर्नागबलो गुणकारो वृकोदरः। बककीचककिर्मीरजरासंधहिडिम्बजित्॥ ३९०
पार्थः किरीटी गाण्डीवी गुडाकेशो बृहन्नडा। अर्जुनः फाल्गुनो जिष्णुर्विजयश्च धनंजयः॥ ३९१
सव्यसाची सुभद्रेशो राधावेधी कपिध्वजः। वात्रैन्नश्चापि बीभत्सुर्द्रौपदी पाण्डुशर्मिला॥ ३९२
पाञ्चाली पार्षती कृष्णा वेदिजा नित्ययौवना। याज्ञसेन्यथ राधेयो वसुषेणोऽर्कनन्दनः॥ ३९३
घटोत्कचान्तकः कर्णश्चम्पेशः सूतपुत्रकः। द्रोणस्तु गुरुराचार्योऽश्वत्थामा तु कृपीसुतः॥ ३९४
द्रोणायनोऽथ राजर्षिर्जनमेजयसंज्ञकः। पारीक्षितोऽप्यथ जरत्कारुर्यायावरो मतः॥ ३९५
प्रियास्य मनसा देवी जरत्कारुरथैतयोः। आस्तीकनामा तनयो विरोचनसुतो बलिः॥ ३९६
बाणो विन्ध्यावलिसुतस्त्वाष्ट्रो वृत्रोऽप्यहिश्च सः। दमघोषसुतश्चैद्यश्चेदिराट् शिशुपालकः॥ ३९७
बार्हद्रथिर्जरासंधः कंसः स्यादुग्रसेनजः। कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः॥ ३९८
मन्त्री ग्रन्थिहरोऽमात्यो द्वाःस्थितो वेत्रधारकः। दौःसाधिको वर्तकको गर्वाटो दण्डवासिनि॥ ३९९
सहपांशुलिकः स्नेही वयस्योऽप्यथ वार्तिकः। वार्तायनः प्रवृत्तिज्ञो मौहूर्तो दैवलेखकः॥ ४००
चित्तोक्तिः पुष्पशकटी दैवप्रश्न उपश्रुतिः। लेखके मसिपण्यः स्याद्वोलकः किरकोऽपि सः॥ ४०१
मसीधानी मसिमणिर्मेलान्धुर्वर्णकूपिका। मेला मसीजलं पत्राञ्जनं च स्यान्मसिर्द्वयोः॥ ४०२
लेखनी वर्णतूली स्याल्लेखो वाचिकहारकः। वर्णदूतः स्वस्तिमुखः काचनं तन्निबन्धनम्॥ ४०३

१ विचित्रवीर्यसूः। चित्राङ्गदसूः. २ माद्रीपतिः। पृथापतिः. ३ 'जित्'शब्दस्य बकादिभिरन्वयः. ४ 'वाधावेधी' ख-ग, 'शब्दभेदी' घ. ५ 'सहपांसुनिकः' क, 'सहपांशुकिलः' घ. ६ 'वोरकः' घ.

लेख्यस्थानं ग्रन्थकुठी मुद्रा प्रत्ययकारिणी । यातुर्गन्तुश्च पथिको हारिः पथिकसंततिः ॥ ४०४
संदेशः प्राभृतं कौशल्युत्कोचस्तूपदानकम् । जनान्तिकं त्वप्रकाशो लुण्डी स्याम्यायसारिणी ॥ ४०५
ताम्बूलदो वाग्गुलिकः संवाहकोऽङ्गमर्दकः । चामरा चामरं रोमगुत्सकं चावचूलकम् ॥ ४०६
कुठेरस्तन्मरुत्प्रोतोत्सादनं वज्रकुट्टिमम् । छत्रं पुटोटजं राजशृङ्गं कनकदण्डके ॥ ४०७
हस्ती महामृगः पीलुः सिन्धुरो दीर्घमारुतः । वाजिरो जलकाङ्क्षश्च निर्लूरः करटी कटी ॥ ४०८
विलोमजिह्वोऽन्तःस्वेदपिण्डपादलतालकाः । वराङ्गः पुष्करी शूर्पकर्णसामजपैचिलाः ॥ ४०९
करिणी वासिता गम्भीरवेद्यङ्कुशदुर्धरः । चालकव्यालकौ राजवाह्यो विजयकुञ्जरः ॥ ४१०
ईशादन्तो महादन्तः कर्णास्फाले झलज्झला । मदप्रयोगो व्यस्तारं विकस्तु करिशावकः ॥ ४११
आरक्षः कुम्भसंधिः स्यात्संदानोऽष्ठीवतोरधः । नासापूर्वं स्थूलहस्तं दन्तमूले करीरिका ॥ ४१२
शङ्कुः कूटो दन्तमध्यं प्रवेष्टः पृष्ठतल्पने । अयस्कारः प्रजङ्घाग्रे प्रोहश्चरणपर्वणि ॥ ४१३
न ना गात्रावरे नाली कर्णारा कर्णवेधिनी । आलानं शङ्कुरक्षोभः प्रारब्धिर्गजबन्धिनी ॥ ४१४
प्राची तु शृङ्खला हिञ्जीरोऽस्त्री स्यार्दन्दुकश्च सः । पित्तज्वरः पाकलोऽस्य कूटपूर्वस्त्रिदोषजः ॥ ४१५
अश्वः किण्वी हरिः क्रान्तः शालिहोत्रश्च मुद्गभुक् । श्रीपुत्रश्चामरी हेषी राजस्कन्धो मरुद्रथः ॥ ४१६
वातायनश्चैकशफो यस्तु पश्चाङ्गपुष्पितः । स पञ्चभद्रः सूर्याश्वे वाताटहरितौ समौ ॥ ४१७
यायावरोऽश्वमेधीयः पारसीयः परादनः । आरट्टजश्च चोक्षस्तु सिन्धुवारो हयोत्तमः ॥ ४१८
वाताश्वजात्याजानेया वेशरोऽश्वतरः खरः । श्रीवृक्षोऽस्य हृदावर्तो रोचमानो गलोद्भवः ॥ ४१९
ऊर्ध्वस्थितिः पुरुषकं विक्रान्तिस्तु पुलायितम् । पुला संनाहप्रखरौ कवियं कविकोच्यते ॥ ४२०
ग्रीवाघण्टा घर्घरा स्याद्रश्मिः प्रवपणं च तत् । प्रतोदोऽथ खुरो विङ्गः पुटो लुठनवेल्लने ॥ ४२१
वल्गा दन्तालिका पल्ययनं पर्याणमस्य तु । वङ्काग्रभागः स्यादश्ववारो वल्लभपालकः ॥ ४२२
नन्दिघोषः पार्थरथो नीतिघोषस्तु गीर्पतेः । चक्कुरं धोरणं यानमात्रे चक्रं त्वरि स्मृतम् ॥ ४२३
लघ्वी त्वाष्ट्री रथी काललवनं वक्त्रवर्मणी । मेढो मेण्ढो हस्तिपके जङ्घात्राणं तु मङ्कुणम् ॥ ४२४
स्याम्नायकाग्रेसरिकौ नासीरं दर्प ऊष्मणि । शस्त्रमायुध उद्घातः स्थावरं तु धनुर्गुणी ॥ ४२५
शरावापो धनूः स्त्री स्यात्तृणता त्रिणतापि च । व्यधस्तु प्रतिकायः स्याज्जीवा ज्या तारवं गुणः ॥ ४२६
शस्त्राभ्यासस्तु खुरली वाणः स्यादस्त्रकण्टकः । स्थूलक्ष्वेडो विपाठश्च चित्रपुङ्खः शरः सरः ॥ ४२७
पत्रवाहो विकर्षोऽथ तीरी विज्जलसायके । लोहनालस्तु नाराचः प्रसरः काण्डगोचरः ॥ ४२८
ऋष्टिः खड्गस्तरवारिः शस्त्रो भद्रात्मजश्च सः । धाराविषो विशसनो न्युब्जखड्गः कटीतलः ॥ ४२९
स्यार्दत्तनं चक्रफलं पर्शुः परशुरित्यपि । दीर्घायुधः शलः कुन्तः शल्यः शङ्कुर्विषाङ्कुरः ॥ ४३०
शूलोऽस्त्री सीसकं नग्नाः प्रातर्गेयाः स्तुतिव्रताः । भोगावली वन्दिपाठो वसुकीटस्तु याचकः ॥ ४३१
वातकेतुः क्षितिकणः स्यात्पांशुर्मेदिनीद्रवः । संभारः सर्वपूर्णत्वं पताका व्योममञ्जरी ॥ ४३२
कदली कन्दली चीनमक्षवाटस्तु मल्लभूः । भीरुस्तु भेलो हरिणहृदयः स्यात्पलंकटः ॥ ४३३

१ 'ताम्बूलिको' ख-ग. २ 'कुठेरुर्मन्थरुः' घ. ३ 'राजीवो' घ. ४ 'निर्झरः' घ. ५ 'अक्षोडः' क-ख-ग. ६ 'पारी' घ. ७ 'शिञ्जीरः' क-ख-ग. ८ 'अन्धुकः' क-ख-ग, 'अङ्कुशः' घ. ९ 'किंधी' क-ख-ग, 'किल्की' घ. १० 'प्रवयणं' क-ख-ग. ११ 'भारवं' घ. १२ 'अट्टनं' घ. १३ 'विषंकुरः' क. १४ 'याचितः' घ. १५ 'मञ्जरं' घ.

विद्रवस्तु शृगाली स्यादाघातस्तु वधस्थली । कदनं मारणं मन्थः सौप्तिकं रात्रिमारणम् ॥ ४३४
निपातो भूमिलाभश्च मृत्युरप्यथ मारकः । मरको मारिरुत्पातः शवस्तु क्षितिवर्धनः ॥ ४३५
पञ्चावस्थः [1]कठः [2]स्थालः श्मशानं तु [3]शयानकम् । रुद्राक्रीडो दाहसरः संस्क्रिया सत्क्रिया समे ॥ ४३६
चिता काष्ठमठी चैत्यं चिताचूडकमिष्यते । [4]चित्तं चाथान्त्यशय्यायां [5]खाटिर्वारूढ इत्यपि ॥ ४३७
उपग्रहस्तु ग्राहः स्याद्वन्दी करमरीत्यपि ॥ ४३८

इति क्षत्रियवर्गः ॥ ८ ॥

तृष्णा धनपिशाची स्याद्वार्धुष्यं धान्यवर्धने । [7]प्रमार्ज्यमृणमर्थानां प्रयोगः स्यान्मलाम्लिका ॥ ४३९
ऋणमुक्तिर्विगणनं क्षेत्रं वारठमुच्यते । हलिर्बृहद्धले मुद्रे हरिनामा वनाखुकः ॥ ४४०
वासन्तश्चाथ मसुरो मसूरो व्रीहिकाश्चनः । सर्षपः स्यात्सरिषपः कटुस्नेहश्च तन्तुभः ॥ ४४१
प्रवेटः सितशूकः स्याद्गोधूमो म्लेच्छभोजनः । ताम्रवृन्तः कुलत्थः स्यान्निःस्नेह[9]श्चण्डिकातसी ॥ ४४२
मूर्खः [10]पुंरीषलो माषो राजमाषस्तु वर्वटः । फुल्लफालः शूर्पवाते न स्त्री तितउ चालनी ॥ ४४३
कण्डन्युलूखलं प्रस्थः पालिः सूदः पचेलुकः । कुसूलोऽस्त्री व्रीह्यगारं कन्दुरम्रिष्ट उच्यते ॥ ४४४
अलिंजरो ननन्दा स्त्री मृत्स्नाभाण्डकमुष्ट्रिका । वारासनं वाःसदनं [11]क्वणनो हण्डिकासुतः ॥ ४४५
कलशी गर्गरी तुल्ये स्याच्छरावस्तु मार्तिकः । शालाजिरः पार्थिवश्च मृत्कांस्यमथ लौहिका ॥ ४४६
[12]खरसोल्लः खरपात्रं शिङ्घाणं काचभाजनम् । काष्ठलोही तु वार्तादिर्जीरको दीपकः स्मृतः ॥ ४४७
कटुभद्रस्तु शुण्ठी स्यात्काञ्जिकं तु तुषोदकम् । गृहाम्बलं सिद्धसलिलं रक्षोघ्नं धातुनाशनम् ॥ ४४८
[13]गृहिणी मधुरा हिङ्गु शूलहृत्सूपधूपनम् । घर्षिणीहेमरागिण्यौ हरिद्रा पीतवालुका ॥ ४४९
[14]गण्डोलं स्याद्गुडः स्वादुः [15]पिप्पटा गुडशर्करा । महाश्वेता तु मधुजा प्रयस्तं स्यात्सुसंस्कृतम् ॥ ४५०
चिपिटो धान्यचमसश्चित्रापूपश्चरुव्रणः । आलिम्पना तर्पणा दीपनं मण्डोदकं च तत् ॥ ४५१
वटकः पिष्टपूरः स्याद्व्रतोपायन[16]वाचने । प्रहेणकं चाथ पोली पूपली चर्पटी च सा ॥ ४५२
सक्तुश्चूर्णक आपूप्यो भक्तं [17]कूरः प्रसादनः । मण्डो ज्येष्ठाम्बु खदिका लाजाः पारी तु दोहनी ४५३
निपानं स्त्री गवीतुम्बा निलिम्पा रोहिणी च सा । गव्यज्येष्ठं प्रस्नवनं स्याद्दोहापनयः पुमान् ॥ ४५४
अवदोहः पयः क्षीरं [18]प्राग्गाढं श्रीघनं दधि । कद्वरस्तु दधिस्वेदो जग्धिर्भोजनभक्षणे ॥ ४५५
देहयात्रा विष्वणनं भुक्तं प्रत्यवसानवत् । कल्यवर्तः प्रातराशः प्रातर्भोजनमित्यपि ॥ ४५६
अनड्वाञ्शाक्करो गन्धमैथुनः शक्करिर्वृषा । ककुद्मान्पुंगवश्चाथ कण्ठाला जालगोणिका ॥ ४५७
दोग्धा शकृत्करिर्वत्सस्तेषामाटीकनं क्रमः । गवादिकं जीवधनं पलिक्नी बालगर्भिणी ॥ ४५८
[19]कवाकं गोमयच्छत्रे गोग्रन्थिः शुष्कगोमयम् । करीषश्छगणो हंभा रेभणं च गवां ध्वनौ ॥ ४५९
नैचिकं गोः शिरोदेशो वन्दनीया तु रोचना । मन्थानमन्थतक्राटाः स्यादुष्ट्रः कण्टकाशनः ॥ ४६०
लम्बोष्ठाध्वगवासन्तकुलनाशमरुद्विपाः । भोलिर्बहुकरो वक्रग्रीवो मेषस्तु लोमशः ॥ ४६१

१ 'कटः' ख-ग-घ. २ 'स्थानः' क-ख-ग, 'स्थागः' घ. ३ 'शतानकम्' क-घ. ४ 'चित्यं' ख-ग. ५ 'खवि' घ. ६ 'वारुठ' घ, 'वारुच्छ' ख-ग. ७ 'प्रामीत्य' घ, 'प्रमात्य' क-ख-ग. ८ 'कलाम्बिका' घ. ९ 'चण्डिकातनी' क-ख-ग. १० 'पुरीषमो' घ. ११ 'क्कणनो' घ. १२ 'खरसोन्दः' घ. १३ 'गृहणी' क. १४ 'काण्डोलं' क. १५ 'पिप्पडा' ख-ग. १६ 'वायने' घ. १७ 'क्रूरः' घ. १८ 'प्राग्लीढं' ख-ग, 'प्राग्राढं चाघनं' घ. १९ 'कवकं' क-ख-ग, 'कराकं' घ.

संफालहुडभेडाश्च मेषी स्याज्जालकिन्यविः । बर्करस्तु लम्बकर्णश्छागो वस्तः शिवाप्रियः ॥ ४६२
अल्पायुर्लघुकायश्च मेनादः पर्णभोजनः । परिक्रमसहो बुक्को देवानांप्रिय इत्यपि ॥ ४६३
छागी सञ्जा चुलुम्पा स्याच्छङ्कुकर्णस्तु गर्दभः । स्मरस्मर्यश्चिरमेही ग्राम्याश्वो रेणुरूषितः ॥ ४६४
पशुश्चरिः शुद्धजङ्घो रत्नं चारुशिला मणिः । स्वाध्यायी पत्तनवणिग्हेडाबुक्कोऽश्वविक्रयी ॥ ४६५
सर्वमूल्यं द्यूतबीजं हिरण्यं च कपर्दके । वराटकः पणास्थि स्याद्भास्करः स्फटिकोपलः ॥ ४६६
शालिपिष्टं धौतशिलं गल्वर्कश्च सुसारवत् । मेसार इन्द्रनीलः स्याद्वैडूर्यं वालवायजम् ॥ ४६७
बालसूर्यमथो रक्तकन्दलो विद्रुमश्च सः । लतामणिः प्रवालः स्याद्राजपट्टो विराटजः ॥ ४६८
कुरुविन्दः पद्मरागो दधीचास्थि तु हीरकम् । स्वर्णं लोहवरं चाग्निबीजं चाम्पेयमित्यपि ॥ ४६९
रूप्ये श्वेतं रङ्गबीजमिन्दुकान्ते मणीचकम् । ताम्रकं तु लोहितायः सूर्याङ्गं मुनिपित्तलम् ॥ ४७०
कंसे तु कांस्यकंसास्थिताम्रार्धमथ मौक्तिकम् । रसोपलं शुक्तिबीजं सिन्दूरं रक्तवालुकम् ॥ ४७१
पारदः सिद्धधातुः स्याद्धरबीजं च सूतकम् । रङ्गं सुरेभं मृद्वङ्गं कुसुम्भं ग्राम्यकुङ्कुमम् ॥ ४७२
हरिताले तु कर्चूरं गोनर्दो नटसंज्ञकः । दारदं तु हिङ्गुलु स्याद्धिङ्गुलं रक्तपारदम् ॥ ४७३
रसगन्धो गन्धरसो गन्धोरं मसिवर्धनम् । क्षारस्तु स्याद्यवक्षारो यवशूकश्च रेचकः ॥ ४७४
शिलाजतु शिलाव्याधिस्त्रिफला तृफलापि च ॥ ४७५

इति वैश्यवर्गः ॥ ९ ॥

---

शूद्रस्तु पादजो दासो ग्रामकूटो महत्तरः । मालिकः पुष्पलावः स्यात्कुम्भकारस्तु मृत्करः ॥ ४७६
दण्डभृत्पलगण्डस्तु सुधाजीवी च लेपकः । कायस्थे कूटकृत्पञ्जीकरश्चित्रकरे कृणुः ॥ ४७७
चर्मरः कुरटः पादूकृत्कलादस्तु गौञ्जिकः । नाडिंधमः स्वर्णतालो वात्सीपुत्रस्तु नापितः ॥ ४७८
चन्द्रिलो नखकुट्टश्च रजकः कर्मकीलकः । कल्यपालः पानवणिग्देवलस्त्वमरद्विजः ॥ ४७९
अजाजीवस्तु जावालो निष्कश्चण्डाल उच्यते । कुकुरे दीर्घसुरतवान्तादरसनालिहः ॥ ४८०
रतव्रणो ग्राममृगस्तथेन्द्रमहकामुकः । कपिलो वक्रपुच्छश्च शयालुररतत्रपः ॥ ४८१
शुन्याः स्तन्यं शुनीरं स्याच्चौरः शङ्कितवर्णकः । स्यात्कुम्भिलश्च प्रचुरपुरुषोऽथ कुजम्भिलः ॥ ४८२
सुरङ्गाहिरधश्चौरो वन्दीकारस्तु माचलः । प्रसह्य चौरश्चिल्लाभः स्त्रीचौरो रैतहिण्डकः ॥ ४८३
काव्यचौरश्चन्द्ररेणुः कुड्यच्छेद्यं तु खानिकम् । संधिः सुरङ्गा तद्भेदाः श्रीवत्सगोमुखादयः ॥ ४८४
कपाललासिका तर्कुस्तर्कुशाणस्तु झामकः । वर्तनी तर्कुपीठी स्यात्पिञ्जनं तूलकार्मुकम् ॥ ४८५
तूलः पिचुः पिचु तूलं पिञ्जिका तूलनालिका । त्रिषु द्वारापणं सूत्रपर्णं यत्तेन वेष्टयते ॥ ४८६
निर्वेटनं नाडिचीरमेकाष्ठी तूलशर्करा । तन्त्रकाष्ठं तुरी स्त्री स्याद्ग्रीष्महासेन्द्रतूलके ॥ ४८७
पन्नद्धी पादुका प्राणहिता पादरथीत्यपि । कारावी जङ्गमकुटी भ्रमत्कुट्यथ खर्परा ॥ ४८८
रारित्रा मूर्धखोलं च सैत्र पत्रपिशाचिका । वासी तु तक्षणी न स्त्री क्रकचं पत्रदारकः ॥ ४८९
मद्यं त्वरिष्टं मैरेयं कत्तोयं कापिशायनम् । माध्वीकं मधुमाध्वीकं कपिशी काचमालिका ॥ ४९०
वीरा दैत्या प्रसन्ना च माधवी गन्धमादनी । गौडी च वाल्कली मध्वासवपक्वरसौ नरौ ॥ ४९१

---

१ 'भासुरः' घ. २ 'अश्मसारस्त्विन्द्रनीलो' घ. ३ 'वैदूर्यं' घ. ४ 'कुरुविल्लः' घ. ५ 'कूटवित्' क-ख-ग. ६ 'स्वर्णकारो' घ. ७ 'रतहिण्डिकः' क-ख-ग. ८ 'कपालपासिका' क, 'कपालनालिका' घ. 'कर्पासलासिका' इति योग्यम्. ९ 'सामकः' घ.

नलिनी नारिकेलस्य सुरा तालस्य तालकी । स्मरासवं मुखसुरं पारी स्त्री पानभाजनम् ॥ ४९२
शुण्डापानं मदस्थानं द्यूतकृत्कृष्णकोहलः । देवसभ्यस्तु सभिको लग्नकस्तृणमत्कुणः ॥ ४९३
चञ्चुरी तिन्तिडीद्यूते पक्षनी शारिश्रृङ्खला । अष्टकाङ्कं नयपीठी नयस्तु जतुपुत्रकः ॥ ४९४

इति शूद्रवर्गः ॥ १० ॥

इति त्रिकाण्डशेषे द्वितीयं काण्डम् ।

## तृतीयं काण्डम् ।

क्षेमंकरोऽरिष्टतातिः स्यद्भद्रंकरशंकरौ । आमुष्यायणनिर्ज्ञातौ[1] पुत्राम्नादः कुटीचकः ॥ ४९५
स्थपुटं विषमं संचारजीवी शरणार्पकः । अभिपन्नः शरण्यार्थी पाण्डुपृष्ठस्त्वलक्षणः ॥ ४९६
उद्भटोड्डामरोत्ताला आविष्टः प्रेतवाहितः । प्रेङ्खोलितस्तरलितस्तृषितस्तर्षितः सतृट् ॥ ४९७
ऊर्ध्वस्थोर्ध्वंदमौ तुल्यौ ग्राम्यो ग्रामेयकः स्मृतः । पराचीनः प्रतीपः स्यात्समीचीनः समञ्जसः॥ ४९८
स्वस्थानस्थः परान्द्वेष्टि यः स गोष्ठश्च उच्यते । दाता तु दारुर्मुचिरः स्याद्विदग्धस्तु नागरः ॥ ४९९
षिड्गो व्यलीकः षट्प्रज्ञः कामकेलिर्विदूषकः । पीठकेलिः पीठमर्दो भविलश्छिदुरो विटः ॥ ५००
प्रघटाविच्छात्रगण्डौ मेधावी मेधिरः समौ । युक्तं परिमिते भीमं लाभीले प्रश्लथः श्लथः ॥ ५०१
शिथिलेऽवोद आर्द्रे स्याच्छिरस्थो नायकः स्मृतः । स्यादायःशूलिकस्तीक्ष्णकर्मा शोचोऽनहंकृतिः ५०२
कुसृत्या[2] विभवान्वेषी पार्श्वकः संधिजीवकः । वाक्याभिधायी पुरुषः पृष्ठमांसाद उच्यते ॥ ५०३
भार्याटः स्वस्त्रिया दाताभार्थं दूषकपांसनौ । धृष्णुर्धृष्णग्दधृग्धृष्टो दशेरः सुप्तघातुकः ॥ ५०४
देशकः शासिता शास्ता शिङ्कुरव्यवसायवान्[3] । चकितः शङ्कितो भीतः प्रतियत्नः प्रयत्नवान्॥ ५०५
आधर्मिकाधार्मिकः स्यात्प्रसृतान्तरितौ समौ । कृपणो दृढमुष्टिः स्याद्देवयुर्धार्मिकः सुकृत् ॥ ५०६
मनःस्मयो[4] मनोज्ञः स्याच्चक्षुष्यः प्रियदर्शनः । लडहं भद्रकं न्यूङ्खं लगडं चारु बन्धुरम् ॥ ५०७
भट्टारो भगवान्पूज्यः शक्तिप्रतिबलौ समौ । पटुः पाटविको धूर्तः स्थगस्तीक्ष्णस्तु राजघः ॥ ५०८
संबन्धी गुणवान्संयुग्मित्रयुर्मित्रवत्सलः । धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि ॥ ५०९
षट्सु प्रज्ञास्ति यस्योच्चैः स षट्प्रज्ञ इति स्मृतः । मध्यस्थस्तु विसृष्टः[5] स्यात्तु प्रपृष्ठस्त्वसंमुखः[6] ॥ ५१०
स्यात्कथंकथिकः प्रष्टा विचक्षुर्विमनाः[7] स्मृतः । प्रतारितो व्यंसितः स्यात्प्रोत्थस्तु प्रार्थितो मतः॥ ५११
माशब्दिकः प्रतिषेद्धा जडमातृमुखौ समौ । प्राणं पुराणं भिन्नं तु व्यवच्छिन्नं विशेषितम् ॥ ५१२
विनाकृतं विरहितं मुक्तं[8] निर्व्यूढमुच्यते । तिक्तः कषायः सुरभिः कक्खटो निर्भरो दृढः ॥ ५१३
निःसंधिश्च निवातश्च समूढं शोधितं समे । स्यादागन्तुकमाहार्यं समे पक्किमपाकिमे ॥ ५१४
कोमलं पेलवं पापे लधमापसदव्रुवाः । रोमाञ्चितो हृष्टरोमा आजानेयास्तु निर्भयाः ॥ ५१५
अन्यासाधारणं लावेशिकं प्रातिष्ठितं[9] च तत् । भिक्षकः क्षपणोऽह्रीको बौद्धो वैनाशिकः स्मृतः ५१६
और्ध्वस्रोतसिकः शैवः कौल आन्वयिकः स्मृतः । पाशार्थिकः पाशुपतश्चिद्रूपः स्फूर्तिमान्मतः॥ ५१७
प्राज्ञ उद्घाटितज्ञः स्याच्छंवशंयुशुभंयवः । गौरवितास्त्वार्यमिश्राः श्लाघ्ये तत्रभवन्मुखाः ॥ ५१८
स्याद्देवानांप्रियः क्षेपे हतको बन्धुदग्धवत् । अणुः कनीयानल्पिष्ठः पिण्डितं गुणितं हतम् ॥ ५१९

१ 'विज्ञातौ' घ. २ 'कुसृष्टया' क-ख-ग. ३ 'शिङ्कुः' घ. ४ 'मनआपो' घ. ५ 'निसृष्टः' घ. ६ 'स्तु संमुखः' घ. ७ 'विवक्षुः' क-ख-ग. ८ 'त्यक्ते' घ. ९ 'प्रातिस्विकं' क, 'प्रातिष्ठिकं' ख-ग.

खट्वारूढोऽविनीतः स्यान्मरालमसृणे समे । प्राञ्जलः प्रगुणोऽजिह्मः प्राणाय्यः साध्वनिन्दितः ५२०
त्वं त्वद्विभं चान्यतरदपष्ठुलमपष्ठु च । करम्बितं तु खचितं रूषितं त्ववगुण्ठितम् ॥ ५२१
स पात्रेसमितोऽन्यत्र भोजनान्मिलितो न यः ॥ ५२२

इति विशेष्यनिघ्नवर्गः ॥ १ ॥

---

विधिर्विधानं कर्माखी क्रिया कृत्या विधा कृतिः । व्याप्यं तु साधनं कर्म युताजर्यं तु संगतम् ५२३
अङ्कारितं पलाशानां कलिकोद्गमने मतम् । [1]जलयन्त्रगृहं धीरैः समुद्रगृहमुच्यते ॥ ५२४
[2]लेहुडं च विदुः स्वल्पे सोमालं कुसुमाकरे । स्तनाभोगः स्तनभरः परभागः स्वसंपदि ॥ ५२५
आलिङ्गनं [3]लङ्कपालिः श्लिषा खट्टिस्त्वसद्ग्रहः । स्यादङ्गेऽनेडकः सग्धिः सहभोजनमित्यपि ॥ ५२६
धार्मिकाणां तु संभूय भोजनं गणचक्रकम् । क्रीडाक्रीडकयोर्दे[4]श्च सेवायां सेवके च सेः[5] ॥ ५२७
दानं दायोऽथ दुर्जातं दुःषमं चासमञ्जसम् । कलङ्कौ तौ विषास्त्रेण हतौ यौ मृगपक्षिणौ ॥ ५२८
छेकोक्तिर्वक्रभणितं गोमुखं तूपलेपनम् । [6]वर्धापनार्थं यत्पूर्णपात्रं पूर्णानकं च तत् ॥ ५२९
थुत्थुक्रो विक्रियामात्रादुन्नटायनमुच्यते । बुद्धद्रव्यं स्तौपिकं स्यात्सर्वं द्रव्यं च वस्तु च ॥ ५३०
लेशस्तूपपदं गन्धोऽनुबन्धेषल्करावपि । छेदः खण्डोऽस्त्रियां गालिः शपनं शमनं शमः ॥ ५३१
वप्रस्तु धूलिकेदारः प्सा वीतिर्भक्षणं च सा । [7]मैत्रेयिका मित्रयुद्धं पर्यङ्कस्त्ववसक्थिका ॥ ५३२
अथ हेतुरुपादानं प्रत्ययाः सहकारिणः । अनुमा त्वनुमानं स्याद्व्याप्यं लिङ्गं च साधनम् ॥ ५३३
प्रत्यक्षोपाक्षमध्यक्षं धन्धो धान्ध्यमपाटवम् । बोधो बोधिः समज्ञा तु ज्ञानं स्यात्समुदागमः ॥ ५३४
ऋषिः शास्त्रकृदाचार्यः शास्त्रं तु स्मृतिरागमः । सांख्यं समीक्ष्यं स्याद्दिव्यदोहनं तूपयाचितम् ५३५
करणिं रूपमिच्छन्ति स्यादास्फाले झलज्झला । रामेण रावणवधो रामायणमथोन्वयः ॥ ५३६
वस्त्रग्रन्थिश्च नीवी च मणितं रतकूजितम् । श्वभ्रोऽवपातो हृल्लेखस्तर्कश्चीर्णं तु शीलितम् ॥ ५३७
एकीया एकपक्षाः स्युः सहीयाः सहभाविनः । कुलीरात्स्येगविर्जानपदा राष्ट्रनिवासिनः ॥ ५३८
प्रत्यक्षव्यक्तदृष्टार्थश्चाथ वर्तनतर्कुटे । चिररात्रं दीर्घरात्रमामिक्षा मस्तु वाजिनम् ॥ ५३९
तदात्वं प्रमुखं राजमल्ल उत्सिक्त उद्धतः । [8]द्वैधं विवाद आरम्भ आदराडम्बरार्थकः ॥ ५४०
रभसो गमकारित्वं कौमुदी कार्तिकोत्सवे । आवेशाटोपसंरम्भाः प्रियवाक्चटुचाटुनी ॥ ५४१
प्रतिरूपं प्रतिच्छन्दः संवेशनरतिक्रिये । अभ्यासः खुरली योग्या निर्वर्णननिभालने ॥ ५४२
शालिनीकरणं न्यग्भावनं गन्धनसूचने । भावः पदार्थो धर्मः स्यात्सत्त्वं तत्त्वं च वस्तु च ॥ ५४३
संदर्भस्तु प्रबन्धः स्याद्ग्रन्थो द्वात्रिंशदक्षरी । [9]सर्गबन्धो महाकाव्यं महारूपकनाटके ॥ ५४४
अथ वाङ्मयभेदाः स्युश्चम्पूः खण्डकथा कथा । आख्यायिका परिकथा कलापकविशेषकौ ॥ ५४५
संदानमनिरुद्धं च प्रकीर्णं गुच्छकादि च । सर्गो वर्गः परिच्छेदोद्घातोताध्यायाङ्कसंग्रहाः ॥ ५४६
उल्लासः परिवर्तश्च पटलः काण्डमस्त्रियाम् । स्थानं प्रकरणं पर्वाह्निकं च ग्रन्थसंधयः ॥ ५४७
प्रज्ञप्तिः परिभाषाशैलीसंकेतसमयकाराश्च ।
प्रतिवाणिः प्रतिवचनं समुदाचारस्त्वभिप्रायः ॥ ५४८

---

१ इदमर्धपद्यं क-ख-ग. पुस्तकेषु 'धार्मिकाणां तु' इत्यतः प्राक्पठितम्. २ 'जलहं तु' घ, 'लहुमं' ख-ग. ३ 'अङ्गपालिः' घ. ४ 'दोःस्थः' घ. ५ 'सः' घ. ६ 'वार्धोयनार्तं' घ, 'वधापकाष्टं' क-ख-ग. ७ 'अवसायिका' ख-ग. ८ 'द्वैविध्यं द्विविधं वाधि' क-ख-ग. ९ 'सर्वग्रन्धो' घ, 'सर्वगन्धो' ख-ग.

अप्रतिरूपकथा स्यात्संगणिका छोरणं परित्यागः ।
स्यादुद्वर्तनमन्तर्हासस्त्रिषु पिण्डमाहारः ॥ ५४९
अध्यवसर्गः प्राकाम्यं स्वाच्छन्ध्यानुमननमित्यपि च ।
आकल्पक उत्कण्ठा चिन्ताकर्मण्यथास्त्यानम् ॥ ५५०
आक्षेपोऽत्याकारः स्वाध्यायः स्यान्निरन्तराभ्यासः ।
हर्षस्वनः किलकिला सदृशस्पन्दस्तु निस्पन्दः ॥ ५५१
अवसानं तु विरामोऽमध्यमथो मण्डलं चक्रम् ।
स्यादारम्भः प्रस्तावना तदामुखमपि ज्ञेयम् ॥ ५५२

इति संकीर्णवर्गः ॥ २ ॥

---

स्वरकाद्यादिकाद्यन्तक्रमान्नानार्थसंग्रहम् । विहायामरकोषोक्तमकार्षीत्पुरुषोत्तमः ॥ ५५३

शक्रार्कपर्णयोश्चार्कोऽभीकस्त्वभयकामिनोः । रूपकान्तिकयोश्चाङ्कोऽलिमकौ भेककौकिलौ ५५४
अन्तिकं निकटं चुल्लिर्नाट्योक्तौ चाग्रजान्तिका । अनीकोऽस्त्री रणे सैन्ये गौर्यां मातरि चाम्बिका ॥
स्यादश्मन्तकमुद्धाने मल्लिकाच्छदनेऽपि च । आह्निकं दिननिर्वर्त्ये तत्क्लीबं नित्यकर्मणि ॥ ५५६
स्यादाच्छुरितकं हासविशेषे च नखक्षते । उदर्कं एष्यत्कालीयफले मदनकण्टके ॥ ५५७
स्त्रियामुत्कलिका हेलोत्कण्ठासलिलवीचिषु । कोशज्ञे कौशिको विश्वामित्रे गौर्यां च कौशिकी ५५८
कृष्णले च हिमान्यां च गौरीकाल्योश्च कालिका । वर्षोपले स्त्री करका करङ्के करकोऽस्त्रियाम् ॥५५९
कुसुम्भे दाडिमे पक्षिभेदे च करकः पुमान् । करमध्याङ्गुलौ च स्यात्कर्णिकाथ द्रुमान्तरे ॥ ५६०
द्विके धृष्टे च काकः स्यात्कौतुकं मङ्गलेच्छयोः । भोग्येऽप्यथ स्यात्कुलकं श्लोकैकार्थ्यपटोलयोः ५६१
कुलकौ नाककाकेन्दू क आत्मा च सुखं च कम् । पेचकस्त्रीजितौ काकरूकौ कौलेयकः शुनि ॥
कुलीने चाथ कनकं धत्तूरे नागकेसरे । चम्पके किंशुके हेम्नि कृषकौ फालकर्षकौ ॥ ५६३
रोमाश्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोऽस्त्रियाम् । राजधान्यां नितम्बेऽद्रेर्वलये कटकोऽस्त्रियाम् ॥ ५६४
वेणौ ना कार्मुकं चापे गुणवृक्षेऽपि कूपकः । कल्को विभीतके तैलादिशेषे चाथ कञ्चुकः॥५६५
निर्मोके चोलके वारबाणेऽथ कुशिको मुनौ । शैले किष्कुः प्रकोष्ठेऽपि व्याख्याश्लोकेऽपि कारिका ॥
खगे यमे छद्मविप्रे कङ्कः सूच्यां च कूर्चिका । क्रमुको भद्रमुस्तेऽपि कोकश्चक्रे वृकेऽपि च ५६७
पुनर्नवाकारवेल्लपर्णासेषु कठिल्लकः । कृकवाकुर्मयूरेऽपि वंशे दैत्ये च कीचकः ॥ ५६८
नीचेऽपि क्षुल्लको मूर्धत्राणे नाकौ च खोलकः । चौरोन्दुरू च खनकौ गोलकौ मणिजारजौ ॥
खगे नम्रे च गोरङ्कुः संख्याभेदेऽपि गण्डकः । शृङ्ग्यां च ग्रामयुद्धे च ग्राममद्गुरिका स्त्रियाम्५७०
गान्धिको लेखकेऽपि स्याद्गृह्यकश्छेकनिघ्नयोः । ग्रन्थिकौ पार्थदैवज्ञौ ग्रथिपर्णे च न द्वयोः ॥५७१
वेश्यायूथ्योश्च गणिका चषकं सरकेऽपि च । कण्ठालंकारखद्योतविद्युत्सु चिलमीलिका ॥ ५७२
चारको भोजके बन्धे नाटकाङ्गेऽपि चूलिका । चित्रकं चित्रके क्लीबं व्याघ्रैरण्डौ च चित्रकौ ॥
गृहासक्ते पक्षिमृगे छेको नागरके त्रिषु । कम्बौ जलकरङ्कः स्यान्नारिकेलफलेऽपि च ॥ ५७४

---

१ 'मालुकाछदने' क-ख-ग. २ 'कल्पे' क. ३ अनेकार्थकैरवाकरकौमुद्यां तु 'फाले' इति मूलं पठित्वा "फाले यथा—'दारयन्कुशिकेनोर्वीम्'" इति व्याख्यातम्.

जैवातृकः कृशे चन्द्रे दीर्घायुषि च स त्रिषु। जालिका वस्त्रभित्कूटकृत्कैवर्तौ च जालिकौ ५७५
जङ्घायामद्रिभित्तौ च खनित्रे ग्रावदारणे। कपित्थे चास्त्रियां टङ्कष्टुण्टुकावल्पशोणकौ॥ ५७६
तिलकं चित्रके क्लोम्नि ना तरौ तिलकालके। गृहदारौ तण्डकोऽस्त्री समासप्रायवाचि च॥ ५७७
तुरुष्कः सिह्लके देशे प्राण्यङ्गे त्रितये त्रिकम्। कूपाङ्गे स्त्री तिक्तशाकः खदिरे वरुणद्रुमे॥ ५७८
दैत्ये ना कर्णधारे च तारकं दृशि भे न ना। द्विकौ काकचक्रवाकौ पृश्न्यां कन्दे दलाढकः॥ ५७९
नरको निरये दैत्ये नौवाहे स्यान्नियामकः। सभ्ये गुरौ च नवफलिका नवरजस्यपि॥ ५८०
नालीकौ पद्मनाराचौ वृन्देऽपि पेटकोऽस्त्रियाम्। सौभाग्येऽपि पताका स्यात्पङ्कोऽस्त्री कर्दमांहसोः॥
पञ्चालिका वस्त्रकृतपुत्रिकागीतभेदयोः। मणिदोषे शिलाभेदे पुलको लोमहर्षणे॥ ५८२
पर्यस्त्यामपि पल्यङ्कः प्रियको मृगनीपयोः। पुष्पकं कंकणेऽपि स्यात्पराको व्रतखड्गयोः॥ ५८३
चामरे ग्रन्थभेदे च विस्तरेऽपि प्रकीर्णकम्। सितच्छत्राब्जयोः पुण्डरीकं पुंसि तु दिग्गजे॥ ५८४
व्याघ्रे च कोषकारे च पाकौ पचनशावकौ। पुष्कलको गन्धमृगे कीलके क्षपणेऽपि च॥ ५८५
कपर्दरज्जुराजीवबीजकोषे वराटकः। वृन्दारकौ सुरश्रेष्ठौ गिरिमेघौ बलाहकौ॥ ५८६
पिञ्जे ना सिकता कर्णभूषा कन्या च वालिका। शिवमल्ल्यां बकः कह्वे राज्ञि भट्टारकः सुरे॥५८७
भूमिका रचनायां च मूर्त्यन्तरपरिग्रहे। मधुका वल्लिभेदे च बर्हिचन्द्रे च मेचकः॥ ५८८
हारभेदे माणवको बाले कुपुरुषे वटौ। मयूरकोऽपामार्गे च हंसभेदेऽपि मल्लिका॥ ५८९
युतकं वस्त्रभेदे च यौतके संशयेऽपि च। यमकं संयमे शब्दालंकारे यमजे त्रिषु॥ ५९०
याज्ञिको याजके दर्भे बिले रोकं रुचौ पुमान्। राका दृष्टरजःकन्या कच्छूः पूर्णेन्दुपूर्णिमा॥५९१
नीलवस्त्रेऽक्षितारायां लोचको निर्मतौ त्रिषु। नगरीशाखयोर्लङ्का करिण्यामपि बन्धकी॥ ५९२
गुप्तावनाथे गरुडे जिने विघ्ने विनायकः। वृषाङ्कौ शिवभल्लातौ वञ्चकौ धूर्तफेरवौ॥ ५९३
वैदेहको वाणिजके वैश्यायामपि शूद्रजे। वैलक्ष्याकार्ययोः क्लीबं व्यलीकं त्रिषु नागरे॥ ५९४
बाल्हीकं बाल्हिकं धीरहिङ्गुनोर्नाश्वदेशयोः। विपाकः परिणामेऽपि तिलकेऽपि विशेषकः॥ ५९५
शङ्कुः कीलकसंख्यास्त्रजलजन्तुषु दृश्यते। शिशुकः शिशुमारेऽपि शुकं ग्रन्थिशिरीषयोः॥ ५९६
कीरे रावणपात्रे ना वचापि शतपर्विका। शल्कश्चूर्णेऽपि शूकस्तु स्यादनुक्रोशशुङ्गयोः॥ ५९७
शिलातको विलेपेऽट्टे शुल्को यौतकदानयोः। श्वाविद्वृक्षश्च शल्लक्यौ मणिखड्गे च सस्यकः ५९८
शीघ्रौ च शीधुपाने च सरकोऽरुयथ जन्मनि। सूतकं पारदेऽप्यस्त्री सूचकौ खलकुक्कुरौ॥ ५९९
युग्मे संघाटिका कुट्टन्यां च गद्येऽपि हारकः। वाद्यभेदे हुडुक्कः स्याद्दात्यूहे च मदोत्कले॥ ६००
इन्दुरेखा गुडूच्यां च पूः सुखं स्वर्नभश्च खम्। गोमुखं लेपने वाद्यभाण्डे सर्पेऽपि दुर्मुखः॥ ६०१
त्रिशिखं स्यात्त्रिशूलेऽपि न्यूङ्खः साम्नि मनोरमे। नखं शुक्तौ कररुहे कूर्मे पञ्चनखो गजे॥६०२
आदौ प्रधाने प्रमुखं वैशाखो मन्थमासयोः। काण्डे ना विशिखा रथ्या विशाखा भे गुहे पुमान्॥
लेखो देवेऽपि पङ्क्तौ स्त्री शिखा चूडाग्रयोरपि। शाखा वेदविभागेऽपि सखा मित्रसहाययोः॥६०४
सुमुखस्तार्क्ष्यपुत्रे च शोभनास्यगणेशयोः। सुमुखी शोभनास्याथापवर्गस्त्यागमोक्षयोः॥ ६०५
शरीरोपायप्रधानेष्वङ्गं पुंभूम्नि नीवृति। संबोधनेऽङ्गाव्ययं स्यादयोगो विधुरेऽपि च॥ ६०६
शपथेऽप्यभिषङ्गः स्यादनङ्गं खे स्मरे पुमान्। पूर्णत्वयत्नावाभोगावायोगो व्यापृतावपि॥ ६०७

---

१ 'गृहकारौ' क-ख-ग. २ ख-ग-पुस्तकयोरिदं पादद्वयमधिकं वर्तते.

अङ्गमेङ्गितयोरिङ्गो नाट्य ईहामृगो वृके । फलं पूगस्य चोद्वेगमुत्सर्गो न्यायदानयोः ॥ ६०८
सामान्येऽप्युपरागस्तु ग्रहेऽर्केन्द्वोश्च दुर्नये । हस्तच्छेदे तु सस्यानां कटभङ्गो नृपात्यये ॥ ६०९
कथाप्रसङ्गो वातूले विषवैद्ये च वाच्यवत् । देशे कलिङ्गो धूम्याटे कलिङ्गं कौटजे फले ॥ ६१०
त्रिषु दक्षे विदग्धे च खड्गौ निस्त्रिंशगण्डकौ । स्वर्गे वज्रे च रश्मौ च बलीवर्दे च गौः पुमान् ६११
स्त्री बाणरोहिणीदृग्धी दिग्वाग्भूष्वप्सु भूम्नि च । वैधव्ये नृपनाशे च छत्रभङ्गः प्रकीर्तितः ॥६१२
अश्वगन्धापि तुरगी तुङ्गौ पुंनागसोच्छ्रयौ । दीर्घाध्वगः स्यादुष्ट्रेऽपि निषङ्गः सङ्गतूणयोः ॥६१३
नागः श्रेष्ठेभसर्पेषु क्लीबं सीसकरङ्गयोः । वृक्षे स्यात्पुंसि पुंनागः पतङ्गः शलभे रवौ ॥ ६१४
काकोदुम्बरिकायां स्त्री फल्गुस्त्रिषु निरर्थके । पालने व्यवहारे च निर्वेशो पण्ययोषिताम् ॥ ६१५
भोगः सुखे धने चाहेः शरीरफणयोरपि । भर्गं वैराग्ययोनीच्छाज्ञानैश्वर्येषु चेष्यते ॥ ६१६
तरङ्गभेदयोर्भङ्गो भङ्गा सस्ये शणाह्वये । एकदेशांशयोर्भागो भृङ्गो धूम्याटकेऽपि च ॥ ६१७
भुजंगो भुजगे षिड्गे जामदग्न्यतटौ भृगू । मृगोऽन्विष्टौ च मार्गस्तु मासान्वेषणवर्त्मसु ॥ ६१८
योगश्चारेऽपूर्वलाभे सूत्रे विस्रब्धघातिनि । उपाये संगतौ ध्यानौषधसंनाहयुक्तिषु ॥ ६१९
नृत्ये रणे खले रागे रङ्गः क्लीबे त्रपुण्यपि । रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु ॥ ६२०
चक्रे रथाङ्गं कोके ना रक्ताङ्गो मङ्गलेऽपि च । व्यक्ते सांख्योदिते लिङ्गं स्थाणौ शेफसि लक्षणे ६२१
पुंस्त्वादौ च वराङ्गं तु गुडत्वचि गजे पुमान् । वल्गुश्छागेऽपि वेगस्तु महाकालफलेऽपि च ॥ ६२२
जलोत्क्षेपे समुद्रेऽपि शृङ्गमुत्कर्षचिह्नयोः । शार्ङ्गं धनुर्विष्णुधनुः संभोगो रतभोगयोः ॥ ६२३
ओघः स्याद्द्रुतनृत्येऽपि काचिघौ काञ्चनोन्दुरू । निदाघौ स्वेदतापौ च प्रतिघा रोषघातयोः ६२४
परिघो योगभेदेऽपि मेघो वारिदमुस्तयोः । महार्घस्तु महामूल्ये पुंसि लावकपक्षिणि ॥ ६२५
पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णागुरुण्यपि । प्रतिमापूजयोरर्चा क्रौञ्चः पक्ष्यद्रिभेदयोः ॥ ६२६
कूर्चमस्त्री भ्रुवोर्मध्ये श्मश्रुकैतवयोरपि । इभ्यां स्त्री गुरुपुत्रे ना केशे शुष्कव्रणे कचः ॥ ६२७
देशभेदेऽपि काञ्ची स्यादथ स्थासकतर्कयोः । चर्चिकायां च चर्चा स्यात्त्वक्स्त्री चर्मगुडत्वचोः ॥६२८
वामने पामरे नीचो नमुचिर्दितिजे स्मरे । मरीचिर्मुनिभेदेऽपि चौरवह्नी मलिम्लुचौ ॥ ६२९
कक्कोलेऽपि च मारीचो मोचा शाल्मलिरम्भयोः । कुक्कुरे रतनारीचः शीत्कारे वरयोषिताम् ६३०
केतुग्रहे तु विकचो वीचिः सुखतरङ्गयोः । स्वल्पेऽपि शारिकायां च वचा ग्रीष्मामलौ शुची ॥६३१
सूची नृत्यप्रभेदे च व्यधनीशिखयोरपि । वाराही चीरिका कच्छा कच्छोऽनूपे द्रुमान्तरे ॥ ६३२
पिच्छा स्त्री भक्तमण्डेऽपि लाङ्गूले पिच्छमस्त्रियाम् । पद्मधन्वन्तरी चाब्जावण्डजः खगमीनयोः ॥
निचुलेऽप्यम्बुजोऽजस्तु ब्रह्मविष्णुस्मरेष्वपि । स्यादङ्गजः स्मरे केशे पुत्रे रक्ते नपुंसकम् ॥ ६३४
उत्साहकार्तिकावूर्जौ कम्बोजो देशशङ्खयोः । नखे करञ्जे करजः कुब्जो न्युब्जे द्रुमान्तरे ॥ ६३५
खनौ सुरागृहे गञ्जा गुञ्जे पटहकृष्णले । जघन्यजोऽनुजे शूद्रे जलजं शङ्खपद्मयोः ॥ ६३६
चिह्नशेफःपताकासु खट्वाङ्गेऽपि ध्वजोऽस्त्रियाम् । नीरजं कमले कुष्ठे पिञ्जा हिंसाहरिद्रयोः ॥ ६३७
भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्ये च पक्षिणि । बुधैः ख्यातो भरद्वाजो द्रोणाचार्ये मुनावपि ६३८
भृङ्गराजः खगौषध्योर्लङ्घने मुनिभेषजम् । आगस्त्यहरीतक्यां च रुजा स्याद्रोगभङ्गयोः ॥६३९
मुस्तेऽपि वनजो बीजं रेतस्तत्त्वार्थहेतुषु । व्याजः शाठ्येऽपदेशे च स्वेदरक्तात्मजाः स्वजाः ६४०

१ 'लट्टे' क-ख-ग. २ 'विल्व' क-ख-ग. ३ 'खड्गाङ्गे' क-ख-ग. ४ 'भारद्वाजो' हैममेदिन्योः.

निसर्गे **सहजः** पुंसि सहोत्थे वाच्यलिङ्गकः । संनद्धसंभृतौ **सज्जौ** **हिमजा** पार्वती शची ॥ ६४१
**अज्ञ**स्त्रिषु जडे मूर्खे **कृतज्ञः** कुक्कुरेऽपि च । **संज्ञा** सूर्यप्रियायां च **सर्वज्ञः** शंकरेऽपि च ॥ ६४२
**अरिष्टं** सूतिकागारे तक्रेऽपि च पुमांस्त्वयम् । काके निम्बे च लशुने गर्ते कूपे खिलेऽ**वटः**॥६४३
अत्यर्थक्षौमयो**रट्टः** कृता**विष्टं** प्रिये त्रिषु । **केशट**स्त्वोकणे विष्णौ **कूपीट**मुदरे जले ॥ ६४४
पुंश्चले **कुण्डकीटः** स्याज्जाराच्च ब्राह्मणीसुते । समये च क्रियाकारे किलिञ्जशवयोः **कटः** ॥ ६४५
**कोटिः** संख्यापि **करटो** वाद्यभाण्डकुविप्रयोः । कुलीरे **कर्कटो** राशौ **कृष्टिः** कर्षे बुधे पुमान् ॥६४६
अप्रियेऽपि **कटुः** कुम्भे **कुटो** ना भवने द्वयोः । सुरायां स्त्री **कीकट**स्तु निःस्वे देशे मितंपचे ॥६४७
**खेटः** शिङ्घाणके हीने **गृष्टि**र्धेन्वोषधीभिदोः । सूकरे पुंसि **घृष्टिः** स्यात्स्पर्धाघर्षणयोः स्त्रियाम् ॥६४८
**घोण्टा** तु बदरे पूगे देहांशे वर्णने **चटुः** । निश्वासे **दशनोच्छिष्ट**श्चुम्बे दन्तच्छदेऽपि च ॥ ६४९
परिमाणमुदो**र्दिष्टि**र्दिष्टः कालोपदिष्टयोः । **धाराटौ** चातकहयौ कपाटेऽपि च **निष्कुटः** ॥ ६५०
कोटरेऽप्यथ **पट्टः** स्यात्फलके नृपशासने । प्रत्याख्याते प्रेषिते च **प्रतिशिष्टं** त्रिलिङ्गकम् ॥ ६५१
**पर्कटी** प्लक्षवृक्षे च पूगादेश्च नवे फले । **वटी** त्रिषु गुणे पुंसि न्यग्रोधे च कपर्दके ॥ ६५२
**वर्वट्यौ** व्रीहिभिद्वेश्ये **नटौ** भरतकामुकौ । **मोरटं** गोर्नवे क्षीरेऽङ्कोटपुष्पेक्षुमूलयोः ॥ ६५३
**म्लिष्टं** म्लाने कुवचने **मर्कटी** शूकशिम्ब्यपि । **लाटो**ऽशुके च देशे च **व्युष्टं** कल्ये त्रिषूषिते ॥ ६५४
पथि वस्तुनि **वाटः** स्या**द्विकटं** विवृतं बृहत् । **वर्कराटः** कटाक्षे च स्त्रीणां स्तननखक्षते ॥ ६५५
भद्राप्रेषणयो**र्विष्टि**र्**वर्णाटौ** कामिगायनौ । **विटो**ऽब्धिलवणे षिङ्गे मूषिके खदिरेऽपि च ॥ ६५६
प्राक्षलोहे **श्रुतिकटः** प्रायश्चित्तभुजङ्गयोः । **स्फुटिः** स्फोटे च कर्कट्यां **हृष्टः** प्रतिहतेऽपि च ॥ ६५७
वैश्याद्द्विजन्मजे**ऽम्बष्ठः** पाठायूथिकयोः स्त्रियाम् । **काष्ठा** कालेऽपि **कोष्ठ**स्तु स्वकीयेऽप्यथ सुध्वनौ ॥
ग्रीवादेशेऽपि **कण्ठः** स्यात्**कुष्ठं** रोगौषधीभिदोः । दात्यूहे **कालकण्ठः** स्याच्छिवखञ्जनयोरपि ॥ ६५९
**ज्येष्ठो** मासि च वृद्धे च **ज्येष्ठा** च गृहगोधिका । अम्ललोण्यां **दन्तशठा** ना जम्बीरकपित्थयोः ॥
**प्रकोष्ठौ** बाहुगेहांशौ **वरिष्ठं** मरिचेऽपि च । ताम्रे चोरुतरे चाथ मध्यस्थखलयोः **शठः** ॥ ६६१
**शोठो**ऽलसे च मूर्खे च **सूत्रकण्ठो** द्विजन्मनि । कपोतविहगेऽपि स्यात्पृश्न्यां च प्रसभे **हठः** ॥ ६६२
प्राण्यङ्गकोषयो**रण्डं** **कूष्माण्डौ** फलभिद्गणौ । **कुण्डं** खातोखयोर्जारजे ना **कुण्डी** कमण्डलौ ॥६६३
सिंहोक्तौ स्त्री विषे **क्ष्वेडः** पशौ **क्रोडो** न नोरसि । **खण्डो**ऽस्त्री शकले नेक्षुविकारमणिदोषयोः ॥ ६६४
**गण्डः** कपोले पिटके श्रेष्ठे गण्डकयोगयोः । **चण्डौ**षधिः खरश्च**ण्डो** **दण्डौ** सैन्यार्कपार्श्वगौ ॥ ६६५
व्यथा कृपा च **पीडे** द्वे **पाण्डुः** कुन्तीपतौ सिते । **पिण्डः** सान्द्रे गृहांशेऽङ्गे **पण्डः** शण्ढे मतौ स्त्रियाम् ॥
स्तम्बे शस्ते **प्रकाण्डो**ऽस्त्री **बरण्डो** वदनामये । समूहे चान्तरावेद्यां **मण्डः** स्यात्सारपिच्छयोः ॥६६७
एरण्डे मस्तुनि क्लीबं **मार्तण्डौ** खगदंष्ट्रिणौ । राहौ दैत्यान्तरे **मुण्डो** मूर्ध्न्यस्त्री मुण्डिते त्रिषु ॥ ६६८
**रण्डा** स्याद्विधवौषध्यो**र्वितण्डा** शाकभिद्यपि । **शिखण्डौ** तु शिखाबर्हौ **शुण्डा** करिकरः सुरा ॥
**आषाढो** व्रतिनां दण्डे मासे मलयपर्वते । विचेष्टबालिशौ **मूढौ** **राढा** स्याद्दीप्तिदेशयोः ॥ ६७०
पण्डकञ्चुकिनौ **शण्ढौ** **समूढः** पुञ्जिते नवे । भुग्ने निरुत्प्लवेऽप्येष वाच्यलिङ्ग उदीर्यते ॥ ६७१
**अरुणो** भास्करेऽनूरौ मञ्जिष्ठातिविषा**रुणा** । त्रिष्वारक्ते व्याकुलेऽथ सूक्ष्मे व्रीह्यन्तरेऽप्य**णुः** ॥ ६७२

---

१ 'शोणके' घ. २ 'शपथे' घ. ३ 'चारुतरे' क-ख-ग-घ.

कीलकाग्राश्रिसीमासु स्यादाणिवदणिर्द्वयोः । अभीक्ष्णं तु भृशे नित्ये स्यादिन्द्राणीन्द्रयोषिति ॥ ६७३
स्त्रीबन्धे सिन्दुवारे च चक्षुर्दर्शनमीक्षणम् । उन्मूलनेऽप्युद्धरणमुष्णं दक्षेऽपि ना तपे ॥ ६७४
साधने गीतनृत्यप्रभेदे कायस्थकर्मणि । करणं पुंसि संकीर्णे कल्याणं काञ्चने शुभे ॥ ६७५
कृष्णो वर्णे हरौ व्यासे कृष्णं मरिचकोलयोः । पिप्पली द्रौपदी कृष्णा हस्तसूत्रेऽपि कङ्कणम् ॥ ६७६
श्रुतिराधेययोः कर्णः पिप्पल्यां जीरके कणा । कोणोऽश्रौ वाद्यलगुडे वधे हेतौ च कारणम् ॥ ६७७
ग्रहणं स्वीकृतौ हस्ते गुणः स्याद्रज्जुसूदयोः । अङ्गुष्ठानामिकोन्माने गोकर्णोऽह्रौ मृगेऽपि च ॥ ६७८
नासिकाघ्राणयोर्घ्राणं चूर्णं गन्धयुतावपि । वेदांशे बह्वृचादौ च बुध्ने पादेऽपि चास्त्रियाम् ॥ ६७९
चरणश्चीर्णपर्णस्तु खर्जूरपिचुमन्दयोः । जेतरीन्द्रेऽर्जुने जिष्णुर्जूर्णिः कठिनपूगयोः ॥ ६८०
तरुणः कुब्जपुष्पेऽपि त्राणं रक्षितरक्षयोः । द्युमणौ तरणिः पुंसि कुमारीनौकयोस्त्रिषु ॥ ६८१
काष्ठागारेऽम्बुवाहिन्यां शैलसंधौ च योषिति । द्रोणी न स्त्री मानभेदे द्रोणः काके कृपीपतौ ॥ ६८२
दुर्वर्णं रजतेऽपि स्याद्द्रुणोऽलिः कच्छपी द्रुणी । दक्षिणा दिशि दाने च दक्षिणः सरलेऽपि च ॥
धर्षणी स्यादसती च धर्षणं निकृतौ रते । बुद्धमन्त्रे नाडिकायां धारणाथ[1] च मज्जने ॥ ६८४
निर्वाणं निर्वृतौ मोक्षे प्रघणोऽस्त्रगृहांशयोः । बोले वाते बले प्राणः पूर्णे पुंभूम्नि चासुषु ॥ ६८५
पर्णं पक्षे च पत्रे च प्रोक्षणं सेचने वधे । ग्रन्थे कार्षापणे चास्त्री पुराणमनवे त्रिषु ॥ ६८६
पार्ष्णिः पादे व्यूहपृष्ठे वाणी व्यूतिश्च भारती । मन्त्रान्यवेदे[2] विप्रौघे क्लीबं ना ब्राह्मणो द्विजे ॥ ६८७
लिङ्गाग्रेऽलिंजरे मौक्तिकादौ स्त्रीपुंसयोर्मणिः । अजागलस्तने चापि मसृणौ मृद्वकर्कशौ[3] ॥ ६८८
निःश्मश्रुपुरुषोद्दंशौ मत्कुणावथ रोहिणी । नक्षत्रे रोहितायां च रणः क्वणनयुद्धयोः ॥ ६८९
लक्ष्मणा सारसी दाशरथिः श्रीमांश्च लक्ष्मणः । छागेऽपि लम्बकर्णः स्याद्वेणुर्वंशे नृपान्तरे ॥ ६९०
बाणा झिण्ट्यां शरे बाणो वृष्णिर्यादवमेषयोः । कर्णे श्रुतौ च श्रवणं शरणं मारणेऽपि च ॥ ६९१
श्रेणिः पङ्क्तौ सेकपात्रे न क्लीबं कारुसंहतौ । कर्षे माषचतुष्के च शाणः शोणो नदेऽरुणे ॥ ६९२
पक्वे श्राणं यवाग्वां स्त्री श्रीपर्णं गणिकारिका । पद्मं च श्रमणा भिक्षुक्यां मुण्डिर्या च दृश्यते ॥
सुवर्णं मानभेदे च स्थूणा शूर्मी च दारु च । स्थाणू शङ्कुशिवौ विष्णौ सुषेणः करमर्दके ॥ ६९४
कपिवैद्ये चाथ हृतौ हरणं यौतकेऽपि च । मोक्षः सुधा यज्ञशेषोऽयाचितं वारि चामृतम् ॥ ६९५
अमृता तु गुडूची स्याद्धरीतक्यामलक्यपि । शेषे विष्णावनन्तो ना गुडूचीदूर्वयोः स्त्रियाम् ॥ ६९६
क्लीबं खे त्रिष्वनवधौ[4] अस्वन्तं[5] मरणेऽशुभे । चुल्ल्यां च पूर्णिमाभेदेऽनुमतिः संमतावपि ॥ ६९७
स्वरूपेऽन्तं विनाशे ना न स्त्री शेषेऽन्तिके त्रिषु । गते ज्ञातेऽप्यवसितमर्वन्तावश्वकुत्सितौ ॥ ६९८
अर्वती कुम्भदास्यश्वाथार्दितं प्रार्थिते हते । क्षिप्ताद्रिभेदयोरस्तः स्याल्लाजेष्वपि चाक्षतम् ॥ ६९९
कृषावसत्येऽप्यनृतमाकृतिर्जातिरूपयोः । आप्तौ लब्धहितौ दैर्घ्ये भाविकालेऽपि चायतिः ॥ ७००
आचितः शकटोन्मेयेऽप्यावर्तश्चिन्तनेऽपि च । आयस्तस्तेजिते क्षिप्तेऽथाख्यातं तिङि भाषिते ॥
भ्रंशे तदाले चापात आहतं गुणिते हते । मृषोक्ते चाथ दग्धे स्यादुषितं स्थितवत्यपि ॥ ७०२
व्यसनार्ते चोपरक्त उदितं प्रोक्त उद्गते । स्याद्धुस्तूरेऽपि चोन्मत्तः क्षिप्ते सृष्टेऽपि चोद्धतम् ॥ ७०३
उत्तप्तं शुष्कमांसेऽपि वह्न्युत्पातेऽप्युपाहितः । उदास्थितश्चरे द्वाःस्थे स्याद्यूतिः स्यूतिरक्षयोः ॥ ७०४

---

१ 'धारणार्थे च' क, 'धारणाप्येव' ख-ग, 'धारण्यथ च' घ. २ 'मन्त्राक्ष' क-ख-ग, 'मन्त्राख्य' घ.
३ 'मृदुकर्कशौ' क-ख. ४ 'अनवधौ' इति गध्यमणिन्यायेनानन्तास्वन्ताभ्यामन्वेति हैमसंवादात्. ५ 'अश्मन्तं' घ.

ऋतमुञ्छशिले सस्ये एतावागतकर्वुरौ । ऐरावतो नागरङ्गेऽप्यथ कान्तिर्द्युतीच्छयोः ॥ ७०५
किरातौ म्लेच्छभूनिम्बौ कान्तस्तु प्रियरम्ययोः । केतुर्ग्रहोत्पातचिह्ने कलितं विदिताप्तयोः ॥७०६
कपोतः पक्षिमात्रेऽपि गुप्तं रक्षितगूढयोः । गतिर्यात्रादशोपायाः षण्ढः सूर्यश्च गोपतिः ॥७०७
गृही सत्री गृहपतिर्गीतं शब्दितगानयोः । गर्जितं स्तनिते नेभे ग्रस्तं वाग्भेदभुक्तयोः ॥ ७०८
चर्मण्वत्यौ नदीरम्भे जातं व्यक्तौघजन्मसु । सूर्यावर्तेऽपि जामाता ना वाते पिष्टपे जगत् ॥७०९
जातिश्छन्दसि मालत्यां चुल्ल्यां जातीफले कुले । व्याप्तविस्तृतवाद्येषु ततं क्लीबं सुगन्ध्यपि ॥ ७१०
चापे तृणत्वे तृणता तातः पित्रनुकम्पयोः । दुर्गतिर्नरके नैःस्व्ये दुर्जातं व्यसनेऽपि च ॥ ७११
दिवाभीत उलूके स्यात्कुम्भिले कुमुदाकरे । विसृष्टे रक्षिते दत्तं द्रुतं शीघ्रविलीनयोः ॥ ७१२
दशने शैलशृङ्गे च दन्तः स्यादोषधौ स्त्रियाम् । दिती खण्डनदैत्याम्बे धृतिस्तुष्टौ क्रतावपि ॥ ७१३
राशौ च धातुर्निर्वाणे सुस्थितत्वे च निर्वृतिः । अस्वाध्याये कुरूपे ना प्रत्युक्तौ स्त्री निराकृतिः ॥७१४
जम्ब्वां स्त्री ना नदीकान्तः सिन्दुवारे जलाब्धिषु । निमित्तं हेतुचिह्नागन्तुदैवादेशपर्वसु ॥ ७१५
प्रसृतः कुब्जिते पाणौ जङ्घायां स्त्री गते त्रिषु । प्रकृतिर्गुणसाम्ये स्यात्स्वभावामात्ययोरपि ॥ ७१६
प्रतीकारे प्रतिकृतिः प्रतिबिम्बेऽथ पद्धतिः । पङ्क्तौ मार्गेऽपि पूतं तु पवित्रे बहुलीकृते ॥ ७१७
श्रेणिर्दश च पङ्क्तिः स्यात्प्रसूतिर्जन्मतोकयोः । प्रतिपत्तिश्चित्प्रवृत्तिप्राप्तिप्रागल्भ्यगौरवे ॥ ७१८
पारावती गोपगीतिलवलीफलयोरपि । पलितं कर्दमेऽपि स्याद्विधौ भूपे प्रजापतिः ॥ ७१९
शक्ते निवारणे तृप्तौ पर्याप्तं स्याद्यथेप्सिते । प्रेतो मृते प्राणिभेदे पित्सन्पातेच्छुपक्षिणोः ॥ ७२०
क्लीबं बिन्दौ पृषन्नैणेः पृषतोऽप्यनयोर्नरि । खातादौ पूरिते पूर्तं पातो भ्रंशे च रक्षिते ॥ ७२१
प्रोषिते च प्रतिक्षिप्तं प्रतीतः सादरेऽपि च । प्लुतः स्वरे चाभियुक्तहतौ च प्रार्थितौ स्मृतौ ॥ ७२२
द्विष्टेऽपि च प्रतिहतः पिण्डितं गुणिते घने । प्राप्ते ज्ञाते परिगतं प्रपातौ भृगुनिर्झरौ ॥ ७२३
लोकायते कच्छपे च पञ्चगुप्तः स्मृतो बुधैः । लब्धे समञ्जसे प्राप्तं पक्तिर्गौरवपाकयोः ॥ ७२४
पारिजातो देवतरौ मन्दारे पारिजातके । वृत्तिवार्ताप्रवाहेषु प्रवृत्तिरथ घोटके ॥ ७२५
पाने च पीतिः सिक्ते तु प्रोक्षितं निहतेऽपि च । रामानुजे नाट्यशास्त्रे दौष्यन्तौ भरतो नटे ॥ ७२६
जिने पूज्ये च भगवान्भोगवानाढ्यनागयोः । सेवाविभागयोर्भक्तिर्भवद्युष्मत्सदर्थयोः ॥ ७२७
पक्षिण्यां वाचि वृत्तौ च भारती भारतं पुनः । जम्बूद्वीपे व्यासकृतौ भृतिर्भरणमूल्ययोः ॥७२८
कुड्यभेदनयोर्भित्तिर्भास्वन्तौ सूर्यभास्वरौ । पृथिवीजननीगावो ब्रह्माण्याद्याश्च मातरः ॥ ७२९
मूर्धाभिषिक्तोऽमात्येऽपि मुक्तौ निर्वृतमोचितौ । मूर्तं स्यात्त्रिषु मूर्छाले कठिने मूर्तिमत्यपि ॥७३०
मतिरिच्छाप्यथ यतिः पाठच्छेदे मुनौ पुमान् । न्याययोजनयोर्युक्तिः पाश्यब्धी यादसांपती ॥ ७३१
रेवती हलिपत्न्यां भे स्मरपत्न्यां रते रतिः । रिक्तं वनेऽपि रीतिस्तु लोहकिट्टारकूटयोः ॥ ७३२
रोहितमृजुशक्रास्त्रे रक्ते ना मृगमीनयोः । शैलभेदे सुवर्णालौ शंकरेऽपि च रैवतः ॥ ७३३
स्वर्णाद्यक्तेऽपि रसितं कस्तूरीपृक्कयोर्लता । वर्तुलाधीतयोर्वृत्तं वार्तं कुशलनीरुजोः ॥ ७३४
वासेऽपि वसतिर्वृक्षमात्रेऽपि च वनस्पतिः । वर्तने विवृतौ वृत्तिर्वर्तिर्दीपदशापि च ॥ ७३५
लाभसंबन्धयोर्व्याप्तिर्विश्वस्ता विधवापि च । छेदे विलासे विच्छित्तिर्विगतौ वीतनिष्प्रभौ ॥७३६

---

१ 'शण्ढः' क-ख-ग-घ. २ 'च' घ. ३ 'सुखितनिर्वृतौ' क. ४ 'स्वर्णाभ्यक्ते' घ. ५ 'दीपशिखापि च' क.

असाराश्वेभयोर्वीतं वीतमङ्कुशकर्मणि । अभ्युद्गते विकसिते चेष्टिते च विजृम्भितम् ॥ ७३७
विकृतौ रोगिबीभत्सौ वित्तं ख्याते धनेऽपि च । दृढेऽपि व्यायतं शुक्तिर्मुक्तास्फोटाश्वलक्ष्मणोः ॥
अस्त्रभेदेऽपि शक्तिः स्याच्छान्तिः स्यान्मङ्गले शमे । वेतसेऽपि च शीतो ना शुक्तं पूताम्लनिष्ठुरम् ॥
शितिर्भूर्जे सिते कृष्णे श्रीमन्तौ तिलकेश्वरौ । ब्रह्मशक्रौ शतधृती वार्तायां श्रवणे श्रुतिः ॥ ७४०
दुर्बले निशिते स्यातां शितशातावथो वचः । सरस्वती सरिद्गौश्च सूतो बन्दिनि पारदे ॥ ७४१
स्मृतिः स्याद्धर्मशास्त्रेऽपि प्रवाहेऽपि च संततिः[1] । रणे सभायां समितिः स्तिमितौ क्लिन्ननिश्चलौ ॥
स्थपतिः कञ्चुकी कारुभेदे गीर्पतियागकृत् । संबन्धेऽपि च संवित्तिर्मर्यादायामपि स्थितिः ॥ ७४३
सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी । सूनृतं कुशले सत्ये सुदोहा गौश्च सुव्रता ॥ ७४४
शर्करापि सिताथोर्ध्वे सत्प्रतिज्ञेऽपि च स्थितः । सती कात्यायनीसाध्व्योः संघातो नरके चये ॥
हरीतकी हैमवती गौरी शुक्लवचापि च । स्त्री हरिद्दिशि वर्णे ना दूर्वापि हरिता मता ॥ ७४६
अतिथिः कुशपुत्रेऽपि हरीतक्यपि चान्यथा । अपेक्षालम्बनं चास्था स्यादर्थो विषयेऽपि च ॥ ७४७
भटे पुंस्यप्रतिरथं यात्रामङ्गलसाम्नि च । उन्माथः कूटयन्त्रेऽपि कुथः कम्बलबर्हिषोः ॥ ७४८
कासे क्षुते च क्षवथुर्ग्रन्थो द्वात्रिंशदक्षरी । धनं च ग्रथना चापि तीर्थं तूपाययोगयोः ॥ ७४९
कट्यश्वघोणयोः प्रोथो वीथी पङ्क्तौ गृहांशके । वानप्रस्थो मधूकेऽपि स्यात्तृतीयेऽपि चाश्रमे ॥ ७५०
काकोल्यामलकी ब्राह्मी वयस्था तरुणे त्रिषु । सूर्यमन्थानयोर्मन्थः साक्तवेऽप्यथ मन्मथः ॥ ७५१
कपित्थे कामदेवे च रथः पौरुषदेहयोः । पुंसि स्त्रियां च षड्ग्रन्थः करञ्जवचयोः क्रमात् ॥ ७५२
सिद्धार्थः सर्षपे बुद्धे संस्था स्थितिविनाशयोः । संस्थः समाप्तिक्रतुषु चरश्च निजराष्ट्रगः ॥ ७५३
सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम् । अष्टापदं शारिफले सुवर्णेऽस्त्री पशौ पुमान् ॥ ७५४
वामनेभ्यां स्त्रियां क्लीबं केयूरे नाङ्गदः कपौ । अर्बुदो रुजि संख्यायामामोदो गन्धहर्षयोः ॥ ७५५
रहस्ये स्यादुपनिषत्समीपसदनेऽपि च । कन्दोऽस्त्री सूरणे मूले राजलिङ्गविषाणयोः ॥ ७५६
स्त्री ककुत्कटुकन्दस्तु शृङ्गवेररसोनयोः । स्त्री गम्भार्यां क्लीबमब्जे दिङ्नागे कुमुदः कपौ ॥ ७५७
पुष्पे क्लीबं भ्रमौ कुन्दः क्षोदो रजसि पेषणे । शिवजूटे वराटे च कपर्दोऽथामये गदः ॥ ७५८
विष्णोर्भ्रातरि चास्त्रे स्त्री पलाशे गरुति च्छदः । देशे जने जनपदो निषादौ श्वपचस्वरौ ॥ ७५९
वाक्ये शब्देऽपदेशेऽपि पदं पादस्तु न द्वयोः । मूले प्रत्यन्तशैले च प्रसादस्त्वनुरोधने ॥ ७६०
स्वास्थ्ये काव्यगुणे चाथ प्रतिपत्तिर्धिसंविदोः । विप्रुट् ज्ञाता च विन्दुः स्यान्मन्दौ स्वैरशनैश्चरौ ॥
हस्तिभेदश्चाथ मदः स्यात्कस्तूरीभदानयोः । गर्वे शुक्रेऽथ माकन्द्यामलक्यां नाम्रपादपे ॥ ७६२
मर्यादा धारणासीम्नोर्महानादो गजेऽपि च । मेनादास्तु[3] त्रयश्छागमार्जारकशिखण्डिनः ॥ ७६३
विशदः पाण्डुरे व्यक्ते शारदो जलजेऽपि च । स्त्रियां तु शारदी तोयपिप्पलीसप्तपर्णयोः ॥ ७६४
संवित्संकेतकेऽपि स्यात्समर्यादोऽन्तिके स्थिरे । व्यञ्जने सूपकारे च सूदः सूपवदिष्यते ॥ ७६५
घर्मस्वेदनयोः स्वेदः संपल्लक्ष्म्यां समुच्चये । खण्डे ना समभागेऽर्धमवधिः सीमकालयोः ॥ ७६६
आविद्धं प्रहृतं वक्रमानद्धं वाद्यबद्धयोः । अलंकारेऽपि चाबन्धः प्रत्याशाप्याधिरुच्यते ॥ ७६७
कुटुम्बव्यापृते धर्मचिन्तायां च विशेषणे । उपाधिरुग्रगन्धे तु वचाक्षेत्रपमानिके ॥ ७६८

---

१ 'संसृतिः' घ. २ 'स्वच्छे' घ. ३ इदं पद्यं क-पुस्तके नास्ति.

उपलब्धिर्मतिप्राप्त्योर्ऋद्धिः संपदि चौषधे । राहौ शिरःशून्यकाये कबन्धः क्लीबमम्बुनि ॥ ७६९
गोधा तले निहाकायां गन्धो गर्वे लवेऽपि च । दोग्धा गोपे कवौ वत्से दुग्धं क्षीरे प्रपूरिते ॥ ७७०
दिग्धं लिप्ते विषाक्ते च दुर्विधौ खलदुर्गतौ । रोधे विरोधो नाशे च बुद्धो ज्ञाते जिने बुधे ॥ ७७१
निषेधदुःखयोर्बाधो रौहिणेये कवौ बुधः । दैत्यचैत्रवसन्तेषु द्रुमभेदे च ना मधुः ॥ ७७२
मिद्धं चि[1]न्तातिसंक्षेपे निद्रायां चाथ मागधी । पिप्पल्यां यूथिकायां ना लग्ने मगधजे त्रिषु ॥ ७७३
लशुनेऽतिविषायां च शुण्ठ्यामपि महौषधम् । सीता योजनगन्धा स्यात्कस्तूरी व्याससूरपि॥ ७७४
विधिर्ब्रह्मणि काले च प्रकारे वेधने विधा ॥ ७७५

पृक्का महिला च वधूर्विश्वस्तोऽनुत्कटश्च विस्रब्धः ।
विस्रब्धं वाढार्थे शुद्धं त्रिषु पूतकेवलयोः ॥ ७७६

श्राद्धं निवापे श्रद्धालौ पुंसि साधुर्धनिन्यपि । स्कन्धः संघेऽपि सिद्धस्तु नित्यनिष्पन्ननाकिषु ॥ ७७७
संधिः पुमान्सुरङ्गायां भेदे संघट्टने भगे । कुले ख्यातौ चाभिजनः स्यादध्वा कालवर्त्मनोः॥ ७७८
इतिवृत्तेऽवदानं स्यात्कर्मखण्डनयोरपि । अग्रजन्माग्रजे विप्रे स्यादन्नं भक्तभुक्तयोः ॥ ७७९
विनीते विप्रभेदे चानूचानोऽर्थी विवाद्यपि । अन्तावसायी चाण्डाले मुनिभेदे च नापिते॥ ७८०
अश्वकुत्सितयोरर्वा वज्रे विद्युति चाशनिः । वर्णमात्रे विसर्गे चाभिनिष्ठानोऽथ हैहये ॥ ७८१
पार्थे द्रुमे मयूरे च नार्जुनस्त्रिषु पाण्डुरे । अर्जुनी गव्युषायां च भृङ्गवृश्चिकयोरली ॥ ७८२
आत्मा मनोऽप्याकलना विबन्धपरिसंख्ययोः । आवेशनं शिल्पगेहे भूतावेशेऽथ गेन्दुके ॥ ७८३
विशेषे चोपधानं स्याच्चुल्ल्यामुद्धानमुद्गमे । अगभीरेऽपि चोत्तानः शराभ्यासोऽप्युपासनम् ७८४
स्यात्कात्यायन्यर्धवृद्धागौर्योर्वररुचौ नरि । शिरीषाम्रातकाश्वत्थगर्दभाण्डे कपीतनः ॥ ७८५
चीरेऽपि कौपीनमश्वे पुंनागेऽपि च केसरी । कुलीनत्वे च गुह्ये च कौलीनमथ कञ्चुकी ॥ ७८६
स्थापत्ये वर्मिते सर्पे क्लृप्तौ छेदे च कल्पनम् । कामिनौ स्त्रैणचन्द्रौ च कृतिनौ योग्यपण्डितौ ७८७
काञ्चनं तु हेम्नि नागकेसरे काञ्चनी निशा । धातुवादरते कांस्यकारे कारंधमी नरि ॥ ७८८
चर्चिकाचिह्नदयिते [2]खेकामिन्यौ प्रकीर्तिते । विषदिग्धपशोर्मांसे गृञ्जनं ना रसोनके ॥ ७८९
गहनं गह्वरे दुःखे वनेऽथाम्बुदमुस्तयोः । घनः पुंसि घनं वाद्यं चर्म स्यात्फलकत्वचोः ॥ ७९०
चीनौ वस्त्रव्रीहिभेदौ चिह्नं लक्ष्मपताकयोः । चक्रिणो विष्णुभुजगकुलालग्रामजालिनः ॥ ७९१
कम्प्रे ना चलनं कम्पे चलनी वस्त्रघर्घरी । भूर्जे फलकपाणौ च चर्म्यथालंबुषे पुमान् ॥ ७९२
निम्बेऽपि छर्दनं वान्तौ जवनो वे[3]गवेगिनोः । बुद्धे जिनो जित्वरे च जीवनं वर्तनाम्भसोः॥ ७९३
शूरे दातरि च त्यागी प्रतिशोच्यौ तपस्विनौ । तपनो नरके भानौ विरलेऽल्पे कृशे तनुः॥ ७९४
क्रीडादौ देवनं नाक्षे द्विजन्मा दन्तविप्रयोः । दानं गजमदे त्यागे खण्डने रक्षणेऽपि च ॥ ७९५
दर्शनं वर्णमुकुरचक्षुःशास्त्रोपलब्धिषु । स्त्री दीर्घकोष्ठ्यां दुर्नामार्शसि द्युम्नं बले धने ॥ ७९६
धन्वा मरौ धन्व चापे धावनं गतिशौचयोः । निर्भर्त्सनं खलीकारालक्तयोरथ नन्दनम् ॥ ७९७
देवोद्याने सुते पुंसि नग्नौ क्षपणबन्दिनौ । श्रुतौ दृष्ट्यां निशमनं खगङ्गापि नलिन्यथ ॥ ७९८
ग्रन्थिप्रस्तावयोः पर्व विषुवत्प्रभृतिष्वपि । प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः ॥ ७९९

---

१ 'चित्ताभिसंक्षेपे' घ, 'विक्षातिसंक्षेपे' ख-ग. २ 'खगामिन्यौ' क-ख-ग. ३ 'देशवेगिनोः' क.

पाकस्थाने कुलालस्य वाते च पवनः पुमान् । हरीतकी राक्षसी च पूतनाथ वरालके ॥ ८००
पाठीनो गुग्गुलुद्रौ च रक्षोवृक्षौ पलाशिनौ । फाल्गुनो मासि पार्थे च स्त्री विदग्धा च वाणिनी ॥
वर्धमानः प्रभ्रभेदशरावैरण्डविष्णुषु । सेना नदी च वाहिन्यौ छेदे वृद्धौ च वर्धनम् ॥ ८०२
भुवनं विष्टपे तोये भिन्नं दीर्णे विशेषिते । जन्माश्रयश्च भवनं भाजनं पात्रयोग्ययोः ॥ ८०३
भूतिकाञ्चनयोर्भर्म मलिनं दूषितेऽसिते । माने प्रमाणे तौल्ये च मीनो राश्यन्तरे झषे ॥ ८०४
मदनाः सिक्थधुस्तूरतरुभेदमनोभवाः । मुनिर्वाचंयमे बुद्धे छन्दश्चम्पा च मालिनी ॥ ८०५
मातुलानी तु भङ्गायां मातृभ्रातृस्त्रियामपि । राशौ युग्मे च मिथुनं विष्ण्वली मधुसूदनौ ॥ ८०६
यापनं स्यान्निरसने कालक्षेपे च वर्तने । चतुःकोश्यां च योगे च योजनं स्यात्तु वाहने ॥ ८०७
गतौ च यानं योनिस्तूत्पत्तिस्थाने भगेऽपि च । रसनं तु ध्वनौ स्वादे रसज्ञारास्नयोः स्त्रियाम् ८०८
यक्षे चन्द्रे च राजा स्याद्रक्तः कामी च रागिणौ । गोपित्ते रोचना कूटशाल्मलौ रोचनः पुमान् ॥
निशा हरिद्रा रजनी छेदे भूर्जे च लेखनम् । राशीनामुदयो लग्नं सक्तलज्जितयोस्त्रिषु ॥ ८१०
योषिज्जिह्वा च ललना लाञ्छनं नामचिह्नयोः । रक्ते वितानमुल्लोचे विलग्नं मध्यलग्नयोः ॥ ८११
दैवानिष्टफले सक्तौ व्यसनं निष्फलोद्यमे । स्वतन्त्रता च व्युत्थानं वामनौ विष्णुदिग्गजौ ॥ ८१२
खर्वश्चाथ फले शुष्के वानं स्यादुत्कटे गतौ । वृषपर्वा शिवे दैत्ये वेष्टनं मुकुटे वृतौ ॥ ८१३
वेष्मा कालेऽपि विषयी कामिनि क्लीबमिन्द्रिये । वृक्षादनी स्याद्वन्दायां स्त्रियां कुद्दालके पुमान् ८१४
समालब्धे विभक्ते च विच्छिन्नं वाच्यलिङ्गकम् । लब्धे ज्ञाते स्थिते विन्नं वेदना ज्ञानपीडयोः ॥ ८१५
वर्तनी तर्कुपीठेऽपि स्त्रियां वर्तनवर्त्मनोः । वनश्वा जम्बुके व्याघ्रे विपन्नोऽहौ विपद्गते ॥ ८१६
दैवशंसिनिमित्ते च शकुनं पुंसि पक्षिणि । चूडावान्कुक्कुटश्चापि शिखी शृङ्गारिणौ त्रिमौ ॥ ८१७
क्रमुकश्च सुवेशश्च पार्थेन्द्वोः श्वेतवाहनः । मयूरे भीष्मशत्रौ च शिखण्ड्यथ विहेठनम् ॥ ८१८
विहिंसायां विडम्बे च यमे ना शमनं वधे । श्येनः शुक्ले पक्षिभेदे शकुनिः सौबले खगे ॥ ८१९
धान्यभेदे पुमान्षष्टिहायनः कुञ्जरेऽपि च । ना साधौ सज्जनं क्षृतौ साधनं सिद्धिमेढ्रयोः ॥ ८२०
समानो देहवायौ च संस्थानं मृत्युरूपयोः । संतानः संततौ देववृक्षे चापत्यगोत्रयोः ॥ ८२१
क्रतौ स्नाने च सवनं मारणेऽपि समापनम् । स्यन्दनं स्रवणे ना तु रथे तिनिशपादपे ॥ ८२२
सुप्तज्ञाने च शयने स्वप्नोऽथ स्पर्शदानयोः । स्पर्शनं स्पर्शनो वाते सूनं पुष्पे वधालये ॥ ८२३
सेवनं सीवनोपास्त्योः शाश्वताजौ सनातनौ । पुत्रे रवौ च सूनुः स्याद्भ्रातर्यपि कनीयसि ॥ ८२४
सीमा वाटे स्थितौ क्षेत्रे स्वामी भर्तरि षण्मुखे । धूमवंशशरामर्त्याः सुपर्वाणः प्रकीर्तिताः ॥ ८२५
हनुर्हट्टविलासिन्यां कपोलावयवेऽपि च । सजले महिषेऽनूपोऽवलेपः सङ्गगर्वयोः ॥ ८२६
आक्षेपौ भर्त्सनाकृष्टी आकल्पौ वेशकल्पने । तृणभिद्वुल्मिन्युलपश्चन्द्रे नाक्ष्युडुपः प्लवे ॥ ८२७
कल्पः शास्त्रे विधौ न्याय्ये संवर्ते ब्रह्मणो दिने । धान्ये कुशेऽष्टमांशेऽङ्कः कुतपश्छागकम्बले ॥ ८२८
गुणवृक्षेऽपि कूपो विट्शार्यां स्त्री कुणपः शवे । जिह्वापः शुनि मार्जारे त्रपु सीसकरङ्गयोः ॥ ८२९
पादुकायां स्त्रियां वृक्षे पादपीठे च पादपः । पिण्डपुष्पौ जवाशोकौ पुष्पं कुसुम आर्तवे ॥ ८३०

---

१ 'लक्षणम्' इति घ-पुस्तकपाठोऽसमीचीनः. २ क-ख-ग-पुस्तकोपलब्धोऽयं पाठः, परंतु 'आकारे' इति योग्यः पाठः. अतएव 'वर्ष्म पुनस्तनौ । प्रमाणे सुन्दराकारे' इति मूलव्याख्यायाम् "सुन्दराकारे यथा—'वर्ष्मणा विदधती जगज्जयम्' " इत्यनेकार्थकैरवाकरकौमुद्यामुदाहृतम्. 'वेशकारे' घ. ३ 'भर्त्सनात्यागौ' क-ख-ग.

ग्रन्थावृत्तौ पशौ शब्दे स्वभावे नाटकादिषु । रूपमाकारसौन्दर्यमानकेष्वपि दृश्यते ॥ ८३१
शररोपणयो रोपो लेपौ लेपनजेमनौ । विटपः पल्लवे स्तम्बे षिङ्गे मेदो बलं वपा ॥ ८३२
आक्रोशे शपथे शापः स्वापः शयननिद्रयोः । त्रिषु स्यात्कुत्सिते रेफो रवर्णे तु पुमानयम् ॥[1] ८३३
गजे ग्रीवालके[2] कम्बुः कलम्बः शरनालयोः[3] । वृन्दे कदम्बं नीपे ना कादम्बौ शरपक्षिणौ ८३४
प्लीहविप्लवयोर्डिम्बः प्रलम्बो दैत्यशाखयोः । बिम्बं बिम्बीफले रूपे शम्बस्तु मुसलानने ॥ ८३५
कल्याणवति वज्रे च हेरम्बो महिषेऽपि च । स्वर्णारम्भाववष्टम्भौ वाणी छन्दोऽप्यनुष्टुभौ॥८३६
आरम्भ उद्यमे दर्पे कामे ब्रह्मणि चात्मभूः । ऋषभौ श्रेष्ठवृषभौ करभोऽधःकरोष्ट्रयोः ॥ ८३७
कुम्भो वारस्त्रियाः कान्ते रक्षोराशिप्रभेदयोः । वीणाप्रसेवे ककुभो रागभेदे[4]ऽर्जुनद्रुमे ॥ ८३८
गर्दभं शुक्लकुमुदे खरे पुंस्यथ दानवे । जम्भीरे व्यवहारे च जम्भो दन्तेऽपि चेष्यते ॥ ८३९
दुन्दुभिर्दैत्यभेदे च दम्भः कैतककल्कयोः । दुर्लभः कच्छुरे काम्ये सदृशव्याजयोर्निभः ॥ ८४०
मुख्यराट्क्षत्रयोः पुंसि नाभिः प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे॥ ८४१
भूर्भूमौ स्थानमात्रे च भमृक्षे भृगुजे पुमान् । रम्भा कदल्यप्सरसोर्विभुः स्यात्स्वामिनित्ययोः ८४२
पुनर्नवायां वर्षाभूः स्त्री ना कञ्चुलुके प्लवे । विस्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च ॥ ८४३
सुरभिः स्याद्वसन्तेऽपि सभा द्यूतालयेऽपि च । अभ्यागमो विरोधेऽपि शास्त्रमायातमागमः ८४४
मठादौ ब्रह्मचर्यादिचतुष्के चाश्रमोऽस्त्रियाम् । अङ्गीकृतावुपगमः समीपगमनेऽपि च ॥ ८४५
उमा दुर्गातसी चाथ पीडायां वीचिवेगयोः[5] । वस्त्रसंकोचरेखायां चोर्मिः स्त्रीपुंसयोर्मतः ॥ ८४६
कुसुमं स्त्रीरजः पुष्पं क्षेमं कल्याणरक्षयोः । क्षेमा चण्डाथ कलमा लेखनीचौरशालयः ॥ ८४७
रेतोनिकामकाम्येषु कामं पुंसि स्मरेच्छयोः । क्षौममट्टे दुकूले च ग्रामः संवसथे स्वरे ॥ ८४८
गुल्मः स्तम्बे घट्टभेदे घर्माः स्वेदातपोष्मकाः । जिह्मः स्यात्कुटिले मन्दे तलिमं तल्पकुट्टिमे ८४९
तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे । द्रुमो यक्षेश्वरे वृक्षे दमो दमथदण्डयोः ॥ ८५०
धर्मो हिंसोपमायोगोपनिषत्सु धनुष्यपि । कटे लुण्ड्यां च निगमो नियमो निश्चये व्रते ॥ ८५१
यन्त्रणाबन्धयोश्चाथ पञ्चमः स्वरसंख्ययोः । पद्मोऽस्त्री बिन्दुजालेऽब्जे व्यूहे संख्यान्तरे निधौ ८५२
गजानां दन्तबन्धेऽपि प्रतिमानुकृतावपि । भूमिः स्थानेऽपि कुन्दाम्बुनिर्गमभ्रान्तिषु भ्रमः ८५३
गाङ्गेयभीषणौ भीष्मौ भीमः शंभौ च पाण्डवे । नरके मङ्गले भौमः स्वरे मध्ये च मध्यमः ८५४
यमः संयमकीनाशयुग्मजेष्वथ राघवे । रामः पशौ भार्गवे च रुक्मं लोहसुवर्णयोः ॥ ८५५
संपत्कमलयोर्लक्ष्मीर्विभ्रमो भ्रमहावयोः । श्यामा गुन्द्रा कोकिला च श्रामो मण्डपकालयोः ८५६
सार्वभौमो गजे राज्ञि संभ्रमौ साध्वसादरौ । कण्टकेऽल्पे च सूक्ष्मं स्यात्साधौ तुल्येऽखिले समः ॥
सीमा वाटे स्थितौ क्षेत्रे हिमं शीतलशीतयोः । भिन्नासमानयोरन्यः स्यादभिख्या यशस्यपि ८५८
आत्रेयी पुष्पवत्यां स्यान्नदीभेदे च ना मुनौ । [6]आशयश्छन्द आधार आदित्यो भास्करे सुरे॥ ८५९
वेदोपदेशावाम्नायौ हृषीके रेतसीन्द्रियम् । इज्या स्यात्संगमे दाने योगेऽर्चायां गुरौ पुमान् ॥ ८६०
उदयोऽद्रावुन्नतौ च कषायः सुरभौ रसे । कायः स्वभावे लक्ष्ये च संघे मूर्तौ कदैवते ॥ ८६१

---

१ ख-ग-पुस्तकयोस्त्वितः परम् 'भ्रमरेऽपि द्विरेफः स्यान्मर्मरे प्रवरेऽपि च' इत्यधिकमुपलभ्यते. २ 'ग्रीवाविले' घ. ३ 'नागयोः' क-ख-ग. ४ 'गेयभेदे' क-ख-ग, 'नगभेदे' घ. ५ 'योगयोः' क. ६ 'आश्रयश्छन्न आधारे' ख-ग, 'आश्रयः स्कन्ध आधारे' घ.

कौकृत्यमनुतापे स्यादयुक्तकरणेऽपि च । कश्यं कशार्हे मद्ये च काद्रवेयोऽहिरङ्ग्योः ॥ ८६२
काव्यं प्रबन्धे शुक्रे ना कुलायः स्थाननीडयोः । गव्यं गोहितदुग्धादौ ज्यायां गव्या तु गोकुले॥
भीष्मे ना हेम्नि गाङ्गेयं गोप्यौ गोप्तव्यचेटकौ । गातव्यगायनौ गेयौ गृह्यमस्वैरिपक्षयोः ॥ ८६४
चैत्यमायतने ना बुद्धबिम्बोद्देश्यवृक्षयोः । चक्षुष्यं सुभगे चक्षुर्हिते स्त्री कतकेऽपि च ॥ ८६५
युद्धे हट्टे च जन्यं स्याज्ज्या स्यान्मौर्व्यां क्षितावपि । जटायुर्गुग्गुलुद्रौ च त्रिवेद्यां त्रितये त्रयी॥८६६
निन्द्ये वस्त्रगृहे दूष्यं दस्युस्तस्करवैरिणोः । भेषजे द्रुविकारे च द्रव्यं भव्ये च पित्तले ॥ ८६७
द्वितीया तिथिभित्पत्न्योः पार्थेऽग्नौ च धनंजयः । निकायौ संघनिलयौ नित्ये सततशाश्वते॥८६८
पर्यायः स्यात्प्रकारेऽपि प्रायो ना भूमतुल्ययोः । पथ्यं हितेऽभया पथ्या पानीयं पेयनीरयोः॥८६९
पौलस्त्यौ रावणश्रीदौ स्वर्गलाभौ फलोदयौ । ब्राह्मण्यं ब्रह्मसंघेऽपि बालेयौ मृदुगर्दभौ ॥८७०
वीर्यं प्रधानधातौ च भयं भीकुब्जपुष्पयोः । अनधीने सहाये च भुजिष्यो हस्तसूत्रके ॥ ८७१
स्यान्माया सांबरीबुद्ध्योर्दैत्यशिल्प्युष्ट्रयोर्मयः । ययुरश्वे क्रतुहये रूप्यं त्रिषु सुरूपके ॥ ८७२
आहतस्वर्णरजते रजते च नपुंसकम् । वत्से बले बुधे रौहिणेयोऽथ श्लेषवाद्ययोः ॥ ८७३
लयो युक्ते च लभ्यं स्याद्विषयौ देशगोचरौ । वर्गप्रस्थानयोर्व्रज्या वदान्यस्त्यागवान्सुवाक् ॥ ८७४
स्त्री मल्लयां निर्जने शून्यं शौर्यं चारभटी बलम् । शाण्डिल्यौ मुनिमालूरौ सौरभ्यं चारुतापि च ॥
सौम्यो बुधग्रहे पुंसि वाच्यवन्नीचबोधने । साध्या देवाः फलं साध्यं स्थेयो नेतृपुरोधसोः ॥ ८७६
ना शैले सह्यमारोग्ये सामर्थ्यं शक्तियोग्यते । एकद्व्यादौ विचारे च संख्या क्लीबं तु संयुगे॥८७७
हिरण्यं रेतसि स्वर्णे मानभेदवराटयोः । उरस्यपि च बुक्कायां हृदयं मानसेऽपि च ॥ ८७८
अङ्कुरो रोम्णि रुधिरे वारिण्यभिनवोद्भिदि । अमरा नाभिनालायां गुडूच्यामप्यथाम्बरम् ॥ ८७९
नाकेऽतिगन्धद्रव्ये च स्यादस्रं रुधिरास्नुणोः । प्रस्तावेऽवसरो वर्षे ओष्ठे नीचेऽपि चाधरः ॥ ८८०
श्रेष्ठेऽप्यग्र्योऽवतारस्तु तीर्थेऽवतरणेऽपि च । गलहस्तेऽप्यर्धचन्द्रोऽकूपारः कमठेऽम्बुधौ ॥८८१
अलातेऽस्त्री कुजेऽङ्गारः श्रेष्ठावाचावनुत्तरौ । नक्रे चौरेऽवहारः स्यात्स्यादभ्रं व्योममेघयोः ॥८८२
हविर्वल्ली त्वग्निहोत्री वृक्षे लघुनि चागुरुः । शक्तो निरण्डश्चाण्डीरावङ्घ्रिः स्यात्पादमूलयोः॥८८३
आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले । आरः शनैश्चरे भौम इन्द्र आत्मनि वासवे ॥ ८८४
गौरी[3]श्वरा शिवस्वामिकंदर्पेष्वीश्वरः पुमान् । उदारौ दक्षिणस्थूलौ [4]ह्रस्वमेढ्रेऽप्युदुम्बरः ॥ ८८५
उग्रोऽन्त्यजे शिवेऽत्युग्रे उस्रो दीप्तौ गवि स्त्रियाम् । सिंहसटासु पुंनागे बकुले नागकेसरे ॥८८६
केसरः पुंसि किंजल्के न स्त्री हिङ्गुनि न द्वयोः । मक्षिकायामपि क्षुद्रा क्षुद्रः स्यात्कृपणे त्रिषु ८८७
कद्रुस्त्रिषु कडारे स्यात्कद्रूः स्त्रीनागमातरि । नापितस्योपकरणे कोकिलाक्षेऽपि च क्षुरः ॥ ८८८
भस्मकाचरसाः क्षाराः कारुः कारकशिल्पिनोः । कर्बुरो राक्षसे पापे कर्बुरं शबले जले ॥ ८८९
कारे पीडाबन्धशाले क्रूरौ कठिनभीषणौ । जम्बूद्वीपसहाकन्याः कुमार्योऽथाश्ववारके ॥ ८९०
बालके कार्तिकेये च कुमारो भर्तृदारके । कलिकारस्तु धूम्याटे करञ्जे पीतमस्तके ॥ ८९१
सिद्धस्थानेऽपि च क्षेत्रं कर्करौ दृढदर्पणौ । शिंशपायां कृष्णसारा स्नुह्यां चाथोत्पलेऽपि च ॥ ८९२
कर्णपूरः कुबेरस्तु नन्दीवृक्षैकपिङ्गयोः । शट्यां च शूकशिम्ब्यां च कच्छुरा पामने त्रिषु ॥ ८९३

१ 'कुष्ठ' क. २ 'शक्तोऽपि षण्ड' घ, 'अण्डीरः पुरुषे शक्ते' इति मेदिन्याम्, 'अण्डीरः शक्तनरयोः' इति च हैम उपलभ्यते. क-ख-ग-पुस्तकेषु 'ऽनिरण्ड' इति दृश्यते. ३ 'ईश्वरी' ख-ग-घ. ४ 'द्रुमे मेढ्रे' घ.

कन्दरः स्याद्गुहासृण्योः कोट्टारौ कूपनागरौ। कदरः क्रकचे रोगे कदरः खदिरे सिते॥ ८९४
कद्वरं कुत्सिते तक्रे किर्मीरौ शबलासुरौ। कपाले च कटाहे च शस्त्रभेदे च कर्परः॥ ८९५
भिक्षापात्रे कपाले च खर्परस्तस्करेऽपि च। देवताडे खरा स्त्री स्यात्खरो गर्दभतीक्ष्णयोः॥ ८९६
भद्रमुस्ते गुवाके च खपुरोऽथ द्रुमे पुमान्। रूप्ये खलेऽपि खर्जूरः खुरः कोलदले शफे॥ ८९७
खरुरश्वे हरे दर्पे दन्ते श्वेते तु वाच्यवत्। गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि॥ ८९८
गायत्री खदिरे स्त्री स्याच्छन्दस्यपि षडक्षरे। गुन्द्रस्तेजनके गुन्द्रा प्रियंग्वां भद्रमुस्तके॥ ८९९
गह्वरं द्वे गुहाकुञ्जे पूर्द्वारि द्वारि गोपुरम्। नग्नकन्योमयोर्गौरी गौरः स्यादुज्ज्वलेऽपि च॥ ९००
गोत्रं नाम्नि कुले पुंसि शैले भूगव्ययोः स्त्रियाम्। स्वरे बले च गान्धारो गृध्रः स्याल्लोभिपक्षिणोः॥
कर्बुरे तिलके चित्रं सुभद्रातारयोः स्त्रियाम्। चन्द्रः शशिनि कर्पूरे चारो बन्धापसर्पयोः॥ ९०२
मृतदेवकुले चैत्रं ना भूभृन्मासभेदयोः। सर्पे विष्णौ चक्रधरश्चिकुरौ वृक्षभिल्लचौ॥ ९०३
चक्रः कोके व्रजे पुंसि क्लीबे सैन्यरथाङ्गयोः। ग्रामजाले कुम्भकारभाण्डे राष्ट्रे च दृश्यते॥ ९०४
नदप्रभेदे वाद्ये च झर्झरोऽथ गुणध्वनौ। प्रसिद्धावपि टंकारस्तारोऽत्युच्चस्वरे त्रिषु॥ ९०५
तारिण्यङ्गदमात्रोः स्त्री न ना ऋक्षाक्षिमध्ययोः। द्रमोगे तिमिरं ध्वान्ते तोत्रं प्राजनवेणुके॥ ९०६
धान्याके तुम्बुरी शुण्ठ्यां ताम्रं शुल्वेऽरुणे त्रिषु। पेडायां नावि च तरी तुषारः शीतले हिमे॥
इतिकर्तव्यता तन्त्रमुपायश्च द्विसाधकः। तीव्रं कटु नितान्तं च दर्दरः शैलभग्नयोः॥ ९०८
उपाये निर्गमे द्वारं दारु स्याद्देवदारु च। दासीसुतोष्ट्रौ दासेरौ देहयात्राशने भृतौ॥ ९०९
दिगम्बरोऽन्धकारेऽपि वाद्यमेघौ च दर्दुरौ। धात्री भुव्यामलक्यां च हरिशैलौ धराधरौ॥ ९१०
धारा हरिद्राश्वगतिनिद्राम्बुस्रुतिराजिषु। धाराधरौ खड्गमेघौ धीरः पण्डितमन्दयोः॥ ९११
धीरं च कुङ्कुममथो धरा पृथ्वी धरो गिरिः। नेत्रो नेतरि नेत्रं च गुणे मूले विलोचने॥ ९१२
ना शिङ्के नागरं शुण्ठ्यां नरोऽजे मनुजेऽर्जुने। नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि दृश्यते॥ ९१३
धान्योत्क्षेपे निकारः स्याद्गुडूच्यामपि निर्जरा। नभश्चरौ पक्षिदेवौ पांसुला च निशाचरी॥ ९१४
वलीकवनयोर्नीध्रं पूरः खाद्ये पयश्चये। यत्नारम्भौ परिकरौ खड्गफलेऽपि पुष्करम्॥ ९१५
नद्यन्तराले पात्रं स्याद्भाण्डे चाथ निशापतौ। पृथक्चारिगजे यूथभ्रष्टे पक्षचरः स्मृतः॥ ९१६
स्थाल्यां मन्थेऽपि पिठरं पवित्रं कुशमध्ययोः। देहे पाटलिपुत्रे च पुरं स्याद्गुग्गुलौ पुरः॥ ९१७
वरो जामातरि वृतौ कुङ्कुमे च नपुंसकम्। वक्रः शनैश्चरे क्रूरे पुटभेदे तथानृजौ॥ ९१८
कुब्जवृक्षे हरे वारो बन्धुरं रम्यनम्रयोः। भ्रमरः कामुके भृङ्गे भरोऽतिशयभारयोः॥ ९१९
विषे स्वादौ च मधुरं मल्लिकायां च मुद्गरम्। मखाग्नौ च महावीरो मक्षिकायां च मत्सरा॥ ९२०
महेन्द्रो भूधरे शक्रे मन्दे वक्रे च मन्थरः। विघ्नमन्मथयोर्मारो मकरो राशियादसोः॥ ९२१
गमनोत्सवयोर्यात्रा रुधिरं कुङ्कुमेऽपि च। वृक्षभित्पापयो रोध्रो दैत्यभेदे मृगे रुरुः॥ ९२२
लम्बोदरः स्यादुद्याने गणानामधिपेऽपि च। लक्ष्मीपुत्रौ स्मरहयौ विस्तारौ स्तम्बविस्तृती॥ ९२३
वप्रस्ताते स्त्रियां क्षेत्रे चये रेणौ च रोधसि। स्यादूषरे वनक्षेत्रे वल्लूरं म्रहणेऽपि च॥ ९२४
वल्लूरा त्रिषु संशुष्कमांससूकरमांसयोः। वैकल्पेऽपि च विश्लेषे विधुरं विकले त्रिषु॥ ९२५

१ 'श्रुति' क-ख-ग, 'स्रुति' घ. २ 'नारं शुण्ठ्यां नरोऽपि न' घ. ३ 'राजिके' घ. ४ 'तीव्रं' घ. ५ 'सन्ना-रम्भौ' घ. ६ 'माधुरम्' घ.

विकारो विकृतौ रोगे विश्वकद्रुः श्वभित्खलौ । बेरोऽङ्गे कुङ्कुमे बेरं वठरः शठमन्दयोः ॥ ९२६
अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः । पर्याणेऽक्षोपकरणे शारिः शकुनिकान्तरे ॥ ९२७
श्रीर्लक्ष्मीवेषसंपत्सु भारतीशोभयोरपि । शिखरं शैलवृक्षाग्रकक्षापुलककोटिषु ॥ ९२८
पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च । शुक्रं रेतोऽक्षिरुक्शुक्रो ना काव्यज्यैष्ठवह्निषु ॥ ९२९
गजभूषा च शृङ्गारः शुषिरं गर्तवाद्ययोः । कुटजे वासवे शक्रो वरीशच्योः शतावरी ॥ ९३०
शक्करी मेखला छन्दः शबरः सलिले शिवे । स्थिरा महीशालपर्ण्योः संबरं संयमे जले ॥ ९३१
संबरौ मत्स्यहरिणौ सत्रं स्यात्कैतवे वने । स्रोतोञ्जने च सौवीरं काञ्जिके बदरेऽपि च ॥ ९३२
हलतिग्मकरौ सीरौ सान्द्रो मृदौ घने वने । तन्त्वाद्यग्रन्थयोः सूत्रं कारणेऽपि च दृश्यते ॥ ९३३
शैलेऽचलोऽचला भूमावरालः सर्जवक्रयोः । अलिः सुरापुष्पलिहोः कल्लोलेऽप्याकुलं त्रिषु ॥ ९३४
आलुर्गलन्तिकायां स्त्री क्लीबं मूले च भेलके । आलिः सेतुः सखी यज्वा शौण्डिकश्चासुतीबलः ॥
आभीलं भीषणे कृच्छ्रे इला भूवाग्बुधाङ्गनाः । आर्द्रशूरणयोरोलुः कालः स्यान्मृत्युकृष्णयोः ९३६
अंशे वृद्धावपि कला कदली ध्वजरम्भयोः । कफोणिघाते ज्वाले च कीलावत्कील इष्यते ॥ ९३७
शिरसोऽस्थ्नि कपालोऽस्त्री घटादेः शकले व्रजे । काको विषं च काकोलौ सास्नायामपि कम्बलः ॥
घुणकेऽपि कलकलः कामलः कामुके मधौ । कुलं गोत्रे गणे देहे न ना ज्ञाने च केवलम् ॥ ९३९
कपिला शिंशपाकौन्त्योः कपिलोऽग्नौ मुनौ शुनि । कोलोऽङ्कपालावुत्सङ्गे वराहे भेलकेऽपि च ॥ ९४०
पिप्पल्यपि च कोला स्यात्कोलं च बदरीफलम् । मृगे जले च कमलं कुवले बदरोत्पले ॥ ९४१
कल्लोलौ शात्रवोल्लोलौ पर्कट्यां च कमण्डलुः । कर्मरङ्गतरौ कर्मफलं दुःखे सुखेऽपि च ॥ ९४२
करालो घुणतैलेऽपि देशे केशे च कुन्तलः । कुतूहलं प्रशस्तेऽपि खल्लश्चर्मणि चातके ॥ ९४३
वस्त्रे निम्ने चाथ खलं सस्यस्थाने शठे त्रिषु । मण्डले मणिके गोलं गोला गोदावरी सखी ॥ ९४४
गोपो भूपश्च गोपालौ चपलः पारदेऽपि च । चपलाः पिप्पलीलक्ष्मीपुंश्चलीविद्युतः स्मृताः ॥ ९४५
छलं छद्मस्खलितयोर्जम्बालौ पङ्कशैवलौ । जङ्गलो निर्जले देशे त्रिलिङ्गः पिशितेऽस्त्रियाम् ॥ ९४६
जालं दम्भेऽपि जम्बीरे देवभेदेऽपि जम्भलः । झलातपोर्मिर्दुहिता तलं मूलचपेटयोः ॥ ९४७
तालो गीतक्रियामाने हरिताले द्रुमान्तरे । लोहे हारमणौ पुंसि यवाग्वां तरला स्त्रियाम् ॥ ९४८
ब्रह्मदारौ पिचौ तूलं स्थूणासादृश्ययोस्तुला । तमालो वरुणे खड्गे तापिच्छे तिलकेऽपि च ॥ ९४९
गुवाकेऽपि च ताम्बूलं विडङ्गेऽपि च तण्डुलः । दुकूलं शुक्लवस्त्रेऽपि चार्धे पत्रे छदे दलम् ९५०
धवला गवि ना शण्ढे शुक्लसुन्दरयोस्त्रिषु । परमाणौ च पीलुः स्याद्देहे चात्मनि पुद्गलः ॥ ९५१
शस्त्राकारेऽप्यथ तरौ पिप्पलः पिप्पलं जले । शाल्मली शिंशिपा चैव पोतकी चापि पिच्छिला ॥
सश्मश्रुयुवती पालिः प्रैस्थः कर्णलतापि च । वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे ॥ ९५३
नले काशे पोटगलः पित्तयुक्ते च पित्तलः । पिङ्गलः स्यात्कपावग्नावाशुव्रीहिश्च पाटलः ॥ ९५४
फलं जातीफले लाभे बाणाग्रे फलकेऽपि च । फेनिलं बदरे रिष्टे बालो ह्रीवेरकेशयोः ॥ ९५५
बलिर्जराश्लथत्वे स्त्री गृहदार्वसुरौ बली । बलं गन्धरसे रूपे क्लीवं वाह्यालके स्त्रियाम् ॥ ९५६
बहुलः कृष्णपक्षेऽपि मेलान्धावपि वार्दलः । दुर्दिनेऽप्यथ वेला स्यात्सिन्धोः कूले च भोजने ॥ ९५७
ऋषिभेदे प्लवे पुंसि भेलं भीरुहृदि त्रिषु । मेखलाद्रिनितम्बेऽपि ग्रहे ना मङ्गलं शुभे ॥ ९५८

---

१ 'पङ्क्तिः' घ. २ 'वाह्य' क-ख-ग.

निकटेऽपि च मूलं स्याद्रूस्तूरेऽपि च मातुलः । मौलिः कङ्केलिवृक्षेऽपि मल्लः पात्रे कपालिनि ॥
बलीयसि च मत्स्ये च मण्डलं परिधौ गणे । बिम्बे देशे ना च शुनि रसालस्त्विक्षुचूतयोः॥ ९६०
जिह्वाकमलयोर्लोला शाला स्याद्गृहशाखयोः । तरुजातौ मत्स्यभेदे शालो हालनृपेऽपि च॥ ९६१
निगडे पुंस्कटीवस्त्रबन्धे च शृङ्खलं त्रिषु । शालिर्गन्धमृगे धान्ये शयालुः कुक्कुरेऽलसे ॥ ९६२
शकलं वल्कले खण्डे शीतलः शिशिरेऽलसे । षण्डाली तैलमाने स्यात्सरसीकामुकस्त्रियोः॥९६३
सिध्मला शुष्कमीने स्त्री त्रिलिङ्ग्यां तु किलासिनि । ऋजौ वृक्षे च सरलः सालो वरणसर्जयोः ॥
हस्तिमल्लो गजास्ये च हेलावज्ञाविलासयोः । यागे च मद्यसंधाने स्नाने चाभिषवः पुमान् ॥ ९६५
मृतावसत्त्वे चाभावः स्याद्रजः पुष्पमार्तवम् । आश्रवोऽङ्गीकृतौ वश्ये आहवौ यागसंगरौ॥९६६
उपप्लवौ राहूत्पातौ कितवौ मत्तवञ्चकौ । खलीने स्त्री कविः पुंसि काव्यकृच्छुक्रसूरिषु ॥ ९६७
कैतवं तु छले द्यूते राजिकायां क्षुति क्षवः । केशवः केशवान्विष्णुर्गालवो मुनिलोध्रयोः ॥ ९६८
जीवोऽस्त्री जीविते पुंसि गुरुजन्त्वोः स्त्रियां गुणे । तत्त्वं विलम्बिते नृत्ये स्वरूपे परमात्मनि॥९६९
मेघे राज्ञि सुरे देवो द्विजिह्वौ व्यालसूचकौ । ध्रुवो वटे शरारौ च गीतिस्रुग्भेदयोर्ध्रुवा ॥ ९७०
धवो धूर्तेऽप्यथ नवो नूतने वायसे स्तुतौ । प्लवो निषादे पर्कट्यां भेके भेले गतौ कपौ ॥ ९७१
पल्लवो विस्तरे षिड्गे किसले विटपे चले । घटादौ पार्थिवो राज्ञि बल्लवः सूदगोपयोः ॥ ९७२
गजे धन्विनि शुक्रे च पर्शुरामे च भार्गवः । दूर्वा गौरी च भार्गव्यौ सत्तासंसारयोर्भवः॥ ९७३
भावो गौरविते जन्तौ पदार्थेऽभिनयान्तरे । माधवौ हरिवैशाखौ राजीवो मृगमीनयोः ॥ ९७४
रौरवौ घोरनरकौ लवश्छेदनलेशयोः । करञ्जभित्फले लट्वा वाद्यपक्षिप्रभेदयोः ॥ ९७५
विश्वं शुण्ठ्यां समस्ते च निर्वाणे विभवो धने । अश्वौघे वाडवं न स्त्री पाताले ना द्विजौर्वयोः ॥
[3]वडवाश्वा[4]र्कुम्भदास्योर्योगे कीले हरे शिवः । सुखं क्षेमं शिवं शम्यामलकी चाभया शिवा ॥
षाडवस्तु रसे गाने सैन्धवो लवणाश्वयोः ।[5] आधेयधारणे सत्त्वे मेलकेऽपि च संभवः ॥ ९७८
अपभ्रंशो दुष्पतने भाषाभेदापशब्दयोः । टीकादर्पणावादर्शावाशा तृष्णादिशोः स्त्रियाम् ॥९७९
प्रभुशंकरयोरीशः स्त्रियां लाङ्गलदण्डके । दिगम्बरे कपौ कीशः केशो बालप्रचेतसोः ॥ ९८०
जीवितेशो यमे नाथे दंशः संनहनेऽपि च । सर्पक्षतेऽथ ज्ञाने च लोचने दर्शने च दृक्॥ ९८१
नाशः पलायने मृत्यौ निस्त्रिंशौ खड्गनिर्दयौ । निशा रात्रिर्हरिद्रा च मृगादौ प्रमथे पशुः ॥९८२
पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्त्यते ॥ ९८३
पाशः कचान्ते संघार्थः कर्णान्ते शोभनार्थकः । [8]छात्राद्यन्ते च निन्दार्थः पाशः पक्ष्यादिबन्धने ॥
वार्ताहारे पुरोगे च सहाये च प्रतिष्कशः । लोमशो मेण्ठकेऽपि स्याद्विवशौ वशविह्वलौ ॥९८५
वंशो वर्गे च पृष्ठांशे वेशो वेश्यागृहेऽपि च । [9]आयत्तत्वाप्रभुत्वे द्वे वशः परवशे त्रिषु ॥ ९८६
दंने रोगे[11]ऽपि च स्पर्शः सदृशं तूचिते समे । [12]भ्राष्ट्रे युध्यम्बरीषं ना किशोरहरिशंभुषु ॥ ९८७
अभिलाषेऽनुतर्षः स्यात्पानेच्छायामथामिषम् । संभोगोत्कोचमांसेषु उषा बाणात्मजा निशा॥९८८

---

१ 'सवलः' क-ख-ग. २ 'अवद्य' क-घ, 'वट्वा' ख-ग. ३ 'वलवा' क. ४ 'कुम्भवास्योः' क. ५ इतः परम् 'स्वोऽस्त्रियां ज्ञातिधनयोः स्वमात्मनि नपुंसकम्' इति घ-पुस्तकेऽधिकः पाठः. ६ 'प्रथमे' क-घ. ७ 'सत्र' क, 'त्रसे' ख-ग. ८ 'छत्राद्यन्ते' क-घ. ९ 'आयत्तता प्रभुत्वेच्छे' घ. १० इदमर्धपद्यं क-पुस्तके नास्ति. ११ 'वेगे' ख-ग. १२ इदमर्धपद्यं क-पुस्तके नास्ति.

भल्लुके शोणके चर्क्षो नक्षत्रे पुंनपुंसकम् । ऋषि[1]र्वेदेऽपि कक्षस्तु दोर्मूले शुष्ककानने ॥ ९८९
कक्षा वरत्राप्रकोष्ठस्पर्धोग्राहणिकासु च । कुल्माषं काञ्जिके ना तु यावके स्यादथाबिले ॥ ९९०
पापे च कलुषं घोषः शब्दाभीरनिवासयोः । शुचौ दक्षे च चौ[2]क्षः स्यात्तर्षो लिप्सापिपासयोः ॥
दक्षः प्रजापतौ ताम्रचूडे हरवृषे पटौ । पौरुषं मानभेदे च पुंनागे पुरुषो नरे ॥ ९९२
पक्षौ मासार्धपार्श्वौ च महिषी राजपत्न्यपि । मूर्खे माने पले माषो मेषौ राश्यन्तरोरणौ ॥ ९९३
संख्यायां तु न ना लक्षा क्लीबं व्याजशरव्ययोः । हरताक्ष्यौं विशालाक्षौ शेषो नानन्तसीरिणोः ॥
उपयुक्तेतरे लक्षी शैलूषो नटबिल्वयोः । शुश्रूषा परिचर्या च संहर्षः स्पर्धने मुदि ॥ ९९५
योग्यायामन्तिकेऽभ्यासोऽधिवासौ स्थानसंस्क्रिये । आख्यायिकापरिच्छेदे चा[3]श्वासो निर्वृतावपि ॥
उदर्चिरुत्प्रभे वह्वावेनः पापापराधयोः । कनीयाननुजेऽल्पे च कंसो मानेऽसुरान्तरे ॥ ९९७
तैजसे तस्य पात्रे च गुत्सः स्तबकहारयोः । छन्दः पद्यश्रुतीच्छासु तरो वेगे बलेऽपि च ॥ ९९८
तमः शोकेऽप्यथ हिमर्तौ ना धर्मे व्रते तपः । पद्मे स्वर्णे तामरसं निशा दुर्गा च तामसी ॥ ९९९
मणिदोषे दरे त्रासो दा[4]सो वि[5]त्तात्मचेटयोः । क्षिण्ट्यां च दासी दीर्घायुर्ऋषिः काकश्च शाल्मलिः
योके च वसुराख्याने स्वान्ते सरसि मानसम् । माश्चन्द्रमासयोः पुंसि खर्जूरेक्ष्वोर्महारसः १००१
राजहंसो नृपाम्र्ये च जिह्वा भूः शल्लकी रसा । जले शरीरधातौ च पारदस्वादयो रसः ॥ १००२
भाषाशृङ्खलके रासः क्रीडायामपि गोदुहाम् । रहो रते च गुह्ये च रभसो हर्षवेगयोः ॥ १००३
विहायाः शकुनौ पुंसि विहायः खे नपुंसकम् । पुत्रादौ तर्णके वर्षे वत्सः क्लीबं तु वक्षसि १००४
रसे क्रूरे च विकृते बीभत्सस्त्रिषु नार्जुने । व्यासो मुनौ च विस्तारे वर्हिर्ना कुशशुष्मणोः ॥ १००५
अग्रे प्रधाने च शिरः श्रीवासो विष्णुधूपयोः । सुमनाः पुष्पमालत्योः स्त्रियां ना देवधीरयोः १००६
वीणाभेदे सर्जरसो धूणकेऽप्यथ सारसम् । पद्मे ना पक्षिभेदे च सरो नीरतडागयोः ॥ १००७
हविः सर्पिषि हव्ये च हंसस्तु खगसूर्ययोः । निर्लोभे नृपतौ विष्णावन्तरात्मनि चेष्यते ॥ १००८
अवग्रहः स्यात्प्रकृतिभाववृष्टिविबन्धयोः । अवरोहोऽवतरणे त्रिदिवे च तलोद्गमे ॥ १००९
आरोहस्तु नितम्बे स्याद्दीर्घत्वे च समुच्छ्रये । सक्तौ स्नेहे चाग्रहः स्यादीहा तूद्यमवाञ्छयोः १०१०
सूपे[6] च पाकपात्रे च कटाहो महिषीशिशौ । खड्गकोषे च कलहो दात्यूहश्चातकेऽपि च ॥ १०११
समारम्भे च पटहो ब्रह्मण्यपि पितामहः । प्रवाहो व्यवहारे च बहुर्विपुलसंख्ययोः ॥ १०१२
वराहः सूकरे मेघे[7] मुस्तकेऽप्यथ मूर्छने । अविद्यायां च मोहः स्याद्वृक्षस्कन्धेऽनिले वहः १०१३
देहनिर्माणसैन्येषु व्यूहः स्यादथ विग्रहः । संग्रामे प्रविभागे च देहविस्तारयोरपि ॥ १०१४
वैदेही पिप्पलीसीतावणिक्स्त्रीरोचनास्वपि । संक्षेपेऽपि संग्रहः स्यार्त्सिह्यौ[8] वार्ताकुवासकौ[9] ॥ १०१५
राशिभेदे हरौ सिंहः श्रेष्ठार्थे चोत्तरस्थितः । सौहृदे घृततैलादौ स्यात्स्नेहोऽथाव्ययाः परे ॥ १०१६
[10]नञभावे निषेधे च तद्विरुद्धतदन्ययोः । सादृश्ये चेषदर्थे च हिरुक् मध्यविनार्थयोः ॥ १०१७
पुनरर्थेऽङ्ग भोऽर्थे च सुष्ठ्वत्यर्थप्रशंसयोः । च[11][12] पादपूरणे पक्षान्तरे हेतौ विनिश्चये ॥ १०१८

१ 'ऋषिभेदे' क-ख-ग. २ 'नोक्षः' घ. ३ 'विश्वासो' ख-ग. ४ 'दासी' घ. ५ 'चित्रात्म' ख-ग, 'वित्तार्थ' घ, 'विन्नात्म' क. ६ 'स्तूपे' क. ७ 'मेषे' घ. ८ 'सिंहौ' ख-ग. ९ 'वासवौ' घ, 'वासफौ' ख-ग. १० अस्यार्धपद्यस्य स्थाने 'अथाव्ययाः परे वाच्या नञभावे निगद्यते । तद्विरुद्धे तदन्यत्वे निषेधेऽपि च दृश्यते ॥' इति श्लोको घ-पुस्तके दृश्यते. ११ 'विलासयोः' घ. १२ 'व' ख-ग.

ह्री विस्मये प्रमोदे च ओमेवं प्रणवार्थयोः । युक्तार्थमधुनार्थं च सांप्रतं तद्विदो विदुः ॥ १०१९
हुं विक्रमे चानुमतौ वार्तायामरुचौ किल । प्रातर्दिने च पूर्वेत्रेत्यर्थे पूर्वेद्युरिष्यते ॥ १०२०

इति नानार्थवर्गः ॥ ३ ॥

---

आनन्देऽस्तु शुभं दिष्ट्या कटरे कटराद्भुते । भूर्भुवः स्वस्त्रिभुवनं मनागर्थे दर स्मृतम् ॥ १०२१
आमोमुमभ्युपगमे नवरं केवलार्थकम् । प्रातरर्थे नैपयति क्षणमात्रे क्षणंक्षणम् ॥ १०२२
क्षेमेणार्थे स्वस्तिना स्यादुच्चैरर्थेऽट्ट कीर्तितम् । वारंवारं शश्वदर्थे वारंवारेण चेष्यते ॥ १०२३
उताहो यदिवा यद्वा किंवा वेति समा इमे । किंत्वर्थेऽपितु यद्यर्थे सचेत् प्राक् त्वादिवाचकम् १०२४
अस्त्याह कालसामान्ये तिङन्तप्रतिरूपकम् । सजूः सहार्थे नेत्याह निषेधे यदि शेषगीः ॥ १०२५
विभाषान्यतरस्यां वा विकल्पार्थाः प्रकीर्तिताः । ते इति स्यात्त्वयेत्यर्थे मयेत्यर्थे च मे इति ॥ १०२६

इत्यव्ययवर्गः ॥ ४ ॥

---

लिङ्गादिसंग्रहेऽनुक्तममरेणाभिदध्महे । स्त्रियामाजिर्दरज्जातिः पुरुर्भाद्वाः समाः शरत् ॥ १०२७
सिकताद्या बहुत्वेऽपि विंशत्याद्येकवागपि ॥ १०२८

पुंस्त्वे हाहा हूहूर्ग्रन्थिः पाणिः कलिर्दतिर्मौलिः ।
अञ्जलिरङ्घ्रिः कुक्षिर्लौवकलोकोत्तरासङ्गाः ॥ १०२९

अवटव्रातसंकेतपोतगर्तगरुच्छदाः । श्लेष्मोष्मपापयक्ष्माश्मात्मानो वातायनः स्तनः ॥ १०३०

फेनाभिजनकलापनिकाय्याहारोद्गारोपलकल्लोलाः ।
फालचषालकीलनलतण्डुलशैवलखलविभवप्रभवाश्च ॥ १०३१

आनोपजननाडीभ्यो युगमङ्गपदं व्रणम् । अनक्षे दुन्दुभिरथ बहुत्वेऽप्यसवो गृहाः ॥ १०३२
सक्तवो वल्कजा लाजा दाराः प्राणा दशा इति ॥ १०३३

क्लीबे कलत्रविषबीजकुटुम्बरत्नतल्पोकैथकुङ्कुमपुरीतदृणाक्षराणि ।
शृङ्गाटपीठगृहभेषजपृष्ठकिण्वदैवाण्डभाण्डचिबुकोडुपसाहसानि ॥ १०३४

यकृत्कुहकसिध्मानि तीरं कशिपु जानु च । धमार्धसारमिश्राण्यङ्गदेलन्यागबन्धुषु ॥ १०३५
पुंनपुंसकयोर्दारुजीवातुस्थाणुसीधवः । स्याद्वास्तु हिङ्गु तितउ सानु कम्बु कमण्डलु ॥ १०३६

गोमयकुमुदबिम्बशङ्खाश्रमशूलसुवर्णतोरणाः ।
नूपुरशिखरतूर्यनिर्यासगृहाङ्कुशबर्हपल्लवाः ॥ १०३७
व्रतदिनमासवर्षदलवल्कलकोटरषण्डचामराः ।
चन्दनपद्मधर्मकोलाहलकिसलयदेहदोहदाः ॥ १०३८

---

१ 'हा' घ. २ 'कटवे कटवा' घ, 'कटरे कदरा' ख-ग. ३ 'नपतति' ख-ग, 'उनपयति' घ. ४ 'क्षणक्षणम्' ख-ग. ५ 'स्वस्तिनीचै' ख-ग. ६ 'नेति' घ. ७ 'प्रोक्तादि' घ. ८ 'कानसामान्ये' क-ख-ग. ९ 'सर्जूः' ख-ग, 'सज्जः' घ. १० 'पुरुद्वाषाः' घ. ११ 'सरित्' ख-ग. १२ 'मारक' घ. १३ 'स्यान्मोनो' घ. १४ 'निकाह्या' ख-ग, 'निकाल्या' क. १५ 'द्वारो' व. १६ 'प्रसवाः' घ. १७ 'आनाऽप' घ. १८ 'मङ्गं' ख-ग-घ. १९ 'वल्वजा' ख-ग, 'वल्लजा' घ. २० 'क्त' घ. २१ 'गुद' घ. २२ 'शुभाशु' घ. २३ 'दन' व. २४ 'शीधवः' क-ख-ग. २५ 'शूर' क, 'सृण' घ. २६ 'वर्षा' घ. २७ 'नर्म' क, 'धर्म' ख-ग.

कुलिशध्वजकार्षापणपिधानमुस्तान्धकारशृङ्गवलयाः।
पठलप्रवालचषकोपवासकासारकटकसंतानाः॥ १०३९
आकाशकुशकुतपौदनवारवाणप्रस्थावतंसनखमण्डपकच्छपुच्छाः।
कान्तारकङ्कणतडागकिरीटराष्ट्रतीर्थव्रणस्तबकसंक्रमपीठकानि॥ १०४०
समरसरकरणविटपाङ्गारदैवतगैरिककूटागाराः।
प्रोथमुहूर्तदिवसफलकानि काशनिदाघतिलकमुसलानि॥ १०४१
वल्मीकवृषणद्रोणगाण्डीवनिगडानि च। मुकुलादि च विज्ञेयं शिष्टसंदर्भतोऽपरम्॥ १०४२
अथ स्त्रीपुंसयोः केलिर्मणिर्योनिर्मसिर्मुनिः। मरीचिः शाल्मलिः स्वातिः श्रेणिर्मुष्टिस्तिथिः सृणिः॥ १०४३
ऊर्मिर्गभस्तिरशनी रैपार्ष्णीषुधिराशयः। वस्तिश्च किष्कुः कन्दुश्च वेणुतन्त्रिषुवाहवः॥ १०४४
गण्डूषगर्जजागरभुजकीलज्वालवर्तकक्रीडाः।
उत्कण्ठसटवराटकरभसाः कीले तु टाबन्ताः॥ १०४५
शङ्कुको वृश्चिकः कीटः शारस्तूणो घटः कटः। शफरो वेतसश्चामी स्त्रियां ङ्यन्ताः प्रकीर्तिताः॥
कीलीबयोरुडुर्दामा छर्दिर्ज्योतिःसदोर्चिषः। अथ लक्षं वणिज्यं च बडिशक्रोडपाटलम्॥ १०४७
तारकं रसनं नीडमेते टाबन्तकाः स्त्रियाम्। ङ्यन्तास्तु नगरास्थानस्थलानि पाटलं पुरम्॥ १०४८
त्रिलिङ्ग्यां तु प्रतिसरस्फुलिङ्गनखरार्गलाः। कन्दरं शृङ्खलं नालं वल्लूरफलपुंस्तकाः॥ १०४९
जृम्भश्च टाबन्ता एते स्त्रियामथ विभीतकः। हरीतकाढकतटकवाटाश्च गुणे वटः॥ १०५०
मण्डलं शललं भल्लातकं कलसकन्दलौ। मृणालामलकौ दाडिमश्च ङ्यन्ताः स्त्रियामिमे॥ १०५१
करणे ल्युट् त्रिषु यथा तस्य व्याख्यान इत्यदः। सूत्रकृद्भाष्यकृत्कोसावनुमान इतीच्छति॥ १०५२

इति लिङ्गादिसंग्रहवर्गः॥ ५॥

---

दृष्टप्रयोगा ये शब्दाः प्रायस्त इह कीर्तिताः। अप्रयुक्तास्तूपलिन्यादिदृष्टा अप्युपेक्षिताः॥ १०५३

इति त्रिकाण्डशेषे तृतीयं काण्डम्।

---

१ 'निधान' घ. २ 'स्तान्ककार' क, 'स्ताकर्कारु' घ. ३ 'प्रस्ता' क, 'मुस्ता' घ. ४ 'पाङ्गना' घ. ५ 'कुटा' घ. ६ 'छदि' क. ७ 'मुस्तकाः' घ. ८ 'तस्य व्याख्यान इति व्याख्यातव्यनाम्नः' (४।३।६६) इति पाणिनिसूत्रम्. ९ 'भूवादयो धातवः' इति सूत्रव्याख्याने महाभाष्ये.

॥ श्रीः ॥

# अभिधानसंग्रहः ।

## ( ३ )

श्रीपुरुषोत्तमदेवप्रणीता

## हारावली ।

भुजगपतिविमुक्तस्वच्छनिर्मोकवल्लीविलसितमनुकुर्वन्यस्य गङ्गाप्रवाहः ।
शिरसि सरसभास्वन्मालतीदामलक्ष्मीं लँघयति हिमगौरः सोऽस्तु वः साध्यसिद्ध्यै ॥ १
कल्पावसानसमये स्थितये कवीनां देहान्तरं सृजति या किमपि प्रसन्ना ।
यस्याः प्रसादपरमाणुरपि प्रतिष्ठामभ्येति कामपि नमामि सरस्वतीं ताम् ॥ २
निर्मत्सराः सुकृतिनः खलु ये विविच्य कर्णे गुणस्य कणमप्यवतंसयन्ति ।
येषां मनो न रमते परदोषवादे ते केचिदेव विरला भुवि संचरन्ति ॥ ३
मुक्तामयातिमधुरा मसृणात्त्वदातच्छायाधिरागतरलामलसद्गुणश्रीः ।
साध्वी सतां भजतु कण्ठमसौ प्रियेव हारावली विरचिता पुरुषोत्तमेन ॥ ४
किं नैत्र सन्ति सुधियामभिधानकोषाः किंतु प्रसिद्धविषयव्यवहारभाजः ।
गोष्ठीषु वादपरमोहफलासु केषां हारावली न विदधाति विदग्धिमानम् ॥ ५
एकं तमेव गणयन्ति परं विदग्धा वाचां विदग्धिमनि मज्जति यस्य लोकः ।
गोष्ठीषु यः परमशाब्दिकदुर्गमासु दुर्बोधशब्दगतसंशयमुच्छिनत्ति ॥ ६
आव्याधशब्दतः श्लोकैरर्धैरातलिमात्ततः । शब्दाः पादैर्विबोद्धव्याः प्रागनेकार्थतस्ततः ॥ ७

---

विषमनयनशंभू चन्द्रमौलिर्भगाली वृषभपतिगणेशौ रेरिहाणो वृषाङ्कः ।
त्रिपुरदहनशूलिस्थाणुखट्वाङ्गिहिण्डिप्रियतमशितिकण्ठा भर्ग्यकल्माषकण्ठौ ॥ ८
शतधामा चतुष्पाणिः पृश्निगर्भो गदाग्रजः । गदी कौस्तुभवक्षाश्च पाञ्चजन्यधरोऽच्युतः ॥ ९
वैनतेयः पक्षिसिंहः शाल्मली हरिवाहनः । अमृताहरणस्तार्क्ष्यो नागाशनखगेश्वरौ ॥ १०
खगपतङ्गवियन्मणिभानवो हरिभगेननिदाघकराद्रयः ।
किरणमालिविरोचनहेलयो दिनमणिस्तरणिश्च दिनप्रणीः ॥ ११
श्रुतःश्रवोनुजः क्रोडो मन्दश्छायासुतः शनिः । सप्तार्चिर्नीलवसनः पातङ्गिः क्रूरलोचनः ॥ १२
दाक्षायणीपतिवलक्षगुपक्षजन्मतुङ्गीशरात्रिमणिदर्शविपत्सुधाङ्गाः ।
राजा समुद्रनवनीततमोनुदौ मा ग्लौरिन्दुरेणतिलको हरिरोहिणीशौ ॥ १३

---

१ 'लपयति' ग. २ 'किमपि या सृजति प्रसन्ना' ख-ग. ३ 'नैव' ख-ग. ४ 'शङ्कू' ख-ग. ५ 'वृषभगति' ख-ग. ६ 'कालो' क. ७ 'सुधांशुः' क, 'सुधाङ्गः' ख-ग.

महामृगः पुष्करिदीर्घमारुतौ विलोलजिह्वो जलकाङ्क्षसिन्धुरौ ।
द्विपायिशूर्पश्रुतिकुम्भिसामजा महामदः पेचकिपद्मिपीलवः ॥ १४

दर्वीकरो विषधरः श्वसनाशनोऽहिश्चक्री फणाधरविषायुधदीर्घपृष्ठाः ।
कुम्भीनसद्विरसनौ समकोलदंष्ट्रिगोकर्णकुण्डलिलतारसना विषास्यः ॥ १५

मया चोपकृतं पूर्वमयं चोपकरिष्यति । इति यः क्रियते संधिः प्रतीकारः स उच्यते ॥ १६
शेषमक्षरमादाय प्रतिश्लोकं क्रमेण यत् । अन्योन्यं पठ्यते श्लोकः प्रतिमालेति सा मता ॥ १७
नभश्चरो वायुदारुर्वनदो गगनध्वजः । व्योमधूमो जलमसिः खतमालः पयोधरः ॥ १८
हर्षादुत्सवकाले यदलंकाराम्बरादिकम् । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत् ॥ १९
सुरते कर्णमूले च यच्च देशीयभाषया । दम्पत्योर्जल्पितं मन्दं मन्मनं तद्विदुर्बुधाः ॥ २०
यद्दीयते देवताभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यदोहदं तद्विदुर्बुधाः ॥ २१
नक्तं निर्गत्य यत्किंचिच्छुभाशुभकरं वचः । श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम् ॥ २२
वृद्धसूत्रकमित्याहुरिन्द्रतूलं मनीषिणः । ग्रीष्महासं वंशकफं वाततूलं मरुद्ध्वजम् ॥ २३
दशेन्धनो गृहमणिः स्नेहाशः कज्जलध्वजः । जटाज्वालो दशाकर्षः कथितो बहुदृश्वभिः ॥ २४
गोमयच्छत्रिकामाहुर्दिलीरं च शिलीन्ध्रकम् । ऊर्ध्वेङ्गं च रैंसावोटं गोनासमपरे विदुः ॥ २५
हिमवान्हेमकूटश्च निषधो मेरुरेव च । चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्वताः ॥ २६

इति श्लोकावधिः ॥ १ ॥

---

व्याधो मृगवधाजीवो निषादः पुष्कसः प्लवः । वालवायजमिच्छन्ति वैदूर्यमणिमुत्तमाः ॥ २७
कालग्रन्थिः समाः संवन्मासमालो युगांशकः । मासो वर्षांशकः श्रामो वर्षाङ्गः स्यादहर्गणः ॥ २८
मदयोगविधानं तु व्यस्तारं करिणां विदुः । पृष्ठवंशस्य यन्मांसं तल्पनं तत्प्रचक्षते ॥ २९
कर्णवेधनिका प्रोक्ता नालिकेति विषाणिनाम् । प्रवेष्टमन्तःस्वेदानां दन्तमांसं विदुर्बुधाः ॥ ३०
कुमारभृत्या गर्भिण्याः परिचर्याभिधीयते । नवोढावस्त्रमानन्दपटमिच्छन्ति सूरयः ॥ ३१
कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः । ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम् ॥ ३२
नित्यकर्मसमाचारनिष्ठुरत्वे कंटङ्कता । वैरानुबन्धो धीमद्भिरुपनाहो विधीयते ॥ ३३
स्यात्पालिका कुन्तलिका दध्यादिच्छेदनी तु या । वैशाखो दधिचारः स्यात्तक्राटकरघर्षणौ ॥ ३४
स्यादाषाढभवो भौमो नवार्चिर्गगनोल्मुकः । पञ्चार्चिः स्याच्छ्रविष्ठाजो ज्ञ एकाङ्गः प्रहर्षणः ॥ ३५
दीदिविर्द्वादशार्चिः स्याज्जीवः प्राक्फल्गुनीसुतः । काव्यो दैत्यपुरोधाः स्यात्षोडशार्चिर्मघाभवः ३६
उपप्लवोकचः केतुरश्लेषाभव आह्निकः । ज्योतीरथो ग्रहाधारो ध्रुव उत्तानपादजः ॥ ३७
स्वर्भानुं ग्रहकल्लोलं विदुरभ्रपिशाचकम् । वनीयको याचनको वसुकीटो मुखंपचः ॥ ३८
आयमानविषाणाग्रे कटाहो महिषीशिशौ । छेदो हस्तेन सस्यानां कटभङ्ग उदाहृतः ॥ ३९
जलत्रा जङ्गमकुटी कावारी मूर्धकर्परी । उष्णवारणमुत्कूटं चक्राङ्गं च पटोटजम् ॥ ४०

---

१ 'यत्' क. २ 'प्रतीहारः' ख-ग. ३ 'तु देवेभ्यो' ख-ग. ४ 'वशारोहं' ख-ग. ५ 'गोलास' ख-ग. ६ 'निषादः' क. ७ 'पुल्कसः' ख-ग. ८ 'मासमानो' ख-ग. ९ 'विधीयते' क. १० 'कटुङ्कता' ख-ग. ११ 'वीणानुबन्धो' ख-ग. १२ 'तक्राटः करघर्षणः' ख-ग. १३ 'पञ्चार्चिश्च' ख-ग. १४ 'प्राक्फाल्गुनीभवः' ख-ग. १५ 'आङ्घ्रिकः' क. १६ 'याचकश्च' क. १७ 'मत्कूटश्च' ख-ग. १८ 'पुटोटजम्' ख-ग.

[1]मुनीनां च चिताकुट्यां पर्णोटजसहोटजौ । [2]कारोत्तरश्च वीनाही प्रहिरन्धुर्जलाम्बिका ॥ ४१
जलकूपी जलाष्ठीली तलकं पुष्करिण्यपि । आसन्नास्तमयः कैश्चिदुपधूपित उच्यते ॥ ४२
तत्क्षणादित्यमुक्तां तु वदन्त्यङ्गारिणीं दिशम् । अङ्गारितं पलाशानां कलिकानिर्गमो भवेत् ॥ ४३
गन्धारं रक्तचूर्णं च सिन्दूरं रक्तवालुकम् । कुसृत्या विभवान्वेषी पार्श्वकः संधिजीवकः ॥ ४४
अधश्चरो भवेच्चौरः कुसुमालः कुजम्भलः । प्रोक्तः करिकुसुम्भस्तु नागकेसरचूर्णके ॥ ४५
[3]वर्वरी वर्वरीकं च [4]वर्वुरीत्यपि चेष्यते । अभावात्स्त्रीपरित्यागस्तुरगब्रह्मचर्यकम् ॥ ४६
यमिनां यद्रतं गोप्यं तत्खञ्जनरतं विदुः । स्यादाचामनकः प्रोण्ठः कटकोलः पतद्ग्रहः ॥ ४७
[5]मेलानन्दा मसिमणिर्मसिधानी मसिप्रसूः । वालोपवीतं तु विदुः पश्चावटमुरस्कटम् ॥ ४८
नारीणां मण्डलीनृत्यं बुधा [6]हल्लीसकं विदुः । मारीचो याजकगजो राजहस्ती मदोत्कटः ॥ ४९
अलंकारसुवर्णं यत्तच्छृङ्गीकनकं मतम् । रतिलक्षं निधुवनं संयोजनमिति स्मृतम् ॥ ५०
जीमूतकूटकुट्टीरकुट्टाराः कन्दराकरः । उद्देशो गण्डकूपस्तु पर्वतस्याभिधीयते ॥ ५१
वासिता धेनुका चैव वशा च [8]गणिका कठा । ब्रह्मप्रभूः क्रतुपशुः सिंहविक्रान्तवाजिनौ ॥ ५२

समुद्रगा निर्झरिणी तलोदा जम्बालिनी शैवलिनी तरङ्गिणी ।
विपाठकादम्बकपत्रवाहाः पत्री खगो वीरतरोऽस्त्रकण्टकः ॥ ५३

वर्णदूतः स्वस्तिमुखो लेखो वाचिकहारकः । लेखो [9]निबध्यते येन तत्र काचनकाभिधा ॥ ५४
[10]क्षारोत्थं मणिमन्थं च विदुः सिन्धूपलं बुधाः । पिशितं पललं क्रव्यं पलमामिषमुद्धसम् ॥ ५५
पारावारमहाकच्छौ [11]महीप्राचीरदारदौ । [12]जिह्वारदः [13]कीकसास्यश्चञ्चुमत्तरुशायिनौ ॥ ५६
इन्द्रक्रीडासरः प्राज्ञैर्नन्दीसर इति स्मृतम् । धूमोर्णापतिरुद्दिष्टो यमो महिषवाहनः ॥ ५७

पयोघनो मेघकफो [14]घनोपलो मेघास्थिबीजोदक[15]तोयडिम्बाः ।
शम्पाचिराभा चपला छटाभा ह्रादिन्यधीरा घनवल्लिका च ॥ ५८

पादालिन्दी तरण्डा नौस्तरणिस्तारणिस्तरिः । किलाटः शोषितक्षीरपिण्डः सूरिभिरिष्यते ॥ ५९
कालायसमयस्तीक्ष्णं गिरिसारं च [16]शस्त्रकम् । [17]हैयंगवीनं [18]सरजं मन्थजं च [19]कलम्बुदम् ॥ ६०
[20]एकशफाङ्क्रिकं बन्धमाहुर्दामाञ्जनं बुधाः । वेत्ता स्त्रीपुंसयोश्चिह्नं [21]सामुद्रिक उदाहृतः ॥ ६१
[22]तिन्तिडीकास्थिभिर्द्यूतक्रीडायां चुञ्चुली भवेत् । वक्रा ललाटगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकम् ॥ ६२

हाला [23]कौमालिका मण्डा [24]वीरा स्यान्[25]मोदनी च [26]माध्वी च । (?)
आहुश्चषकं तु पानपात्रं पारीमप्यनुतर्षणं [27]कवीन्द्राः ॥ (?) ६३

कुसुम्भः करकश्चैत्यमुखः कमण्डलुः स्मृतः । असहायो नर्तकश्च तालावचर इष्यते ॥ ६४

---

१ अयं श्लोकार्धः क-पुस्तके नास्ति. २ 'करोत्तर' क. ३ 'वर्वरं' ख-ग. ४ 'वर्वरी' ख-ग. ५ अयमर्धश्लोकः क-पुस्तके नास्ति. ६ 'हल्लीषकम्' ख-ग. ७ 'कमिष्यते' क. ८ 'करिणी मता' ख-ग. ९ 'अभिबध्यते' क. १० 'क्षाराच्छं' ख-ग. ११ 'महीपाचीर' क. १२ 'जिह्वादरः' ख-ग. १३ 'कीकशास्यः' ख-ग. १४ 'घनोफलो' ख-ग. १५ 'तोयडिम्भाः' ख-ग. १६ 'शस्तकम्' ख-ग. १७ 'हय्यंगवीनं' ख-ग. १८ 'सरजं' ख-ग. १९ 'कलम्बुटम्' क. २० 'एकं शफालिकं' ख-ग. २१ 'सामुद्रिय' क. २२ 'तिन्तिलिका' ख-ग. २३ 'कचमालिका' क. २४ 'धीरा' ख-ग. २५ 'मदनी' ख-ग. २६ 'माधवी' क. २७ छन्दोभङ्गदूषित एव पाठः सर्वेषु पुस्तकेषु वर्तते.

कथितः कौमुदीवृक्षो दीपवृक्षः शिखातरुः । कोजागरे तथा सद्भिः कौमुदीचार इष्यते ॥ ६५

समुद्रगृहमित्याहुर्जलयन्त्रनिकेतनम् । प्रेतादिभिर्गृहीतो यः स आविष्टो भ्रमन्बहिः ॥ ६६

हिममिन्द्राग्निधूमश्च खबाष्पो रजनीजलम् । ये शिवायतन उत्सृष्टास्ते संध्यावलयो वृषाः ॥ ६७

विषाक्ताश्चाहतस्याहुः पशोर्मांसं तु गृञ्जनम् । धूमिका धूममहिषी हिमसृष्टिः[1] कुहेलिका ॥ ६८

पोत्राच्छादनमाहुस्तु[2] वैरकमथ[3] वस्त्रकुट्टिमं कवयः ।
तन्त्रविमुक्तं वासो निष्प्रवर्णं[4] निष्प्रवाणि च ॥ ६९

क्रयारोहं महाघोषं हट्टं पण्याजिरं विदुः । बहुमानुषसंकीर्णं निर्मुटं[5] च कराङ्गणम्[6] ॥ ७०

शालभञ्जी दारुगर्भा कुरुण्टी दारुपुत्रिका । नवः[7] कादम्बिनी मेघः काली स्यात्कालिकापि च ७१

क्रोशध्वनिः[8] क्रोशतालो ढक्का विजयमर्दलः । स्यात्प्रतिपत्तिपटहो[9] लम्पापटह इत्यपि ॥ ७२

कर्तनं[10] कायवलनं[11] तनुत्रं दंशनं विदुः । शिरस्त्रं तु शीर्षरक्षं शीर्षण्यं शीर्षकं च तत् ॥ ७३

स्याज्जालिका लोहमयी जालप्रायाङ्गरक्षिणी । पञ्चाङ्गी पादविरजाः कोशी पादरथी भवेत् ॥ ७४

रुचकं[12] लवणं क्षारं तीक्ष्णं जलरसं विदुः । ज्योतिर्बीजं च खद्योतं ध्वान्तोन्मेषं तमोमणिः ॥ ७५

जलशूकरजलजिह्वौ जलकण्टकवार्भटौ तथा नक्रे ।
जलनकुलजलविडालौ[14] नीराखुजलप्लवावुद्रे ॥ ७६

शिशुमारो जलकपिश्च[13]पलाङ्गोऽसिपुच्छकः । ग्राहो जलकिरातश्च नक्रराजो जलाण्टकः ॥ ७७

मृतकान्तकः श्वभीरुर्वृकधूर्तशयालुसूचका भरुजः ।
शालामृगोऽस्थिभक्षो ग्राममृगो मण्डलः कपिलः ॥ ७८

उल्कामुखी सृगाली या दीप्तजिह्वेति सा मता । स्कन्धवाहः शांकरश्च शृङ्गी गोरक्षमूर्तिलौ[15] ॥ ७९

हेरम्बः कासरश्चैव रक्ताक्षः सैरिभस्तथा । रोमशो बहुरोमा स्यादुरणश्च पृथूदरः ॥ ८०

इड्डिकस्तु बालवाह्यो वनच्छागो निरोमशः । वर्णो[16] धूम्रशूकः स्यादुष्ट्रः शृङ्खलकस्तथा ॥ ८१

चक्रमुखः सूचिरोमा वराहः स्थूलनासिकः । कण्ठीरवस्तु पारीन्द्रः केशरी गजमाचलः ॥ ८२

नेत्रपिण्डो वृषाहारो मेनादः कुन्दमः स्मृतः । गन्धाखुर्गृहनकुलश्छुच्छुः पुंवृष उच्यते ॥ ८३

द्रोणोऽरिष्टो नाडिजङ्घ आत्मघोषस्तु मौद्गलिः । गोमण्डीरः पङ्ककीरो हापुत्री राजपट्टिका[17] ॥ ८४

गङ्गाचिल्ली[18] तु देवट्टी विश्वका जलकुक्कुटी । विट्सारिका तु कुणपी गोराटी गोकिराटिका ॥ ८५

मृगेन्द्रचटको घातपक्षी ग्राहकमारकौ । कुलालं कुक्कुटं प्राहुः कुकुभं कुहकस्वरम् ॥ ८६

कर्कराक्षः कलाटीनः खञ्जलेखस्तु खञ्जनः । प्रासादकुक्कुटो झल्लकण्ठो गृहकपोतकः ॥ ८७

ध्वाङ्क्षपुष्टः कलकण्ठो मधुकण्ठः कुहूमुखः । झम्पाशी मत्स्यरङ्कः स्याज्जलेशङ्कुर्[19]मणीचकः ॥ ८८

कलविङ्कश्चित्रपृष्ठो गृहनीडो गृहायणः[20] । वेरण्डा[21] चित्रपादा च चित्रनेत्रा च सारिका ॥ ८९

मयूरचटको दक्षः कृकवाकुर्निशाकलः[22] । शतपत्रः सितापाङ्गः प्रचलाकी च चन्द्रकी ॥ ९०

---

१ 'हिमझण्टिः' ख-ग. २ 'पोताच्छादन' ख-ग. ३ 'वचक' ख-ग. ४ 'निष्प्रवर्णि' ख-ग. ५ 'निर्घटं' ख-ग. ६ 'करङ्कणम्' क. ७ 'कादम्बिनी नवो' ख-ग. ८ 'क्रोशो ध्वनिः' क. ९ 'प्रतिपत्तिः पटहो' ख-ग. १० 'कुकूलं' ख-ग. ११ 'कायकलनं' ख-ग. १२ 'करचं' क. १३ 'पिः पलाङ्गश्चा' ख-ग. १४ 'जलविडार' क. १५ 'धूर्तिलः' ख-ग. १६ 'वरणो' ख-ग. १७ 'राजभट्टिका' ख-ग. १८ 'गङ्गाचिल्ली' ख-ग. १९ 'जलमद्गुः' ख-ग. २० 'वृषायणः' ख-ग. २१ 'वचण्डा' क. २२ 'निशाकरः' ख-ग.

किसलयमपि तरुरागं विदुर्लतायावकं प्रवालं च ।
[1]कण्टकसंज्ञास्तरुनख[2]शिताग्रदलसूचि[3]वङ्किल[4]र्द्रुमवाः ॥ ९१

द्रोणीदलः सूचिपुष्पो जम्बूलः क्रकचच्छदः । मण्डा [5]तिष्यफला धात्री [6]बल्या पञ्चरसा शिवा ॥ ९२
सहस्रवीर्या विरजा भार्गवी [7]मण्डलारुहा । प्रहर्षिणी निशाह्वा च लसा [8]गन्धपलाशिका ॥ ९३
मृदुपुष्पः शुकतरुः शिरीषो [9]विषनाशनः । [10]वराहकाली कथितः सूर्यावर्तस्तु शाब्दिकैः ॥ ९४
[11]वज्रवल्ल्यस्थिसंहारो हस्तिशुण्डी वनालिका । वनतिक्तः स्त्रियां ग्रीष्मा[12]र्तिरीढः [13]पथ्यसुन्दरः ॥ ९५
मधुपुष्पो मधूकश्च गुडपुष्पो मधुद्रुमः । वृत्तपुष्पः [14]प्रावृषेण्यो [15]हलिद्रुश्च हलिप्रियः ॥ ९६
एला [16]त्वचिसुगन्धा च पुटिका चर्मसंभवा । कूष्माण्डकः पुष्पफलो घनवासश्च [17]वेष्टकः ॥ ९७
वेषणः कासमर्दश्च पत्रोपस्कर इत्यपि । ओकोदशाली प्राचीर[18]मेघालिरवहालिका ॥ ९८
कल्यवर्तः प्रातराशः प्रातर्भोजनमिष्यते । शृगालिका च डिम्बं च डमरं विद्रवोऽपि च ॥ ९९
स्कन्धफलः सुभङ्गश्च नारिकेलः पटोदकः । गुडदारुर्मधुतृणमसिपत्रो महारसः ॥ १००
[19]राजाकुलो महाकन्दो मूलको हस्तिदन्तकः । [20]क्षुद्रवंशा तिक्तगुञ्जा सरघा विद्धपर्कटी ॥ १०१
क्षुद्रपत्रा च चाङ्गेरी क्षुद्राम्ला चाम्ललोणिका । प्राचीनामलकं रक्तं [21]वदरामलकं तथा ॥ १०२
पिष्टसौरभमेकाङ्गं श्रीखण्डं मालयं विदुः । मृगनाभिं मृगमदं गन्धशेखरमित्यपि ॥ १०३
सिताभ्रं तरुसारं च वेधकं रसकेसरम् । कालेयं वंशकं जोङ्गं कालीयं वरचन्दनम् ॥ १०४
तृणसारा[22]मृतफला रम्भा च शाल्मली भवेत् । ऊर्ध्वासितः परारुः स्यात्तथा राजपटोलकः ॥ १०५
कुङ्कुमं पीतकावेरं घुसृणं [23]कुसुमात्मकम् । [24]अरको जलकेशः स्यात्[25]कावारं शैवलं विदुः ॥ १०६
उन्मत्तः काहलापुष्पो बृहत्पाटलिघाण्टिकौ । किंशुकः [26]कनकः पर्णो लाक्षावृक्षः सुमीरवः ॥ १०७

[27]एरण्डपञ्चाङ्गुलवर्धमानगन्धर्वहस्तास्त्रिपुटीफलश्च ।
वेणुः [28]सतीलस्तृणकेतुमृत्युबीजौ किलाटी च तथा सुपर्वा ॥ १०८

कचमालो मरुद्वाहो धूमो [29]भम्भः शिखिध्वजः । शाखानगरमित्याहुर्य[30]दभ्यर्णं पुरान्तरम् ॥ १०९
आहुर्जलकरङ्कश्च जलजं सूचिकामुखम् । उपजिह्विकोत्पादिका [31]वटिरुद्रोहिका दरी ॥ ११०
शुल्वमौ[32]दुम्बरं रक्तं म्लेच्छास्यं ताम्रकं विदुः । दुर्नामा [33]दीर्घकोषी स्यात्पङ्कशुक्तिः [34]सितालिका ११११
आकाशमूली कुतृणं कुम्भिका जलवल्कलम् । शम्बूको जलडिम्बः स्या[35]द्दुन्धुरः पङ्कबन्धुरः ॥ ११२
[36]आटीकनं तर्णकानां स्थलीसु क्रीडनं मतम् । यष्टिः शब्दवती धीरैः खेखरीक इति स्मृतः ॥ ११३
रेखात्रयाङ्कितं भालं त्रिपताकं विदुर्बुधाः । अर्धचन्द्रं [37]कर्करेटमाहुरङ्गुलितोरणम् ॥ ११४

---

१ 'कण्टकसंज्ञ' क. २ क-पुस्तके नास्ति. ३ 'राङ्किल' ख-ग. ४ 'द्रुमराः' ख-ग. ५ 'तिक्षफला' क. ६ 'बन्या' क. ७ 'मण्डली रुहा' ख-ग. ८ 'गन्धपलासिका' क. ९ 'विपनाशकः' क. १० 'विराहकाली' क. ११ 'वज्रपल्लय' क. १२ 'तिरिटः' क. १३ 'पक्षसुन्दरः' ख-ग. १४ 'प्राविषेण्यो' क. १५ 'हारिद्र' ख-ग. १६ 'त्वची' क. १७ 'मेष्टकः' क. १८ 'मोघोली' ख-ग. १९ 'राजालुको' क. २० 'क्षुद्ररसा' ख-ग. २१ 'वदरावलकं' क. २२ 'मृत्युफला' ख-ग. २३ 'कुसुमालयम्' क. २४ 'स्तावकम्' क. २५ 'कवालम्' क. २६ 'करकः' ख-ग. २७ 'अमण्ड' ख-ग. २८ 'सचीन' क. २९ 'मम्भः' ख-ग. ३० 'दखण्डं' क. ३१ 'सद्देहिकादिवी' ख-ग. ३२ 'मुदुम्बरं' क. ३३ 'दीर्घघोषी' क. ३४ 'शिहालिका' क. ३५ 'दुश्चरः पङ्कमण्डुकः' ख-ग. ३६ 'आटीलकं' ख-ग. ३७ 'कर्करेटं विदु' ख-ग.

सिद्धजलं च गृहाम्लमवन्तिसोमं तुषोदकं शुक्तम् ।
नैग्राटकनिर्ग्रन्थकमदन्तदिगम्बरा नग्ने ॥ ११५

करपत्रं जलक्रीडा व्यात्युक्षी कैरपत्रिका । शराणां पत्ररचना पत्रणा परिकीर्तिता ॥ ११६

पञ्चभद्रा हयास्ते ये पञ्चस्वङ्गेषु पुष्पिताः । यन्नारको मुद्रभुजां स स्याद्वल्लभपालकः ॥ ११७

निगालस्थो य आवर्तः स हि देवमणिः स्मृतः । तथा वक्षसि वाहस्य श्रीवृक्षक उदाहृतः ॥ ११८

बन्धः पलाशपत्राणां शीर्षे पत्रपिशाचिका । सुवसन्तकशब्देन कथ्यते मदनोत्सवः ॥ ११९

कैर्वटं द्विशतग्राममध्ये ग्राममनोहरम् । तथा चतुःशतग्राममध्ये द्रोणीमुखं विदुः ॥ १२०

यद्यात्रामङ्गलं साम तदप्रतिरथं विदुः । शाला प्रासादशिखरे चन्द्रशालेति कीर्तिता ॥ १२१

युँद्धे यत्क्रियते पानं वीरपानं तदुच्यते । पक्वदाडिम्बबीजाभं माणिक्यं शिखरं विदुः ॥ १२२

इत्यर्धश्लोकावधिः ॥ २ ॥

---

तलिनं तुच्छमित्याहुर्गृहाश्मा गृहकच्छपः । खसंचारि पुरं सौभं रथ्यां पांशुकुलं विदुः ॥ १२३

ऐकंनटः स्यात्कथको भण्डश्चाटुपटुः स्मृतः । मक्षिका भम्मराली स्यात्पांशुलो वृषकः स्मृतः॥ १२४

देवोद्यानं तु वैभ्राजं दीपाली दीपशृङ्खला । सुकुमारेऽपि सोपानं विषमं स्वपुटं विदुः ॥ १२५

फैलकः खड्गपिधानं स्यात्सारणी च प्रणालिका । यज्ञस्थानं यज्ञवाटस्तृष्णा धनपिशाचिका ॥ १२६

स्मृता वाल्वङ्किरिर्वोरुः स्फुटिरिर्वोरुशुक्तिका । नाटाम्रस्तिमिषः सेदुर्लालाङ्कुरः पुन्नातकः ॥ १२७

कोशासिका जालिका तु तृणता धनुरिष्यते । कैरातो दुर्मेहः क्षम्यः सिंहाङ्कः सिंहभाजनम् ॥ १२८

दर्वटो दण्डवादी स्यात्सुतः शङ्कितवर्णकः । प्रारब्धिः करिबन्धः स्यात्कष्ठस्थानं तु वारकम् ॥ १२९

भोगावली वन्दिपाठः सेतुस्तरणपिण्डलौ । देवयात्रा देवद्रोणी सूनाधोजिह्विका मता ॥ १३०

पालिः समुत्थितश्मश्रुर्मेरुण्डोच्चललाटिका । राका दृष्टरजाः कन्या पोटा स्त्रीपुंसलक्षणा ॥ १३१

महत्तरो ग्रामकूटो मर्मरो व्यक्तनिःस्वनः । शिवालयः पितृवनं चिता काष्ठमयी चितिः ॥ १३२

कर्णवंशो भवेन्मञ्चः श्रीग्रहः शकुनिप्रपा । ताम्बूलदो वागुलिकः सुरभिः फाल्गुनानुजः ॥ १३३

ताम्बूलरागो मसुरस्तरवारिः कृपाणकः । स्वागतं कुशलप्रश्नः सामीची वन्दना मता ॥ १३४

समुद्गः संपुटो ज्ञेयो हयस्कन्धो हयच्छटा । पिण्डारो महिषीपाले मसूरे चौङ्गभोगिकः ॥ १३५

तलुनी काहली प्रोक्ता क्षुधा तु कथिता सुधा । कम्पिल्लको रोचनिका कालिका वस्कराटिका॥ १३६

कालिका क्षीरकीटः स्यात्खण्डपालस्तु खण्डिकः । पांशुलः पीठसर्पी स्यात्तुलो रोमशः स्मृतः॥ १३७

---

१ 'सिद्धोदकम्' क. २ 'निर्गण्डक' क. ३ 'दिगम्बरका' ख-ग. ४ 'जलपत्रिका' क. ५ 'कर्कटं' क. ६ अयं श्लोकः ख-ग-पुस्तकयोर्नास्ति. ७ 'गृह्याश्मा गिरिकच्छपः' क. ८ 'सौधं' ख-ग. ९ 'पांशुकुलीं' ख-ग. १० 'एकंनटः' ख-ग. ११ 'चाटुवटुः' क. १२ 'पांशुरो दंशकः' ख-ग. १३ 'सोमालं' ख-ग. १४ 'द्रुणहः' ख-ग. १५ 'लटाम्र' क. १६ 'कोमासिका तु जालिका । पुन्नातुकः फलेलांकु' ख-ग. १७ 'त्रिणता' क. १८ 'दोर्म्रहक्षामाः' ख-ग. १९ 'सिङ्गाणं काचभाजनम्' ख-ग. २० 'गर्वाटो दण्डवासी स्यात्स्तेनः शङ्किकवर्णकः' क. २१ 'तुः पूरण' ख-ग. २२ 'शूना' ख-ग. २३ 'पाली' क. २४ 'गुरुण्डा' क. २५ 'शिवानकः' क. २६ 'श्रीद्रहः' क. २७ 'वागुविकः' क. २८ 'पूगपात्रे च फालकम् । तरवारिः कृपाणे स्यात्' क. २९ 'च गभोलिकः' ख-ग. ३० 'तरुणी' ख-ग. ३१ 'च्छुरा' ख-ग. ३२ 'षण्डपालस्तु पण्डिकः' क. ३३ 'दुलुलो' ख-ग.

पूगपात्रे फरुवकं कवन्धो रुण्डमुच्यते । तूलिका स्यान्नवलिका स्यानमालस्यमिष्यते ॥ १३८
भाजने कमठं विद्यात्पुण्यश्लोको नलो मतः । गौरवे प्रतिपत्तिः स्याद्वारिः पथिकसंहतिः ॥ १३९
यामिकिन्यपि यामिक्री हाफिका चोपपुष्पिका । वातपुत्रे विटधरौ निर्माल्यं निर्मलं मतम् ॥ १४०
इन्द्रासने मता गुंञ्जा गुंलुच्छो गुच्छको मतः । भोगावासो वासगृहं मेण्ठो हस्तिपकः स्मृतः॥१४१

मायुः पलाग्निः पलनं ज्वरः स्यादजीर्णमग्नंधमिरामयश्च ।
तृप्तिश्च सौहित्यमुदन्तिका स्यात्क्षुक्षारिका भोगपिशाचिका च ॥ १४२

गोलो जलवरण्डः स्यात्केला कुम्भीरमक्षिका । वहनं वार्भटः पोतस्तैरालुश्चाहिपुत्रकः ॥ १४३
काहलं तु महानादं मेंश्राङ्कं पत्तनं मतम् । स्यादरित्रं तरिरथः पात्रपालस्तुला धटः ॥ १४४
काकिनी पणतुर्यांशे ज्वलदङ्गारमुल्मुकम् । आजानं च स्वभावः स्यान्मञ्जिका वारसुन्दरी ॥ १४५
नीलमणिर्मसारः स्याद्गुञ्जा पाठहिका मता । भार्या पाणिगृहीती च दुकूलं क्षौममुच्यते ॥ १४६
ग्रन्थस्य निर्मितौ शय्या वधूटी वधुटी जनी । वन्दिचौरो माचलः कुम्भिलः संधिहारकः॥ १४७
अभ्रमुस्त्वभ्रनागस्य कुमुदस्य तु पिङ्गला । अङ्गना वामनस्य स्यादञ्जनस्याञ्जनावती ॥ १४८
कपिला पुण्डरीकस्यानुपमा सुप्रतीकस्य । शेषस्य ताम्रकर्णी च शुभ्रदन्ती सार्वभौमस्य ॥ १४९
सेवाचाटूक्तिरालोको मठो गन्त्री रथः स्मृतः । चिपिटो धान्यचमसः खांदिको लाज उत्तुषः॥१५०
अभ्यासे खुरली योग्या माठिः पञ्चशिरा मता । शैवः स्मृतो देवलकः खेटको वसुनन्दकः ॥१५१
पुरन्दरा तु मुरेला कावेरी चार्धजाह्नवी । कौमुदः कार्तिको मासः सौभिकस्त्वैन्द्रजालिकः ॥ १५२
प्रहेलकं वाचनकं वीक्षापन्नः सविस्मयः । कुटलं पटलं नीव्रं वीथी गृहतटी मता ॥ १५३
सर्ववेशी नटः प्रोक्तो मन्दाक्षे तु नेटान्तिका । मृत्फली कुचिकः प्रोक्तः शालूरो वृष्टिभूः प्लवः१५४
स्वेदः सिप्रस्तनुरसस्त्वकपुष्पं तु लगङ्कुरः । नवोढा नववरिका दिकरी नवयौवना ॥ १५५
सौवर्चले तु रुचकं हिङ्गुरे रक्तपारदम् । रक्तोपलं गैरिकं च पारदे सूतकं विदुः ॥ १५६
शौलूरः कम्बलः ख्यातश्चैर्मिलकण्डुरो व्रणः । कर्पटः पारिहार्यः स्यादीर्ष्यालुः कुहनः स्मृतः॥ १५७
ऋणमोक्षो विगणनं लग्नके ऋणमार्गणः । भिक्षाशित्वं तु पैण्डिन्यं मण्डः पिच्छान्धसस्तथा॥१५८
वायुकेतुः क्षितिकणः स्यादास्फाले झलज्झला । नष्टाप्तिसूत्रे लोप्त्रं स्यात्पाप्ययानं शिवीरथः ॥ १५९
मल्लयात्रा मेल्लवी स्यान्निर्भर्त्सनमलक्तकः । कौशलिका प्राभृतकमट्टकं लासकं विदुः ॥ १६०
स्वदोषाच्छादनं मक्षश्चुल्ली स्यान्मूलकारिका । वाताश्वो भूमियक्षश्च वारुर्विजयकुञ्जरः ॥ १६१
प्रभाते गोसगोसर्गावञ्जनी लेपकामिनी । उत्कटो गण्डकुसुमं सिद्धः सौमेधिको मतः ॥ १६२
वृषाकपिः शिखी शुष्मा भस्म पार्घटमर्घटम् । उष्ट्रवामीरथोध्युष्ट्रो गन्त्री लघ्वी द्विवेसरा ॥ १६३

---

१ 'स्यान' क. २ 'प्रोक्तं' ख-ग. ३ 'संतति:' क. ४ 'वातापुत्रे विटरवौ' क. ५ 'तथा' क. ६ 'गञ्जा' क. ७ 'गुलुञ्छो' ख-ग. ८ 'भोगो' ख-ग. ९ 'कणा' ख-ग. १० 'वहलं वार्वटः' ख-ग. ११ 'स्थिराम्बुश्चापि हालकः' क. १२ 'मार्दङ्गं' ख-ग. १३ 'अयानं' ख-ग. १४ 'लञ्जिका' क. १५ 'पटहिका' क. १६ 'वर्धुटी' क. १७ 'खानिको लाजः उद्दुषः' क-ख. १८ 'भौतो' ख-ग. १९ 'सुबला' क. २० 'स्त्विन्द्रजालिकः' ख-ग. २१ 'नटाम्निका' क. २२ 'साशूकः' ख-ग. २३ 'ईर्मम्' क, 'ईर्मा' ख-ग. २४ 'कटकः' क. २५ 'पैशुन्यं' ख-ग. २६ 'माल्लवी' ख-ग. २७ 'भूमिपक्ष' ख-ग. २८ 'गोसन्दौ' क. २९ 'अञ्जनिर्लेप्यकारिणी' क. ३० 'मोत्कटे' क. ३१ 'पार्भटमर्भटम्' क.

कृकणः कृमिरुद्दिष्टः [1]शकृत्कीटेऽल्पकेरुका। [2]अण्डीरोऽसत्कृते प्रोक्तः स्कन्धचापे विहङ्गिका॥१६४
[3]उलूतोऽजगरः प्रोक्तो द्विमुखोहिरहीरणिः। पुरोटिः पुरसंस्कारे हट्टी पुरतटी मता॥ १६५
[4]मृणालिनी पुटकिनी स्थासको बुद्बुदो भवेत्। कलाची तु प्रकोष्ठः स्याद्धस्तपुच्छस्तु [5]कैन्युषम्॥१६६
उत्साहः सूत्रतन्तुः स्यात्[6]पिण्डीरो नीरसः स्मृतः। हरिणहृदयो भीरुः संदेशोक्तिस्तु वाचिकम्॥१६७
शालाजिरो वर्धमानं कुसीदं तु [7]फैलाम्बिका। चर्चा तलप्रहारः स्यात्कर्करं [8]मुद्गरं विदुः॥ १६८
गोष्ठयागारोऽपि [9]गुञ्जा स्याच्चिन्तावेश्मनि दार्वटम्। मानग्रन्थिर्भवेन्मन्तुर्निष्कुटो गृहवाटिका॥१६९
शैलस्य कटके दन्तस्तद्दिनं प्रतिवासरम्। सूत्रमेवं सूत्रतन्तुः कृशरापि तिलोदने॥ १७०
स्यादासवोऽपि कुरसः सरकं मद्यभाजनम्। निश्चुक्कणं दन्तशाणं गोग्रन्थिः शुष्कगोमये॥ १७१
अष्टापदं नयपीठी नयस्तु जतुपुत्रकः। बिन्दुतन्त्रो भवेदक्षः पाश्चालीशारिशृङ्खलाः॥ १७२
प्रस्तारस्तलिनं शय्या रोमगुच्छं प्रकीर्णकम्। शिवा लोपाशिका ज्ञेया सरमा तुम्बरी शुनी॥१७३
पादाङ्गदं हंसकः स्यात्प्रतिकर्म प्रसाधनम्। [11]कर्णपाशी तु कर्णान्दूरङ्गुरीयकमूर्मिका॥ १७४
[12]खातभूः प्रतिकूपः स्याल्लम्भा स्याद्वाटशृङ्खला। कंधरातोरणं कण्ठी [13]सूत्राली गलमेखला॥ १७५
शासनं धर्मकीलः स्यात्[14]भूकृतं शूद्रशासनम्। पट्टोलिका क्षुप्तकीला सिन्दूरं रक्तशासनम्॥ १७६
रासस्तु गोदुहां क्रीडा गीतं पारावती तथा। वेणुर्यवफलो वंशो नवीने [15]नैवकालिका॥ १७७
[16]मुखघण्टा कुलकुली [17]तैलाची नलपट्टिका। नीपो धाराकदम्बः स्याद्वीरभद्रं तु वीरणम्॥ १७८
खङ्गटस्तु [18]बृहत्काशः कोशाङ्ग[19]मिल्कटं विदुः। गण्डीरस्तु [20]समण्डः स्याद्धीवेरं वारिबालकम्॥ १७९
सितोत्पलं गन्धसोमं हरिमन्थोऽतिमुक्तकः। कर्कारकस्तु कालिङ्गः शृङ्गाटो जलकण्टकः॥ १८०
हिलमोची जलब्राह्मी वायसी काकमाचिका। पुंनागः केसरश्चैव चाम्पेयो नागकेसरः॥ १८१
स्याद्दोलिका तु [21]हिन्दोला लावण्यं लवणं मतम्। सुखाशो राजतिमिशः कटुको राजसर्षपः॥१८२
सितमाषो राजमाषो मसूरो [22]व्रीहिराजकम्। मधुक्षीरस्तु खर्जूरः शालः शङ्कुतरुर्मतः॥ १८३
मुस्तो राजकशेरुः स्याद्रौहिणश्चन्दनद्रुमः। काकमद्गुर्जलरङ्कुः कोयष्टिर्जलकुक्कुभः॥ १८४
वर्तिका विष्णुलिङ्गी स्याद्वनाखुः शशकः स्मृतः। ताम्रकृमिरिन्द्रगोपो गृहगोधा गृहालिका॥ १८५
दिवान्धो हरिनेत्रः स्याद्गोनर्दी लक्ष्मणा मता। [23]कुरंकुरः पुष्कराह्वो [24]वोद्गुलिस्तरुकूलिका॥ १८६
कोलपुच्छस्तु कङ्कः स्याद्[25]गर्गाटो योगलालिनः। ग्राममद्गुरिका शृङ्गी राजशृङ्गस्तु मद्गुरः॥ १८७
पङ्कग्राहस्तु मकरः शफरः श्वेतकोलकः। [26]चिंगटस्तु महाशल्कः [27]पोतांधानं जलाण्डकम्॥ १८८
फलकी तु चित्रफली मत्स्यराजस्तु रोहितः। [28]काकविकस्तु काकाची वकाची वकवर्तिका॥ १८९
कवयी क्रकचपृष्ठी [29]खलेशस्तु खलेशयः। इल्लिशो राजशफर इक्ष्वाको जलवृश्चिकः॥ १९०

---

१ 'कृशकीटेऽम्यकारुका' ख-ग. २ 'भारवाहो भारिकः स्यात्' ख-ग. ३ 'उन्नतो' ख-ग. ४ 'मृडालिनी' क. ५ 'कल्वुषम्' क. ६ 'पिण्डरो' क. ७ 'कलाम्बिका' ख-ग. ८ 'मुकुरं' क. ९ 'गञ्जः' ख-ग. १० 'प्रोक्ता' क. ११ 'कर्णपाली' ख-ग. १२ 'भूर्वृत्तकीलः' क. १३ 'सूत्रनी' क. १४ 'न्माकूतिः सूत्रशासनम्' क. १५ 'नवहालिका' क. १६ 'मुखघण्टः' क. १७ अयमर्धश्लोकः क-पुस्तके नास्ति. १८ 'बृहत्कोशं' क. १९ 'मिक्कटं' क. २० 'समण्ठः' ख-ग. २१ 'हिन्दोले' क. २२ 'व्रीहिकाञ्चनः' ख-ग. २३ 'कुरुकुरुः' क. २४ 'वातुलिस्तरुतूलिका' ख-ग. २५ 'गर्गाटो योगनाविकः' ख-ग. २६ 'चिङ्गट' क. २७ 'पोत्राधानं' क. २८ 'काकोचिकस्तु काकोची' ख-ग. २९ 'खञ्जटस्तु' क.

दण्डपालोऽर्धशफरः कङ्कत्रोटो[1] जलव्यथः । लघुगर्गस्त्रिकण्टाख्यः[2] शिताङ्गो[3] वालुकागडः ॥ १९१
कनकपलः कुरुविस्तः करिकेवलो विधानं स्यात् ।
.................................................................... १९२
भ्रामी[5] तु पङ्कगडकः शकुलो दण्डवालकः[6] । निचोलकं निचुलकं मन्दामणिरलिंजरः[7] ॥ १९३
वेदिः स्थण्डिलसिकतं[8] पल्याटो निष्कुटः स्मृतः । लोपासिका खिङ्करी स्याद्भक्षिरा सङ्गसङ्गिनी १९४
अङ्केष्वेवाङ्कमङ्गानि स्मृतमुत्तानमुत्कटम् । स्यान्मार्जिता रसाला च चुक्कारः सिंहनादकः ॥ १९५
कर्णगूथं कर्णमलं सिंहाणं नासिकामलम् । दन्तमलं पुष्पिका स्यात्कुलुकं रसनामलम् ॥ १९६
कारंधमी धातुवादी दरिद्रो दुर्विधो[9] मतः । स्यान्मध्यगण्डकं विद्यात्पक्षद्वारं खडक्किका ॥ १९७
आर्द्रवस्त्रं जलार्द्रा[10] स्याद्दोष आदीनवो मतः । योजनं मार्गधेनुः स्यान्नल्वः किष्कुचतुःशतम् ॥ १९८
चोलको वारवाणः स्यात्कूर्पासस्त्वर्धचोलकः । नागोदरमुरस्त्राणं जङ्घात्राणं तु मङ्कणम् ॥ १९९
स्यात्प्रासादो देवकुलं तत्तु चैत्यं विना मुखम् । तृणपूली तु चश्वा स्याद्यथार्थं तु यथातथम् ॥ २००
आघातनं वधस्थानं कारा बन्धनवेश्मनि । स्कन्धाग्निः स्थूलकाष्ठाग्निस्तृणाग्निस्तु भवेत्समः ॥ २०१
गङ्गणस्तु[12] करीषाग्निर्ज्वराग्निस्त्वाधिमन्थवः । श्वशुरः[13] स्वामिजनकः साधुधीर्वरवत्सला ॥ २०२
भङ्गसार्थस्तथाविद्धो[14] हेलावूकोऽश्वविक्रयी[15] । गृहवित्तो गृहपतिस्तुम्बीपुष्पं[16] लताम्बुजम् ॥ २०३
लोहिका खरसोनिः स्यान्निलिम्पस्त्रिदशः स्मृतः । गण्डूपदी भूलता स्यान्मण्डरी[17] घुघुरी मता॥ २०४
मुच्छट्यङ्गुलिसंदेशो[18] लङ्घनं चापतर्पणम् । गजढक्का मदाम्नातः शृङ्गारो गजमण्डनः ॥ २०५
प्रतिमो रणरङ्गः स्यात्कटकः कदरः सृणिः । वीची जललता भृण्डिः[19] फेनाग्रं बुद्बुदं विदुः ॥ २०६
जम्बालो जलकल्कः स्याद्दारणिः[20] कुलदुन्दुकः । विनाकृतं विरहितं गण्डूषो मुखपूरणे ॥ २०७
काष्ठमल्लः शवयानं कषायस्तुवरो रसः । पर्वावधिः परुर्ग्रन्थिः पिञ्जला[21] पञ्चकाहला ॥ २०८
गोहेलं[22] छगलं गोविट् परिघो द्वारकण्टकः । कर्करं चूर्णखण्डेष्टं कर्कसारं[23] करम्भकम् ॥ २०९
स्पर्धायामपि सहर्षः कठोरं कर्कशं[24] विदुः । बन्दी कवरकीमाहुरासन्दी[25] लघुखट्विका ॥ २१०
घटराजः स्मृतः कुम्भो गर्गरी कलसी मता । विदूरं जन्यमुत्पातं निर्घाते व्योममुद्गरः ॥ २११
पर्यस्तिका गुणभ्रंशो गाङ्गेष्टी कटशर्करा । उक्का कुलुकगुञ्जा स्यात्कुलकस्तालमर्दलः ॥ २१२
सूत्रकोणो डमरुकं सूत्रवीणा च लावुकी । मेलानन्दो मसिमणिर्लेखनी वर्णतूलिका ॥ २१३
धातूपलः कठिनिका मेला पत्राञ्जनं मसिः। तर्कुटी सूत्रला तर्कुर्झल्लोलस्तर्कुलासकः ॥ २१४
वर्तुला[26] तर्कुपाटी स्यात्पञ्जिका तूलनालिका । निर्वेष्टनं नालिचीरं[27] दग्धेष्टकं च झामकम् ॥ २१५
दोला प्रेङ्खा पुमान्प्रेङ्खो वारासनं वाःसदनम् । पिष्टवर्तिस्तु चमसश्चित्रापूपश्चरुव्रणः ॥ २१६
म्लेच्छितं परभाषायां लुण्टिका न्यायसारिणी । सूकापूटस्तृणमणिश्छात्रगण्डः[29] पदाद्यवित् ॥ २१७

---

१ 'कङ्कतोडो जलव्यधः' क. २ 'लघुगङ्गस्त्रिकण्टाक्षः' क, 'त्रिकण्टः स्यात्' ख-ग. ३ 'शितच्छिद्रो वालुकागलः' क. ४ 'पक्षग्राहस्तु माकरः' क. ५ 'वामी' क. ६ 'दण्डपालकः' ख-ग. ७ 'रलिंजनम्' क. ८ 'स्तण्डिलसिकतम्' क. ९ 'दुर्विधः स्मृतः' ख-ग. १० 'जलार्द्रः' ख-ग. ११ 'तरुकुलम्' क. १२ 'इङ्गलः' ख-ग. १३ अयमर्धश्लोकः क-पुस्तके नास्ति. १४ 'रङ्गसार्थ' क. १५ 'हेलावुकों' ख-ग. १६ 'लौहिका खरलः स्मृतः' क. १७ 'न्मृत्करी' क. १८ 'स्वच्छट्य' ख-ग. १९ 'भाण्डः' क. २० 'द्दरणिः कूलदुन्दुकः' क. २१ 'पिञ्जोला' ख-ग. २२ 'गोहलं' क. २३ 'कर्कशारं करम्बकम्' क. २४ 'कर्करं' ख-ग. २५ 'रानन्दी' क. २६ 'वर्तनं तर्कुपीठा' ख-ग. २७ 'नाडिचीरं' ख-ग. २८ 'शूकापूट्टः' ख-ग. २९ 'छात्रखण्डः पादघटावित्' क.

कोशकारः कीटतन्तुर्घुणः स्यात्काष्ठलेखकः । धेनाया तु धनेच्छायां प्राणाद्यो निःस्पृहे मतः ॥२१८
वृषशृङ्गी भृङ्गराजो वरोलस्तृणषट्पदः । तुटुमो रन्ध्रबभ्रुः स्याद्दीना लिङ्गालिका मता ॥ २१९
विदारुः क्रकचपादो द्रुणश्चाली च वृश्चिकः । पद्माक्षं पद्मबीजं च कर्णिका बीजमातृका ॥ २२०
रङ्गमाता भवेल्लाक्षा धीतेटी दुहिता मता । चाटुलोलश्चटुल्लोलो जैकूटो दोहदः स्मृतः ॥ २२१
धौताञ्जली धौतवली वज्रकं दुग्धपाचनम् । चित्रोक्तिः पुष्पशकटी चासेचनमतृप्तिकृत् ॥ २२२
कालरात्रिर्भीमरथी अस्वाध्यायो निराकृतिः । ब्रह्मवादः श्रुतादानं विश्वकद्रुरोखेटिकः ॥ २२३
हिंसालुकः खादुकः श्वा योगितोऽलर्क इष्यते । द्रुगडस्तूर्यगण्डः स्यादादर्शो मुकुरः स्मृतः ॥ २२४
राहूत्सृष्टो रसोनः स्याद्वङ्करी कोलनासिका । मयटस्तृणहर्म्यः स्यान्मंद्राङ्को मञ्चमण्डपः ॥ २२५
सेवद्रङ्गः पणग्रन्थिश्चितिका कटिशृङ्खला । विशारदः प्रसिद्धः स्याच्छ्रीर्लक्ष्मीरिन्दिरा मता ॥ २२६

इति पादावधिः ॥ ३ ॥

---

प्राक् शालावृकशब्दादर्धैः, पादैरतः परं शब्दाः ।
नानार्था अपि शब्दैर्गज(गुड)शब्दात्प्रभृति विज्ञेयाः ॥ २२७

क्षीरदारौ गुडक्षोदे गुडो मधुनि चेष्यते । कूपीटपानमिच्छन्ति केनिपाते च वारिधौ ॥ २२८
रसाला रसनायां स्यान्मथिते दध्नि पाणिना । पाश्वलोहे श्रुतिकटः प्रायश्चित्ते सरीसृपे ॥ २२९
विटोऽद्रौ लवणे षिङ्गे मूषके खदिरेऽपि च । वितण्डा करवीर्यां च दर्वीवादप्रभेदयोः ॥ २३०
कारण्डवे करण्डः स्यान्मधुकोशे दलाढके । खंटः श्लेष्मण्यन्धकूपे प्रहारान्तरकूपयोः ॥ २३१
पिच्छा पूगच्छटाकोषे चोलिकाफणिलालयोः । पिच्छिलः स्फोटिकावात्यावामावाताखुपांशवः २३२
धाराङ्कुरो वार्युपले नाशीरे शीकरेऽपि च । कोट्टारो नागरे कूपे पुष्करिण्यां च पाटके ॥ २३३
नागाङ्गना नागयष्टिः करिसुन्दरिका क्वचित् । पूत्यण्डः पूतिकीटे च गन्धकीटे च दृश्यते २३४
कटुकायां कैश्वतटे कथिता शकुलादनी । क्रौञ्चादनस्तु घेञ्चुल्यां चिश्चोटकमृणालयोः ॥ २३५
सन्तानिका क्षीररसे तथा मर्कटजालके । खेङ्गधेनुफले फेने पराङ्गस्तैलयन्त्रके ॥ २३६
भालाङ्को लोहिते दृष्टः करपत्रे च कच्छपे । संकरोऽग्निचटत्कारे संमार्जन्यपसारिते ॥ २३७
गोधाकलम्बिकादन्तिवधूषु च कटंभरा । पंकारः शैवले सेतौ सोपाने जलकुब्जके ॥ २३८
पृष्ठशृङ्गीति शब्दोऽयं दंशभीरौ पृथूदरे । मेघपुष्पं तु नादेये पिण्डाभ्रे सलिले विदुः ॥ २३९
पित्तज्वरे कुलालस्य पवने कूटपाकलः । स्तनवृन्ते पिप्पलकं तथा सीवनसूत्रके ॥ २४०
कार्पटिकोऽन्यमर्मज्ञे छात्रे स्यात्कालदेशिनि । जिह्मापो वृषदंशे च स्यादिन्द्रमहकामुके ॥ २४१
लाभे कामगुणे रूपे आमिषाख्या च भोजने । छायापथे च दूर्वायां हरितालीध्वनिर्मतः ॥ २४२

---

१ 'त्कोष्ठलेखकः' क. २ अयमर्धश्लोकः ख-ग-पुस्तकयोर्नास्ति. ३ 'क्रकचे पादो' ख-ग. ४ 'साधुधीर्वरवत्सला' क. ५ 'धीलटिर्दु' ख-ग. ६ 'चाटलोल' ख-ग. ७ 'जैंगटो' ख-ग. ८ 'दुग्धपाचकम्' क. ९ 'रखेटिकः' ख-ग. १० 'कुत्रङ्गो' ख-ग. ११ 'अरत्रङ्गः' क. १२ 'थिः क्षितिका' क. १३ अयमर्धश्लोकः क-पुस्तके नास्ति. १४ 'गुडक्षोदो' क. १५ 'शङ्खे' क. १६ 'धटः' क. १७ 'कोणिका' क. १८ 'पिच्छलो' ख-ग. १९ 'वायुफले' क-ख-ग. २० 'प्रत्यण्डः प्रतिकीटे' क. २१ 'कचटके' क. २२ इतः प्रभृति सार्धद्वयश्लोकी क-पुस्तके नास्ति. २३ 'पाटलिको' ख-ग, 'कापटिको' मेदिन्याम्. २४ 'कर्मणि' ख-ग. २५ 'आमिष्या स्यात्तु' क.

मालुधानश्चित्रसर्पे महापद्मेऽपि दृश्यते। उन्मत्ते क्षपणेऽनर्थकरे **कार्यपुट**ध्वनिः॥ २४३
**संघाटिकां** विदुर्युग्मे कुट्टन्यां जलकण्टके। शराहते च सर्पे च **प्रचलाकं** प्रचक्षते॥ २४४
चन्द्रिकायामब्जधूलौ रक्ताङ्गे **हरिचन्दनम्**। स्त्रीरत्ने च हरिद्रायां लाक्षायां **वरवर्णिनी**॥ २४५
कृकलासे चित्रकोले **तृणगोधा**ध्वनिं विदुः। **डिम्बं** भये कलकले फुप्फुसे च प्रचक्षते॥ २४६
**धुन्धुमारः** शक्रगोपे गृहधूमे गृहालिके। [1]**तिक्तपर्वा** हिलमोचीगुलूचिमधुयष्टिषु॥ २४७
**जलबिल्वः** कर्कटके पश्वाङ्गे जलवल्कले। **चोलकी** नागरङ्गे च करीरे किष्कुपर्वणि॥ २४८
कुलालचक्रे वाहने **दण्डारः** [2]शरपत्रके। दिग्जये वरयात्रायां **दण्डयात्रां** विदुर्बुधाः॥ २४९
उष्ट्रे दासीसुते चैव **दासेरक** इति स्मृतः। **जलगुल्मो** जलावर्ते कच्छपे जलचत्वरे॥ २५०
**काहलां** वेणुवीणादिध्वनिं [3]नानाध्वनिं विदुः। घोङ्के कारुण्डिकायां च [4]**जाहक**ध्वनिरिष्यते॥ २५१
त्रिधादुत्कलिकाशब्दमुत्कण्ठावीचिवाचकम्। दृष्टिविषे सूचके च **द्विजिह्वः** परिकीर्तितः॥ २५२
मत्ताङ्गनाविदग्धस्त्रीनर्तकीषु च **वाणिनी**। रोमावलीमेघमालाकरटीषु च **कालिका**॥ २५३
**मञ्जुलो** मधुरे कुञ्जे जलरङ्गे [5]जलाञ्चले। अनुकम्प्यस्**तपस्वी** स्यात्तपस्वी च धृतव्रतः॥ २५४

इति नानार्थेऽर्धश्लोकावधिः॥ ४॥

---

**शालावृकौ** कपिश्वानौ **निष्ठुरः** कठिनेऽत्रपे। **छर्दनोऽ**लंबुषे निम्बे **व्युष्टं** कल्ये तथोषिते॥ २५५
इक्षौ करीरे **कोषाङ्गं** व्रणचिह्ने घुणे **किणः**। [6]**नर्मठ**श्चिबुके षिङ्गे **छेकः** षट्पदवक्रयोः॥ २५६
**धाराट**श्चातके वाहे **लञ्जः** स्यात्पैङ्गुकच्छयोः। **निर्मटः** कर्परे सूर्पे **गोकीलो** मुशले हले॥ २५७
[10]**भुंण्डिरी**र्वारुकूष्माण्डौ **फाणि**र्गुडकलम्बयोः। [11]**तण्डुकः** खञ्जने फेने [12]लट्वाशिन्यां खगान्तरे॥ २५८
गजेऽपि **नागमातङ्गौ** **विशेष**स्तिलकेऽपि च। **निष्पावः** शूर्पवातेऽपि **सूत्रकण्ठो** द्विजेऽपि च २५९
विदुष्यपि स्मृतो **वेधाः** **पुरं** देहेऽपि दृश्यते। स्वरेऽपि **कण्ठ** आख्यातः **शरत्**संवत्सरेऽपि च २६०
लाक्षापि **जतुका** प्रोक्ता नमाचार्येऽपि **हिण्डकः**। नौसेचनेऽपि **वारुण्डः** पादालिन्देऽपि [13]**पैङ्किलः**॥
**कचो** गीर्पतिपुत्रेऽपि कुन्देऽपि **भ्रमरो** **वटौ**। **भाण्डं** भूषणमात्रेऽपि **रुधिरं** कुङ्कुमेऽपि च २६२
[14]गोमेदकेऽपि **गङ्गोलः** **कटाहो** निरयेऽपि च। मरीचेऽपि भवेत्**कृष्णः** शूनाङ्गे **गुणिका** भवेत्॥
शरुयामपि **खड्गधेनु**र्**निस्त्रिंशो**ऽकरुणेऽपि च। स्कन्धावारेऽपि **कटको** **बिन्दु**स्तु विदुरेऽपि च॥
**जलसूचि**र्जलौकापि वेश्यायामपि **पिङ्गला**। **अहि**रप्युदरावर्ते **विशिखा**पि खनित्रकः॥ २६५
**भ्रमरः** कामुकेऽपि स्यादङ्गीकारेऽपि **चाथकिम्**। **महालयो**ऽपि तीर्थे स्याद्भोजनेऽपि **तथाह्निकम्**॥
**बलि**श्चामरदण्डेऽपि पादपीठेऽपि **पादपः**। **गोदन्तो** हरितालेऽपि **वानीर**श्चित्रकेऽपि च॥ २६७
आधारेऽप्**याशयः** प्रोक्तो गजसंघेऽप्**यवग्रहः**। कथिता **सटा** जटायां च मार्गणेऽपि **मृगः** क्वचित्॥
मूषिकापिभ वेह्नीना [15]**जटाटङ्को** हरेऽपि च। [16]अश्रमकृतेऽपि **फाण्टं** मृद्भाण्डेऽप्**युष्ट्रिका** भवेत् २६९
अङ्गसादेऽपि **सदनं** [17]वनदावेऽपि **झङ्झिलः**। [18]दन्तमासेऽपि **वेला** स्याच्**छुल्कं** नारीधनेऽपि च २७०
निम्बेऽपि **हिङ्गुनिर्यासो** मेलानन्देऽपि [19]**वार्दलम्**। लेखन्यां **कर्णिका**पि स्यात्कठिन्यामपि **वर्णिका**॥

---

१ 'रक्तपर्वा' क. २ 'शरयन्त्रके' ख-ग. ३ 'नालाध्वनिं' क. ४ 'जालक' क. ५ 'जलाञ्जने' क. ६ 'नर्मटं चम्बुके' ख-ग. ७ 'प्रज्ञ' क. ८ 'निर्मुटः' क. ९ 'गोकिलो' क. १० 'भुण्डारिर्वारि' क. ११ 'तण्डकः' क. १२ 'खट्वा' क. १३ 'साङ्किलः' क. १४ इतः प्रभृति श्लोकद्वयी क-पुस्तके नास्ति. १५ 'कटाटङ्को' क. १६ 'अधमकृते' क. १९ 'वनदाने' ख-ग. १८ 'दण्डमासे' क. १९ मार्दलम्' क.



10

पटलेऽपि कासमर्दो दिष्टं दैवेऽपि कीर्तितम् । दाडिमेऽपि च हिण्डीरं वंशो वेणौ कुलेऽपि च ॥

इति नानार्थे पादावधिः ॥ ५ ॥

---

[1]काव्यदीनामनन्तत्वाच्छब्दानां तु विशेषतः । क कदा केन किं दृष्टमिति को वेदितुं क्षमः ॥ २७३

अतः शब्दः क दृष्टोऽयमर्थतश्चापि कीदृशः । इति काव्यमलीकं स्यान्मात्सर्यमलिनात्मनाम् ॥ २७४

शब्दार्णव उत्पलिनी संसारावर्त इत्यपि । कोषा वाचस्पतिव्याडिविक्रमादित्यनिर्मिताः ॥ २७५

आदाय सारमेतेषामन्येषां च विशेषतः । हारावली निबद्धेयं मया द्वादशवत्सरैः ॥ २७६

उपास्य सर्व[2]ज्ञमनन्तमीशं भूत्वातिथिः श्रीधृतिसिंहवाचाम् ।
हारावली द्वादशमासमालैर्विनिर्मितेयं पुरुषोत्तमेन ॥ २७७

नानाकाव्यपुराणनाटककथाकोषेतिहासस्मृति-
ज्योतिःशास्त्रगजाश्वमानवभिषक्कोषान्प्रयत्नादि[3]यम् ।
दृष्ट्वान्यानि च शाब्दिकैः सह कृता हारावली यत्नतः
कर्तव्योऽत्र न संशयः सुमनसः शब्दार्थलिङ्गे[4]ष्वपि ॥ २७८

[5]सुधिया जनमेजयेन यत्नाद्धृतिसिंहेन समं निरूपितेयम् ।
विदितो बहुदृश्वभिः कवीन्द्रैर्भुवि कोषानुमतः श्रमो मदीयः ॥ २७९

हित्वा महाशाब्दिकताभिमानं मात्सर्यमन्यत्र मुहुर्निधाय ।
हारावलीं यः प्रकरोति कण्ठे विदग्धगोष्ठीषु परं स भाति ॥ २८०

इति श्री[6]महामहोपाध्यायपुरुषोत्तमदेवप्रणीता हारावली [7]समाप्ता ।

---

---

१ 'वाच्य' क. २ 'सुवर्णवेषं' क. ३ 'दिकम्' ख-ग. ४ 'ष्वतः' क. ५ इदं श्लोकद्वयं क-पुस्तके नास्ति. ६ 'महामहोपाध्याय' क-पुस्तके नास्ति. ७ 'पर्यवसिता' क.

॥ श्रीः ॥

# अभिधानसंग्रहः ।

## ( ४ )

### श्रीपुरुषोत्तमदेवप्रणीत

## एकाक्षरकोषः ।

अकारो[1] वासुदेवः स्यादाकारश्च पितामहः । पूजायामपि[2] माङ्गल्ये आकारः परिकीर्तितः ॥ १

इकार उच्यते कामो लक्ष्मीरीकार उच्यते । उकारः शंकरः प्रोक्त ऊकारश्चापि रक्षणे[3] ॥ २

ऋकारो देवमाता[4] स्यादॄकारो दनुजप्रसूः । लृकारो देवयोनिः[5] स्यात् लॄर्माता[6] सद्भिरुच्यते ॥ ३

एकारः कथितो[7] विष्णुरैकारश्च[8] महेश्वरे । ओकारस्तु भवेद्ब्रह्मा औकारो[9] रुद्र उच्यते ॥ ४

अं[10] स्याच्च परमं ब्रह्म अः स्याद्देवो[11] महेश्वरः । कः प्रजापतिरुद्दिष्टो को[12] वायुरिति शब्दितः ॥ ५

कश्चात्मा[13] च समाख्यातः कः प्रकाश उदाहृतः । कं शिरो जलमाख्यातं कं सुखं च प्रकीर्तितम् ६

पृथिव्यां कुः समाख्याता कुत्सायां[14] कुः प्रकीर्तितः । खमिन्द्रियं[15] समाख्यातं खमाकाशमुदाहृतम् ॥७

खं[16] स्वर्गे च समाख्यातं खं सर्पे च प्रकीर्तितम् । तथा श्वभ्रे च खं प्राहुः खं शून्ये च प्रकीर्तितम् ८

गो गणपतिरुद्दिष्टो[17] गो गन्धर्वः प्रकीर्तितः । गं[18] गीतं गा च गाथा स्याद्गौर्धेनुर्गौः[19] सरस्वती ॥ ९

गौर्मातापि[20] समुद्दिष्टा पृथिव्यां गौः प्रकीर्तिता । घो[21] घण्टायां समाख्यातः किङ्किणी घा प्रकीर्तिता ॥

उपमा[22] घा समाख्याता कुस्वरे घुः प्रकीर्तितः । हनने[23] घा समाख्याता गन्धने घः प्रकीर्तिता ॥ ११

ङकारो भैरवः ख्यातः ङकारो विषये[24] स्मृतः । चकारश्चन्द्रमाः ख्यातस्तस्करश्च[25] प्रकीर्तितः ॥ १२

निर्मलं छं समाख्यातं तरणी[26] छः प्रकीर्तितः । छेदने[27] छः समाख्यातो विद्वद्भिः शब्दकोविदैः ॥ १३

---

१ 'रः केशवः प्रोक्तः' ग. २ अयं श्लोकार्धः क-ग-पुस्तकयोर्नास्ति. ३ 'लक्षणे । रक्षणे चापि ऊकार ऊकारो ब्रह्मणि स्मृतः' ख. ३ 'वेदमाता' ख. ५ 'देवजातीनां माता सद्भिः प्रकीर्तिता । ऌकारः स्मर्यते पूर्वैर्जननी शब्दकोविदैः' ख. ६ 'ऌ च माता प्रकीर्तिता' क. ७ 'उच्यते' ख-ग. ८ 'रः स्यान्म' क-ख. ९ 'रोऽनल' ग, 'रोऽनन्त' ख. १० 'अं स्यात्परमं' क, 'अमिति स्यात्परं ब्रह्म' ग. ११ 'स्याच्चैव महेश्वरः' ख-ग. १२ 'कोऽर्कवाय्वनलेषु च' ख. १३ 'कश्चात्मनि मयूरे च' ख. १४ 'कुः शब्देऽपि' ख. १५ 'खमिन्द्रिये खमाकाशे खः स्वर्गेऽपि प्रकीर्तितः । सामान्ये च तथा शून्ये खशब्दः परिकीर्तितः' ख. १६ 'तथा स्वर्गेऽपि खं प्रोक्तं खं शून्येऽपि तदीरितम् ।' ग. १७ 'गणेशः समुद्दिष्टो' ख. १८ 'गं च गीतं च गाथा स्यात्' क, 'गं गीतं च शाखा च' ग. १९ 'गौश्च धेनुः सरस्वती' ख-ग. २० अर्धोऽयं श्लोकः क-ग-पुस्तकयोर्नास्ति. २१ 'घो घण्टिका समाख्याता' क, 'घा घण्टाथ समाख्याता घो घनश्च प्रकीर्तितः' ख. २२ अर्धोऽयं क-ख-पुस्तकयोर्नास्ति. २३ 'घंटीशे हनने घर्मे घुर्घोणा घूध्वनावपि' ख. २४ 'विषयस्पृहा' ख-ग. २५ 'तो भास्वरे तस्करे मतः' ख. २६ 'तरले' ख-ग. २७ 'छेदके' ख.

वे[1]गिते जः समाख्यातो जघने जः प्रकीर्तितः । जेता च जः समाख्यातः प्रसिद्धैः शब्दकोविदैः ॥१४
झ[2]ञ्झावाते झकारः स्यान्नष्टे झः समुदाहृतः । ञकारो गायने प्रोक्तो ञकारो घर्घरध्वनौ ॥ १५
[3]टंकारे टः पृथिव्यां टा टो ध्वनौ च प्रकीर्तितः । टो महेश्वर आख्यातः शून्ये च ठः प्रकीर्तितः १६
बृहद्ध्वनौ च ठः प्रोक्तस्तथा चन्द्रस्य मण्डले । डं[4]कारः शंकरः प्रोक्तस्त्रासध्वन्योः प्रकीर्तितः ॥ १७
ढकारः कीर्तिता ढक्का नि[5]र्गुणे च ध्वनावपि । णकारः [6]कीर्तितो ज्ञाने निर्णयेऽपि प्रकीर्तितः ॥ १८
तकारः कथितश्चौरः क्रोडे पुच्छे प्रकीर्तितः । शिलोच्चये थकारः स्यात्थकारो भ[7]यरक्षणे ॥ १९
दं[8] कलत्रे समाख्यातं दो दानच्छेददातृषु । धं धने च धनेशे धो धा धातरि निदर्शितः ॥ २०
धिषणा धीः समाख्याता धूश्च स्याद्भारचिन्तयोः । नकारः सु[10]गते बन्धे नुः स्तुतौ च प्रकीर्तितः ॥२१
नेतौ[11] नीश्च समाख्यातस्तरणौ नौः प्रकीर्तितः । प[12]वने पः समाख्यातः पाः पाने पाश्च पातरि ॥ २२
झ[13]ञ्झावाते फकारः स्यादक्षरे च प्रकीर्तितः । कोपे फिश्च समाख्यातस्तथा निष्फलभाषणे ॥ २३
प्रचेता बः समाख्यातः कलसे बः प्र[14]कीर्तितः । पक्षी च बिर्निगदितो गमने बिः प्रकीर्तितः ॥ २४
नक्षत्रं भं बुधैः प्रोक्तं भ्र[15]मरे भः प्रकीर्तितः । भा दीप्तिरपि भूर्भूमिर्भीर्भयं कथितं बुधैः ॥ २५
मः शिवश्चन्द्रमा वेधा मा च लक्ष्मीः प्रकीर्तिता । मा च मातरि माने च बन्धने [16]मूः प्रकीर्तितः २६
यशो यः कथितः शिष्टैर्यो वायुरिति शब्दितः । या[17]ने यातरि यस्त्यागे कथितः शब्दवेदिभिः ॥ २७
रश्च का[18]मेऽनिले वह्नौ श[19]ब्दे रुः परिकीर्तितः । ध[20]ने रौ[21] रीश्च रो धान्ये रुर्भये च प्रकीर्तितः ॥ २८
लं[22] इन्द्रे लवणे लः स्याल्ला दाने श्लेषणेऽपि लीः । व[23]दन्ति शं बुधाः श्रेयः शश्च शास्ता निगद्यते ॥२९
शीः शसं शयनं चाहुर्हिंसा शूश्च निगद्यते । षकारः कीर्त्यते श्रेष्ठे षू[24]श्च गर्भविमोचने ॥ ३०

१ 'निशिते जः समाख्यातः स्वजने जः प्रकीर्तितः । जो जेतरि समाख्यातो व्यञ्जने जः प्रकीर्तितः । वेगिते जः समाख्यातो जनने जः प्रकीर्तितः । योजने जिः समाख्यातो विद्वद्भिः शब्दशासनैः' क, 'जकारो गायने प्रोक्तो जयने जः प्रकीर्तितः । जेता जश्च प्रकथितः सूरिभिः शब्दशासने' ख. २ 'रवे झकारः कथितो नष्टे झश्चोच्यते बुधैः । झकारश्च तथा वायौ नेपथ्ये समुदाहृतः' ख. ३ 'टो धरित्र्यां च करटे टो ध्वनौ परिकीर्तितः' क-ख. ४ 'डकारः शंकरे त्रासे ध्वनौ भीमे निरुच्यते' ख. ५ 'मर्दले किंनरे ध्वनौ' क, 'निर्गुणे निर्धने मतः' ख. ६ 'सूकरे ज्ञाने निश्चये निर्णये मतः' ख. ७ 'नय' ख. ८ 'दकारोऽभ्रे कलत्रे च' ख. ९ 'मनावपि' ख. १० 'सुरते' ग. ११ 'नकारः सौगते बुद्धौ स्तुतौ सूर्ये च कीर्तितः । नशब्दः स्वागते बन्धौ वृक्षे सूर्ये च कीर्तितः' इत्यधिकं ख-पुस्तके. १२ इतः पूर्वम् 'पः कुबेरः समाख्यातः पश्चिमे च प्रकीर्तितः' इत्यपि ख-पुस्तके. १३ 'कफे वाते फकारः स्यात्तथाह्वाने प्रकीर्तितः । फूत्कारेऽपि च फः प्रोक्तस्तथा निष्फलभाषणे' ख, 'कठोरे फः प्रकारे फस्तथा निष्फलभाषणे' क. १४ 'फलेऽपि च । वक्षःस्थले च बः प्रोक्तो गदायां समुदाहृतः' ख. १५ 'भवने' ख. १६ 'च' क, 'मः' ख. १७ 'याते याने वियोगे च' क. १८ 'रामे' ख, 'कामानले' ग. १९ 'भूमावपि धनेऽपि च' ख. २० 'इन्द्रिये धनरोधे च' ख. २१ 'च राः समाख्यातो रास्तु दाने प्रकीर्तितः' क. २२ 'लो दीप्तौ द्यां लश्च भूमौ भये चाह्लादनेऽपि च । लो वाते लवणे च स्याल्लो दाने च प्रकीर्तितः । लः श्लेषे चाशये चैव प्रलये साधनेऽपि लः । मानसे वरुणे चैव लकारः सान्त्वनेऽपि च' ख. २३ 'शं सुखं शंकरः श्रेयः शश्च सीम्नि निगद्यते । शयने शः समाख्यातो हिंसायां शो निगद्यते' ख. २४ 'षश्च गम्भीरलोचने । उपसर्गे परोक्षे च षकारः परिकीर्तितः' ख.

सोऽ[1]पसर्गः समाख्यातः सा तु लक्ष्मीर्निगद्यते । सा चैव गौः समाख्याता संसर्गः सः प्रकीर्तितः ॥
हः[2] कोपे धारणेऽपि स्यात् हः शूलिनि समीरितः । क्षः[3] क्षेत्रे रक्षसि क्षः प्रोक्तो नियतं शब्दवेदिभिः ॥[4]

इति श्रीपुरुषोत्तमदेवविरचित एकाक्षरकोषः समाप्तः ।

---

१ 'सः कोपे वरणे सः स्यात्तथा शूलिनि कीर्तितः । सा च लक्ष्मीर्बुधैः प्रोक्ता गौरी सा च स ईश्वरः' ख, 'सकारो वानरः प्रोक्तः सकारः सर्व उच्यते' क. २ 'हो वेदे हरिणे हारे हश्च शूलिनि गद्यते । हे संबोधनमित्युक्तं ही हेतावववधारणे' क, 'हः कोपे वारणे हश्च तथा शूली प्रकीर्तितः । हिः पद्मावरणे प्रोक्तो हिः स्याद्धेत्ववधारणे' ख. ३ 'क्षः क्षेत्रे क्षपणे क्षान्तौ तथा वक्षसि शूलिनि' क, 'क्षः क्षेत्रे वक्षसि प्रोक्तो बुधैः क्षः शब्दशासने । क्षिः क्षेत्रे क्षत्ररक्षे च नृसिंहे च प्रकीर्तितः' ख. ४ इत उत्तरम् 'आगमेभ्योऽभिधानेभ्यो धातुभ्यः शब्दशासनात् । एवमेकाक्षरं नामाभिधानं क्रियते मया ॥' इत्यधिकं ख-पुस्तके.

॥ श्रीः ॥

# अभिधानसंग्रहः ।

## ( ५ )

### श्रीपुरुषोत्तमदेवविरचितो

## द्विरूपकोषः ।

भवेदाषाढ [1]आशाढो [2]विषुवद्[3]विषुवं तथा । [4]मातुःष्वसा मातुःस्वसा कशायां कथिता कषा ॥ १
[5]शंवरं संवरं प्रोक्तं कुशलं कुसलं तथा । वासरो वाशरोऽपि स्याद्वशिष्ठोऽपि वसिष्ठकः ॥ २
[6]मुषलो मुसलः प्रोक्तः शूकरः सूकरोऽपि च । सृगालोऽपि शृगालः स्याच्[7]छारः सारोऽपि संमतः ३
कोशः कोषोऽश्रु कथितमस्तु चापि सतां मतम् । शण्डः षण्डस्तथाख्यातः [8]सण्डोऽपि त्रिविधो मतः ४
शूरः सूरोऽपि चादित्ये विष्वग्विश्वक्स्मृतं बुधैः । किसलयं किशलयं [9]वसूकं वसुकं तथा ॥ ५
[10]आली स्यादालिरप्येवं [11]बाह्लीको बाह्लिको मतः । गाण्डीवं गाण्डिवं प्रोक्तं पाण्डुरः पाण्डरस्तथा ॥ ६
पारावतः पारवतः कवाटं च कपाटकम् । अन्त्यश्रान्तः सुखं सौख्यं नखं च नखरं स्मृतम् ॥ ७
वाल्मीको वाल्मिकश्चैव वालुका वालिका तथा । [12]मधुरा मधुरा प्रोक्ता कफोणिः [13]कफणिस्तथा ॥ ८
द्वाद्वारमपि च प्रोक्तं सरिषपस्तु सर्षपः । धूस्तूरो धूस्तुरः प्रोक्तस्त्वन्तिकाप्यत्तिका तथा ॥ ९
जमदग्निर्[14]जामदग्निः [15]कारञ्जश्च कलिञ्जकः । [16]प्रतिकारः प्रतीकारो विहारादेर्द्विरूपता ॥ १०
[17]रजन्यवनिभूम्यादेर्द्वैरूप्यमपि दृश्यते । [18]अपोगण्डस्तु पोगण्डोऽप्यपिधानं पिधानकम् ॥ ११
अवतंसो वतंसश्च वहितोऽवहितस्तथा । [19]आर्य आर्यस्तथा प्रोक्तः खुरप्रश्च क्षुरप्रकः ॥ १२
जामातापि च यामाता जाया याया प्रकीर्तिता । योषा जोषापि च ख्याता [20]संवासिन्यां सुवासिनी १३
कङ्गुः कङ्गूर्यवागुश्च यवागूरप्युदाहृता । सुत्रामापि च सूत्रामा [21]किङ्किणी किङ्किणी तथा ॥ १४
[22]जातीफलं जातिफलं यष्टीमधु मतं तथा । तनुस्तनूर्हनुश्चैवं [23]पर्षच्च परिषत्तथा ॥ १५
अभ्रम[24]भ्रमपि ख्यातं [25]खनित्रं च खनित्रकम् । धान्याकमपि धन्याकं खड्गी खड्गो द्विधा मतः ॥ १६
विरिश्चिश्च विरिश्चोऽपि परशुः [26]पर्शुरेव च । पृषतः पृषदुद्दिष्टो वेश्या वेष्यापि कीर्तिता ॥ १७

---

१ 'आसाढो' ख. २ 'विषुपत्' ख. ३ 'विशुवं' ख. ४ 'मातृष्वसा' ग. ५ 'शंवलं संवलं' क, 'शवलं सवलं' ग. ६ 'मूषलो मूसलः' क. ७ 'च्छावः सावोऽपि' ख. ८ साण्डोऽपि' क. ९ 'वशुकं' ख. १० 'अली स्यादलि' क. ११ 'वल्हीको' ख. १२ 'मथूरा मथुरा' ख. १३ 'कफण' ख. १४ 'यमदग्निः' ख. १५ 'कारञ्जश्च कलिञ्जकः' ख, 'कौलिञ्जश्च किलिञ्जकः' क. १६ 'परिहारः परीहारो' ख. १७ 'अरण्य' ख. १८ 'आपोगण्डस्त्वपोगण्डो' ख. १९ 'आर्य आर्ज्य' क. २० 'स्ववासिन्यां स्ववासिनी' क, 'सुवासिन्यां सुवाशिनी' ख. २१ 'कीलिनी कीलिणी' क, 'काकिनी काकिणी' ग. २२ 'यातीफलं' क. २३ 'परीषत् परिषत्तथा' क, 'पर्यन्तं परिजं तथा' ख, 'दीर्घान्तमपि संमतम्' घ. २४ 'मम्भ' ख. २५ 'धवित्रं स्याद्धपित्रकम्' क, 'धुवित्रं स्याद्धवित्रकम्' ग-घ. २६ 'परशूरपि' क.

सुरापाणं सुरापानं भुजंगो भुजगो मतः । तुरंगस्तुरगश्चैव कबन्धं च कमन्धकम् ॥ १८

अग्रमग्र्यमपि ख्यातं शारिः सारोऽपि कथ्यते । [1]बन्धूरं बन्धुरं चापि [2]कन्दरं कन्दमित्यपि ॥ १९

[3]उद्धमानमपि चोद्धानमायुश्चायूरपि स्मृतम् । [4]जम्बीरोऽपि च जम्भीरो [5]वरुणो वरणोऽपि च ॥ २०

रात्रिचरो रात्रिचरः सततं संततं तथा । जिह्वा जिह्वश्च कथितो [6]जिह्वलो येन गीयते ॥ २१

[7]रिक्थमृक्थमपि प्रोक्तं रिष्टिर्ऋष्टिश्च संमतः । विश्रामो विश्रमो वापि पूरुषः पूरुषस्तथा ॥ २२

[8]उदर्कं च दकं चैव कटः कटिकटीरकौ । लज्जा लज्ज्या पुनः प्रोक्ता प्रततिर्प्रेततिस्तथा ॥ २३

नृत्यं नृत्तं च कथितं [9]शय्यायां कथ्यते शयः । [10]फलितं फालितं चैव विद्वद्भिः परिकीर्तितम् ॥ २४

गम्भीरं च गभीरं स्यात्[11]प्रकाणः प्रकणस्तथा । प्रादेशोऽपि प्रदेशः स्यात्करजोऽपि करञ्जकः ॥ २५

लकुचो [12]लिकुचो वापि [13]ख्याताविज्जलहिज्जलौ । [14]अगस्तिः स्यादगस्त्योऽपि [15]यमश्च यमजो मतः ॥ २६

[16]वातूलो वातुलः प्रोक्तो वृत्तश्च वर्तुलस्तथा । कटकं कण्टकं चापि [17]तथा पूर्वैश्च दृश्यते ॥ २७

[18]कुटीरकुटिरौ ख्यातौ ननन्दा च ननन्दिका । [19]आमिक्षायाममिक्षा स्यात्[20]जटिलो जटुलस्तथा ॥ २८

मासि ज्यैष्ठे तथा ज्येष्ठः पौषे पुष्योऽपि संमतः । अष्ठिवानस्थिवानेव [21]वाग्वाचा दिग्दिशादयः ॥ २९

[22]आमिषं चामिषं चाहुस्तिमस्तिमिरिव स्मृतः । चेडी चेटी च कथिता [23]रजः ख्यातं रजं मतम् ॥ ३०

[24]मह एव महमाहुश्चि[25]न्तनं चिन्तना तथा । नारिकेलादिषु [26]द्वैधमाह केलादिवर्जनात् ॥ ३१

डिम्भो डिम्बश्च विख्यातः [27]कुवरः कूवरो मतः । [28]अर्द्रमार्द्रं धुतं धौतं निशातं निशितं तथा ॥ ३२

घ्राणं घ्रातं पुनः प्रोक्तं [29]गूढं गुप्तं सतां मतम् । ह्रीणं ह्रीतं च विख्यातं [30]घुष्टं च घुषितं तथा ॥ ३३

दान्तं दमितं शान्तं शमितं घूर्णघूर्णिते । जप्तं च जपितं चैव क्लिष्टं क्लेशितमेव च ॥ ३४

तुष्टं च तुषितं विद्धं वेधितं विन्नवित्तके । [31]ऊतं स्यूतमुतं चैव भिन्नं भेदितमेव च ॥ ३५

[32]दितं दातं च दत्तं स्याद्धूपितं धुपितं तथा । धूपायितं च मृगितं मार्गितं [33]पूर्णपूरिते ॥ ३६

अन्वेषितं तथान्विष्टं त्राणं त्रातं च संमतम् । गुप्तं गोपायितं चैव बुद्धं च बुधितं तथा ॥ ३७

पणायितं च पणितं पनितं च पनायितम् । छन्नं च छादितं चैव घुष्टं घुष्टं स्मृतं बुधैः ॥ ३८

तीर्थं तिर्थमर्घमर्घ्यं पत्रं स्यात्पत्रेणी तथा । गुग्गुलुर्गुग्गुलः प्रोक्तः किकिदीविः किकीदिविः ॥ ३९

जीवंजीवो जीवजीवस्तडागस्तडगस्तथा । यती ख्यातो यतिश्च स्यादन्तरीक्षान्तरिक्षके ॥ ४०

---

१ 'बन्धुकं बन्धुरं' क. २ 'ककुदं ककुदप्यथ' क. ३ 'लुद्यानं च पुरुद्यानं पुरी पुरमपि स्मृतम्' क. ४ 'जम्बिरोऽपि च जम्बीरो' ख. ५ 'वरूणो वरुणो मतः' ख. ६ 'जिह्वनो' ख. ७ 'उक्थमुक्थमपि प्रोक्तं मीश्रं मिश्रमपि स्मृतम्' क. ८ 'उदर्कमुदकं प्रोक्तम्' क, 'उदकं चोदकश्चैव' ख. ९ 'गयायां कथ्यते गयः' ख. १० 'फणितं फाणितं चैव विद्वद्भिः संप्रकीर्तितम्' ग. क-पुस्तके तु नास्त्येव. ११ 'प्रकाशः प्रकशः' ख. १२ 'निकुचो' ख. १३ 'हिज्जलो हज्जलो मतः' क. १४ 'आगस्तिः' ख. १५ 'यमदो' क. १६ 'वातिलो' क, 'बहुलो बाहुलः प्रोक्तः प्रोक्तो वृद्धश्च वर्धनः' ग. १७ 'नारको नरको मतः' क. १८ 'ननन्दा च ननान्दा च कुटीरं कुटिरं तथा' क. १९ 'आमीक्षायाम्' ख. २० 'जटीलो जटिलस्तथा' क. २१ 'वाचि वाचा दिशादयः' ख. २२ अयमर्धश्लोकः क-पुस्तके नास्ति. २३ 'रजःसु रजसो मतः' क. २४ मह एव महदाहुः' ख. २५ 'श्रन्तनं चिन्तनं' ख, 'चेतनं चिन्तनं' ग. २६ 'द्वैधं महाकालादिवर्जनात्' ख. २७ 'कवरः' ख. २८ 'अर्धमर्ध्यं' ख. २९ 'गुढं गूढं' ख. ३० 'पुष्टं पुषितं तथा' क. ३१ 'पिष्टं च पिषितं चैव' क. ३२ 'शुष्कं च शुषितं चैव' क, 'तप्तं च तपितं चैव' ग. ३३ 'ब्रुवते बुधाः' ख

संनिहितः संनिहित्यां कीलः कीलापि कीर्तिता । [1]अकुलोऽप्याकुलः ख्यातः पूपोऽपूपश्च संमतः ॥ ४१
अपपूर्वमर्षणा च भण्यते चावमर्षणम् । [2]अपमानोऽवमानश्च [3]बिम्बोष्ठेऽपि द्विरूपता ॥ ४२
[4]मृद्वङ्गापि च मृद्वङ्गी नेत्रानेत्र्यादिके तथा । मज्जा ख्यातः स्मृता मज्जा श्रान्तापि च विचक्षणैः ४३
स्फटा [5]फंटा च चण्डारश्चण्डालश्च प्रकीर्तितः । काव्येषु गीयते हर्षो हरिषोऽपि च कीर्त्यते ॥ ४४
मेधिर्मेधा शरव्ये च लक्षं लक्ष्यमुदाहृतम् । संख्या लक्षा च लक्षं च करभोऽपि करम्भकः ॥ ४५
मृदुर्मृद्वी गुरुर्गुर्वी [6]तृप्ता तर्पा च संमता । म्रष्टा मृष्टा मतं तद्वद्[7]रञ्जनं रजनं तथा ॥ ४६
नतिर्नत्यां गतिर्गत्यां भूतिर्भूत्यादिकं तथा । ख्यातौ निमेषनिमिषौ स्मृतौ भीरुकभीलुकौ ॥ ४७
[8]ऊषाः स्यादुषसा तद्वत्सेवनं सीवनं मतम् । तन्त्री तन्त्रा च कथिता मृजा स्यान्[9]मार्जनी तथा ॥ ४८
संध्या संधा [10]प्रतिज्ञाता भारता भरता नटाः । स्मृतौ दासेरदासेयौ पिटकः पेटकस्तथा ॥ ४९
[11]परिस्नुता परिश्रुतः [12]स्यादालस्योऽलसोऽपि च । कमलः कामलो वापि [13]गृध्नुर्गर्धन इत्यपि ॥ ५०
भूष्णुर्भविष्णुः [14]क्षमिता क्षन्ता चिकणचिक्कणौ । नवं नव्यं च मृदुलं मृदु स्याद्बहुलं बहु ॥ ५१
पृथुलं पृथु विख्यातं मञ्जुलं मञ्जु चेष्यते । प्रागल्भ्यं कीर्त्यते यत्र प्रागल्भी तत्र कीर्तिता ॥ ५२
[15]लोडनं लडनं चैव [16]त्रुटिस्तुटिरपि स्मृता । [17]वंश्यो वशोऽभिकोऽभीको लुपो लोलुपलोलुभौ ॥ ५३
धृष्णुधृष्टकौ विशालं विशलं स्मर्यते बुधैः । बाहुर्बाहोऽर्तिरार्तिः स्यादूरीकृतमुरीकृतम् ॥ ५४
[18]बह्वाम्पि पठ्यते कैश्चित्तथा बह्वम्पि चैव हि । बह्वपानि तथा भट्टिरिवितयं तेन सिध्यति ॥ ५५
[19]स्फूरणं स्फुरणं ख्यातिः क्वचित्साम च ···· । स्तम्बघनस्तु स्तम्बघ्नो मसिश्चापि मसी स्मृता ॥ ५६
कालनेमिः [20]कालनेमी दैत्यनाम द्विधा मतम् । [21]कुम्भी चापि तथा कुम्भा भण्यते शब्दशासने ॥ ५७
ख्याते माङ्गल्यमङ्गल्ये [22]विवधो वीवधो मतः । [23]भृङ्गरिटिर्भूरीटिः स्यात्स्तवस्तापोऽपि गीयते ॥ ५८
भृकूटं भृकटं प्राहुर्मन्दारो मन्दरोऽपि सः । फलं च फलनं ख्यातं नसा नासा च कीर्त्यते ॥ ५९
कृषकः कर्षको दृष्टः खलीनं खालिनं तथा । मणी इव मणीव स्याद्रोदसी रोदसा अपि ॥ ६०
दम्पती इव शब्देन संहतौ तेषु पक्षकः । प्रग्राहः प्रग्रहो दृष्टः पारिप्लवपरिप्लवौ ॥ ६१
उच्छ्राय उच्छ्रयः प्रोक्तो धारणं धरणं तथा । त्रिखट्वी च त्रिखट्वं स्यादुलूखलमुदूखलम् ॥ ६२
क्षमा भूमिः क्षमा तुल्या तूली तूला मतं सताम् । मसुरोऽपि मसूरस्तु सरुः सद्योऽपि दृश्यते ॥ ६३
कापुरुषः कुपुरुषो वाचिका वाचकः क्रिया । विहंगमेति कथिता तथा ख्याता बिहंगिका ॥ ६४
[24]आपःशब्दः सकारान्तो दृश्यते शब्दशासने । चारभटश्चारुभटः खाल्विटो खल्विटो मतः ॥ ६५

---

१ 'अर्गलाप्यर्गलः ख्यातः' ग, 'अपूपश्चैव पूपश्च अघमर्षोऽघमर्षणम्' क. २ 'अवसानोऽपसानश्च' ग. ३ 'बिम्बोष्ठादेर्द्विरूपता । हलीशा च हलीषा च लाङ्गलीषा तथा मता' क. ४ इतः सार्धश्लोकः क-पुस्तके नास्ति. ५ 'फण्टा' ख. ६ इतः पादद्वयं क-पुस्तके नास्ति. ७ 'रजतं' क. ८ 'सेवनं सीवनं तन्द्री तन्द्रा च मार्जनं मृजा' क, 'उषा उष्णा तथा तुल्या सेवनं शेवनं तथा' ग. ९ 'न्मार्जना पुनः' ग. १० 'प्रतिशायां' क. ११ 'परीस्रुता परिस्रुता' क, 'प्रतिश्रुतः प्रतिश्रुतं' ग. १२ 'दलसश्चालेशोऽपि च' ग. १३ 'गृधुल' ग. १४ 'विकलविक्लवौ नवं नवा' क. १५ 'नटनं नाटनं चैव भ्रुकुटिर्भ्रकुटिस्तथा' क, 'लाटली लाटनं चैव' ख. १६ 'स्रुटिस्त्रटि' ग. १७ 'वविश्यो ववशोऽभिज्ञो धृष्टो धृष्णुर्विशाणकः । विषाणो' क. १८ 'वङ्गापि पठ्यते कैश्चित्तथा वङ्गेऽपि चेष्यते' क. १९ 'स्फुरणं स्फूरणं ख्यातं स्तम्बघ्नः स्तम्बघनोऽपि च' क. २० 'कालनेमा' क. २१ इदमर्धपद्यं क-पुस्तके नास्ति. २२ 'विधिरो वीधिरः स्मृतः' ख. २३ इतः श्लोकद्वादशकं क-पुस्तके नास्ति. २४ अत एव 'आपोभिर्मार्जनं कृत्वा' इति मुकुटदर्शितप्रयोगः संगच्छते.



20

खल्लीटं च तथा दृष्टं हाञ्जिरुक्ता च हाञ्जिकम् । कोटितण्डुलशब्दौ च दृष्टौ पुंक्लीबयोः पुनः ॥ ६६
कतमकतरौ प्रोक्तौ दृष्टौ भिक्षुकभिक्षकौ । कर्कटी कर्कुटी नान्ता इकारान्ता च केचन ॥ ६७
लावूरलावूरिर्वारुरुर्वारुश्च मतं सताम् । आननश्चाननं चैव आमेषी चाम्रपेषिका ॥ ६८
शालिश्चैव तथा शाली कलम्बुश्च कलम्बिका । नीलिका चैव नीली च कर्करुः पुंसि च स्त्रियाम् ६९
पोतिका पोतका ख्याता स्मृतौ वास्तूकवास्तुकौ । भृङ्गराजो भृङ्गरजः समौ दाडिमदालिमौ ॥ ७०
गुत्सको गुच्छको वापि तथा चोत्सुकचोतकौ । शाटिः शाटी च विख्याता मटो मयट एव च ७१
समौ दात्यूहदात्यौहौ पटवासः पटवसः । अवसत्थ आवसत्थस्तुद्रङ्गाद्रङ्ककौ समौ ॥ ७२
शूकपिटः शूकपटः खट्टकिक्कखटकिक्कके । ख्यातौ पर्ण्योटपर्णोटौ प्रघाणः प्रघणेऽपि च ॥ ७३
भ्रुकुटिभ्रुकुटौ प्रोक्तौ कलिः स्त्रीपुंसमार्थता । क्रौञ्चापि च पुनः क्रौञ्चस्तथा च प्रतिपद्यते ॥ ७४
हलन्तो गीयते कैश्चिदजन्तोऽयं च गीयते । दुर्लभो प्रथितो लोके बीजधातुप्रमाणतः ॥ ७५

इति श्रीपुरुषोत्तमदेवविरचितो द्विरूपकोषः समाप्तः ।

---

१ 'मुकुटं मकुटं तथा' क. २ एतत्पूर्वम् 'मुकुरो मकुरोऽपि स्यात्फलं च फलितं मतम् । मृष्टं म्लिष्टं नसा नासा कर्षकः कृषिकोऽपि च ॥ खलिनं च खलीनं च गर्ते गर्तापि चेष्यते । अहो आहो तथा प्रायः प्रायं स्यात्तु तथा मतम् ॥ मणावपि मणी चैव रोधसी रोधसिस्तथा । दंपती जंपती चैव प्रग्राहः प्रग्रहः स्मृतः ॥ अरे आरे इति ख्यातं द्विरूपं च तथा मतम् ॥' इति क-पुस्तकेऽधिकम्.

# शोधनपत्रम् ।

## नामलिङ्गानुशासनम् ।

| श्लोकाङ्कः । | शुद्धपाठः । |
|---|---|
| ११ | विद्याधरोप्सरोयक्ष– |
| १३३ | शर्मसात– |
| २७७ | षण्डमस्त्रियाम् । |
| ३१६ | स्यात्संकरोऽवकरस्तया ॥ |
| ११२९ | पृथुपीवबहुप्रकर्षार्थाः ॥ |
| ११८६ | शल्के शकलवल्कले । |
| १३१५ | जामिः स्वसृकुलस्त्रियोः । |
| १३५० | क्षितिरप्यामलक्यपि । |
| १३७३ | बहुलाः कृतिका गावो बहुलोऽग्नौ शितौ त्रिषु । |
| १३८२ | निकृतावपि निह्नवः । |
| १३९० | पदे लक्ष्ये निमित्ते |
| १४४५ | ननुच स्या– |

## त्रिकाण्डशेषः ।

| | |
|---|---|
| ३४ | केशिचाणूरसूदनः । |
| ८३ | निधौ । कुनाभिः स्याद् |
| ८४ | मरुन्मेघवर्त्म च । अक्षरं च |
| २८८ | सितापाङ्गः |
| ४७३ | कर्वूरं गोदन्तो |
| ४८८ | कावारी |
| ४८९ | वारित्रा |
| ५८३ | व्रतखड्गयोः । |
| ५९९ | शीधौ च |
| ६८३ | दक्षिणः सरलेऽपि च ॥ |
| ७२० | पृषत्नैणे |
| ८०४ | मानं प्रमाणे |
| ८६० | वेदोपदेशावाम्नायौ हृषीके रेतसीन्द्रियम् । इज्या |
| ८९१ | धूम्याटे |
| ८९२ | शिंशपायां कृष्णसारा |
| ९२५ | वैकल्येऽपि च |
| ९५७ | मेलान्धावपि |
| ९६४ | सालो वरणसर्जयोः ॥ |
| ९७५ | लवश्छेदनलेशयोः । |
| १०३९ | पटलप्रवाल– |

## हारावली ।

| | |
|---|---|
| १८७ | गङ्गाटेयो गलानिलः । |
| २६९ | मूषिकापि भवेद्दीना |
| २७३ | काव्यादीना– |

## द्विरूपकोषः ।

| | |
|---|---|
| १४ | कीङ्किणी तथा । |
| २२ | पुरुषस्तथा । |

21

# विज्ञापनम् ।

## प्राप्तकोशाः ।

**अमरसिंहः**–नामलिङ्गानुशासनम्. **केशवः**–कल्पद्रुः. **दुर्गादासः**–शब्दार्णवः. **धनंजयः**–प्रमाणनाममाला. **पुरुषोत्तमदेवः**–एकाक्षरकोशः, त्रिकाण्डशेषः, द्विरूपकोशः, हारावली. **भरतसेनमल्लिकः**–द्विरूपकोशः. **महीदासः**–मातृकानिघण्टुः. **महाक्षपणकः**–अनेकार्थध्वनिमञ्जरी. **महादेवः**–अव्ययकोशः. **महेश्वरः**–विश्वप्रकाशः, शब्दभेदप्रकाशः. **मेदिनिकरः**–नानार्थशब्दकोशः. **यादवः**–वैजयन्ती. **वररुचिः**–लिङ्गविशेषविधिः. **वेणीदत्तः**–पञ्चतत्त्वप्रकाशः. **शाश्वतः**–नानार्थसमुच्चयः. **शिवरामः**–लक्ष्मीनिवासः. **हरिदत्तः**–गणितनाममाला. **हलायुधः**–अभिधानरत्नमाला. **हर्षकीर्तिः**–शारदीनाममाला. **हेमचन्द्रः**–अनेकार्थसंग्रहः, अभिधानचिन्तामणिनाममाला, अभिधानचिन्तामणिनाममालापरिशिष्टम्, लिङ्गानुशासनम्.

---

## अप्राप्तकोशाः ।

**अगस्त्यः**–शब्दसंग्रहनिघण्टुः. **अजयपालः**–नानार्थसंग्रहः. **अप्पयदीक्षितः**–नामसंग्रहमाला. **अमरसिंहः**–एकाक्षरनाममाला. **कालिदासः**–प्रयुक्तपदमञ्जरी. **काशिनाथः**–शब्दार्णवः. **केशवः**–लघुनिघण्टुसारः. **क्षेमेन्द्रः** लोकप्रकाशः. **गदसिंहः**–अनेकार्थध्वनिमञ्जरी. **गोपिनाथः**–शब्दमाला. **गोवर्धनः**–नामावली. **गोविन्दशर्मा**–शब्दसागरः. **चक्रपाणिदत्तः**–शब्दचन्द्रिका. **जटाधराचार्यः**–अभिधानतन्त्रम्. **जैमिनिः**–निघण्टुः. **तीर्थस्वामी**–कोमलकोशसंग्रहः. **त्रिविक्रमाचार्यः**–गीर्वाणभाषाभूषणम्. **दण्डनाथः**–नानार्थरत्नमाला. **दुर्गः**–नाममाला. **देवकीनन्दनः**–वैष्णवाभिधानम्. **धरणिदासः**–नानार्थसमुच्चयः. **धर्मराजः**–कविजीवनम्. **नल्किरकविः**–बालप्रबोधिका. **नन्दनभट्टाचार्यः**–वर्णाभिधानम्. **नरसिंहपण्डितः**–राजनिघण्टुः. **नारायणदासः**–राजवल्लभः. **नृसिंहमुनिः**–रत्नकोशः. **पद्मनाभः**–भूरिप्रयोगः. **पुण्डरीकविट्ठलः**–शीघ्रबोधिनीनाममाला. **पुरुषोत्तमदेवः**–वर्णदेशनम्. **पृथ्वीधराचार्यः**–रत्नकोशः. **बाणकविः**–शब्दचन्द्रिका. **बाल्हिकेयमिश्रः**–निघण्टुकैकाध्यायः. **बिह्लणः**–त्रिरूपकोशः. **भार्गवाचार्यः**–नामसंग्रहनिघण्टुः. **भोजः**–नाममाला. **मङ्खः**–मङ्खकोशः. **मथुरेशः**–शब्दरत्नावली. **मयूरः**–पदचन्द्रिका. **महीपः**–अनेकार्थतिलकः, शब्दरत्नाकरः. **मुरारिः**–सुप्रसिद्धपदमञ्जरी. **रत्नमालाकरः**–आयुर्वेदपर्यायरत्नमाला. **राक्षसः**–शब्दार्थनिर्णयः. **रामः**–कविदर्पणनिघण्टुः; **रामशर्मा**–उणादिकोशः. **रामेश्वरः**–शब्दमाला. **रूपचन्द्रः**–रूपमञ्जरीनाममाला. **वरदराजः**–नाममातृकानिघण्टुः. **वररुचिः**–ऐन्द्रनिघण्टुः. **वल्लभः**–कविमञ्जरी. **वामनभट्टः**–शब्दरत्नाकरः. **विक्रमादित्यः**–कविदीपिकानिघण्टुः. **विट्ठलाचार्यः**–शब्दचिन्तामणिः. **विश्वनाथः**–कोशकल्पतरुः. **विश्वशंभुः**–एकाक्षरनाममाला. **वेङ्कटः**–शब्दार्थकल्पतरुः, शाब्दिकविद्वत्कविप्रमोदकः. **वेदान्ताचार्यः**–दशदीपनिघण्टुः. **शंकरः**–संयमिनाममाला. **शिवदत्तः**–शिवकोशः. **श्रीहर्षः**–द्विरूपकोशः, श्लेषार्थपदसंग्रहः. **सदाचार्यः**–एकाक्षरनिघण्टुः. **सारेश्वरः**–लिङ्गप्रकाशः. **सार्वभौममिश्रः**–भुवनप्रदीपिका. **सुन्दरगणिः**–शब्दरत्नाकरः. **सोमभवः**–अनेकार्थतिलकः. **सौभरिः**–एकार्थनाममाला, द्व्यक्षरनाममाला.

एतद्भिन्नाः **अमरदत्त–कात्य–गङ्गाधर–चन्द्रगोमि–तारपाल–दामोदर–धर्मदास–बोपालित–भागुरि–भोगीन्द्र–मङ्कल–माधव–मार्तण्ड–रन्तिदेव–रभसपाल–राजशेखर–रुद्र–वाग्भट–वाचस्पति–वामन–विक्रमादित्य–विश्वरूप–व्याडि–शुभाङ्क–सज्जन–साहसाङ्क–हट्टचन्द्र–हर–**इत्यादिकृताः कोशाः, अमरमाला–असालतिप्रकाश–आनन्दकोश–एकवर्णसंग्रह–एकाक्षरकोश–उत्पलिनी–ऊष्मविवेक–कल्पतरुकोश–कविजनसेवधि–ग्रहाभिधान–जकारभेद–दण्डिकोश–धन्वन्तरिनिघण्टु–नक्षत्राभिधान–नानार्थमञ्जरी–पद्मकोश–वकारभेद–बीजकोश–बृहदमरकोश–महाखण्डनकोश–राजकोशनिघण्टु–लिङ्गप्रकाश–वर्णप्रकाशकोश–वात्स्यायनकोश–शब्दतरङ्गिणी–शब्ददीपिका–शब्दरत्नसमुच्चय–शब्दसारनिघण्टुः.–संसारावर्त–सकलग्रन्थदीपिका–सकारभेद–संजीवनी–सन्मुखवृत्तिनिघण्टु–सरसशब्दसरणि–सरस्वतीनिघण्टु–साध्यकोश–सारस्वताभिधान–हनुमन्निघण्टु–प्रभृतयः कोशाश्च सन्तीति श्रूयते । ते येषां सज्जनानां संग्रहे सन्ति, ते तेषां प्रेषणेनास्मानुपकुर्वन्त्वित्यभ्यर्थना

**अभिधानसंग्रहकर्तॄणाम् ।**

---

# अभिधानसंग्रह ।

प्राचीन संस्कृत ग्रन्थों के उद्धारका कार्य आजकल चारों ओर बडी धूमधामसे चल रहा है, यह अत्यन्त आनन्दकी बात है। तौभी संस्कृतभाषाज्ञान के मुख्य साधन प्राचीन कोषों की ओर जितना लक्ष्य होना चहिये उतना नहीं है। संस्कृत कोष सब श्लोकबद्ध होने के कारण कण्ठस्थ रह सकते हैं। और अवसर पर उनके श्लोकों की सद्यःस्फूर्ति होती है। इसलिये प्रत्येक संस्कृताभिमानी पुरुष को कोषों का संग्रह अवश्य कर्तव्य है। प्राचीन प्रधान कोष छप्पन[1] हैं यह लोकप्रसिद्धि है। परंतु उन में कईका तो आजकल नाममात्र ही शेष रह गया है। और जो कचित् उपलब्ध होते हैं उन के उद्धार कर्नेका भी यदि यत्न न किया जायगा तो उनवे भी सत्वर नष्ट होजाने का विशेष संभव है यह समझ कर, हमने बडे यत्नसे कईएक कोषों का संग्रह आजतक किया है, और अवशिष्ट कोषों की प्राप्ति के लिये भी यत्न कर रहे हैं। परंतु उनकी प्रतीक्षा न कर्के, सांप्रत जितने उपलब्ध हैं उनकोंही सब के उपयोग के लिये छापकर प्रसिद्ध करना, और यही क्रम आगे भी प्रवृत्त रखना, ऐसा निश्चय किया है। यह सब कोष युगपत् एकही पुस्तक मे छापें तो काल बहुत लगैगा, और पुस्तक भी बहुत बडा हो जायगा, और उसके अनुरूप मूल्य भी अधिक होगा। इस लिये ग्राहकों के सौकर्यार्थ ऐसा नियम किया है कि जिस कोष के छापने का आरम्भ करें, उस को समाप्त करके ही खण्ड प्रकट करें। यदि छोटे छोटे कोष होंय तो एक खण्डमें दो तीन रक्खें। पुस्तक उत्तम कागदके ऊपर सुन्दर छापी जांयगी। जैसे जैसे ग्रन्थ तयार होगें वैसी वैसी उस उस समयपर सूचना दी जायगी। प्रत्येक कोष के पृष्ठाङ्क पृथक् पृथक् रहेंगे।

इस नियम के अनुसार प्रथम खण्ड छप कर तयार है। इस में '**अमरसिंहकृत** नामलिङ्गानुशासन (अमरकोष)', और उसी का परिशिष्ट **पुरुषोत्तमदेवकृत** 'त्रिकाण्डशेष', और 'हारावली', 'एकाक्षरकोश' और 'द्विरूपकोश' ये पांच कोष संपूर्ण आये हैं। पांचोंकी मिल कर कीमत १ रुपया। और टपालखर्च २ आने है।

द्वितीयखण्ड में **हेमचन्द्रकृत** 'अभिधानचिन्तामणिनाममाला', 'अभिधानचिन्तामणिनाममालापरिशिष्ट', 'अनेकार्थसंग्रह' और 'लिङ्गानुशासन' ये चार कोष आनेवाले हैं।

जिन को यह पुस्तकें लेनी हों वे अपने नाम और मूल्य भेजें कि पुस्तकें तयार होते ही भेजनेमें ठीक पडे।

**तुकाराम जावजी।**
'निर्णयसागर' छापेखाने के मालिक।

---

१. आगे यादी दी है उसपरसे इन कोश छप्पनसे भी जादे हैं ऐसा मालूम पडेगा।

22

# अभिधानसंग्रह।

प्राचीन संस्कृत ग्रन्थांचा जीर्णोद्धार करण्याचें काम सांप्रत चोहोंकडे मोठ्या सपाट्यानें चालू झालें आहे ही मोठ्या आनन्दाची गोष्ट होय। तथापि त्या ग्रन्थांतील ज्ञानाच्या प्राप्तीला उत्तम साधन असे जे प्राचीन शब्दकोश, त्यांकडे जितकें लक्ष लागावें, तितकें अद्यापि लागलें नाहीं। हे कोश पद्यरूप असल्यामुळें मुखोद्गत करण्याला फार सोईवार असून, पाहिजेल तेव्हां स्फूर्ति उत्पन्न करण्याला फार चांगले असतात तेव्हां अशा ग्रन्थांचा संग्रह करणें हें, संस्कृताभिमानी प्रत्येक गृहस्थाचें कर्तव्य होय। लोकवार्तेवरून [1] कोश छप्पन्न आहेत असें समजतें। तथापि त्यांतील बरेच सांप्रत नामशेष झाले आहेत। यास्तव, सध्या जे उपलब्ध आहेत त्यांच्या उद्धाराकडे जर कोणाचें लक्ष लौकर न पोंचलें, तर तेही नष्ट होऊन जा- ण्याचा फार संभव आहे हें जाणून, आह्मीं मोठ्या प्रयत्नानें त्यांतील बहुतेक कोशांचा संग्रह केला आहे, आणि राहिलेल्या इतर कोशांच्या प्राप्त्यर्थ यत्न चालविला आहे। तथापि त्या सर्वांची वाट पहात न राहतां, सांप्रत जितके उपलब्ध आहेत, तितकेच आधीं सर्वांच्या उपयोगास्तव छापून प्रसिद्ध करावे आणि तोच क्रम पुढें चालू ठेवावा, असा निश्चय केला आहे। एककालीं एकाच पुस्तकामध्यें हे छापि- ल्यास, काळ फार लागेल, ग्रन्थही अवजड होईल, आणि तदनुरूप किंमतही भारी होईल। म्हणून ग्राह- कांच्या सोईकरितां असा बेत केला आहे कीं, जो कोश हातीं घ्यायाचा, तो एका खेपेस पुरा करायाचा अपूर्ता ठेवायाचा नाहीं। ग्रन्थ लहान असल्यास, दोन, तीन, किंवा अधिक पुरे ग्रन्थ घेऊन त्यांचें एक पुस्तक करायाचें। पुस्तकें चांगल्या कागदावर सुरेख छापिलीं जातील। जसजसे ग्रन्थ तयार होत जातील तसतशी त्यांविषयीं वेळच्या वेळीं सूचना देण्यांत येईल। प्रत्येक कोशाच्या पृष्ठांचा क्रम वेगवे- गळा येईल।

या नियमाला अनुसरून याचें प्रथम खण्ड छापून तयार झालें आहे। यांत **अमरसिंहकृत** 'नाम- लिङ्गानुशासन (अमरकोश)', आणि त्याचेंच परिशिष्ट **पुरुषोत्तमदेवकृत** 'त्रिकाण्डशेष', आणि 'हारावली' 'एकाक्षरकोश' आणि 'द्विरूपकोश' हे पांच कोश संपूर्ण आले आहेत। पांचांची मिळून किंमत १ रुपया टपालखर्च २ आणे।

द्वितीय खण्डामध्यें **हेमचन्द्रकृत** 'अभिधानचिन्तामणिनाममाला', 'अभिधानचिन्तामणिनाममालापरि- शिष्ट', 'अनेकार्थसंग्रह', आणि 'लिङ्गानुशासन' हे चार कोश यावयाचे आहेत।

ज्या कोणांस हीं पुस्तकें घ्यावयाचीं असतील त्यांहीं आपलीं नांवें आणि वर्गणी आमचेकडेस पाठवावी, ह्मणजे पुस्तकें तयार होतांच त्यांजकडे पाठविण्यास ठीक पडेल।

**तुकाराम जावजी।**

'निर्णयसागर' छापखान्याचे मालक।

---

१. दुसरीकडे दिलेल्या यादीवरून हे कोश छप्पन्नांपेक्षांही अधिक आहेत असें दिसून येईल।

॥ श्रीः ॥

# अभिधानसंग्रहः

नाम

## संस्कृतप्राचीनकोशग्रन्थसमुच्चयः ।

द्वितीयः खण्डः ।

अत्र

हेमचन्द्रकृताः

अभिधानचिन्तामणि-अभिधानचिन्तामणिपरिशिष्ट-
अनेकार्थसंग्रह-निघण्टुशेष-लिङ्गानुशासनकोशाः,

जिनदेवमुनीश्वरविरचितः

अभिधानचिन्तामणिशिलोञ्छश्च

संगृह्यन्ते ।

काव्यमालासंपादक-पण्डितशिवदत्त-काशीनाथाभ्यां

संशोधितः ।

स च

शाके १८१८ वत्सरे

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

मूल्य सपादो रूप्यकः ।

# ABHIDHÂNA-SANGRAHA.

It is a matter of congratulation that vigorous efforts are latterly being made in all directions to rescue from obscurity old Sanskrit literary works. It does not, however, appear, that adequate attention is paid to rescuing those old Sanskrit Lexicons, which alone can furnish the real key to the store of knowledge contained in the old Sanskrit works. As these lexicons are written in verse, they can be easily got up by heart, and are readily accessible for use whenever wanted. It is thus a duty of every gentleman who feels pride in the ancient Sanskrit literature to have by him such valuable lexicons. Tradition ascribes the existence of 56 such lexicons*. Unfortunately a large number of these are remembered by name only. Fearing that the few which are at present obtainable, if not rescued in time, might share the fate of others, we have succeeded, with great difficulty, in collecting a large number of them and are trying hard to get hold of others. Instead of waiting till the whole collection of available works is complete, we think it would serve the public better to publish as many works as we have succeeded in laying our hands upon. If all the works we have, are published in one volume, it will take a long time, the book will be unwieldy, and the price very heavy. To suit the convenience of buyers, therefore, we propose to publish one work full at a time. If it happens to be too small for a volume, we shall issue two or three works together in a handy volume. The books will be printed on good paper and in good type. Notice will be given from time to time as the volumes are ready. The pages of each Lexicon will be numbered separately.

In accordance with the arrangement above indicated, the First and Second Volumes are already printed. The First Volume includes Five Lexicons, *viz*: (1) Nâmalingânus'âsana (Amarakos'a) by Amarasimha, and its supplement (2) Trikândas'esha, and (3) Hârâvalî, (4) Ekâksharakos'a and (5) Dvirûpakos'a by Purushottamadeva. Price Rupee 1, Postage Annas 2.

The Second Volume includes Six Lexicons, *viz*: (6) Abhidhânachintâmaṇi, (7) Abhidhânachintâmaṇi-paris'ishta, (8) Anekârthasangraha, (9) Nighaṇṭusesha, and (10) Lingânus'âsana by Hemachandra and (11) Abhidhânachintâmaṇi-S'ilonchchha of Jinadeva Munîs'vara. Price Rupee 1–4, Postage Annas 3.

The Third Volume will contain (12) Vis'vaprakâs'a and (13) S'abdabhedaprakâs'a of Mahes'vara.

Those gentlemen who want these books will kindly send their names and subscriptions to us, so that when the books are ready they will be immediately despatched.

TUKARAM JAVAJI,

Proprietor, Nirṇaya-Sâgara Press.

* From the list given elsewhere it will be seen that these Lexicons number more than 56.

THE

# ABHIDHÂNA-SANGRAHA

OR

A COLLECTION OF SANSKRIT ANCIENT LEXICONS.

## Nos. 6, 7, 8, 9, 10.

THE ABHIDHÂNA-CHINTÂMANI, THE ABHIDHÂNA-CHINTÂMANI-PARIS'ISHTA, THE ANEKÂRTHA-SANGRAHA, THE NIGHANTU-S'ESHA AND THE LINGÂNUS'ÂSANA

OF

## HEMACHANDRA.

AND

## No. 11.

THE ABHIDHÂNA-CHINTÂMANI-S'ILONCHCHHA.

OF

## JINADEVA MUNÎS'VARA.

EDITED BY

PAṆDIT S'IVADATTA

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE NIRNAYA-SÂGARA PRESS.

BOMBAY.

1896.

Price 1¼ Rupee.

॥ श्रीः ॥

# अभिधानसंग्रहः

नाम

## संस्कृतप्राचीनकोशग्रन्थसमुच्चयः।

तत्र

(६, ७, ८, ९, १०)

श्रीमदाचार्यहेमचन्द्रविरचिताः

अभिधानचिन्तामणि–अभिधानचिन्तामणिपरिशिष्ट–अनेकार्थ-संग्रह–निघण्टुशेष–लिङ्गानुशासनकोशाः।

(११)

जिनदेवमुनीश्वरविरचितः

अभिधानचिन्तामणिशिलोञ्छश्च ।

काव्यमालासंपादक–पण्डितशिवदत्त-काशीनाथाभ्यां संशोधिताः।

ते च

शाके १८१८ वत्सरे

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा प्राकाश्यं नीताः।

मूल्यं सपादो रूप्यकः।

# हेमचन्द्रः ।

अयं श्वेताम्बरजैनाचार्यश्रीहेमचन्द्रः कदा कतमं भूमिमण्डलं मण्डयामासेति जिज्ञासायामनेकग्रन्थपर्यालोचने प्रवृत्ते Dr. P. Peterson महाशयानां Fifth Report पुस्तके—

'तत्पट्टपूर्वाद्रिसहस्ररश्मिः **सोमप्रभाचार्य** इति प्रसिद्धः ।
**श्रीहेमसूरे**श्च **कुमारपालदेव**स्य चेदं न्यगदच्चरित्रम् ॥'

इति **सोमप्रभाचार्य**विरचित**हेमकुमारचरित्र**काव्यतः,

'स्तुमस्त्रिसंध्यं प्रभु**हेमसूरे**रनन्यतुल्यामुपदेशशक्तिम् ।
अतीन्द्रियज्ञानविवर्जितोऽपि यः क्षोणिभर्तुर्व्यधित प्रबोधम् ॥
सत्त्वानुकम्पा न महीभुजां स्यादित्येष क्लृप्तो वितथः प्रवादः ।
जिनेन्द्रधर्मं प्रतिपद्य येन श्लाघ्यः स केषां न **कुमारपालः** ॥

इति **सोमप्रभ**कथिते **कुमारनृपहेमचन्द्रसंवादे** । जिनधर्मप्रतिबोधे प्रस्तावः पञ्चमः प्रोक्तः ॥'

इति **सोमप्रभ**विरचित**कुमारपालप्रतिबोध**काव्यतः,[1]

'शिष्यो जम्बुमहामुनेः **प्रभव** इत्यासीदमुष्यापि च श्री**शय्यंभव** इत्यमुष्य च **यशोभद्रा**भिधानो मुनिः ।
**संभूतो मुनिभद्रबाहु**रिवे····द्वौ तस्य शिष्योत्तमौ **संभूत**स्य च पादपद्ममधुलिट्‌श्री**स्थूलभद्राह्व**यः ॥
वंशक्रमागतचतुर्दशपूर्वरत्नकोशस्य तस्य दशपूर्वधरो महर्षिः ।
नाम्ना **महागिरि**रिति स्थिरतागिरीन्द्रो ज्येष्ठान्तिषत्समजनिष्ट विशिष्टलब्धिः ॥
शिष्योऽन्यो दशपूर्वभृन्मुनिवृषो नाम्ना **सुहस्ती**त्यरुद् यत्पादाम्बुजसेवनात्समुदिते राज्ये प्रबोधर्धिकाः ।
चक्रे **संप्रतिपार्थिवः** प्रतिपुरग्रामाकरं भारतेऽस्मिन्नर्धे जिनचैत्यमण्डितमिलापृष्ठं समन्तादपि ॥
अजनि [3]**सुस्थित-सुप्रतिबुद्ध** इत्यभिधयार्य**सुहस्ति**महामुनेः ।
शमधनो दशपूर्वधरान्तिषद्भवमहातरुभञ्जनकुञ्जरः ॥
महर्षिसंसेवितपादसंनिधेः प्रचारभागालवणोदसागरम् ।
महान्गणः **कोटिक** इत्यभूत्ततो गङ्गाप्रवाहो हिमवद्गिरेरिव ॥
तस्मिन्गणे कतिपयेष्वपि यातवत्सु साधूत्तमेषु चरमो दशपूर्वधारी ।
उद्दामतुम्बवनपत्तनवज्रशाखावज्रं महामुनिरजायत **वज्रसूरिः** ॥
दुर्भिक्षे समुपस्थिते प्रलयवद्भीमत्वभाज्यन्यदा भीतं न्यस्य महर्षिसंघमभितो विद्यावदातः पटे ।
योऽभ्युद्धृत्य कराम्बुजेन नभसा पुर्यामनैषीन्महा पुर्यां मङ्क्षु सुभिक्षधामनि तपोधाम्नामसीम्नां निधिः ॥
तस्माद्वज्राभिधा शाखाभूत्कोटिकगणद्रुमे । उच्चनागरिकामुख्यशाखात्रितयगोचरा ॥
तस्यां च वज्रशाखायां निलीनमुनिषट्पदः । पुष्पगुच्छायतो **गच्छश्चन्द्र** इत्याख्ययाभवत् ॥

---

१. अस्य जिनधर्मप्रतिबोधकाव्यस्य निर्माणसमयस्तु—'शशिजलधिसूर्यवर्षे शुचिमासे रविदिने सिताष्टम्याम् । जिनधर्मप्रतिबोधः कॢप्तोऽयं गुर्जरेन्द्रपुरे ॥' इति वदता ग्रन्थकर्त्रैव १२४१ (A. D. 1184) विक्रमसंवत्सरात्मक उक्तः. २. 'इति च' इति भवेत्. ३. सुस्थितः, सुप्रतिबद्धः, इति मुनिद्वयम्.

धर्मध्यानसुधासुधांशुरमलः संघार्थरत्नाकरो भव्याम्भोरुहभास्करः स्मरकरिप्रोन्माथकण्ठीरवः ।
गच्छे तत्र बभूव संयमधनः कारुण्यराशिर्**यशोभद्रः** सूरिरपूरि येन भुवनं शुद्धैर्यशोभिर्निजैः ॥
श्रीमन्नेमिजिनेन्द्रपावितशिरस्यद्रौ स संलेखनां कृत्वादौ प्रतिपन्नवाननशनं प्रान्ते शुभध्यानभाक् ।
तिष्ठञ्शान्तमनास्त्रयोदशदिनान्याश्चर्यमुत्पादयन्नुच्चैः पूर्वमहर्षिसंयमकथाः सत्यापयामासिवान् ॥

श्रीमान्**प्रद्युम्न**सूरिः समजनि जनितानेकभव्यप्रबोध-
स्तच्छिष्यो विश्वविश्वप्रथितगुणगणः प्रावृडम्भोदवद्यः ।
प्रीणाति स्माखिलक्ष्मां प्रवचनजलधेरुद्धृतैरर्थनीरै-
रातत्य स्थानकानि श्रुतिविषयसुधासारसध्र्यञ्चि विष्वक् ॥

सर्वग्रन्थरहस्यरत्नमुकुरः कल्याणवल्लीतरुः कारुण्यामृतसागरः प्रवचनव्योमाङ्गणाहस्करः ।
चारित्रादिकरत्नरोहणगिरिः क्ष्मां पावयन्धर्मराट् सेनानी**र्गुणसेनसूरि**रभवच्छिष्यस्तदीयस्ततः ॥
शिष्यस्तस्य च तीर्थमेकमवनेः पावित्र्यकृज्जंगमः स्याद्वादत्रिदशापगाहिमगिरिर्विश्वप्रबोधार्यमा ।
कृत्वा स्थानकवृत्तिशान्तिचरिते प्राप्तः प्रसिद्धिं परां सूरिर्भूरितपःप्रभाववसतिः श्री**देवचन्द्रो**ऽभवत् ॥

आचार्यो **हेमचन्द्रो**ऽभूत्तत्पादाम्भोजषट्पदः । तत्प्रसादादधिगतज्ञानसंपन्महोदयः ॥

जिष्णुश्चेदिदशार्णमालवमहाराष्ट्रापरान्तं कुरून्सिन्धूनन्यतमांश्च दुर्गविषयान्दोर्वीर्यशक्त्या हरिः ।
चौलुक्यः परमार्हतो विनयवाञ्श्री**मूलराजा**न्वयी तं नत्वेति **कुमारपाल**पृथिवीपालोऽब्रवीदेकदा ॥

पापर्द्धिद्यूतमद्यप्रभृति किमपि यन्नारकायुर्निमित्तं
तत्सर्वं निर्निमित्तोपकृतिकृतधियां प्राप्य युष्माकमाज्ञाम् ।
स्वामिन्नुर्व्यां निषिद्धं धनमसुतमृतस्याथ मुक्तं तथार्ह-
च्चैत्यैरुत्तंसिता भूरभवमिति समः **संप्रतेः** संप्रतीह ॥

अस्मत्पूर्वज**सिद्धराज**नृपतेर्भक्तिस्पृशो याच्ञया साङ्गं व्याकरणं सवृत्ति सुगमं चक्रुर्भवन्तः पुरा ।
मद्धेतोरथ योगशास्त्रममलं लोकाय च द्व्याश्रयच्छन्दोलंकृतिनामसंग्रहमुखान्यन्यानि शास्त्राण्यपि ॥

लोकोपकारकरणे स्वयमेव यूयं सज्जाः स्थ यद्यपि तथाप्यहमर्थयेदः ।
मादृग्जनस्य परिबोधकृते [शलाका] पुंसां प्रकाशयत वृत्तमपि त्रिषष्टेः ॥

तस्योपरोधादिति **हेमचन्द्रा**चार्यः **शलाकापुरुषे**तिवृत्तम् ।
धर्मोपदेशैकफलप्रधानं न्यवीविशच्चारु गिरां प्रपञ्चे ॥

जम्बूद्वीपारविन्दे कनकगिरिरसावश्नुते कर्णिकात्वं
यावद्यावच्च धत्ते जलनिधिरवनेरन्तरीयत्वमुच्चैः ।
यावद्व्योमाध्वपान्थौ तरणिशशधरौ भ्राम्यतस्तावदेत-
त्काव्यं नाम्ना शलाकापुरुषचरितमित्यस्तु जैत्रं धरित्र्याम् ॥'

इत्याचार्य**हेमचन्द्र**विरचित**शलाकापुरुषचरितप्रशस्ति**तश्च चौलुक्यकुमारपालराज्ये हेमचन्द्राचार्याणां सत्ताया अवगतेः

'नृपस्य जीवाभयदानडिण्डिमैर्महीतले नृत्यति कीर्तिनर्तकी ।
श्री**हेमचन्द्र**प्रभुपादपद्मं वन्दे भवाब्धेस्तरणैकपोतम् ।
ललाटपट्टान्तरकान्तराद्याक्षरावली येन मम व्यलोपि ॥

बोधयित्वा महाराजं देवलोकं जगाम यः । पश्चात्कुमारपालोऽयं शोकं गत्वा मुमूर्छ सः ॥

तदनु धैर्यमवलम्ब्य धर्मध्यानं करोति ।'

इति **हेमकुमारचरित्र**काव्ये **हेमचन्द्राचार्या**णां देवलोकगमनस्योक्तेश्च **कुमारपाल**राज्यसमय **एवाचार्यहेमचन्द्र**समयः, कुमारपालराजधान्येव भूमिमण्डलमित्यबाधमवगतम् । विशेषकथा तु प्रबन्धकोशप्रबन्धचिन्तामणिभ्यामवगन्तव्या ।

**कुमारपाल**राज्यसमयस्तु—

'ॐ नमः शिवाय ।

ब्रह्माद्वैतधिया मुमुक्षुभिरभिध्यातस्य बद्धाक्षरैरिच्छाशक्तिमभिष्टवीमि जगतां पत्युः श्रुतीनां निधेः ।
या व्यापारितसंहृतेः स्वसमये ब्रह्माण्डपिण्डैर्नवैः क्रीडन्ती मणिकन्दुकैरिव सदा स्वच्छन्दमाह्लादते ॥
गीर्वाणैर्वीतगर्वे दनुजपरिभवात्प्रार्थितस्त्रायकार्थे वेधाः संध्यां नमस्यन्नपि निजचुलुके पुण्यगङ्गाम्बुपूर्णे ।
सद्यो वीरं **चुलुक्याह्वय**मसृजदिमं येन कीर्तिप्रवाहैः पूतं त्रैलोक्यमेतन्नियतमनुहरत्येव हेतोः फलं श्रीः ॥
वंशः कोऽपि ततो बभूव विविधाश्चर्यैकलीलासदं यस्माद्भूमिभृतोऽपि वीतगणिता(णना)ः प्रादुर्भवन्त्यन्वहम् ।
छायां यः प्रथितप्रतापमहतीं दध्रे विपन्नोऽपि सन्यो जन्यावधि सर्वदापि जगतो विश्वस्य दत्ते फलम् ॥
वंशस्यास्य यशःप्रकाशनविधौ निर्मूल्यमुक्तामणिः क्षोणीपालकिरीटकल्पितपदः **श्रीमूलराजो**ऽभवत् ।
यो मूलं कलिदावदग्धनिखिलन्यायद्रुमोत्पादने यो राजेव करैः प्रकामशिशिरैः प्रीतिं निनाय प्रजाः ॥
यश्चापोत्कटराजराज्यकमलां स्वच्छन्दवन्दीकृतां विद्वद्बान्धवविप्रवन्दिभृतकव्यूहोपभोग्यां व्यधात् ।
यत्खड्गाश्रयिणीं तदा श्रियमलं युद्धस्फुरद्विक्रमक्रीताः सर्वदिगन्तरक्षितिभुजां लक्ष्म्याश्चिरं भेजिरे ॥
सूनुस्तस्य बभूव भूपतिलक**श्चामुण्डराजाह्वयो** यद्गन्धद्विपदानगन्धपवनाघ्राणेन दूरादपि ।
विभ्रश्यन्मदगन्धभग्नकरिभिः **श्रीसिन्धुराज**स्तथा नष्टः क्षोणिपतेर्यथास्य यशसां गन्धोऽपि निर्णाशितः ॥
तस्माद्**वल्लभराज** इत्यभिधया क्ष्मापालचूडामणिर्जज्ञे साहसकर्मनिर्मितचमत्कारः क्षमामण्डले ।
यत्कोपानलजृम्भितं पिशुनयत्येतत्प्रयाणश्रुतिक्षुभ्यन्मालवभूपचक्रविकसन्मालिन्यधूमोद्गमः ॥
श्रीम**द्दुर्लभराज**नामनृपतिर्भ्रातास्य राज्यं दधे शृङ्गारेऽपि निषण्णधीः परवधूवर्गस्य यो दुर्लभः ।
यस्य क्रोधपरायणस्य किमपि भ्रूवल्लरी भङ्गुरा सद्यो दर्शयति स्म लाटवसुधाभङ्गस्वरूपं फलम् ॥
भीमोऽपि द्विषतां सदा प्रणयिनां भोग्यत्वमासेदिवान्क्षोणीभारमिदं(मं) बभार नृपतिः **श्रीभीमदेवो** नृपः ।
धारापञ्चकसाधनैकचतुरैस्तद्वाजिभिः साधिता क्षिप्रं मालवचक्रवर्तिनगरी धारेति को विस्मयः ॥
तस्माद्भूमिपतिर्बभूव वसुधाकर्णावतंसः स्फुरत्कीर्तिप्रीणितविश्वकर्णविवरः **श्रीकर्णदेवाह्वयः** ।
येन ज्याप्रथितस्वनं च्युतशरं धर्मं पुरस्कुर्वता न्यायज्ञेन न केवलं रिपुगणः कालोऽपि विद्धः कलिः ॥
दृप्यन्मालवभूपबन्धनविधित्रस्ताखिलक्ष्मापतिर्भक्त्याकृष्टवितीर्णदर्शनशिवो मूर्तः प्रभावोदयः ।
सद्यः सिद्धरसानृणीकृतजगद्गीतोपमा(तावदा)नस्थितिर्जज्ञे **श्रीजयसिंहदेव**नृपतिः **सिद्धादिराज**स्ततः ॥

१. मूलराजराज्यम्—वि० सं० ९९३–१०५३. २. चामुण्डराजराज्यम्—वि० सं० १०५३–१०६६. ३. दुर्लभराजराज्यम्—वि० सं० १०६६–१०७८. ४. भीमदेवराज्यम्—वि० सं० १०७८–११२०. ५. कर्णदेवराज्यम्—वि० सं० ११२०–११५०. ६. सिद्धराजापरपर्यायजयसिंहराज्यम्—वि० सं० ११५०–११९९.

वश्या वेश्म रसातलं च विलसद्भोगि·················भोक्तुम·······क्षत्राणि रक्षांसि च ।
यः क्षोणीधरयागिनीं च सुमहाभोगां सिषेवे चिरं हेलासिद्धरसाः सदा क्षितिभुजः···············रे॥
[संख्या]तीतवितीर्णदाननिवहैः संपन्नपुण्योच्चयः क्रीडाक्रान्तदिगन्तराल················ ।
································································ ॥

·················कुलभूप ·······बलाम्ब·····क्रीडाक्रोड इवोद्धार वसुधां देवाधिदेवाज्ञया ।
देवः सोऽथ **कुमारपाल**नृपतिः श्रीराज्यचूडामणिर्यः स्वर्गादवतीर्णवान्हरिरिति ज्ञातः प्रभावाज्जनैः ॥[1]
**अर्णोराज**नराधिराजहृदये क्षिप्त्वैक(व) बाणव्रजं श्च्योतल्लोहिततर्पणादमदयच्चण्डीं भुजस्थायिनीम् ।
द्वारालम्बितमालवेश्वरशिरःपद्मेन यश्चाहरल्लीलापङ्कजसंग्रहव्यसनिनीं चौलुक्यराजान्वयः ॥[2]
शुद्धाचारनवावतारसरणिः सद्धर्मकर्मक्रमप्रादुर्भावविशारदो नयपथप्रस्थानसार्थाधिपः ।
यः संप्रत्यवतारयन्कृतयुगं योगं कलेर्लङ्घयन्मन्ये संहरति स भूमिवलयं कालव्यवस्थामपि ॥
प्रत्यू·······खण्डिताङ्गुलिदलैः पर्युल्लसत्पल्लवो नष्टोदीच्यनराधिपोज्झितसितच्छत्रैः प्रसूनोज्ज्वलः ।
छिन्नप्राच्यनरेन्द्रमौलिकमलैः प्रौष्प(प्रोद्य)त्फलद्योतितश्छायां दूरमवर्धयन्निजकुले यस्य प्रतापद्रुमः ॥
आचारः किल तस्य रक्षणविधिर्विघ्नेशनिर्ना(र्णा)शितप्रत्यूहस्य फलावलोकिशकुनज्ञानस्य सं········वः ।
देवीमण्डलखण्डिताखिलरिपोर्युद्धं विनोदोत्सवः श्रीसोमेश्वरदत्तराज्यविभवस्याडम्बरं वाहिनी ॥
राज्ञानेन च भुज्यमानसुभगा विश्वंभरा विस्फुरद्रत्नद्योतितवारिराशिरशना शीताद्रिविन्ध्यस्तनी ।
एषाभूषयदस्थिकुण्डलमिव श्रुत्याश्रयं····ष्टता बिभ्राणा नगराह्वयं द्विजमहास्थानं सुवर्णोदयम् ॥
आब्रह्मादिऋषिप्रवर्तितमहायज्ञक्रमोत्तम्भितैर्यूपैर्दत्तकरावलम्बनतया पादव्यपेक्षाच्युतः ।
धर्मोऽत्रैव चतुर्युगेऽपि कलितानन्दः परिस्पन्दते तेनानन्दपुरेति यस्य विबुधैर्नामान्तरं निर्मितम् ॥
अश्रान्तद्विजवर्गवेदतुमुलैर्बाधिर्यमारोपितः शश्वद्धोमहुताशधूमपटलैरान्ध्यव्यथां लम्भितः ।
नानादेवनिकेतनध्वजशिखाघातैश्च खञ्जीकृतो यस्मिन्नद्य कलिः स्वकालविहितोत्साहोऽपि नोत्सर्पति ॥
सर्पद्विप्रवधूजनस्य विविधालंकाररत्नांशुभिः स्मेराः संततगीतमङ्गलरवैर्वाचालतां प्रापिताः ।
अस्ता(श्रा)न्तोत्सवलक्ष्यमाणविभवोत्कर्षप्रकाशस्थितौ मार्गा एव वदन्ति यत्र नृपतेः सौराज्यसंपद्गुणम् ॥
अस्मिन्नागरवंशजद्विजजनस्त्राणं करोत्यध्वरे रक्षां शान्तिकपौष्टिकैर्वितनुते भूपस्य राष्ट्रस्य च ।
मा भूत्तस्य तथापि तीव्रतपसो बाधेति भक्त्या नृपो वप्रं विप्रपुराभिरक्षणकृते निर्मापयामास सः ॥
अस्मिन्वप्रगुणेन तोयनिलयाः प्रीणन्ति लोकं जलैः कामं क्षेत्रभुवोऽपि वप्रकलितास्तन्वन्ति धान्यश्रियम् ।
एवं चेतसि संप्रधार्य सकलब्रह्मोपकारेच्छया चक्रे वप्रविभूषितं पुरमिदं चौलुक्यचूडामणिः ॥
पादाक्रान्तरसातलो गिरिरिव श्लाघ्यो महाभोगतः शृङ्गारीव तरङ्गिणीपतिरिव स्फारोदयद्वारभूः ।
उत्सर्पत्कपिशीर्षको जय इव क्रव्यादनाथद्विषां नारीवर्ग इवेष्टकान्तरुचिरः सालोऽयमालोक्यते ॥
भोगाभोगमनोहरः फणशतैरुत्तुङ्गतां धारयन्यातः कुण्डलितां च यज्ञपुरुषस्याज्ञावशेनागतः ।
रत्नस्वर्णमहानिधिं पुरमिव त्रातुं स शेषः स्थितः प्राकारः सुधया सितोपलशिराः संलक्ष्यते वृत्तवान् ॥

---

१. कुमारपालराज्यम्—वि० सं० ११९९–१२३०. २. अयमर्णोराजश्च वीरधवलमहाराजपितामह इति कीर्तिकौमुदीकाव्यस्य नरेन्द्रवंशवर्णनात्मके द्वितीयसर्गे व्याख्यात एव भवेत्.

कामं कामसंमृद्धिपूरकरमारामाभिरामाः सदा स्वच्छन्दस्वनतत्परैर्द्विजकुलैरत्यन्तवाचालिताः।
उत्सर्पद्गुणशालिवप्रवलयप्रीतैः प्रसन्ना जनैरत्रान्तश्च बहिश्च संप्रति भुवः शोभाद्भुतं बिभ्रति॥

लक्ष्मीकुलं क्षोणिभुजो दधानः प्रौढोदयाधिष्ठितविग्रहोऽयम्।
विभ्राजते नागरकाम्यवृष्टिर्वप्रश्च चौलुक्यनराधिपश्च॥

यावत्पृथ्वी पृथुविरचिताशेषभूभृन्निवेशा यावत्कीर्तिः सगरनृपतेर्विद्यते सागरोऽयम्।
तावन्नन्द्याद्द्विजवरमहास्थानरक्षानिदानं श्रीचौलुक्यक्षितिपतियशःकीर्तनं वप्र एषः॥

एकाहनिष्पन्नमहाप्रबन्धः श्रीसिद्धराजप्रतिपन्नबन्धुः।
श्रीपालनामा कविचक्रवर्ती प्रशस्तिमेतामकरोत्प्रशस्ताम्॥

संवत् १२०८ वर्षे आश्विन शुदि (२) गुरौ लिखितं नागरब्राह्मणपण्डितबालणेन॥'

इति **काव्यमाला**पुस्तकान्तर्गतप्राचीनलेखमालायां G. Bühler Ph. D., L. L. D., C. I. E. महाशयप्रेषित ४९ तमलेखतः विक्रमसंवत् १२०८ (A. D. 1151) रूपः स्फुटमेव प्रतीयते। एवं च द्वादशी खिस्तशतिका हेमचन्द्रसत्ताधारभूतावगम्यते।

अनेनाचार्यश्रीहेमचन्द्रेणेयन्तो ग्रन्था निर्मिता इति निश्चितं नैव। परंतु तन्निर्मितग्रन्थेषु—अनेकार्थकोषः, अनेकार्थशेषः, अभिधानचिन्तामणिः (नाममालाव्याख्या), अलंकारचूडामणिः (काव्यानुशासनव्याख्या), उणादिसूत्रवृत्तिः, काव्यानुशासनम्, छन्दोनुशासनम्, छन्दोनुशासनवृत्तिः, देशीनाममाला सवृत्तिः, [द्याश्रयकाव्यं सवृत्ति], धातुपाठः सवृत्तिः, धातुपारायणं सवृत्ति, धातुमाला, नाममाला, नाममालाशेषः, निघण्टुशेषः, [प्रमाणमीमांसा सवृत्तिः,] बलाबलसूत्रबृहद्वृत्तिः, बालभाषाव्याकरणसूत्रवृत्तिः, [योगशास्त्रम्,] विभ्रमसूत्रम्, [लिङ्गानुशासनं सवृत्ति,] शब्दानुशासनं सवृत्ति, शेषसंग्रहः, शेषसंग्रहसारोद्धारः, एते ग्रन्थाः Catalogus Catalogorum ग्रन्थे Dr. Theodor Aufrecht महाशयैः प्रकाशिताः। एवमनेकलक्षात्मकग्रन्थकर्तृश्वेताम्बरजैनाचार्यश्रीहेमचन्द्रकृतान्यभिधानान्येवास्मिन्पुस्तके संगृहीतानि।

तदेतेषामभिधानानां मुद्रणाय शोधनसमये येषां सहृदयानां पुस्तकानि प्राप्तानि, तेषां नामानि धन्यवादपुरःसरं प्रकाश्यन्ते—

| | |
|---|---|
| १. अभिधानचिन्तामणिः (नाममाला) | —वाराणसीमुद्रितः। |
| ,, | —जयपुरराजगुरुश्रीलक्ष्मीदत्तभट्टात्मजश्रीदत्तानाम्। |
| ,, | —जयपुरराजकीयपुस्तकालयतः। |
| २. अभिधानचिन्तामणिपरिशिष्टम् (नाममालाशेषः) | —अभिधानचिन्तामणितोऽस्माभिरुद्धृतम्। |
| ३. अनेकार्थसंग्रहः | —वाराणसीमुद्रितः। |
| ,, | —जयपुरराजगुरुश्रीलक्ष्मीदत्तात्मजश्रीदत्तानाम्। |
| अनेकार्थकैरवाकरकौमुदी | —जयपुरराजगुरुपर्वणीकरश्रीनारायणभट्टानाम्। |
| ,, | —जंगमयुगप्रधानबृहत्खरतरगच्छप्रधानभट्टारकश्रीजिनमुक्तिसूरिणाम्। |
| ४. निघण्टुशेषः | —पुण्यपत्तनस्थपुस्तकालयतः। |

५. लिङ्गानुशासनम् —लवपुरीयविश्वविद्यालयाध्यापकदुर्गादत्तशास्त्रिणाम् ।

" —जंगमयुगप्रधानबृहत्खरतरगच्छप्रधानभट्टारक-श्रीजिनमुक्तिसूरिणाम् ।

६. अभिधानचिन्तामणिशिलोञ्छः —खरतरगच्छस्योजीराममुनीनाम् ।

तदेवमेकानेकपुस्तकाधारेण शोधितमुद्रिताभिधानसंग्रहेऽस्मद्दोषादक्षरयोजकदोषाद्वा यत्र क्वचनाशुद्धिः स्थिता जाता वा तत्र सहृदयाः सौहार्देण समाधास्यन्ति ।

यतः—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति प्रार्थयतः—

पण्डित-शिवदत्त-काशीनाथौ ।

॥ श्रीः ॥

# अभिधानसंग्रहः ।

(६)

श्रीहेमचन्द्राचार्यविरचितः

## अभिधानचिन्तामणिः ।

[1]प्रणिपत्यार्हतः सिद्धसाङ्गशब्दानुशासनः । रूढयौगिकमिश्राणां नाम्नां मालां तनोम्यहम् ॥ १
[2]व्युत्पत्तिरहिताः शब्दा रूढा आखण्डलादयः । योगो[3]ऽन्वयः स तु गुणक्रियासंबन्धसंभवः ॥ २
[4]गुणतो नीलकण्ठाद्याः क्रियातः स्रष्टृसंनिभाः । [5]स्वस्वामित्वादिसंबन्धस्त[6]त्राहुर्नाम तद्वताम् ॥ ३

---

१. "प्रणिपत्यार्हत इति मङ्गलार्थम् । मङ्गलं चाविघ्नेन शास्त्रस्य समाप्त्यर्थम् । सिद्धं प्रतिष्ठां प्राप्तं साङ्गं शब्दानुशासनं यस्येति कर्तृविशेषणम् । अङ्गानि लिङ्गधातुपारायणादीनि । एतावता शब्दानुशासनेन सहास्या एककर्तृकत्वमाह । एककर्तृकत्वख्यापनं चान्योन्यसंवादात्प्रतीतिदार्ढ्योपदर्शनार्थम् । शब्दानुशासनस्य कीर्तनं तदधीनः सर्वविद्यानां प्रकर्ष इति प्रदर्शनार्थम् ॥ यदाह—'वक्तृत्वं च कवित्वं च विद्वत्तायाः फलं विदुः । शब्दज्ञानादृते तन्न द्वयमप्युपपद्यते ॥' रूढादीनां शब्दानां नाम्नां मालामभिधानचिन्तामणिनाम्नीं तनोमि । अहमिति कर्तृनिर्देशः ॥" इति विवृतिः. २. "तत्र रूढाञ्शब्दान्व्याचष्टे—प्रकृतिप्रत्ययविभागेनान्वर्थवर्जिता व्युत्पत्तिरहिताः । शब्दा इत्यनुवाद्यनिर्देशः । रूढा इति विधेयपदम् । आखण्डलादय इत्युदाहरणम् । नह्यत्र प्रकृतिप्रत्ययविभागेन व्युत्पत्तिरस्ति । आदिशब्दान्मण्डपादयः ॥ यद्यपि 'नाम च धातुजम्—' इति शाकटायनमतेन रूढा अपि व्युत्पत्तिभाजः, तथापि वर्णानुपूर्वीज्ञानमात्रप्रयोजना तेषां व्युत्पत्तिः, न पुनरन्वर्थार्थप्रवृत्तौ कारणमिति रूढा अव्युत्पन्ना एव ॥" इति विवृतिः. ३. "यौगिकाञ्शब्दान्व्याचष्टे—शब्दानां परस्परमर्थानुगमनमन्वयः स योगः । स पुनर्योगो गुणात्, क्रियायाः संबन्धाच्च भवति । गुणो नीलपीतादिः । क्रिया करोत्यादिका । संबन्धो वक्ष्यमाणः संभवो यस्य स तथा॥" इति विवृतिः. ४. "गुणक्रियासंभवयोगेन यौगिकानामुदाहरणम्—गुणतो गुणनिबन्धनो येषां योगस्ते शब्दा नीलकण्ठाद्याः । नीलः कण्ठोऽस्य इति गुणप्राधान्यान्नीलकण्ठः शंकरः । आदिशब्दात् शितिकण्ठः कालकण्ठः इत्यादि ॥ संख्यापि गुण एव इति त्रिलोचनः । तेन—पञ्चबाणः षण्मुखः अष्टश्रवाः दशग्रीवः इत्यादि संगृहीतम् ॥ क्रियातः क्रियानिबन्धनो योगो येषां ते स्रष्टृप्रभृतयः । सृजति इति सर्जनप्राधान्यात्स्रष्टा ब्रह्मा । एवं धाता इत्यादयः ॥" इति विवृतिः. ५. "संबन्धं व्याचष्टे—स्वम् आत्मीयम्, स्वामी यस्तत्र प्रभविष्णुः, तयोर्भावः स्वस्वामित्वम् । तदादिः संबन्धः । आदिशब्दाज्जन्यजनकभावादिपरिग्रहः ॥" इति विवृतिः. ६. "तत्र स्वस्वामिभावसंबन्धे पालादयः शब्दाः स्वात्परे नियोजिताः तद्वतां स्वामिनां नाम आहुः ॥ मत्वर्थक इति । मतुस्तद्धितः । तस्यार्थोऽस्त्यर्थविशिष्टप्रकृत्यर्थेन सह देवदत्तादेः संबन्धः । तदाधारो वा 'तदस्यास्त्यस्मिन्निति मतुः' इति मतुप्रत्ययविधानात् । मतोरर्थो यस्य स मत्वर्थकस्तद्धितो मतुना समानार्थ इत्यर्थः । स च इन्नणिकादिः । मत्वर्थाव्यभिचारान्मतुरपि । आदिशब्दात्पादयोऽपि ॥ 'तत्राहुर्नाम तद्वताम्' इति उत्तरेष्वप्यनुवर्तनीयम् ॥" इति विवृतिः,

25

स्वात्पालधनभुग्नेतृपतिमत्वर्थकादयः । भू[1]पालो भूधनो भूभुग्भूनेता भूपतिस्तथा ॥ ४
भूमाँश्चेति कविरूढ्या ज्ञेयोदाहरणावली । जन्यात्[2]कृत्कर्तृसृट्स्रष्टृविधातृकरसूसमाः ॥ ५
जनका[3]द्योनिजरुहजन्मभूसूत्यणादयः । धार्या[4]द्ध्वजास्त्रपाण्यङ्कमौलिभूषणभृन्निभाः ॥ ६
शालिशेखरमत्वर्थमालिभर्तृधरा अपि । भोज्या[5]द्भुगन्धोव्रतलिट्पायिपाशाशनादयः ॥ ७
पत्युः[6] कान्ताप्रियतमावधूप्रणयिनीनिभाः । कलत्राद्वररमणप्रणयीशप्रियादयः ॥ ८
सख्युः[7] सखिसमा वाह्या[8]द्गामियानासनादयः । ज्ञातेः[9] स्वसृदुहित्रात्मजाग्रजावरजादयः ॥ ९

---

१. "क्रमेणोदाहरणान्याह—इतिशब्दः प्रकारार्थः । तेन भूपादयोऽपि ॥ कवीनां रूढिः परम्परा तया न तु कविरूढ्यतिक्रमेण । यथा 'कपाली' इत्यादौ सत्यपि स्वस्वामिभावसंबन्धे 'कपाली' इति मत्वर्थीयान्त एव भवति, न तु 'कपालपालः, कपालधनः, कपालभुक्, कपालनेता, कपालपतिः' इत्यादि ॥" इति विवृतिः. २. "जन्यजनकभावसंबन्धे यथा—जन्यात्कार्यात्परे कृदादयस्तद्वतां जनकानां कारणानां नाम आहुः ॥ यथा—विश्वकृत्, विश्वकर्ता, विश्वसृट्, विश्वस्रष्टा, विश्वविधाता, विश्वकरः, विश्वसूः ब्रह्मा । तस्य हि विश्वं जन्यमिति रूढिः ॥ सम आद्यर्थः । तेन—'विश्वकारकः, विश्वजनकः' इत्याद्यपि ॥ कविरूढ्या इत्येव । नहि यथा चित्रकृदुच्यते तथा चित्रसूः इति ॥" इति विवृतिः. ३. "तथा जनकात् परे योन्यादयः शब्दास्तद्वतां कारणवतां कार्याणां नाम आहुः ॥ यथा—आत्मयोनिः, आत्मजः, आत्मरुहः, आत्मजन्मा, आत्मभूः, आत्मसूतिः, ब्रह्मा ॥ तस्य ह्यात्मा कारणमिति रूढिः ॥ वक्ष्यमाणस्यादिशब्दस्याभिसंबन्धात् संभवादयोऽपि गृह्यन्ते ॥ अणादयस्तु—भृगोरपत्यं भार्गवः । दितेरपत्यं दैत्यः । वात्स्यस्यापत्यं वात्स्यायनः ॥ अत्रापि हि भार्गवादीनां भृग्वादयो हि जनका इति रूढिः ॥ 'कविरूढ्या' इत्येव । नहि—आत्मयोनिवत् 'आत्मजनकः, आत्मकारकः' इति भवति ॥" इति विवृतिः. ४. "धार्यधारकसंबन्धे यथा—धार्यवाचकात् परे ध्वजादयो धरान्ता धारकस्य नाम आहुः ॥ यथा—वृषध्वजः, शूलास्त्रः, पिनाकपाणिः, वृषाङ्कः, चन्द्रमौलिः, शशिभूषणः, शूलभृत् । निभग्रहणात्तत्सदृशा वृषकेतन-शूलायुध-वृषलक्ष्म-चन्द्रशिरस्-चन्द्राभरणादयो गृह्यन्ते । तथा—पिनाकशाली, शशिशेखरः, शूली, पिनाकमाली । पिनाकं मलते धारयतीति कृत्वा पिनाकभर्ता, गङ्गाधरः ॥ 'कविरूढ्या' इत्येव । तेन सत्यपि धार्यधारकसंबन्धे न सर्वेभ्यो धार्येभ्यो ध्वजाद्यर्थाः शब्दाः प्रयोज्याः । नहि भवति वृषध्वजवत् शूलध्वजः, शूलास्त्रवत् चन्द्रास्त्रः, पिनाकपाणिवत् अहिपाणिः, वृषाङ्कवत् चन्द्राङ्कः, चन्द्रमौलिवत् गङ्गामौलिः, शशिभूषणवत् शूलभूषणः, शूलशालिवत् चन्द्रशाली, चन्द्रशेखरवत् गङ्गाशेखरः, शूलिवत् शूलवान्, पिनाकमालिवत् सर्पमाली, पिनाकभर्तृवत् चन्द्रभर्ता, गङ्गाधरवत् चन्द्रधरः, इति ॥" इति विवृतिः. ५. "भोज्यभोजकभावसंबन्धे यथा—भोज्यं भक्ष्यं तद्वाचिनः शब्दात् परे भुगादयः शब्दास्तद्वतां भोज्यवतां भोक्तॄणां नाम आहुः ॥ यथा—अमृतभुजः, अमृतान्धसः, अमृतव्रताः, अमृतलिहः, अमृतपायिनः, अमृतपाः, अमृताशाः, अमृताशनाः, देवाः ॥ 'तेषां ह्यमृतं भोज्यम्' इति रूढिः ॥ आदिशब्दस्तत्समानार्थभोजनादिशब्दपरिग्रहाय ॥ 'कविरूढ्या' इत्येव । नहि यथा अमृतभुजः, तथा अमृतवल्भा इति भवति ॥" इति विवृतिः. ६. "पतिकलत्रभावसंबन्धे यथा—पतिर्वरयिता तद्वाचकाच्छब्दात् कान्तादिसदृशाः शब्दाः तद्वतीनां पतिमतीनां भार्याणां नाम आहुः ॥ यथा—शिवकान्ता, शिवप्रियतमा, शिववधूः, शिवप्रणयिनी, गौरी ॥ तस्या हि शिवः पतिः इति रूढिः ॥ निभग्रहणाद्रमणी-वल्लभा-प्रिया-प्रभृतयो गृह्यन्ते ॥ 'कविरूढ्या' इत्येव । नहि भवति यथा शिवकान्ता तथा शिवपरिग्रहः इति ॥ तथा—कलत्रवाचिनः शब्दात्परे वरादयः शब्दास्तद्वतां कलत्रवतां वरयितॄणां नाम आहुः ॥ यथा—गौरीवरः, गौरीरमणः, गौरीप्रणयी, गौरीशः, गौरीप्रियः, शिवः ॥ 'तस्य हि गौरी कलत्रम्' इति रूढिः ॥ आदिशब्दात् तत्समानार्थाः पत्यादयो गृह्यन्ते ॥ 'कविरूढ्या' इत्येव । नहि भवति यथा गौरीवरः शिवः, तथा गङ्गावरः' इति ॥" इति विवृतिः. ७. "सख्युः संबन्धे यथा—सखिवाचकाच्छब्दात् परे सखिसमानार्थाः तद्वतां सख्यवतां नाम आहुः ॥ यथा—श्रीकण्ठस्य सखा श्रीकण्ठसखः कुबेरः । मधुसखः कामः । समग्रहणात् सुहृदादयो गृह्यन्ते ॥ 'कविरूढ्या' इत्येव । नहि भवति यथा—श्रीकण्ठसखो धनदः, तथा—धनदसखः श्रीकण्ठ इति ॥" इति विवृतिः. ८. "वाह्यवाहकभावसंबन्धे यथा—वाह्यात् वाह्यवाचिनः शब्दात् परे

[१]आश्रयात्सद्मपर्यायशयवासिसदादयः । [२]वध्याद्भिद्द्वेषिजिद्घातिध्रुग्रिपुध्वंसिशासनाः ॥ १०
अप्यन्तकारिदमनदर्पच्छिन्मथनादयः । [३]विवक्षितो हि संबन्ध एकतोऽपि पदात्ततः ॥ ११
प्राक्प्रदर्शितसंबन्धिशब्दा योज्या यथोचितम् । [४]दृश्यते खलु वाह्यत्वे वृषस्य वृषवाहनः ॥ १२
स्वत्वे पुनर्वृषपतिर्धार्यत्वे वृषलाञ्छनः । अंशोर्धार्यत्वेंऽशुमाली स्वत्वेंऽशुपतिरंशुमान् ॥ १३
वध्यत्वेऽहेरहिरिपुर्भोज्यत्वे चाहिभुक्शिखी । [५]चिह्नैर्व्यक्तेर्भवेद्व्यक्तेर्जातिशब्दोऽपि वाचकः ॥ १४
तथाह्यगस्तिपूता दिग्दक्षिणाशा निगद्यते । [६]अयुग्विषमशब्दौ त्रिपञ्चसप्तादिवाचकौ ॥ १५

---

गामिप्रभृतयः तद्वतां वाह्यवतां वाहयितॄणां नाम आहुः ॥ यथा—वृषगामी, वृषयानः, वृषासनः, शंभुः ॥ तस्य हि वृषो यानम् इति रूढिः ॥ आदिशब्दाद् वृषवाहन इत्यादयोऽपि ॥ 'कविरूढ्या' इत्येव । नहि भवति यथा—'नरवाहनः कुबेरः' तथा 'नरगामी, नरयानः' इति ॥" इति विवृतिः. ९. "ज्ञातेयसंबन्धे यथा—ज्ञातिः स्वजनः, तद्वाचिनः शब्दात् परे स्वस्रादयस्तद्वतां ज्ञातेयवतां ज्ञातीनां नाम आहुः ॥ स्वस्रादीनां च ज्ञातिविशेषवाचित्वाज्ज्ञातिविशेषादेव प्रयोगो यथा—यमस्वसा यमुना । हिमवद्दुहिता गौरी । चन्द्रात्मजो बुधः । गदाग्रज इन्द्रावरजश्च विष्णुः । यमादयो हि यमुनादीनां भ्रात्रादिज्ञातय इति रूढिः ॥ आदिशब्दात्सोदरादयो गृह्यन्ते ॥ यथा—कालिन्दीसोदरो यमः ॥ 'कविरूढ्या' इत्येव । नहि भवति यथा 'यमुना यमस्वसा', 'तथा शनिस्वसापि ॥" इति विवृतिः.

१. "आश्रयाश्रयिसंबन्धे यथा—आश्रयो निवासः तद्वाचिनः शब्दात् परे सद्मपर्यायाः शयवासिसदादयश्च तद्वताम् आश्रयवताम् आश्रितानां नाम आहुः ॥ यथा—द्युसद्मानः, द्युसदनाः, दिवौकसः । दिवशब्दो वृत्तावकारान्तोऽप्यस्तीति । द्युवसतयः, दिवाश्रयाः, द्युशयाः, द्युवासिनः, द्युसदः, देवाः ॥ द्यौः स्वर्गः, स च तेषामाश्रयः इति रूढिः ॥ 'कविरूढ्या' इत्येव । नहि भवति यथा द्युसद्मानो देवाः, तथा भूमिसद्मानो मनुष्याः इति ॥" इति विवृतिः. २. "वध्यवधकभावसंबन्धे यथा—वध्यो घात्यः तद्वाचिनः शब्दात् परे भिदादयः अन्तकार्यादयोऽपि तद्वतां वधकानां नाम आहुः ॥ यथा—पुरभित्, पुरद्वेषी, पुरजित्, पुरघाती, पुरध्रुक्, पुरारिः, पुरध्वंसी, पुरशासनः, पुरान्तकारी, पुरदमनः, पुरदर्पच्छित्, पुरमथनः, शिवः ॥ 'तस्य हि पुरो वध्याः' इति रूढिः ॥ आदिशब्दात्—पुरदारी, पुरनिहन्ता, पुरकेतुः, पुरहा, पुरसूदनः, पुरान्तकः, पुरजयी, इति । वध्य इति वधार्हमात्रेऽपि । तेन—कालियदमनः, कालियारिः, कालियशासनः, विष्णुः' इत्यादयोऽपि गृह्यन्ते ॥ 'कविरूढ्या' इत्येव । तेन कालियदमनादिवत् 'कालियघाती' इति न भवति ॥" इति विवृतिः. ३. "उक्ताः स्वस्वामित्वादयः संबन्धाः । ते च यथा भिन्नद्रव्याश्रयास्तथैकद्रव्याश्रया अपि भवन्ति इति दर्शयितुमाह—विवक्षानिबन्धनो हि संबन्धः, तत एकस्मादपि वृषादेः संबन्धिपदात् परे संबन्धान्तरनिबन्धना वाहनादयः शब्दा यथोचितं प्रयुज्यन्ते ॥" इति विवृतिः. ४. एतदेवाह—वाह्यवाहकभावसंबन्धे विवक्षायां यथा—'वृषवाहनो रुद्रः' इति भवति । तथा स्वस्वामिभावसंबन्धविवक्षायां 'वृषपतिः' ॥ धार्यधारकभावसंबन्धविवक्षायां च 'वृषलाञ्छनः' इत्यपि ॥ धार्यधारकसंबन्धविवक्षायां यथा—'अंशुमाली रविः' इति भवति । तथा—स्वस्वामिभावसंबन्धविवक्षायाम् 'अंशुपतिः, अंशुमान्' इत्यपि ॥ तथा—वध्यवधकभावसंबन्धे यथा—'अहिरिपुर्मयूरः' । तथा—भोज्यभोजकभावसंबन्धे 'अहिभुक्' इत्यपि भवति ॥" इति विवृतिः. ५. "संबन्धनिबन्धनां व्युत्पत्तिमुक्त्वा व्युत्पत्त्यन्तरमाह—चिह्नैर्विशेषणैर्व्यक्तैर्निःसंदेहैर्जात्यभिधायकोऽपि शब्दो व्यक्तेर्वाचको भवेत् । व्यक्तेर्नामतां यातीत्यर्थः ॥ तथाहीत्यादिनोदाहरणमाह—अगस्तिना ऋषिविशेषेण पूता स्वस्थित्या पवित्रिता इति व्यक्तं चिह्नम् । तेन चिह्नितो 'दिक्' इति जातिशब्दो दक्षिणाशाया व्यक्तेरभिधायी भवति ॥ एवं 'सप्तर्षिपूता दिक् उत्तराशा,' 'अत्रेर्नयनसमुत्थं ज्योतिश्चन्द्रः' इत्यादयोऽपि ॥" इति विवृतिः. ६. "व्युत्पत्त्यन्तरमाह—त्रि-पञ्च-सप्तादिस्थाने अयुग्-विषम-शब्दौ त्रिनेत्रादिपदेषु योजनीयौ । यथा—त्रिनेत्रः, अयुग्नेत्रः, विषमनेत्रश्च शंभुः ॥ पञ्चेषुः, अयुगिषुः, विषमेषुश्च कामः । सप्तपलाशः, अयुक्पलाशः, विषमपलाशश्च सप्तपर्णः ॥ आदिशब्दात् नवशक्तिः, अयुक्शक्तिः, विषमशक्तिश्च शंभुः ॥ एवं त्र्यक्ष-पञ्चबाण-सप्तच्छदादिष्वपि ॥" इति विवृतिः.

त्रिनेत्रपञ्चेषुसप्तपलाशादिषु योजयेत् । गुणशब्दो विरोध्यर्थं नञादिरितरोत्तरः ॥ १६
अभिधत्ते यथा कृष्णः स्यादसितः सितेतरः । वार्ध्यादिषु पदे पूर्वे वाडवाग्न्यादिषूत्तरे ॥ १७
द्वयेऽपि भूभृदाद्येषु पर्यायपरिवर्तनम् । एवं परावृत्तिसहा योगाः स्युरिति यौगिकाः ॥ १८
मिश्राः पुनः परावृत्त्यसहा गीर्वाणसंनिभाः । प्रवक्ष्यन्तेऽत्र लिङ्गं तु ज्ञेयं लिङ्गानुशासनात् ॥ १९
देवाधिदेवाः प्रथमे काण्डे देवा द्वितीयके । नरस्तृतीये तिर्यञ्चस्तुर्ये एकेन्द्रियादयः ॥ २०
एकेन्द्रियाः पृथिव्यम्बुतेजोवायुमहीरुहः । कृमिपीलकलूताद्याः स्युर्द्वित्रिचतुरिन्द्रियाः ॥ २१
पञ्चेन्द्रियाश्चेभकेकिमत्स्याद्याः स्थलखाम्बुगाः । पञ्चेन्द्रिया एव देवा नरा नैरयिका अपि ॥ २२
नारकाः पञ्चमे साङ्गाः षष्ठे साधारणाः स्फुटम् । प्रस्तोष्यन्तेऽव्ययाश्चात्र त्वँन्ताथादी न पूर्वगौ ॥ २३

---

१. "व्युत्पत्त्यन्तरमाह—गुणवाची शब्दो नञ्पूर्व इतरशब्दोत्तरश्च विरोधिनमर्थमभिधत्ते ॥ यथा—असितः, सितेतरः, कृष्णः ॥ एवम्—अकृशः, कृशेतरश्च स्थूल इत्यादि ॥' इति विवृतिः. २. "व्युत्पत्त्यन्तरमाह—वार्ध्यादिषु शब्देषु पूर्वस्मिन्नेव पदे पर्यायस्य परिवर्तनं भवति॥ यथा—वार्धिः, जलधिः, तोयधिः ॥ आदिशब्दग्रहणात् जलदः, तोयदः, नीरदः इत्यादि ॥ वडवाग्न्यादिषु शब्देषु उत्तरस्मिन्नेव पदे पर्यायपरिवर्तनम् । यथा—वडवाग्निः, वडवानलः, वडवावह्निः ॥ आदिशब्दात् सरोजम्, सरोरुहम्, इत्यादि ॥ भूभृदाद्येषु शब्देषु द्वयेऽपि पूर्वत्र उत्तरत्र च पदे पर्यायस्य परिवर्तनम् । यथा—भूभृत्, उर्वीभृत्, भूधरः, उर्वीधरः ॥ आद्यशब्दात् सुरपतिः, देवराजः, इत्यादयः ॥" इति विवृतिः. ३. "एवमिति पूर्वत्र उत्तरत्र उभयत्र च पदे परावृत्तिं पर्यायपरिवर्तनं सहन्ते क्षमन्ते परावृत्तिसहा वार्ध्यादयः शब्दा योगाद् अन्वयाद् भवेयुः इति यौगिकाः ॥" इति विवृतिः. ४. "गीर्वाणादयः शब्दाः पूर्वत्र उत्तरत्र च पदे पर्यायपरावृत्तिमसहमाना मिश्रा योगयुक्ता रूढिमन्तश्च अत्राभिधानचिन्तामणौ नाममालायां प्रवक्ष्यन्ते ॥ संनिभग्रहणाद् दशरथ-कृतान्त-प्रभृतयः ॥" इति विवृतिः. ५. "लिङ्गमिति ॥ पुंलिङ्गं स्त्रीलिङ्गं नपुंसकलिङ्गं चास्मदुपज्ञलिङ्गानुशासनात् ज्ञेयं निर्णेतव्यम् । अत एवास्माभिरमरकोशाद्यभिधानमालास्विव लिङ्गनिर्णयो नोक्तः ॥ इह तु विनेयजनानुग्रहार्थं संदिग्धलिङ्गानां नानालिङ्गानां च शब्दानां लिङ्गनिर्णयो वक्ष्यते ॥" इति विवृतिः. ६. "इह हि 'मुक्तगतिः, देवगतिः, मनुष्यगतिः, तिर्यग्गतिः, नारकगतिः' इति जीवानां पञ्च गतयो भवन्ति। तद्भेदा जीवा अपि 'मुक्ताः, देवाः, मनुष्याः, तिर्यञ्चः, नारकाश्च' इति पञ्चधा भवन्ति । ततोऽभिधास्यमानरूढयौगिकमिश्रशब्दविभागमुक्त्वा प्रथमादिकाण्डेष्वभिधास्यमानमुक्तादिनामक्रमनिर्देशमाह—देवाधिदेवा अर्हन्तो वर्तमानातीतानागताः । तद्वाचकशब्दा अपि देवाधिदेवाः, वाच्यवाचकयोरभेदोपचारात् ॥ एवं वक्ष्यमाणदेवादिष्वपि योज्यम् ॥ साङ्गा इति सर्वत्र संबध्यते ॥ ततः प्रथमे काण्डे गणधराद्यङ्गैः सह देवाधिदेवाः सर्वप्राधान्यात्॥ द्वितीये काण्डे देवाः साङ्गाः ॥ तृतीये काण्डे मनुष्याः साङ्गाः ॥ चतुर्थे तिर्यञ्चः साङ्गाः । ते च एकेन्द्रियादयः । तत्र एकं स्पर्शनम् इन्द्रियं येषां ते एकेन्द्रियाः पृथ्वीकायादयः पञ्च । तत्र पृथ्वीकायोऽनेकविधः—शुद्धपृथ्वीशर्करावालुकादिः । अप्कायो हिमादिः । तेजःकायोऽङ्गारादिः । वायुकाय उत्कलिकादिः । वनस्पतिकायः शैवलादिः ॥ द्वे स्पर्शन-रसने, त्रीणि स्पर्शनरसनघ्राणानि, चत्वारि तान्येव चक्षुःसहितानि, इन्द्रियाणि येषां ते तथा ॥ ततो द्वीन्द्रियाः कृम्यादयः, त्रीन्द्रियाः पीलकादयः, चतुरिन्द्रिया लूतादयः ॥ पञ्च स्पर्शादीनि श्रोत्रसहितानि इन्द्रियाणि येषां ते पञ्चेन्द्रियाः । ते च त्रिविधाः—स्थलचराः, खचराः, अम्बुचराश्च । तत्र स्थलचरा इभाद्याः, खचराः केकिप्रभृतयः, अम्बुचरा मत्स्याद्याः ॥ देवा नरा नारकाश्च पञ्चेन्द्रिया एव । न तु तिर्यञ्च इव एकद्वित्रिचतुरिन्द्रिया अपि ॥ पञ्चमे काण्डे नारकाः साङ्गाः ॥ षष्ठे काण्डे साधारणाः सामान्यवाचिनः ॥ अव्ययाश्च अत्रेति षष्ठ एव काण्डे प्रस्तोष्यन्ते प्रक्रंस्यन्त इति ॥" इति विवृतिः. ७. "तुशब्दोऽन्ते यस्यासौ त्वन्तः, अथशब्द आदिर्यस्यासावथादिश्च शब्दः पूर्वे न गच्छति । अग्रिमेण संबध्यते' इत्यर्थः ॥ न्यायसिद्धं चैतत् । तुना पूर्वस्माद्विशेषद्योतनात् । अथशब्देन चार्थान्तरारम्भात् । यथा—'स्यादनन्तजिदनन्तः सुविधिस्तु पुष्पदन्तः' इति, 'मुक्तिर्मोक्षोऽपवर्गोऽथ मुमुक्षुः श्रमणो यतिः' इति ॥ भ्रान्तिस्थानविषये चैतत्' इति ॥" इति विवृतिः.

अर्हञ्जिनः पारगतस्त्रिकालवित्क्षीणाष्टकर्मा परमेष्ठ्यधीश्वरः ।
शंभुः स्वयंभूर्भगवाञ्जगत्प्रभुस्तीर्थंकरस्तीर्थकरो जिनेश्वरः ॥ २४

स्याद्वाद्यभयदसार्वाः[1] सर्वज्ञः सर्वदर्शिकेवलिनौ ।
देवाधिदेवबोधदपुरुषोत्तमवीतरागाप्ताः ॥ २५

एतस्यामवसर्पिण्यामृषभोऽजितशंभवौ[2] । अभिनन्दनः सुमतिस्ततः पद्मप्रभाभिधः ॥ २६
सुपार्श्वश्चन्द्रप्रभश्च सुविधिश्चाथ शीतलः । श्रेयांसो वासुपूज्यश्च विमलोऽनन्ततीर्थकृत् ॥ २७
धर्मः शान्तिः कुंथुररो मल्लिश्च मुनिसुव्रतः । नमिर्नेमिः[3] पार्श्वो वीरश्चतुर्विंशतिरर्हताम् ॥ २८

ऋषभो वृषभः श्रेयाञ्श्रेयांसः स्यादनन्तजिदनन्तः ।
सुविधिस्तु पुष्पदन्तो मुनिसुव्रतसुव्रतौ तुल्यौ ॥ २९

अरिष्टनेमिस्तु नेमिर्वीरश्चरमतीर्थकृत् । महावीरो वर्धमानो देवार्यो ज्ञातनन्दनः ॥ ३०
गणा नवास्यर्षिसंघा एकादश गणाधिपाः । इन्द्रभूतिरग्निभूतिर्वायुभूतिश्च गौतमाः ॥ ३१
व्यक्तः सुधर्मा मण्डितमौर्यपुत्रावकम्पितः । अचलभ्राता मेतार्यः प्रभासश्च पृथक्कुलाः ॥ ३२
केवली चरमो जम्बूस्वाम्यथ प्रभवप्रभुः । शय्यंभवो यशोभद्रः संभूतविजयस्ततः ॥ ३३
भद्रबाहुः स्थूलभद्रः श्रुतकेवलिनो हि षट् । महागिरिसुहस्त्याद्या वज्रान्ता दशपूर्विणः ॥ ३४
इक्ष्वाकुकुलसंभूताः स्याद्द्वाविंशतिरर्हताम् । मुनिसुव्रतनेमी तु हरिवंशसमुद्भवौ ॥ ३५
नाभिश्च जितशत्रुश्च जितारिरथ संवरः । मेघो धरः प्रतिष्ठश्च महासेननरेश्वरः ॥ ३६
सुग्रीवश्च दृढरथो विष्णुश्च वसुपूज्यराट् । कृतवर्मा सिंहसेनो भानुश्च विश्वसेनराट् ॥ ३७
सूरः सुदर्शनः कुम्भः सुमित्रो विजयस्तथा । समुद्रविजयश्चाश्वसेनः सिद्धार्थ एव च ॥ ३८
मरुदेवा विजया सेना सिद्धार्था च मङ्गला । ततः सुसीमा पृथ्वी लक्ष्मणा रामा ततः परम् ॥ ३९
नन्दा विष्णुर्जया श्यामा सुयशाः सुव्रताचिरा । श्रीर्देवी प्रभावती च पद्मा वप्रा शिवा तथा ॥ ४०
वामा त्रिशला क्रमतः पितरो मातरोऽर्हताम् । स्याद्गोमुखो महायक्षस्त्रिमुखो यक्षनायकः ॥ ४१
तुम्बरुः कुसुमश्चापि मातङ्गो विजयोऽजितः । ब्रह्मा यक्षेट् कुमारः षण्मुखपातालकिंनराः ॥ ४२
गरुडो गन्धर्वो यक्षेट् कुबेरो वरुणोऽपि च । भृकुटिर्गोमेधः पार्श्वो मातङ्गोऽर्हदुपासकाः ॥ ४३
चक्रेश्वर्यजितबला दुरितारिश्च कालिका । महाकाली श्यामा[5] शान्ता भृकुटिश्च सुतारका[6] ॥ ४४
अशोका मानवी चण्डा विदिता चाङ्कुशा तथा । कंदर्पा निर्वाणी बला धारिणी धरणप्रिया ॥ ४५
नरदत्ताथ गान्धार्यम्बिका[7] पद्मावती तथा । सिद्धायिका चेति जैन्यः क्रमाच्छासनदेवताः ॥ ४६
वृषो गजोऽश्वः प्लवगः क्रौञ्चोऽब्जं स्वस्तिकः शशी । मकरः श्रीवत्सः खड्गी महिषः सूकरस्तथा ॥ ४७
श्येनो वज्रं मृगश्छागो नन्द्यावर्तो घटोऽपि च । कूर्मो नीलोत्पलं शङ्खः फणी सिंहोऽर्हतां ध्वजाः ॥ ४८

रक्तौ च पद्मप्रभवासुपूज्यौ शुक्लौ तु चन्द्रप्रभपुष्पदन्तौ ।
कृष्णौ पुनर्नेमिमुनी विनीलौ श्रीमल्लिपार्श्वौ कनकत्विषोऽन्ये ॥ ४९

उत्सर्पिण्यामतीतायां चतुर्विंशतिरर्हताम् । केवलज्ञानी निर्वाणी सागरोऽथ महायशाः ॥ ५०
विमलः सर्वानुभूतिः श्रीधरो दत्ततीर्थकृत् । दामोदरः सुतेजाश्च स्वाम्यथो मुनिसुव्रतः ॥ ५१

---

१. 'सर्वीय'. २. 'संभवौ'. ३. 'नेमी' नान्तोऽपि. ४. 'अजिता' इत्यपि. ५. 'अच्युतदेवी' इत्यपि. ६. 'सुतारा' इत्यपि. ७. 'कूष्माण्डी' इत्यपि.

सुमतिः शिवगतिश्चैवास्तागोऽथ निमीश्वरः । अनिलो यशोधराख्यः कृतार्थोऽथ जिनेश्वरः ॥ ५२
शुद्धमतिः शिवकरः स्यन्दनश्चाथ संप्रतिः । भाविन्यां तु पद्मनाभः शूरदेवः सुपार्श्वकः ॥ ५३
स्वयंप्रभश्च सर्वानुभूतिर्देवश्रुतोदयौ । पेढालः पोट्टिलश्चापि शतकीर्तिश्च सुव्रतः ॥ ५४
अममो निष्कषायश्च निष्पुलाकोऽथ निर्ममः । चित्रगुप्तः समाधिश्च संवरश्च यशोधरः ॥ ५५
विजयो मल्लदेवौ चानन्तवीर्यश्च भद्रकृत्[1] । एवं सर्वावसर्पिण्युत्सर्पिणीषु जिनोत्तमाः ॥ ५६

तेषां च देहोऽद्भुतरूपगन्धो निरामयः स्वेदमलोज्झितश्च ।
श्वासोऽब्जगन्धो रुधिरामिषं तु गोक्षीरधाराधवलं ह्यविस्रम् ॥ ५७
आहारनीहारविधिस्त्वदृश्यश्चत्वार एतेऽतिशयाः सहोत्थाः ।
क्षेत्रे स्थितिर्योजनमात्रकेऽपि नृदेवतिर्यग्जनकोटिकोटेः ॥ ५८
वाणी नृतिर्यक्सुरलोकभाषासंवादिनी योजनगामिनी च ।
भामण्डलं चारु च मौलिपृष्ठे विडम्बिताहर्पतिमण्डलश्रीः ॥ ५९
साग्रे च गव्यूतिशतद्वये रुजावैरेतयो मार्यतिवृष्ट्यवृष्ट्यः ।
दुर्भिक्षमन्यस्वकचक्रतो भयं स्यान्नैत एकादश कर्मघातजाः ॥ ६०
खे धर्मचक्रं चमराः सपादपीठं मृगेन्द्रासनमुज्ज्वलं च ।
छत्रत्रयं रत्नमयध्वजोऽङ्घ्रिन्यासे च चामीकरपङ्कजानि ॥ ६१
वप्रत्रयं चारु चतुर्मुखाङ्गताश्चैत्यद्रुमोऽधोवदनाश्च कण्टकाः ।
द्रुमानतिर्दुन्दुभिनाद उच्चकैर्वातोऽनुकूलः शकुनाः प्रदक्षिणाः ॥ ६२
गन्धाम्बुवर्षं बहुवर्णपुष्पवृष्टिः कचश्मश्रुनखाप्रवृद्धिः ।
चतुर्विधा मर्त्यनिकायकोटिर्जघन्यभावादपि पार्श्वदेशे ॥ ६३

ऋतूनामिन्द्रियार्थानामनुकूलत्वमित्यमी । एकोनविंशतिर्दैव्याश्चतुस्त्रिंशच्च मीलिताः ॥ ६४
संस्कारवत्त्वमौदार्यमुपचारपरीतता । मेघनिर्घोषगाम्भीर्यं प्रतिनादविधायिता ॥ ६५
दक्षिणत्वमुपनीतरागत्वं च महार्थता । अव्याहतत्वं शिष्टत्वं संशयानामसंभवः ॥ ६६
निराकृतान्योत्तरत्वं हृदयंगमितापि च । मिथः साकाङ्क्षता प्रस्तावौचित्यं तत्त्वनिष्ठता ॥ ६७
अप्रकीर्णप्रसृतत्वमस्वश्लाघान्यनिन्दिता । आभिजात्यमतिस्निग्धमधुरत्वं प्रशस्यता ॥ ६८
अमर्मवेधितौदार्यं धर्मार्थप्रतिबद्धता । कारकाद्यविपर्यासो विभ्रमादिवियुक्तता ॥ ६९
चित्रकृत्त्वमद्भुतत्वं तथानतिविलम्बिता । अनेकजातिवैचित्र्यमारोपितविशेषिता ॥ ७०
सत्त्वप्रधानता वर्णपदवाक्यविविक्तता । अव्युच्छित्तिरखेदित्वं पञ्चत्रिंशच्च वाग्गुणाः ॥ ७१
अन्तराया दानलाभवीर्यभोगोपभोगगाः । हासो रत्यरती भीतिर्जुगुप्सा शोक एव च ॥ ७२
कामो मिथ्यात्वमज्ञानं निद्रा चाविरतिस्तथा । रागो द्वेषश्च नो दोषास्तेषामष्टादशाप्यमी ॥ ७३
महानन्दोऽमृतं सिद्धिः कैवल्यमपुनर्भवः । शिवं निःश्रेयसं श्रेयो निर्वाणं ब्रह्म निर्वृतिः ॥ ७४
महोदयः सर्वदुःखक्षयो निर्याणमक्षरम् । मुक्तिर्मोक्षोऽपवर्गोऽथ मुमुक्षुः श्रमणो यतिः ॥ ७५
वाचंयमो व्रती साधुरनगार ऋषिर्मुनिः । निर्ग्रन्थो भिक्षुरस्य स्वं तपोयोगशमादयः ॥ ७६
मोक्षोपायो योगो ज्ञानं श्रद्धानं चरणात्मकः । अभाषणं पुनर्मौनं गुरुर्धर्मोपदेशकः ॥ ७७

---

१. 'भद्रः' अपि.

अनुयोगकृदाचार्य उपाध्यायस्तु पाठकः । अनूचानः प्रवचने साङ्गेऽधीती गणिश्च सः ॥ ७८
शिष्यो विनेयोऽन्तेवासी शैक्षः प्राथमकल्पिकः । सतीर्थ्यास्त्वेकगुरवो विवेकः पृथगात्मता ॥ ७९
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः । स्यात्पारम्पर्यमाम्नायः संप्रदायो गुरुक्रमः ॥ ८०
व्रतादानं परिव्रज्या तपस्या नियमस्थितिः । अहिंसासूनृतास्तेयब्रह्माकिंचनता यमाः ॥ ८१
नियमाः शौचसंतोषौ स्वाध्यायतपसी अपि । देवताप्रणिधानं च करणं पुनरासनम् ॥ ८२
प्राणायामः प्राणयमः श्वासप्रश्वासरोधनम् । प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यः समाहृतिः ॥ ८३
धारणा तु क्वचिद्ध्येये चित्तस्य स्थिरबन्धनम् । ध्यानं तु विषये तस्मिन्नेकप्रत्ययसंततिः ॥ ८४
समाधिस्तु तदेवार्थमात्राभासनरूपकम् । एवं योगो यमाद्यङ्गैरष्टभिः संमतोऽष्टधा ॥ ८५

श्वःश्रेयसं शुभशिवे कल्याणं श्वोवसीयसं श्रेयः ।
क्षेमं भावुकभविककुशलमङ्गलभद्रमद्रशस्तानि ॥ ८६

इत्याचार्यहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां देवाधिदेवकाण्डः प्रथमः ॥ १ ॥

---

स्वर्गस्त्रि[1]विष्टपं द्योदिवौ भुविस्तविषताविषौ नाकः ।
गौस्त्रिदिवमूर्ध्वलोकः सुरालयस्तत्सदस्[2]त्वमराः ॥ ८७
देवाः सुपर्वसुरनिर्जरदेवतर्भुबर्हिर्मुखानिमिषदैवतना[3]किलेखाः ।
वृन्दारकाः सुमनसस्त्रिदशा अमर्त्याः स्वाहास्वधाक्रतुसुधाभुज[4] आदितेयाः ॥ ८८
गीर्वाणा मरुतोऽस्वप्ना विबुधा दानवारयः । तेषां यानं विमानोऽन्धः पीयूषममृतं सुधा ॥ ८९
असुरा नागास्तडितः सुपर्णका वह्नयोऽनिलाः स्तनिताः ।
उदधिद्वीपदिशो दश भवनाधीशाः कुमारान्ताः[5] ॥ ९०
स्युः पिशाचा भूता यक्षा राक्षसाः किंनरा अपि । किंपुरुषा महोरगा गन्धर्वाश्चान्तरा अमी ॥ ९१
ज्योतिष्काः पञ्च चन्द्रार्कग्रहनक्षत्रतारकाः । वैमानिकाः पुनः कल्पभवा द्वादश ते त्वमी ॥ ९२
सौधर्मेशानसनत्कुमारमाहेन्द्रब्रह्मलान्तकजाः[6] ।
शुक्रसहस्रारानतप्राणतजा आरणाच्युतजाः[7] ॥ ९३
कल्पातीता नव ग्रैवेयकाः पञ्च त्वनुत्तराः । निकायभेदादेवं स्युर्देवाः किल चतुर्विधाः ॥ ९४
आदित्यः सवितार्यमा खरसहस्रोष्णांशुरंशू[8] रवि-
र्मार्तण्डस्तरणिर्गभस्तिररुणो भानुर्नभोऽहर्मणिः[9] ।
सूर्योऽर्कः किरणो भगो ग्रहपुषः पूषा पतङ्गः खगो
मार्ताण्डो यमुनाकृतान्तजनकः[10] प्रद्योतनस्तापनः ॥ ९५

---

१. 'त्रिपिष्टपम्' इति प्राच्याः. २. स्वर्गसदः; यौगिकत्वात् 'द्युसद्मानः' इत्यादयोऽपि. ३. यौगिकत्वात् 'स्वर्गिणः, त्रिदिवाधीशाः' इत्यादयोऽपि. ४. 'भुज्'शब्दः स्वाहादिना प्रत्येकं संबध्यते; यौगिकत्वात् 'स्वाहाशनाः, स्वधाशनाः, यज्ञाशनाः, अमृतान्धसः' इत्यादयोऽपि. ५. 'कुमार'शब्दस्य प्रत्येकमसुरादिभिः संबन्धः. ६. 'ज'शब्दस्य सौधर्मादिभिरन्वयः. ७. 'ज'शब्दस्य शुक्रादिभिरन्वयः. ८. 'अंशु'शब्दः प्रत्येकं स्वरादिभिरन्वेति; यौगिकत्वात् 'खररश्मिः, दशशतरश्मिः, शीतेतररश्मिः' इत्यादयोऽपि. ९. 'मणि'शब्दः प्रत्येकं नभआदिभ्यामन्वेति; यौगिकत्वात् 'व्योमरत्नम्, दिनरत्नम्' इत्यादि. १०. 'जनक'शब्दः प्रत्येकमन्वेति; यौगिकत्वात् 'कालिन्दीसूः, यमसूः' इत्यादयोऽपि.

ब्रध्नो हंसश्चित्रभानुर्विवस्वान्सूरस्त्वष्टा द्वादशात्मा च हेलिः ।
मित्रो ध्वान्तारातिरब्जांशुहस्तश्चक्राब्जाहर्बान्धवः सप्तसप्तिः ॥ ९६
दिवादिनाहर्दिवसप्रभाविभाभासः करः स्यान्मिहिरो विरोचनः ।
ग्रहाब्जिनीगोद्युपतिर्विकर्तनो हरिः शुचीनौ गगनाध्वजाध्वगौ ॥ ९७
हरिदश्वो जगत्कर्मसाक्षी भास्वान्विभावसुः । त्रयीतनुर्जगच्चक्षुस्तपनोऽरुणसारथिः ॥ ९८
रोचिरुस्ररुचिशोचिरंशुगो ज्योतिरर्चिरुपधृत्यभीशवः ।
प्रग्रहः शुचिमरीचिदीप्तयो धामकेतुघृणिरश्मिपृश्नयः ॥ ९९
पाददीधितिकरद्युतिद्युतो रुग्विरोककिरणत्विषित्विषः ।
भाःप्रभावसुगभस्तिभानवो भा मयूखमहसी छविर्विभा ॥ १००
प्रकाशस्तेज उद्द्योत आलोको वर्च आतपः । मरीचिका मृगतृष्णा मण्डलं तूपसूर्यकम् ॥ १०१
परिधिः परिवेषश्च सूरसूतस्तु काश्यपिः । अनूरुर्विनतासूनुररुणो गरुडाग्रजः ॥ १०२
रेवन्तस्त्वर्करेतोजः प्लवगो हयवाहनः । अष्टादश माठराद्याः सवितुः परिपार्श्वकाः ॥ १०३
चन्द्रमाः कुमुदबान्धवो[11] दशश्वेतवाज्य[12]मृतसूस्तिथिप्रणीः ।
कौमुदीकुमुदिनीभदक्षजारोहिणीद्विजनिशौषधीपतिः[13] ॥ १०४
जैवातृकोऽब्जं[14]श्च कलाशशैणच्छायाभृ[15]दिन्दुर्विधुरत्रिदृग्[16]जः ।
राजा निशो[17] रत्नकरौ च चन्द्रः सोमोऽमृतश्वेतहिमैर्द्युति[18]ग्लौः ॥ १०५
षोडशोंऽशः कला चिह्नं लक्षणं लक्ष्म लाञ्छनम् । अङ्कः कलङ्कोऽभिज्ञानं चन्द्रिका चन्द्रगोलिका १०६
चन्द्रातपः कौमुदी च ज्योत्स्ना बिम्बं तु मण्डलम् । नक्षत्रं तारका ताराज्योतिषी भमुडु ग्रहः ॥ १०७
धिष्ण्यमृक्षमथाश्विन्यश्वकिनी दस्रदेवता । अश्वयुग्वालिनी चाथ भरणी यमदेवता ॥ १०८
कृत्तिका बहुलाश्चाग्निदेवा ब्राह्मी तु रोहिणी । मृगशीर्षं मृगशिरो मार्गश्चान्द्रमसं मृगः ॥ १०९
इल्वलास्तु मृगशिरःशिरस्थाः पञ्च तारकाः । आर्द्रा तु कालिनी रौद्री पुनर्वसू तु यामकौ ॥ ११०
आदित्यौ च पुष्यस्तिष्यः सिध्यश्च गुरुदैवतः । सार्पोऽश्लेषा मघा पित्र्या फाल्गुनी योनिदेवता ॥ १११
सा तूत्तरार्यमदेवा हस्तः सवितृदैवतः । त्वाष्ट्री चित्रानिली स्वातिर्विशाखेन्द्राग्निदेवताः ॥ ११२

१. तालव्यादिरित्यन्ये. २. यौगिकत्वात् 'तिमिरारिः' इत्यादयः. ३. 'हस्त'शब्दः प्रत्येकमब्जादिनान्वेति; यौगिकत्वात् पद्मपाणिः, गभस्तिपाणिः' इत्यादयोऽपि. ४. 'बान्धव'शब्दः प्रत्येकं चक्रादिभिरन्वेति; यौगिकत्वात् 'चक्रवाकबन्धुः, 'पद्मबन्धुः, दिनबन्धुः' इत्यादयः ५. 'कर'शब्दः प्रत्येकं दिवादिभिरन्वेति; यौगिकत्वात् 'वासरकृत्, दिनप्रणीः, दिनकृत्,' इत्यादयः. ६. पतिशब्दः प्रत्येकं ग्रहादिभिरन्वेति; यौगिकत्वात्—ग्रहेशः, पद्मिनीशः, त्विषामीशः, इत्यादयोऽपि. ७. 'गगन'शब्दः प्रत्येकं ध्वजादिनान्वेति; यौगिकत्वात् 'नभःकेतनम्, नभःपान्थः' इत्यादयः. ८. 'साक्षिन्'शब्दः प्रत्येकमन्वेति. ९. अभीषुरिति गौडः. १०. पृष्णिरित्येके; वृष्णिरित्यन्ये. ११. यौगिकत्वात् 'कैरवबन्धुः, कुमुदसुहृत्' इत्यादयोऽपि. १२. 'वाजिन्'शब्दः प्रत्येकमन्वेति; यौगिकत्वात् 'श्वेताश्वः, दशाश्वः' इत्यादयः. १३. 'पति'शब्दः कौमुद्यादिभिरन्वेति; यौगिकत्वात् 'ज्योत्स्नेशः, कुमुद्वतीशः, दाक्षायणीशः' इत्यादयः. १४. समुद्रनवनीतमपि. १५. 'भृत्'शब्दः प्रत्येकं कलादिरन्वयः; यौगिकत्वात् 'छायाङ्कः' इत्यादयः. १६. अत्रिनेत्रप्रसूतः इत्यादयः. १७. 'निशा'शब्दः प्रत्येकं संबध्यते; यौगिकत्वात् 'निशामणिः, रजनीकरः' इत्यादयः. १८. 'द्युति'शब्दः प्रत्येकममृतादिभिः संबध्यते; यौगिकत्वात् 'सुधांशुः, सितांशुः, शीतांशुः इत्यादयः. १९. 'इन्वका 'इत्यपि.

राधानुराधा तु मैत्री ज्येष्ठैन्द्री मूल आस्रपः। पूर्वाषाढा तु सोत्तरा स्याद्वैश्वी श्रवणः पुनः॥ ११३
हरिदेवः श्रविष्ठा तु धनिष्ठा वसुदेवता। वारुणी तु शतभिषगजाहिर्बुध्नदेवताः॥ ११४
पूर्वोत्तरा भाद्रपदा द्वय्यः प्रोष्ठपदाश्च ताः। रेवती तु पौष्णं दाक्षायण्यः सर्वाः शशिप्रियाः॥११५
राशीनामुदयो लग्नं मेषप्रभृतयस्तु ते। आरो वक्रो लोहिताङ्गो मङ्गलोऽङ्गारकः कुजः॥ ११६
आषाढाभूर्नवार्चिश्च बुधः सौम्यः प्रहर्षुलः। ज्ञः पञ्चार्चिः श्रविष्ठाभूः श्यामाङ्गो रोहिणीसुतः॥ ११७
बृहस्पतिः सुराचार्यो जीवश्चित्रशिखण्डिजः। वाचस्पतिर्द्वादशार्चिर्धिषणः फाल्गुनीभवः॥ ११८
गीर्बृहत्योः पतिरुतथ्यानुजाङ्गिरसौ गुरुः। शुक्रो मघाभवः काव्य उशना भार्गवः कविः॥ ११९
षोडशार्चिर्दैत्यगुरुर्धिष्ण्यः शनैश्चरः शनिः। छायासुतोऽसितः सौरिः सप्तार्ची रेवतीभवः॥ १२०
मन्दः क्रोडो नीलवासाः स्वर्भाणुस्तु विधुंतुदः। तमो राहुः सैंहिकेयो भरणीभूरथाहिकः॥ १२१
अश्लेषाभूः शिखी केतुर्ध्रुवस्तूत्तानपादजः। अगस्त्योऽगस्तिः पीताब्धिर्वातापिद्विड्घटोद्भवः॥ १२२
मैत्रावरुणिराग्नेय और्वशेयाग्निमारुतौ। लोपामुद्रा तु तद्भार्या कौषीतकी वरप्रदा॥ १२३
मरीचिप्रमुखाः सप्तर्षयश्चित्रशिखण्डिनः। पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ॥ १२४
राहुग्रासोऽर्केन्द्वोर्ग्रह उपराग उपप्लवः। उपलिङ्गं त्वरिष्टं स्यादुपसर्ग उपद्रवः॥ १२५
अजन्यमीतिरुत्पातो वह्न्युत्पात उपाहितः। स्यात्कालः समयो दिष्टानेहसौ सर्वमूषकः॥ १२६
कालो द्विविधोऽवसर्पिण्युत्सर्पिणीविभेदतः। सागरकोटिकोटीनां विंशत्या स समाप्यते॥ १२७

अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः।
एवं द्वादशभिररैर्विवर्तते कालचक्रमिदम्॥ १२८

तत्रैकान्तसुषमारश्चतस्रः कोटिकोटयः। सागराणां सुषमा तु तिस्रस्तत्कोटिकोटयः॥ १२९
सुषमदुःषमा ते द्वे दुःषमसुषमा पुनः। सैका सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता॥ १३०

अथ दुःषमैकविंशतिरब्दसहस्राणि तावती तु स्यात्।
एकान्तदुःषमापि ह्येतत्संख्याः परेऽपि विपरीताः॥ १३१

प्रथमेऽरत्रये मर्त्यास्त्रिद्व्येकपल्यजीविताः। त्रिद्व्येकगव्यूत्युच्छ्रायास्त्रिद्व्येकदिनभोजनाः॥ १३२
कल्पद्रुफलसंतुष्टाश्चतुर्थे त्वरके नराः। पूर्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः॥ १३३
पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः। षष्ठे पुनः षोडशाब्दायुषो हस्तसमुच्छ्रयाः॥ १३४
एकान्तदुःखप्रचिता उत्सर्पिण्यामपीदृशाः। पश्चानुपूर्व्या विज्ञेया अरेषु किल षट्स्वपि॥ १३५
अष्टादश निमेषास्तु काष्ठा काष्ठाद्वयं लवः। कला तैः पञ्चदशभिर्लेशस्तद्द्वितयेन च॥ १३६
क्षणस्तैः पञ्चदशभिः क्षणैः षड्भिस्तु नाडिका। सा धारिका च घटिका मुहूर्तस्तद्द्वयेन च॥ १३७
त्रिंशता तैरहोरात्रस्तत्राहर्दिवसो दिनम्। दिवं द्युर्वासरो घस्रः प्रभातं स्यादहर्मुखम्॥ १३८
व्युष्टं विभातं प्रत्यूषं कल्यप्रत्युषसी उषः। काल्यं मध्याह्नस्तु दिवामध्यं मध्यंदिनं च सः॥ १३९
दिनावसानमुत्सूरो विकालसबली अपि। सायं संध्या तु पितृसूस्त्रिसंध्यं तूपवैणवम्॥ १४०
श्राद्धकालस्तु कुतपोऽष्टमो भागो दिनस्य यः। निशा निशीथिनी रात्रिः शर्वरी क्षणदा क्षपा॥ १४१
त्रियामा यामिनी भौती तमी तमा विभावरी। रजनी वसतिः श्यामा वासतेयी तमस्विनी॥ १४२

---

१. यौगिकत्वात् भौमः, माहेयः, धरणीसुतः, इत्यादयः. २. पतिशब्दः प्रत्येकमन्वेति. ३. 'सौरः' अपि. ४. 'पूर्वपदात्' इति णत्वम्. ५. विपरीतक्रमेण इत्यर्थः. ६. यौगिकत्वात् 'यामवती' इत्यपि.



26

उषा दोषेन्दुकान्ताथ तमिस्रा दर्शयामिनी । ज्यौत्स्नी तु पूर्णिमारात्रिर्गणरात्रो निशागणः ॥ १४३
पक्षिणी पक्षतुल्याभ्यामहोभ्यां वेष्टिता निशा । गर्भकं रजनीद्वन्द्वं प्रदोषो रजनीमुखम् ॥ १४४
यामः प्रहरो निशीथस्त्वर्धरात्रो महानिशा । उच्चन्द्रस्त्वपररात्रस्तमिस्रं तिमिरं तमः ॥ १४५
ध्वान्तं भूछायान्धकारं तैमसं समवान्धतः । तुल्यनक्तंदिने काले विषुवद्विषुवं च तत् ॥ १४६
पञ्चदशाहोरात्रः स्यात्पक्षः स बहुलोऽसितः । तिथिः पुनः कर्मवाटी प्रतिपत्पक्षतिः समे ॥ १४७
पञ्चदश्यौ यज्ञकालौ पक्षान्तौ पर्वणी अपि । तत्पर्वमूलं भूतेष्टापञ्चदश्योर्यदन्तरम् ॥ १४८
स पर्व संधिः प्रतिपत्पञ्चदश्योर्यदन्तरम् । पूर्णिमा पौर्णमासी सा राका पूर्णे निशाकरे ॥ १४९
कलाहीने त्वनुमतिर्मार्गशीर्ष्याग्रहायणी । अमामावस्यमावस्या दर्शसूर्येन्दुसंगमः ॥ १५०
अमावास्यामावासी च सा नष्टेन्दुः कुहुः कुहूः । दृष्टेन्दुस्तु सिनीवाली भूतेष्टा तु चतुर्दशी ॥ १५१
पक्षो मासो वत्सरादिर्मार्गशीर्षः[3] सैहः सहाः । आग्रहायणिकश्चाथ पौषस्तैषः सहस्यवत् ॥ १५२
माघस्तपाः फाल्गुनस्तु फाल्गुनिकस्तपस्यवत् । चैत्रो मधुश्चैत्रिकश्च वैशाखे राधमाधवौ ॥ १५३
ज्येष्ठस्तु शुक्रोऽथाषाढः शुचिः स्याच्छ्रावणो नभाः । श्रावणिकोऽथ नभस्यः प्रोष्ठभाद्रपरः पदः ॥१५४
भाद्रश्चाप्याश्विने त्वाश्वयुजेषावथ कार्तिकः । कार्तिकिको बाहुलोर्जौ द्वौ द्वौ मार्गादिकावृतुः ॥ १५५
हेमन्तः प्रशलो रौद्रोऽथ शैषशिशिरौ समौ । वसन्त इष्यः सुरभिः पुष्पकालो बलाङ्गकः ॥ १५६
उष्ण उष्णागमो ग्रीष्मो निदाघस्तप ऊष्मकः । वर्षास्तपात्ययः प्रावृण्मेघकालागमौ क्षरी ॥ १५७
शरद्घनात्ययोऽयनं शिशिराद्यैस्त्रिभिस्त्रिभिः । अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ १५८
स संपर्यनूद्रथो वर्षं हायनोऽब्दं समाः शरत् । भवेत्पैत्रं त्वहोरात्रं मासेनाब्देन दैवतम् ॥ १५९
दैवे युगसहस्रे द्वे ब्राह्मं कल्पौ तु तौ नृणाम् । मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ॥ १६०
कल्पो युगान्तः कल्पान्तः संहारः प्रलयः क्षयः । संवर्तः परिवर्तश्च समस्तुप्तिर्जिहानकः ॥ १६१
तत्कालस्तु तदात्वं स्यात्तज्जं सांदृष्टिकं फलम् । आयतिस्तूत्तरः काल उदर्कस्तद्भवं फलम् ॥१६२

व्योमान्तरिक्षं गगनं घनाश्रयो विहाय आकाशमनन्तपुष्करे ।
अभ्रं सुराभ्रोडुमरुत्पथोऽम्बरं खं द्योदिवौ विष्णुपदं वियन्नभः ॥ १६३
नभ्राट्तडित्वान्मुदिरो घनाघनोऽभ्रं धूमयोनिस्तनयित्नुमेघाः ।
जीमूतपर्जन्यबलाहका घनो धाराधरो वाहदमुग्धरा जलात्[11] ॥ १६४

कादम्बिनी मेघमाला दुर्दिनं मेघजं तमः । आसारो वेगवान्वर्षो वातास्तं वारि शीकरः ॥ १६५
वृष्ट्यां वर्षणवर्षे तद्विघ्ने ग्राहग्रहाववग्रहाववात्[12] । घनोपलस्तु करकः काष्ठाशा दिग्धरित्ककुप् ॥ १६६
पूर्वा प्राची दक्षिणापाची[13] प्रतीची तु पश्चिमा । अपराथोत्तरोदीची विदिक्चोपदिशं प्रदिक् ॥ १६७

दिश्यं दिग्भववस्तुन्यपागपाचीनमुदगुदीचीनम् ।
प्राक्प्राचीनं च समे प्रत्यक्तु स्यात्प्रतीचीनम् ॥ १६८

---

१. निःसंपातोऽपि. २. संतमसम्, अवतमसम्, अन्धतमसम्. ३. यौगिकत्वात् 'मार्गः'. ४. अदन्तः. ५. प्रोष्ठपदः, भाद्रपदः. ६. 'वरिषा' इत्यपि. ७. मेघशब्दस्य प्रत्येकमन्वयः. ८. संवत्सरः, परिवत्सरः, अनुवत्सरः, उद्वत्सरः. ९ अन्तरीक्षमित्यपि. १०. 'पथ'शब्दः सुरादिभिः संबध्यते; यौगिकत्वात् देववर्त्म, मेघवर्त्म, नक्षत्रवर्त्म, वायुवर्त्म, इत्यादयः. ११. जलशब्दस्य वाहादिभिरन्वयः; यौगिकत्वात् वारिवाहः, वारिदः, वारिमुक्, वारिधरः, इत्यादयः. १२. अवशब्दस्य ग्राहग्रहाभ्यामन्वयः. १३. अवाचीत्यपि.

तिर्यग्दिशां तु पतय इन्द्राग्नियमनैर्ऋताः । वरुणो वायुकुबेरावीशानश्च यथाक्रमम् ॥ १६९
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ १७०
इन्द्रो हरिर्दुश्च्यवनोऽच्युताग्रजो वज्री विडौजा मघवान्पुरंदरः ।
प्राचीनबर्हिः पुरुहूतवासवौ संक्रन्दनाखण्डलमेघवाहनाः ॥ १७१
सु[1]त्रामवास्तोष्पतिदल्मिशक्रा वृषा शु[2]नासीरसहस्रनेत्रौ ।
पर्जन्यहर्यश्वऋभुक्षिबाहुदन्तेयवृद्धश्रवसस्तुराषाट् ॥ १७२
सुरर्षभस्तपस्तक्षो जिष्णुर्व[3]रशतक्रतुः । कौशिकः पूर्वदिग्देवाप्सरःस्वर्गशची[4]पतिः ॥ १७३
पृतनाषाडुग्रधन्वा मरुत्वान्मघवास्य तु । द्विषः पाकोऽद्रयो वृत्रः पुलोमा नमुचिर्बलः ॥ १७४
जम्भः प्रिया शचीन्द्राणी पौलोमी जयवाहिनी । तनयस्तु जयन्तः स्याज्जयदत्तो जयश्च सः ॥ १७५
सुता जयन्ती तवीषी ताविष्युच्चैःश्रवा हयः । मातलिः सारथिर्देवनन्दी द्वाःस्थो गजः पुनः ॥ १७६
ऐरावणोऽभ्रमातङ्गश्चतुर्दन्तोऽर्कसोदरः । ऐरावतो हस्तिमल्लः श्वेतगजोऽभ्रमुप्रियः ॥ १७७
वैजयन्तौ तु प्रासादध्वजौ पुर्यमरावती । सरो नन्दीसरः पर्षत्सुधर्मा नन्दनं वनम् ॥ १७८
वृक्षः कल्पः पारिजातो मन्दारो हरिचन्दनः । संतानश्च धनुर्देवायुधं तदृ[5]जु रोहितम् ॥ १७९
दीर्घज्यैरावतं वज्रं त्वशनिर्ह्रादिनी [6]स्वरुः । [7]शतकोटिः पविः शम्बो दम्भोलिर्भिदुरं भिदुः ॥ १८०
व्याधामः कुलिशोऽस्यार्चिरतिभीः स्फूर्जथुर्ध्वनिः । स्वर्वैद्यावश्विनीपुत्रावश्विनौ वडवासुतौ ॥ १८१
नासिक्यावर्कजौ दस्रौ नासत्यावब्धिजौ यमौ । विश्वकर्मा पुनस्त्वष्टा विश्वकृद्देववर्धकिः ॥ १८२
[8]स्वःस्वर्गिवध्वोऽप्सरसः स्वर्वेश्या उर्वशीमुखाः । हाहादयस्तु गन्धर्वा गान्धर्वा देवगायनाः ॥ १८३
यमः कृतान्तः पितृदक्षिणाशाप्रेता[9]त्पतिर्दण्डधरोऽर्कसूनुः ।
कीनाशमृत्यू समवर्तिकालौ शीर्णाङ्घ्रिहर्यन्तकधर्मराजाः ॥ १८४
यमराजः श्राद्धदेवः शमनो महिषध्वजः । कालिन्दीसोदरश्चापि धूमोर्णा तस्य वल्लभा ॥ १८५
पुरी पुनः संयमनी प्रतीहारस्तु वैध्यतः । दासौ चण्डमहाचण्डौ चित्रगुप्तश्च लेखकः ॥ १८६
स्याद्राक्षसः पुण्यजनो नृचक्षा यात्वाशरः कौणपयातुधानौ ।
रात्रिंचरो रात्रिचरः पलादः कीनाशरक्षो निकसात्मजाश्च ॥ १८७
क्रव्यात्कर्बुरनैर्ऋताकसृक्पो वरुणस्त्वर्णवमन्दिरः प्रचेताः ।
[10]जलयादःपति[11]पाशिमेघनादा जलकान्तारः स्यात्परंजनश्च ॥ १८८
श्रीदः सितोदरकुहेशसखाः पि[12]शाचकीछावसुत्रिशिर ऐलबिलैकपिङ्गाः ।
पौलस्त्यवैश्रवणरत्नकराः कुबेरयक्षौ नृधर्मधनदौ नरवाहनश्च ॥ १८९
कैलासौका यक्षधननिधिकिंपुरुषे[13]श्वराः । विमानं पुष्पकं चैत्ररथं वनं पुरी प्रभा ॥ १९०

---

१. सूत्रामा च. २. दन्त्यादिरपि. ३. वरशब्दोऽपि क्रतुना संबध्यते. ४. पतिशब्दः पूर्वदिगादिभिः संबध्यते; यौगिकत्वात् प्राचीशः, सुरस्त्रीशः, नाकेशः, पौलोमीशः, इत्यादयः. ५. केचित्तु 'ऋजुरोहितम्' इति समस्तमिच्छन्ति. ६. उदन्तः. ७. यौगिकत्वात् शतारः, शतधारश्च. ८. वधूशब्दस्य स्वरादिनान्वयः; यौगिकत्वात् स्वर्गस्त्रियः, सुरस्त्रियः. ९. पतिशब्दस्य पित्रादिनान्वयः. १०. पतिशब्दस्य जलेनाप्यन्वयः; यौगिकत्वात् अपांनाथः, यादोनाथः, इत्यादयः. ११. यौगिकत्वात् पाशपाणिः, इत्यादयः. १२. पिशाचकी इन्नन्तः. १३. ईश्वरशब्दस्य यक्षादिनान्वयः; यौगिकत्वात् गुह्यकेशः, वित्तेशः, निधानेशः, किंनरेशः.

अलका वस्वोकसारा सुतोऽस्य नलकूवरः । वित्तं रिक्थं स्वापतेयं राः सारं विभवो वसु ॥ १९१
द्युम्नं द्रव्यं पृक्थमृक्थं स्वमृणं द्रविणं धनम् । हिरण्यार्थौ निधानं तु कुनाभिः शेवधिर्निधिः ॥ १९२
महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ॥ १९३
यक्षः पुण्यजनो राजा गुह्यको वटवास्यपि । किंनरस्तु किंपुरुषस्तुरंगवदनो मयुः ॥ १९४

शंभुः शर्वः स्थाणुरीशान ईशो रुद्रोऽडीशौ वामदेवो वृषाङ्कः ।
कण्ठेकालः शंकरो नीलकण्ठः श्रीकण्ठोग्रौ धूर्जटिर्भीमभर्गौ ॥ १९५
मृत्युंजयः पञ्चमुखोऽष्टमूर्तिः श्मशानवेश्मा गिरिशो गिरीशः ।
षण्ढः कपर्दीश्वर ऊर्ध्वलिङ्ग एकत्रिदृग्[1]भालदृगेकपादः ॥ १९६
मृडोऽट्टहासी घनवाहनो[2]ऽहिर्बुध्न्यो[3] विरूपाक्षविषान्तकौ च ।
महाव्रती वह्निहिरण्यरेताः[4] शिवोऽस्थिधन्वा पुरुषास्थिमाली ॥ १९७
स्याद्व्योमकेशः शिपिविष्टभैरवौ दिक्कृत्तिवासा[5] भवनीललोहितौ ।
सर्वज्ञनाट्यप्रियखण्डपर्शवो महा[6]परा देवनटेश्वरा हरः ॥ १९८

पशुप्रमथभूतोमापतिः[7] पिङ्ग[8]जटेक्षणः । पिनाकशूलखट्वाङ्गगङ्गाहीन्दुकपालभृत्[9] ॥ १९९
गजपूषपुरानङ्गकालान्धकमखासुहृत्[10] । कपर्दोऽस्य जटाजूटः खट्वाङ्गस्तु सुखंसुणः ॥ २००
पिनाकं स्यादाजगवमजकावं च तद्धनुः । ब्राह्म्याद्या मातरः सप्त प्रमथाः पार्षदा गणाः ॥ २०१
लघिमा वशितेशित्वं प्राकाम्यं महिमाणिमा । यत्र कामावसायित्वं प्राप्तिरैश्वर्यमष्टधा ॥ २०२

गौरी काली पार्वती मातृमातापर्णा रुद्राण्यम्बिका त्र्यम्बकोमा ।
दुर्गा चण्डी सिंहयाना[11] मृडानीकात्यायन्यौ दक्ष[12]जार्या कुमारी ॥ २०३

सती शिवा[13] महादेवी शर्वाणी सर्वमङ्गला । भवानी कृष्णमैनाकस्वसा[14] मेनाद्रिजे[15]श्वरा ॥ २०४
निशुम्भशुम्भमहिषमर्दिनी[16] भूतनायिका । तस्याः सिंहो मनस्तालः सख्यौ तु विजया जया ॥ २०५
चामुण्डा चर्चिका चर्ममुण्डा मार्जारकर्णिका । कर्णमोटी महागन्धा भैरवी च कपालिनी ॥ २०६
हेरम्बो गणविघ्नेशः[17] पर्शुपाणि[18]र्विनायकः । द्वैमातुरो गजास्यैकदन्तौ लम्बोदराखुगौ[19] ॥ २०७
स्कन्दः स्वामी महासेनः सेनानीः शिखिवाहनः । षाण्मातुरो ब्रह्मचारी गङ्गोमाकृत्तिकासुतः[20] ॥ २०८

---

१. 'दृक्'शब्दः एकशब्देनाप्यन्वेति; यौगिकत्वात् एकनेत्रः, विषमनेत्रः. २. यौगिकत्वात् अब्दवाहनोऽपि. ३. द्वाभ्यां प्रथमैकवचनान्ताभ्यामेकं नाम; विभक्त्यन्तरेऽपि यथा—'अहये बुध्नाय नमोऽस्तु गणपतये'. ४. वह्निहिरण्यशब्दाभ्यां परोऽरेतःशब्दः. ५. 'वासस्'शब्दो दिक्कृत्तिशब्दाभ्यां परः; यौगिकत्वात् दिग्वस्त्रः, चर्मवसनः, इत्यादयः. ६. तेन महादेवः, महानटः, महेश्वरः. ७. पतिशब्दस्य पश्वादिभिरन्वयः; यौगिकत्वात् पशुनाथः, भूतनाथः, गणनाथः, गौरीनाथः, इत्यादयः. ८. पिङ्गशब्दस्येक्षणेनाप्यन्वयः. ९. 'भृत्'पदस्य पिनाकादिभिरन्वयः; यौगिकत्वात् पिनाकपाणिः, शूली, खट्वाङ्गधरः, गङ्गाधरः, उरगभूषणः, शशिभूषणः, कपाली, इत्यादयः. १०. असुहृत्(द्विष्)पदं गजादिभिरन्वेति; यौगिकत्वात् गजासुरद्वेषी, पूषदन्तहरः, त्रिपुरान्तकः, कामध्वंसी, यमजित्, अन्धकारिः, दक्षाध्वरध्वंसकः, इत्यादयः. ११. यौगिकत्वात् सिंहवाहना च. १२. यौगिकत्वात् दाक्षायणी. १३. शिवी. १४. 'स्वसृ'पदं कृष्णेनाप्यन्वेति. १५. 'जा'पदं मेनापदेनाप्यन्वेयम्. १६. मर्दिनीपदं निशुम्भादिनान्वेयम्. १७ ईशपदं गणेनाप्यन्वेति; यौगिकत्वात् प्रमथाधिपः, विघ्नराजः, इत्यादयः. १८. यौगिकत्वात् परशुधरः, इत्यादयः. १९. यौगिकत्वात् मूषिरथोऽपि. २०. सुतपदं गङ्गादिनान्वेति; यौगिकत्वात् गाङ्गेयः, पार्वतीनन्दनः, कार्तिकेयः, बाहुलेयः, इत्यादयः.

द्वादशाक्षो महातेजाः कुमारः षण्मुखो गुहः । विशाखः शक्तिभृत्क्रौञ्चतारकारिः शराग्निभूः ॥ २०९
भृङ्गी भृङ्गिरिटिर्भृङ्गिरीटिर्नाड्यस्थिविग्रहः । कुष्माण्डके केलिकिलो नन्दीशे तण्डुनन्दिनौ ॥ २१०
द्रुहिणो विरिञ्चिर्द्रुघणो विरिञ्चः परमेष्ठ्यजोऽष्टश्रवणः स्वयंभूः ।
कमनः कविः सात्त्विकवेदगर्भौ स्थविरः शतानन्दपितामहौ कः ॥ २११
धाता विधाता विधिवेधसौ ध्रुवः पुराणगो हंसगविश्वरेतसौ ।
प्रजापतिर्ब्रह्मचतुर्मुखौ भवान्तकृज्जगत्कर्तृसरोरुहासनौ ॥ २१२
शंभुः शतधृतिः स्रष्टा सुरज्येष्ठो विरिञ्चनः । हिरण्यगर्भो लोकेशो नाभिपद्मात्मभूरपि ॥ २१३
विष्णुर्जिष्णुजनार्दनौ हरिहृषीकेशाच्युताः केशवो
दाशार्हः पुरुषोत्तमोऽब्धिशयनोपेन्द्रावजेन्द्रानुजौ ।
विष्वक्सेननरायणौ जलशयो नारायणः श्रीपति-
दैत्यारिश्च पुराणयज्ञपुरुषस्ताक्ष्यध्वजोऽधोक्षजः ॥ २१४
गोविन्दषड्बिन्दुमुकुन्दकृष्णा वैकुण्ठपद्मेशयपद्मनाभाः ।
वृषाकपिर्माधववासुदेवौ विश्वंभरः श्रीधरविश्वरूपौ ॥ २१५
दामोदरः शौरिसनातनौ विधुः पीताम्बरो मार्जजिनौ कुमोदकः ।
त्रिविक्रमो जह्नुचतुर्भुजौ पुनर्वसुः शतावर्तगदाग्रजौ स्वभूः ॥ २१६
मुञ्जकेशिवनमालिपुण्डरीकाक्षबभ्रुशशबिन्दुवेधसः ।
पृश्निशृङ्गधरणीधरात्मभूः पाण्डवायनसुवर्णबिन्दवः ॥ २१७
श्रीवत्सो देवकीसूनुर्गोपेन्द्रो विष्टरश्रवाः । सोमसिन्धुर्जगन्नाथो गोवर्धनधरोऽपि च ॥ २१८
यदुनाथो गदाशार्ङ्गचक्रश्रीवत्सशङ्खभृत् । मधुधेनुकचाणूरपूतनायमलार्जुनाः ॥ २१९
कालनेमिहयग्रीवशकटारिष्टकैटभाः । कंसः केशिमुरौ साल्वमैन्दद्विविदराहवः ॥ २२०
हिरण्यकशिपुर्बाणः कालियो नरको बलिः । शिशुपालश्चास्य वध्या वैनतेयस्तु वाहनम् ॥ २२१
शङ्खोऽस्य पाञ्चजन्योऽङ्कः श्रीवत्सोऽसिस्तु नन्दकः । गदा कौमोदकी चापं शार्ङ्गं चक्रं सुदर्शनः ॥ २२२
मणिः स्यमन्तको हस्ते भुजमध्ये तु कौस्तुभः । वसुदेवो भूकश्यपो दुन्दुरानकदुन्दुभिः ॥ २२३
रामो हली मुसलिसात्त्वतकामपालाः संकर्षणः प्रियमधुर्बलरौहिणेयौ ।
रुक्मिप्रलम्बयमुनाभिदनन्ततालक्ष्मैककुण्डलसितासितरेवतीशाः ॥ २२४

---

१. अरिपदं क्रौञ्चेनाप्यन्वेति; यौगिकत्वात् क्रौञ्चदारणः, तारकान्तकः, इत्यादयः. २. भूपदं शरेणाप्यन्वेति; यौगिकत्वात् शरजन्मा, अग्निजन्मा, इत्यादयः. ३. यौगिकत्वात् विश्वसृट्, इत्यादयः. ४. भूपदं नाभिनाप्यन्वेति; यौगिकत्वात् नाभिजन्मा, कमलयोनिः, आत्मयोनिः, इत्यादयः. ५. यौगिकत्वात् वासवावरजः, इत्यादयः. ६. जलेशयो-ऽपि. ७. यौगिकत्वात् लक्ष्मीनाथः, इत्यादयः. ८. पुरुषपदं पुराणेनाप्यन्वेति. ९. यौगिकत्वात् गरुडाङ्कः, इत्यादयः. १०. यौगिकत्वात् महीधरादयः. ११. 'भृत्'पदं गदादिभिरन्वेति; यौगिकत्वात् गदाधरः, शार्ङ्गी, चक्रपाणिः, श्रीवत्साङ्कः, शङ्खपाणिः, इत्यादयः. १२. मध्वादयो विष्णोर्वध्याः; तेन मधुमथनः, धेनुकध्वंसी, चाणूरसूदनः, पूतनादूषणः, यमलार्जुनभञ्जनः, कालनेमिहरः, हयग्रीवरिपुः, शकटारिः, अरिष्टहा, कैटभारिः, कंसजित्, केशिहा, मुरारिः, साल्वारिः, मैन्दमर्दनः, द्विविदारिः, राहुमूर्धहरः, हिरण्यकशिपुदारणः, बाणजित्, कालियदमनः, नरकारिः, बलिबन्धनः, शिशुपालनिषूदनः, इत्यादयः. १३. भित्पदं रुक्मिप्रभृतिनान्वेति; यौगिकत्वात् रुक्मिवारणः, प्रलम्बघ्नः, कालिन्दीकर्षणः, इत्यादयः.

बलदेवो बलभद्रो नीलवस्त्रोऽच्युताग्रजः । मुसलं त्वस्य सौनन्दं हलं संवर्तकाह्वयम् ॥ २२५

लक्ष्मीः पद्मा रमा या[1] मा ता सा श्रीः कमलेन्दिरा । हरिप्रिया पद्मवासा क्षीरोदतनयापि च ॥ २२६

मदनो जराभीरुरनङ्गमन्मथौ कमनः कलाकेलिरनन्यजोऽङ्गजः[2] ।
मधुदीपमारौ मधुसारथिः स्मरो विषमायुधो दर्पककामहृच्छयाः ॥ २२७

प्रद्युम्नः श्रीनन्दनश्च कंदर्पः पुष्पकेतनः । पुष्पाण्यस्येषु[3]चापास्त्राण्यरी[4] शंवरशूर्पकौ ॥ २२८

केतनं[5] मीनमकरौ बाणाः पञ्च[6] रतिः प्रिया[7] । मनःशृङ्गारसंकल्पात्मानो योनिः[8] सुहृन्मधुः[9] ॥ २२९

सुतोऽनिरुद्धो झषाङ्क उषेशो[10] ब्रह्मसूश्च सः । गरुडः[11] शाल्मल्यरुणावरजो विष्णुवाहनः ॥ २३०

सौपर्णेयो वैनतेयः सुपर्णसर्पारातिर्वज्रजिद्वज्रतुण्डः ।
पक्षिस्वामी काश्यपिः स्वर्णकायस्तार्क्ष्यः कामायुर्गरुत्मान्सुधाहृत् ॥ २३१

बुद्धस्तु सुगतो धर्मधातुस्त्रिकालविज्जिनः । बोधिसत्त्वो महाबोधिरार्यः शास्ता तथागतः ॥ २३२

पञ्चज्ञानो षडभिज्ञो दशार्हो दशभूमिगः । चतुस्त्रिंशज्जातकज्ञो दशपारमिताधरः ॥ २३३

द्वादशाक्षो दशबलस्त्रिकायः श्रीघनाद्वयौ । समन्तभद्रः संगुप्तो दयाकूर्चो विनायकः ॥ २३४

मारलोकस्वर्जिद्[12]धर्मराजो विज्ञानमातृकः । महामैत्रो मुनीन्द्रश्च बुद्धाः स्युः सप्त ते त्वमी ॥ २३५

विपश्यी शिखी विश्वभूः क्रकुच्छन्दश्च काश्चनः । काश्यपश्च सप्तमस्तु शाक्यसिंहोऽर्कबान्धवः॥२३६

तथा राहुलसूः सर्वार्थसिद्धो गौतमान्वयः । मायाशुद्धोदनसुतो[13] देवदत्ताग्रजश्च सः ॥ २३७

असुरा दितिदनुजाः[14] पातालौकःसुरारयः । पूर्वदेवाः शुक्रशिष्या विद्यादेव्यस्तु षोडश ॥ २३८

रोहिणी प्रज्ञप्ती वज्रशृङ्खला कुलिशाङ्कुशा । चक्रेश्वरी नरदत्ता काल्यथासौ महापरा ॥ २३९

गौरी गान्धारी सर्वास्त्रमहाज्वाला च मानवी । वैरोट्याच्छुप्ता मानसी महामानसिकेति ताः ॥ २४०

वाग्ब्राह्मी भारती गौर्गीर्वाणी भाषा सरस्वती । श्रुतदेवी वचनं तु व्याहारो भाषितं वचः ॥ २४१

सविशेषणमाख्यातं वाक्यं स्याद्यन्तकं पदम् । राद्धसिद्धकृतेभ्योऽन्ते[15] आप्तोक्तिः समयागमौ ॥ २४२

आचाराङ्गं सूत्रकृतं स्थानाङ्गं समवाययुक् । पञ्चमं भगवत्यङ्गं ज्ञातधर्मकथापि च ॥ २४३

उपासकान्तकृदनुत्तरोपपातिकाद्दशाः[16] । प्रश्नव्याकरणं चैव विपाकश्रुतमेव च ॥ २४४

इत्येकादश सोपाङ्गान्यङ्गानि द्वादश पुनः । दृष्टिवादो द्वादशाङ्गी स्याद्गणिपिटकाह्वया ॥ २४५

परिकर्मसूत्रपूर्वानुयोगपूर्वगतचूलिकाः पञ्च ।
स्युर्दृष्टिवादभेदाः पूर्वाणि चतुर्दशापि पूर्वगते ॥ २४६

उत्पादपूर्वमग्रायणीयमथ वीर्यतः प्रवादं स्यात् ।
अस्तेर्ज्ञानात्सत्यात्तदात्मनः कर्मणश्च परम् ॥ २४७

---

१. ई, आ, इति नामद्वयम्; 'या' इत्यखण्डं च. २. यौगिकत्वात् मनसिशयः. ३. पुष्पेषुः, कुसुमबाणः, पुष्पचापः, कुसुमधन्वा, पुष्पास्त्रः, कुसुमायुधः, इति फलितम्. ४. तेन शंवरारिः, शूर्पकारिः. ५. तेन मीनकेतनः, मकरध्वजः, झषध्वजः, मकरकेतनः. ६. तेन पञ्चबाणः, विषमेषुः. ७. तेन रतिवरः, रतिपतिः. ८. तेन मनोयोनिः, चेतोभवः, शृङ्गारयोनिः, शृङ्गारजन्मा, संकल्पयोनिः, स्मृतिभूः, आत्मयोनिः, आत्मभूः. ९. तेन मधुसुहृत्, चैत्रसखः. १०. यौगिकत्वात् उषारमणः. ११. गरुलः. १२. जित्पदं मारप्रभृतिनान्वेति. १३. सुतपदं माययाप्यन्वेति; यौगिकत्वात् शौद्धोदनिः. १४. जपदं दितिपदेनाप्यन्वेति; यौगिकत्वात् दैतेयाः, दानवाः, इत्यादयः. १५. अन्तशब्दः प्रत्येकं राद्धादिभ्यः परो योज्यः. १६. तथा च उपासकदशा, अन्तकृद्दशा, अनुत्तरोपपातिकदशा.

प्रत्याख्यानं विद्याप्रवादकल्याणनामधेये च ।
प्राणावायं च क्रियाविशालमथ लोकबिन्दुसारमिति ॥ २४८

स्वाध्यायः श्रुतिराम्नायश्छन्दो वेदस्त्रयी पुनः । ऋग्यजुःसामवेदाः स्युरथर्वा तु तदुद्धृतिः ॥ २४९
वेदान्तः स्यादुपनिषदोङ्कारप्रणवौ समौ । शिक्षा कल्पो व्याकरणं छन्दो ज्योतिर्निरुक्तयः ॥ २५०
षडङ्गानि धर्मशास्त्रं स्यात्स्मृतिर्धर्मसंहिता । आन्वीक्षिकी तर्कविद्या मीमांसा तु विचारणा ॥ २५१
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुवंशचरितं पुराणं पञ्चलक्षणम् ॥ २५२
षडङ्गा वेदाश्चत्वारो मीमांसान्वीक्षिकी तथा । धर्मशास्त्रं पुराणं च विद्या एताश्चतुर्दश ॥ २५३
सूत्रं सूचनकृद्भाष्यं सूत्रोक्तार्थप्रपञ्चकम् । प्रस्तावस्तु प्रकरणं निरुक्तं पदभञ्जनम् ॥ २५४
अवान्तरप्रकरणविश्रामे शीघ्रपाठतः । आह्निकमधिकरणं त्वेकन्यायोपपादनम् ॥ २५५
उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्तिकम् । टीका निरन्तरव्याख्या पञ्जिका पदभञ्जिका ॥ २५६
निबन्धवृत्ती अन्वर्थे संग्रहस्तु समाहृतिः । परिशिष्टपद्धत्यादीन्पथानेन समुन्नयेत् ॥ २५७
कारिका तु स्वल्पवृत्तौ बह्वोरर्थस्य सूचनी । कलिन्दिका[1] सर्वविद्या निघण्टुर्नामसंग्रहः ॥ २५८
इतिहासः पुरावृत्तं प्रवह्लिका प्रहेलिका । जनश्रुतिः किंवदन्ती वार्तैतिह्यं पुरातनी ॥ २५९
वार्ता प्रवृत्तिर्वृत्तान्त उदन्तोऽथाह्वयोऽभिधा । गोत्रसंज्ञानामधेयाख्याह्वाभिख्याश्च नाम च ॥ २६०
संबोधनमामन्त्रणमाह्वानं त्वभिमन्त्रणम् । आकारणं हवो हूतिः संहूतिर्बहुभिः कृता ॥ २६१
उदाहार उपोद्घात उपन्यासश्च वाङ्मुखम् । व्यवहारो विवादः स्याच्छपथः शपनं शपः ॥ २६२
उत्तरं तु प्रतिवचः प्रश्नः पृच्छानुयोजनम् । कथंकथिकता चाथ देवप्रश्न उपश्रुतिः ॥ २६३
चटु चाटु प्रियप्रायं प्रियसत्यं तु सूनृतम् । सत्यं सम्यक्समीचीनमृतं तथ्यं यथातथम् ॥ २६४
यथास्थितं च सद्भूतेऽलीके तु वितथानृते[2] । अथ क्लिष्टं संकुलं च परस्परपराहतम् ॥ २६५
सान्त्वं सुमधुरं ग्राम्यमश्लीलं म्लिष्टमस्फुटम् । लुप्तवर्णपदं ग्रस्तमवाच्यं स्यादनक्षरम् ॥ २६६
अम्बूकृतं सथूत्कारं निरस्तं त्वरयोदितम् । आम्रेडितं द्विस्त्रिरुक्तमबद्धं तु निरर्थकम् ॥ २६७
पृष्ठमांसादनं तद्यत्परोक्षे दोषकीर्तनम् । मिथ्याभियोगोऽभ्याख्यानं संगतं हृदयंगमम् ॥ २६८
परुषं निष्ठुरं रूक्षं विक्रुष्टमथ घोषणा । उच्चैर्घुष्टं वर्णनेडा स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ २६९
श्लाघा प्रशंसार्थवादः सा तु मिथ्या विकत्थनम् । जनप्रवादः कौलीनं विगानं वचनीयता ॥ २७०
स्यादवर्ण उपक्रोशो वादो[3] निःपर्यपात्परैः । गर्हणा[4] धिक्क्रिया निन्दा कुत्साक्षेपो जुगुप्सनम्[5] ॥ २७१
आक्रोशाभीषङ्गाक्षेपाः शापः स क्षारणा रते । विरुद्धशंसनं गालिराशीर्मङ्गलशंसनम् ॥ २७२
श्लोकः कीर्तिर्यशोऽभिख्या समाज्ञा[6] शंशती[7] पुनः । अशुभा वाक्शुभा कल्या[8] चर्चरी चर्भटी समे २७३
यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् । आपृच्छालापः संभाषोऽनुलापः स्यान्मुहुर्वचः २७४
अनर्थकं तु प्रलापो विलापः परिदेवनम् । उल्लापः काकुवागन्योन्योक्तिः संलापसंकथे ॥ २७५
विप्रलापो विरुद्धोक्तिरपलापस्तु निह्नवः । सुप्रलापः सुवचनं संदेशवाक्तु वाचिकम् ॥ २७६
आज्ञा शिष्टिर्निराङ्भ्यो देशो[9] नियोगशासने । अववादोऽप्यथाह्वय प्रेषणं प्रतिशासनम् ॥ २७७

१. कडिन्दिका च. २. यौगिकत्वात् असत्यम्, सत्येतरत्, इत्यादि. ३. तेन निर्वादः, परिवादः, अपवादः. ४. गर्हापि. ५. जुगुप्सापि. ६. समाख्या. ७. शिशती. ८. काल्या च. ९. तेन निर्देशः, आदेशः, निदेशः.

संवित्संधास्थाभ्युपायः संप्रत्याङ्भ्यः परः श्रवः । अङ्गीकारोऽभ्युपगमः प्रतिज्ञागूश्च संगरः ॥ २७८
गीतनृत्तवाद्यत्रयं नाट्यं तौर्यत्रिकं च तत् । संगीतं प्रेक्षणार्थेऽस्मिञ्शास्त्रोक्ते नाट्यधर्मिका ॥ २७९
गीतं गानं गेयं गीतिर्गान्धर्वमथ नर्तनम् । नटनं नृत्यं नृत्तं च लास्यं नाट्यं च ताण्डवम् ॥ २८०
मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीसकं तु तत् । पानगोष्ठ्यामुत्तालं रणे वीरजयन्तिका ॥ २८१
स्थानं नाट्यस्य रङ्गः स्यात्पूर्वरङ्ग उपक्रमः । अङ्गहारोऽङ्गविक्षेपो व्यञ्जकोऽभिनयः समौ ॥ २८२
स चतुर्विध आहार्यो रचितो भूषणादिना । वचसा वाचिकोऽङ्गेनाङ्गिकः सत्त्वेन सात्त्विकः ॥ २८३
स्यान्नाटकं प्रकरणं भाणः प्रहसनं डिमः । व्यायोगः समवाकारो विथ्यङ्केहामृगा इति ॥ २८४
अभिनेयप्रकाराः स्युर्भाषाः षट्संस्कृतादिकाः । भारती सात्त्वती कैशिक्यारभट्यौ च वृत्तयः ॥ २८५
वाद्यं वादित्रमातोद्यं तूर्यं तूरं स्मरध्वजः । ततं वीणाप्रभृतिकं तालप्रभृतिकं घनम् ॥ २८६
वंशादिकं तु शुषिरमानद्धं मुरजादिकम् । वीणा पुनर्घोषवती विपञ्ची कण्ठकूणिका ॥ २८७
वल्लकी साथ तन्त्रीभिः सप्तभिः परिवादिनी । शिवस्य वीणा नालम्बी सरस्वत्यास्तु कच्छपी ॥ २८८
नारदस्य तु महती गणानां तु प्रभावती । विश्वावसोस्तु बृहती तुम्बरोस्तु कलावती ॥ २८९
चाण्डालानां तु कण्डोलवीणा चाण्डालिका च सा । कायः कोलम्बकस्तस्या उपनाहो निबन्धनम् ॥
दण्डः पुनः प्रवालः स्यात्ककुभस्तु प्रसेवकः । मूले वंशशलाका स्यात्कलिका कूणिकापि च ॥ २९१
कालस्य क्रियया मानं तालः साम्यं पुनर्लयः । द्रुतं विलम्बितं मध्यमोघस्तत्त्वं घनं क्रमात् ॥ २९२
मृदङ्गो मुरजः सोऽङ्क्यालिङ्ग्यूर्ध्वक इति त्रिधा । स्याद्यशःपटहो ढक्का भेरी दुन्दुभिरानकः ॥ २९३
पटहोऽथ शारिका स्यात्कोणो वीणादिवादनम् । शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ॥ २९४
बीभत्साद्भुतशान्ताश्च रसा भावाः पुनस्त्रिधा । स्थायिसात्त्विकसंचारिप्रभेदैः स्याद्रतिः पुनः ॥ २९५
रागोऽनुरागोऽनुरतिर्हासस्तु हसनं हसः । घर्घरो हासिका हास्यं तत्रादृष्टरदे स्मितम् ॥ २९६
वक्रोष्ठिकाथ हसितं किंचिद्दृष्टरदाङ्कुरे । किंचिच्छ्रुते विहसितमट्टहासो महीयसि ॥ २९७
अतिहासस्त्वनुस्यूतेऽपहासोऽकारणात्कृते । सोत्प्रासे त्वाच्छुरितकं हसनं स्फुरदोष्ठके ॥ २९८
शोकः शुक्शोचनं खेदः क्रोधो मन्युः क्रुधा रुषा । क्रुत्कोपः प्रतिघो रोषो रुट् चोत्साहः प्रगल्भता ॥
अभियोगोद्यमौ प्रौढिरुद्योगः कियदेतिका । अध्यवसाय ऊर्जोऽथ वीर्यं सोऽतिशयान्वितः ॥ ३००
भयं भीर्भीतिरातङ्क आशङ्का साध्वसं दरः । भिया च तत्राहिभयं भूपतीनां स्वपक्षजम् ॥ ३०१
अदृष्टं वह्नितोयादेर्दृष्टं स्वपरचक्रजम् । भयंकरं प्रतिभयं भीमं भीष्मं भयानकम् ॥ ३०२
भीषणं भैरवं घोरं दारुणं च भयावहम् । जुगुप्सा तु घृणाथ स्याद्विस्मयश्चित्रमद्भुतम् ॥ ३०३
चोद्याश्चर्ये शमः शान्तिः शमथोपशमावपि । तृष्णाक्षयः स्थायिनोऽमी रसानां कारणं क्रमात् ॥ ३०४
स्तम्भो जाड्यं स्वेदो घर्मनिदाघौ पुलकः पुनः । रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम् ॥ ३०५
रोमोद्गम उद्धुषणमुल्लुकसनमित्यपि । स्वरभेदस्तु कल्लत्वं स्वरे कम्पस्तु वेपथुः ॥ ३०६
वैवर्ण्यं कालिकाथाश्रु बाष्पो नेत्राम्बु रोदनम् । अस्रमस्तु प्रलयस्त्वचेष्टतेत्यष्ट सात्त्विकाः ॥ ३०७
धृतिः संतोषः स्वास्थ्यं स्यादाध्यानं स्मरणं स्मृतिः । मतिर्मनीषा बुद्धिर्धीर्धिषणाज्ञप्तिचेतनाः ॥ ३०८
प्रतिभाप्रतिपत्प्रज्ञाप्रेक्षाचिदुपलब्धयः । संवित्तिः शेमुषी दृष्टिः सा मेधा धारणक्षमा ॥ ३०९
पण्डा तत्त्वानुगा मोक्षे ज्ञानं विज्ञानमन्यतः । शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ॥ ३१०

१. तेन संभवः, प्रतिभवः, आभवः.

ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः । व्रीडा लज्जा मन्दाक्षं ह्रीस्त्रपा सापत्रपान्यतः ॥ ३११
जाड्यं मौर्ख्यं विषादोऽवसादः सादो विषण्णता । मदो मुन्मोहसंभेदो व्याधिस्त्वाधी रुजाकरः ३१२
निद्रा प्रमीला शयनं संवेशस्वापसंलयाः । नन्दीमुखी श्वासहेतिस्तन्द्रा[1] सुप्तं तु साधिका ॥ ३१३
औत्सुक्यं रणरणकोत्कण्ठे[2] आयल्लकारती । हृल्लेखोत्कलिके चाथावहित्थाकारगोपनम् ॥ ३१४
शङ्कानिष्टोत्प्रेक्षणं स्याच्चापलं त्वनवस्थितिः । आलस्यं तन्द्रा कौसीद्यं हर्षश्चित्तप्रसन्नता ॥ ३१५
ह्लादः प्रमोदः प्रमदो मुत्प्रीत्यामोदसंमदाः । आनन्दानन्दथू गर्वस्त्वहंकारोऽविलप्तता ॥ ३१६
दर्पोऽभिमानो ममता मानश्चित्तोन्नतिः स्मयः । सा मिथोऽहमहमिका या तु संभावनात्मनि ॥ ३१७
दर्पात्साहोपुरुषिका स्यादहंपूर्विका पुनः । अहं पूर्वमहं पूर्वमित्युग्रत्वं तु चण्डता ॥ ३१८
प्रबोधस्तु विनिद्रत्वं ग्लानिस्तु बलदीनता । दैन्यं कार्पण्यं श्रमस्तु क्लमः क्लेशः परिश्रमः ॥ ३१९
प्रयासायासव्यायामा उन्मादश्चित्तविप्लवः । मोहो मौढ्यं चिन्ता ध्यानममर्षः क्रोधसंभवः ॥ ३२०
गुणो जिगीषोत्साहवांस्त्रासस्त्वाकस्मिकं भयम् । अपस्मारः स्यादावेशो निर्वेदः स्वावमाननम् ॥ ३२१
आवेगस्तु त्वरिस्तूर्णिः संवेगः संभ्रमस्त्वरा । वितर्कः स्यादुन्नयनं परामर्शो विमर्शनम् ॥ ३२२
अध्याहारस्तर्क ऊहो[3]ऽसूयान्यगुणदूषणम् । मृतिः संस्था मृत्युकालौ परलोकगमोऽत्ययः ॥ ३२३
पञ्चत्वं निधनं नाशो दीर्घनिद्रा निमीलनम् । दिष्टान्तोऽस्तं कालधर्मोऽवसानं सा तु सर्वगा ॥ ३२४
मरको मारिस्त्रयस्त्रिंशदमी स्युर्व्यभिचारिणः । स्युः कारणानि कार्याणि सहचारीणि यानि च ॥ ३२५
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः । विभावा अनुभावाश्च व्यभिचारिण एव च ॥ ३२६
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो भवेद्रसः । पात्राणि नाट्येऽधिकृतास्तत्तद्वेषस्तु भूमिका ॥ ३२७
शैलूषो भरतः सर्वकेशी भरतपुत्रकः । धात्रीपुत्रो रङ्गाजायाजीवो रैङ्गावतारकः[4] ॥ ३२८
नटः कृशाश्वी शैलाली चारणस्तु कुशीलवः । भ्रभ्रुभ्रूभृपरः कुंसो[5] नटः स्त्रीवेषधारकः ॥ ३२९
वेश्याचार्यः पीठमर्दः सूत्रधारस्तु सूचकः । नन्दी तु पाठको नान्द्याः पार्श्वस्थः पारिपार्श्विकः ॥ ३३०
वासन्तिकः केलिकिलो वैहासिको विदूषकः । प्रहासी प्रीतिदश्चाथ षिङ्गः पल्लवको विटः ॥ ३३१
पिता त्वावुक आवुत्तभावुकौ भगिनीपतौ । भावो विद्वान्युवराजः कुमारो भर्तृदारकः ॥ ३३२
बाला वासूर्मार्षे[6] आर्यो देवो भट्टारको नृपः । राष्ट्रीयो नृपतेः श्यालो दुहिता भर्तृदारिका ॥ ३३३
देवी कृताभिषेकान्या भट्टिनी गणिकाज्जुका । नीचाचेटीसखीहूतौ हण्डेहञ्जेहलाः क्रमात् ॥ ३३४
अब्रह्मण्यमवध्योक्तौ ज्यायसी तु स्वसात्तिका । भर्तार्यपुत्रो माताम्बा भदन्ताः सौगतादयः ॥ ३३५
पूज्ये तत्रभवानत्रभवांश्च भगवानपि । पादा भट्टारको देवः प्रयोज्याः पूज्यनामतः ॥ ३३६

इत्याचार्यहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां देवकाण्डो द्वितीयः ॥ २ ॥

---

मर्त्यः पञ्चजनो भूस्पृक्पुरुषः पूरुषो नरः । मनुष्यो मानुषो ना विट् मनुजो मानवः पुमान् ॥ ३३७
बालः पाकः शिशुर्डिम्भः पोतः शावः स्तनंधयः[7] । पृथुकार्भोत्तानशयाः क्षीरकण्ठः[8] कुमारकः ॥ ३३८
शिशुत्वं शैशवं बाल्यं वयस्थस्तरुणो युवा । तारुण्यं यौवनं[9] वृद्धः प्रवयाः स्थविरो जरन् ॥ ३३९
जरी जीर्णो यातयामो जीनोऽथ विस्रसा जरा । वार्धकं स्थाविरं ज्यायान्वर्षीयान्दशमीत्यपि ॥ ३४०

---

१. तन्द्री इत्यपि. २. उत्कण्ठोऽपि. ३. ऊहापि. ४. रङ्गाजीवः, जायाजीवः. ५. 'कुंस'शब्दः प्रत्येकं भ्रादिनान्वेति. ६. मारिषोऽपि. ७. यौगिकत्वात् स्तनपोऽपि. ८ यौगिकत्वात् क्षीरपोऽपि. ९. यौवनिकापि.



27

विद्वान्सुधीः कैविविचक्षणलब्धवर्णा ज्ञः प्राप्तरूपकृतिकृष्टयभिरूपधीराः ।
मेधाविकोविदविशारदसूरिदोषज्ञाः प्राज्ञपण्डितमनीषिबुधप्रबुद्धाः ॥ ३४१
व्यक्तो विपश्चित्संख्यावान्सन्प्रवीणे तु शिक्षितः । निष्णातो निपुणो दक्षः कर्महस्तमुखाः कृतात् ॥
कुशलश्चतुरोऽभिज्ञविज्ञवैज्ञानिकाः पटुः । छेको विदग्धे प्रौढस्तु प्रगल्भः प्रतिभामुखः ॥ ३४३
कुशाग्रीयमतिः सूक्ष्मदर्शी तत्कालधीः पुनः । प्रत्युत्पन्नमतिर्दूरदर्शी परश्येद्दीर्घदर्श्यसौ ॥ ३४४
हृदयालुः सहृदयश्चिद्रूपोऽप्यथ संस्कृते । व्युत्पन्नप्रहतक्षुण्णा अन्तर्वाणिस्तु शास्त्रवित् ॥ ३४५
वागीशो वाक्पतौ वाग्ग्मी वाचोयुक्तिपटुः प्रवाक् । समुखो वावदूकोऽथ वदो वक्ता वदावदः ३४६
स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् । यद्वदोऽनुत्तरे दुर्वाक्कद्वदे स्यादथाधरः ॥ ३४७
हीनवादिन्येडमूकानेडमूकौ त्ववाक्श्रुतौ । रवणः शब्दनस्तुल्यौ कुवादकुचरौ समौ ॥ ३४८
लोहलोऽस्फुटवाक्सूकोऽवागसौम्यस्वरोऽस्वरः । वेदिता विदुरो विन्दुर्वन्दारुस्त्वभिवादकः ॥ ३४९
आशंसुराशंसितरि कैट्वरस्त्वतिकुत्सितः । निराकरिष्णुः क्षिप्नुः स्याद्विकासी तु विकस्वरः ॥ ३५०
दुर्मुखे मुखराबद्धमुखौ शल्कः प्रियंवदः । दानशीलः स वदान्यो वदन्योऽप्यथ बालिशः ॥ ३५१
मूढो मन्दो यथाजातो बालो मातृमुखो जडः । मूर्खोऽमेधो विवर्णाज्ञौ वैधेयो मातृशासितः॥ ३५२
देवानांप्रियजाल्मौ च दीर्घसूत्रश्चिरक्रियः । मन्दः क्रियासु कुण्ठः स्यात्क्रियावान्कर्मसूद्यतः ॥ ३५३
कर्मक्षमोऽलंकर्मीणः कर्मशूरस्तु कर्मठः । कर्मशीलः कार्मं आयःशूलिकस्तीक्ष्णकर्मकृत् ॥ ३५४
सिंहसंहननः स्वङ्गः स्वतन्त्रो निरवग्रहः । यथाकामी स्वरुचिश्च स्वच्छन्दः स्वैर्यपावृतः ॥ ३५५
यदृच्छा स्वैरिता स्वेच्छा नाथवाभिप्रगृह्यकौ । तन्त्रायत्तवशाधीनच्छन्दवन्तः परात्परे ॥ ३५६
लक्ष्मीवांल्लक्ष्मणः श्रील इभ्य आढ्यो धनीश्वरः । ऋद्धे विभूतिः संपत्तिर्लक्ष्मीः श्रीऋद्धिसंपदः॥ ३५७
दरिद्रो दुर्विधो दुःस्थो दुर्गतो निःस्वकीकटौ । अकिंचनोऽधिपस्त्वीशो नेता परिवृढोऽधिभूः ॥ ३५८
पतीन्द्रस्वामिनाथार्याः प्रभुर्भर्तेश्वरो विभुः । ईशितेनो नायकश्च नियोज्यः परिचारकः ॥ ३५९
डिङ्गरः किंकरो भृत्यश्चेटो गोप्यः पराचितः । दासः प्रेष्यः परिस्कन्दो भुजिष्यपरिकर्मिणौ ॥ ३६०
पराम्नः परिपिण्डादः परजातः परैधितः । भृतके भृतिभुग्वैतनिकः कर्मकरोऽपि च ॥ ३६१
स निर्भृतिः कर्मकरो भृतिः स्यान्निष्क्रयः पणः । कर्मण्या वेतनं मूल्यं निर्वेशो भरणं विधा ॥ ३६२
भर्मण्या भर्म भृत्या च भोगस्तु गणिकाभृतिः । खलपूः स्याद्बहुकरो भारवाहस्तु भारिकः ॥ ३६३
वार्तावहे वैवधिको भारे विवधवीवधौ । काचः शिक्यं तदालम्बो भारयष्टिर्विहङ्गिका ॥ ३६४
शूरश्चारभटो वीरो विक्रान्तश्चाथ कातरः । दरिद्रश्चकितो भीतो भीरुभीरुकभीलुकाः ॥ ३६५
विहस्तव्याकुलौ व्यग्रे कांदिशीको भयद्रुते । उत्पिञ्जलसमुत्पिञ्जपिञ्जलाभृशमाकुले ॥ ३६६
महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशयाः । महामना महात्मा च कृपणस्तु मितंपचः ॥ ३६७
कीनाशस्तद्धनक्षुद्रकदर्यदृढमुष्टयः । किंपचानो दयालुस्तु कृपालुः करुणापरः ॥ ३६८
सूरतोऽथ दया शूकः कारुण्यं करुणा घृणा । कृपानुकम्पानुक्रोशो हिंस्रे शरारुघातुकौ ॥ ३६९

---

१. कवितापि. २. यौगिकत्वात् धीमान्, मतिमान्, इत्यादयः. ३. तेन कृतकर्मा, कृतहस्तः, कृतमुखः; यौगिकत्वात् कृतकृत्यः, कृतार्थः, कृती च. ४. कट्वर इत्यन्ये. ५. यथोद्गतोऽपि. ६. तेन परतन्त्रः, परायत्तः, परवशः, पराधीनः, परच्छन्दः, परवान्. ७. श्रीमान् इत्यपि.

व्यापादनं विशरणं प्रमयः प्रमापणं निग्रन्थनं प्रमथनं कदनं निबर्हणम् ।
निसूदनं विशसनं क्षणनं परासनं प्रोज्जासनं प्रशमनं प्रनिघातनं वधः ॥ ३७०
प्रवासनोद्वासनघातनिर्वासनानि संज्ञप्तिनिशुम्भहिंसाः ।
निर्वापणालम्भनिसूदनानि निर्यातनोन्मन्थसमापनानि ॥ ३७१
अपासनं वर्जनमारपिञ्जा निष्कारणाक्राथविशारणानि ।
स्युः कर्तने कल्पनवर्धने च च्छेदश्च घातोद्यत आततापी ॥ ३७२
सशीर्षच्छेदिकः शीर्षच्छेद्यो यो वधमर्हति । प्रमीत उपसंपन्नः परेतप्रेतसंस्थिताः ॥ ३७३
नामालेख्ययशः शेषो[1] व्यापन्नोऽपगतो मृतः । परासुस्तदहे दानं तदर्थमूर्ध्वदेहिकम्[2] ॥ ३७४
मृतस्नानमपस्नानं निवापः पितृतर्पणम् । चितिचित्याचितास्तुल्या ऋजुस्तु प्राञ्जलोऽञ्जसः ॥ ३७५
दक्षिणे सरलोदारौ शठस्तु[3] निकृतोऽनृजुः । क्रूरे नृशंसनिस्त्रिंशपापा धूर्तस्तु वञ्चकः ॥ ३७६
व्यंसकः कुहको दाण्डाजिनिको मायिजालिकौ । माया तु शठता शाठ्यं कुसृतिर्निष्कृतिश्च सा ॥ ३७७
कपटं कैतवं दम्भः कूटं छद्मोपधिश्छलम्[4] । व्यपदेशो मिषं लक्षं निभं व्याजोऽथ कुक्कुटिः ॥ ३७८
कुहना दम्भचर्या च वञ्चनं तु प्रतारणम् । व्यलीकमतिसाधनं साधौ सभ्यार्यसज्जनाः ॥ ३७९
दोषैकदृक्पुरोभागी कर्णेजपस्तु दुर्जनः । पिशुनः सूचको नीचो द्विजिह्वो मत्सरी खलः ॥ ३८०
व्यसनार्तस्तूपरक्तश्चोरस्तु[5] प्रतिरोधकः । दस्युः पाटच्चरः[6] स्तेनस्तस्करः पारिपन्थिकः ॥ ३८१
परिमोषिपरास्कन्द्यैकागारिकमलिम्लुचाः । यः पश्यतो हरेदर्थं स चौरः पश्यतोहरः ॥ ३८२
चौर्यं तु चौरिका स्तेयं[7] लोप्त्रं त्वपहृतं धनम् । यदृविष्यो दैवपरोऽथालस्यः शीतकोऽलसः ॥ ३८३
मन्दस्तुन्दपरिमृजोऽनुष्णो दक्षस्तु पेशलः । पटूष्णोष्णकसूत्थानचतुराश्चाथ तत्परः ॥ ३८४
आसक्तः प्रवणः प्रह्वः प्रसितश्च परायणः । दातोदारः स्थूललक्षो दानशौण्डो बहुप्रदे ॥ ३८५
दानमुत्सर्जनं त्यागः प्रदेशनविसर्जने । विहापितं वितरणं स्पर्शनं प्रतिपादनम् ॥ ३८६
विश्राणनं निर्वपणमपवर्जनमंहतिः । अर्थव्ययज्ञः सुकलो याचकस्तु वनीपकः ॥ ३८७
मार्गणोऽर्थी याचनकस्तर्कुकोऽथार्थनैषणा । अर्दना प्रणयो याच्ञा याचनाध्येषणा सनिः ॥ ३८८
उत्पतिष्णुस्तूत्पतितालंकरिष्णुश्च मण्डनः । भविष्णुर्भविता भूष्णुः समौ वर्तिष्णुवर्तनौ ॥ ३८९
विसृत्वरो विसृमरः प्रसारी च विसारिणी । लज्जाशीलोऽपत्रपिष्णुः सहिष्णुः क्षमिता क्षमी ३९०
तितिक्षुः सहनः क्षन्ता तितिक्षा सहनं क्षमा[8] । ईर्ष्यालुः कुहनोक्षान्तिरीर्ष्या क्रोधी[9] तु रोषणः ॥ ३९१
अमर्षणः क्रोधनश्च चण्डस्त्वत्यन्तकोपनः । बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः ॥ ३९२
बुभुक्षायामशनाया जिघत्सा रोचको रुचिः । पिपासुस्तृषितस्तृष्णक्तृष्णा तर्षोऽपलासिका ॥ ३९३
पिपासा तृट्तृषोदन्या धीतिः पानेऽथ शोषणम् । रसादानं भक्षकस्तु घस्मरोऽद्मर आशिता[10] ॥ ३९४
भक्तमन्नं कूरमन्धो भित्सा दीदिविरोदनः । अशनं जीवनकं च याजो वाजः प्रसादनम् ॥ ३९५
भिस्सटा दग्धिका सर्वरसाग्र्यं मण्डमत्र तु । दधिजे मस्तु भक्तोत्थे निःस्रावाचाममासराः ॥ ३९६
श्राणाविलेपी[11] तरला यवागूरुष्णिकापि च । सूपः स्यात्प्रहितं सूदो व्यञ्जनं तु घृतादिकम् ॥ ३९७
तुल्यौ तिलान्ने कृसरत्रिसरावथ पिष्टकः । पूपोऽपूपः पूलिका तु पोलिकापौलिपूपिकाः ॥ ३९८

---

१. 'शेष'शब्दो नामादिभिः प्रत्येकमन्वेति. २. और्ध्वदेहिकमपि. ३. शण्ठः. ४. उपधापि. ५. चौरोऽपि. ६. पटच्चोरोऽपि. ७. स्तैन्यमपि. ८. क्षान्तिरित्यपि. ९. कोपनोऽपि. १०. आशिरोऽपि. ११. विलेप्यापि.

पूपलाथेषत्पक्वे स्युरभ्यूषाभ्योषपौलयः । निष्ठानं तु तेमनं स्यात्करम्भो दधिसक्तवः ॥ ३९९
घृतपूरो घृतवरः पिष्टपूरश्च घार्तिकः । चमसी पिष्टवर्तिः स्याद्वटकस्त्ववसेकिमः ॥ ४००
भृष्टा यवाः पुनर्धाना धानाचूर्णं तु सक्तवः । पृथुकश्चिपुटस्तुल्यौ लाजाः स्युः पुनरक्षताः ॥ ४०१
गोधूमचूर्णे समिता यवक्षोदे तु चिक्कसः । गुड इक्षुरसः क्वाथः शर्करा तु सितोपला ॥ ४०२
सिता च मधुधूलिस्तु खण्डस्तद्विकृतिः पुनः । मत्स्यण्डी फाणितं चापि रसालायां तु मार्जिता[1] ॥ ४०३
शिखरिण्यथ यूयूषो रसो दुग्धं तु सोमजम् । गोरसः क्षीरमूधस्यं स्तन्यं पुंसवनं पयः ॥ ४०४
पयस्यं घृतदध्यादि पेयूषोऽभिनवं[2] पयः । उभे क्षीरस्य विकृती किलाटी कूर्चिकापि च ॥ ४०५
पायसं परमान्नं च क्षीरेयीक्षीरजं दधि । गोरसश्च तदघनं द्रप्सं पत्रलमित्यपि ॥ ४०६
घृतं हविष्यमाज्यं च हविराघारसर्पिषी । ह्योगोदोहोद्भवं हैयंगवीनं शरजं पुनः ॥ ४०७
दधिसारं तक्रसारं नवनीतं नवोद्धृतम् । दण्डाहते कालसेयघोलारिष्टानि गोरसः ॥ ४०८
रसायनमथार्धाम्बूदश्विच्छ्वेतं समोदकम् । तक्रं पुनः पादजलं मथितं वारिवर्जितम् ॥ ४०९
सार्पिष्कं दाधिकं सर्पिर्दधिभ्यां संस्कृतं क्रमात् । लवणोदकाभ्यानुदकलावणिकमुदश्विति ॥ ४१०
औदश्वितमौदश्वित्कं लवणे स्यात्तु लावणम् । पैठरोख्ये उखासिद्धे प्रयस्तं तु सुसंस्कृतम् ॥ ४११
पक्वे राद्धं च सिद्धं च भृष्टं पक्वं विनाम्बुना । भृष्टामिषं भटित्रं स्याद्भूतिर्भरूटकं च तत् ॥ ४१२
शूल्यं शूलाकृतं मांसं निष्क्वाथो रसकः समौ । प्रणीतमुपसंपन्नं स्निग्धे मसृणचिक्कणे[3] ॥ ४१३
पिच्छिलं तु विर्जिविलं[4] विज्जलं विजलं च तत् । भावितं तु वासितं स्यात्तुल्ये संमृष्टशोधिते ४१४
काश्चिकं काञ्जिकं धान्याम्लारनाले तुषोदकम् । कुल्माषाभिषुतावन्तिसोमशुक्तानि कुञ्जलम् ॥ ४१५
चुक्रं धातुघ्नमुन्नाहं रक्षोघ्नं कुण्डगोलकम् । महारसं सुवीराम्लं सौवीरं श्रक्षणं पुनः ॥ ४१६
तैलं स्नेहोऽभ्यञ्जनं च वेषवार उपस्करः । स्यात्तिन्तिडीकं तु चुक्रं वृक्षाम्लं चाम्लवेतसे ॥ ४१७
हरिद्रा काञ्चनी पीता निशाख्या वरवर्णिनी । क्षवः क्षुताभिजननो राजिका राजसर्षपः ॥ ४१८
आसुरी कृष्णिका चासौ कुस्तुम्बुरु तु धान्यकम् । धन्या धन्याकं धान्याकं मरीचं कृष्णमूषणम् ४१९
कोलकं वेल्लजं धार्मपत्तनं यवनप्रियम् । शुण्ठी महौषधी विश्वा नागरं विश्वभेषजम् ॥ ४२०
वैदेही पिप्पली कृष्णोपकुल्या मागधी कणा । तन्मूलं ग्रन्थिकं सर्वग्रन्थिकं चटकाशिरः ॥ ४२१
त्रिकटु त्र्यूषणं व्योषमजाजी जीरकः कणा । सहस्रवेधि वाह्लीकं जतुकं हिङ्गु रामठम् ॥ ४२२

न्यादः स्वदनं खादनमशनं निघसो वल्भनमभ्यवहारः ।
जग्धिर्जेक्षणभक्षणलेहाः प्रत्यवसानं घसिराहारः ॥ ४२३

प्सानावष्वाणविष्वाणा भोजनं जेमनादने[5] । चर्वणं चूर्णनं दन्तैर्जिह्वास्वादस्तु लेहनम् ॥ ४२४
कल्पवर्तः प्रातराशः सग्धिस्तु सहभोजनम् । ग्रासो गुडेरकः पिण्डो गडोलः कवको गुडः ॥ ४२५
गण्डोलः कवलस्तृप्ते त्वाघ्रातसुहिताशिताः[6] । तृप्तिः सौहित्यमाघ्राणमथ भुक्तसमुज्झिते ॥ ४२६
फेला पिण्डोलिफेली च स्वोदरपूरके पुनः । कुक्षिंभरिरात्मंभरिरुदरंभरिरप्यथ ॥ ४२७
आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते । उदरपिशाचः सर्वान्नीनः सर्वान्नभक्षकः ॥ ४२८
शाष्कुलः पिशिताश्युन्मदिष्णुस्तून्मादसंयुतः । गृध्नुस्तु गर्धनस्तृष्णग्लिप्सुर्लुब्धोऽभिलाषुकः ॥ ४२९

१. मार्जितापि. २. पीयूषमित्यपि. ३. चिक्कणमपि. ४. विजिपिलमित्यपि. ५. जमनम्, जवनं च. ६. आघ्राणोऽपि.

लोलुपो लोलुभो लोभस्तृष्णा लिप्सा वशः स्पृहा । काङ्क्षाशंसागर्धवाञ्छाशेच्छेहातृण्मनोरथाः ॥ ४३०
कामोऽभिलाषोऽभिध्या तु परस्वेहोद्धतः पुनः । अविनीतो विनीतस्तु निभृतः प्रश्रितोऽपि च ॥ ४३१
विधेये विनयस्थः स्यादाश्रवो वचनेस्थितः । वश्यः प्रणेयो धृष्टस्तु वियातो धृष्णुधृष्णजौ ॥ ४३२
वीक्षापन्नो विलक्षोऽथाधृष्टे शालीनशारदौ । शुभंयुः शुभसंयुक्तः स्यादहंयुरहंकृतः ॥ ४३३
कामुकः कमिता कम्रोऽनुकः कामयिताभिकः । कामनः कमरोऽभीकः पश्चभद्रस्तु विप्लुतः ॥ ४३४
व्यसनी हर्षमाणस्तु प्रमना हृष्टमानसः । विकुर्वाणो विचेतास्तु दुरन्तर्विपरो मनाः ॥ ४३५
मत्ते शौण्डोत्कटक्षीबा उत्कस्तूत्सुक उन्मनाः । उत्कण्ठितोऽभिशस्ते तु वाच्यक्षारितदूषिताः ॥ ४३६
गुणैः प्रतीते त्वाहतलक्षणः कृतलक्षणः । निर्लक्षणस्तु पाण्डुरपृष्ठः संकसुकोऽस्थिरे ॥ ४३७
तूष्णींशीलस्तु तूष्णीको विवशोऽनिष्टदुष्टधीः । बद्धो निगडितो नद्धः कीलितो यन्त्रितः सितः॥४३८
संदानितः संयतश्च स्यादुद्दानं तु बन्धनम् । मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ ४३९
प्रतिक्षिप्तोऽधिक्षिप्तोऽवकृष्टनिष्कासितौ समौ । आत्तगन्धेऽभिभूतोऽपध्वस्ते न्यक्कृतधिक्कृतौ ॥ ४४०
निकृतस्तु विप्रकृतो न्यक्कारस्तु तिरस्क्रिया । परिभावो विप्रकारः परापर्यभितो भवः ॥ ४४१
अत्याकारो निकारश्च विप्रलब्धस्तु वञ्चितः । स्वप्नक्शयालुर्निद्रालुर्घूर्णिते प्रचलायितः ॥ ४४२
निद्राणः शयितः सुप्तो जागरूकस्तु जागरी । जागर्या स्याज्जागरणं जागरा जागरोऽपि च ॥४४३
विष्वगश्चति विष्वद्र्यङ्देवद्र्यङ्देवमश्चति । सह्राश्चति तु सध्र्यङ् स्यात्तिर्यङ् पुनस्तिरोऽश्चति ॥ ४४४
संशयालुः संशयिता गृहयालुर्ग्रहीतरि । पतयालुः पातुकः स्यात्समौ रोचिष्णुरोचनौ ॥ ४४५
दक्षिणार्हस्तु दक्षिण्यो दक्षिणीयोऽथ दण्डितः । दापितः साधितोऽर्च्यस्तु प्रतीक्ष्यः पूजितोऽर्हितः॥४४६
नमस्यितो नमसितोऽपचितावञ्चितोऽर्चितः । पूजार्हणासपर्यार्चा उपहारबली समौ ॥ ४४७
विक्लवो विह्वलः स्थूलः पीवा पीनश्च पीवरः । चक्षुष्यः सुभगो द्वेष्योऽक्षिगतोऽथांसलो बली ॥ ४४८
निर्दिग्धो मांसलश्चोपचितोऽथ दुर्बलः कृशः । क्षामः क्षीणस्तनुश्छातस्तलिनामांसपेलवाः ॥ ४४९
पिचण्डिलो बृहत्कुक्षिस्तुन्दितुन्दिकतुन्दिलाः । उदर्युदरिले विखविखुविग्रा अनासिके ॥ ४५०
नतनासिकेऽवनाटोऽवटीटोऽवभ्रटोऽपि च । खरणास्तु खरणसो नःक्षुद्रः क्षुद्रनासिकः ॥ ४५१
खुरणाः स्यात्खुरणस उन्नसस्तून्नतनासिकः । पङ्गुः श्रोणः खलतिस्तु खल्वाट ऐन्द्रलुप्तिकः ॥ ४५२
शिपिविष्टो बभ्रुरथ काणः कनन एकदृक् । पृश्निरल्पतनौ कुब्जे गडुलः कुकरे कुणिः ॥ ४५३
निखर्वः खट्टनः खर्वः खर्वशाखश्च वामनः । अकर्ण एडो बधिरो दुश्चर्मा तु द्विनग्नकः ॥ ४५४
षण्डश्च शिपिविष्टश्च खोडखोरौ तु खञ्जके । विकलाङ्गस्तु पोगण्ड ऊर्ध्वज्ञुरूर्ध्वजानुकः ॥ ४५५
ऊर्ध्वज्ञश्चाप्यथ प्रज्ञुप्रज्ञौ विरलजानुके । संज्ञुसंज्ञौ युतजानौ बलिनो बलिभः समौ ॥ ४५६
उदग्रदन्दन्तुरः स्यात्प्रलम्बाण्डस्तु मुष्करः । अन्धो गताक्ष उत्पश्य उन्मुखोऽधोमुखस्त्ववाङ् ॥ ४५७
मुण्डस्तु मुण्डितः केशी केशवः केशिकोऽपि च । वलिरः केकरो वृद्धनाभौ तुण्डिलतुण्डिभौ ४५८
आमयाव्यपटुर्ग्लानो ग्लास्नुर्विकृत आतुरः । व्याधितोऽभ्यमितोऽभ्यान्तो दद्रुरोगी तु दद्रुणः ॥ ४५९
पामनः कच्छुरस्तुल्यौ सातिसारोऽतिसारकी । वातकी वातरोगी स्याच्छ्लेष्मलः श्लेष्मणः कफी ४६०

१. ईहोऽपि. २. मनोगवी च. ३. कमनोऽपि. ४. तेन दुर्मनाः, अन्तर्मनाः, विमनाः. ५. आक्षारितोऽपि. ६. अनिष्टा दुष्टा च धीर्यस्य. ७. तेन पराभवः, परिभवः, अभिभवः. ८. जागरितोऽपि. ९. सांशयिकोऽपि. १०. अपचायितोऽपि. ११. खलतोऽपि. १२. न्युब्जोऽपि. १३. रोगितोऽपि. १४. 'पामरः' इत्येके.

क्लिन्ननेत्रे चिल्लचुल्लौ पिल्लोऽथार्शोयुगर्शसः । मूर्छिते मूर्तमूर्छालौ सिध्मलस्तु किलासिनि ॥ ४६१

पित्तं मायुः कफः श्लेष्मा बलाशः स्नेहभूः खटः । रोगो रुजा रुगातङ्को मान्द्यं व्याधिरपाटवम् ॥४६२

आम आमय आकल्यमुपतापो गदः समाः । क्षयः शोषो राजयक्ष्मा यक्ष्माथ क्षुत्क्षुतं क्षवः ॥४६३

कासस्तु क्षवथुः पामा खसः कच्छूर्विचर्चिका । कण्डूः कण्डूयनं खर्जूः कण्डूयाथ क्षतं व्रणः॥४६४

अरुरीर्मं क्षणतुश्च रूढव्रणपदं किणः । श्लीपदं पादवल्मीकः पादस्फोटो विपादिका ॥ ४६५

स्फोटकः पिडको गण्डः पृष्ठग्रन्थिः पुनर्गडुः । श्वित्रं स्यात्पाण्डुरं कुष्ठं केशघ्नं त्विन्द्रलुप्तकम् ॥४६६

सिध्म किलासं त्वक्पुष्पं सिध्मं कोठस्तु मैण्डलम् । गलगण्डे गण्डमाला रोहिणी तु गलाङ्कुरः ४६७

हिक्का हेक्का च हृल्लासः प्रतिश्यायस्तु पीनसः । शोथस्तु श्वयथुः शोफे दुर्नामार्शो गुदाङ्कुरः ॥ ४६८

छर्दे प्रच्छर्दिका छर्दिर्वमथुर्वमनं वमिः । गुल्मे स्यादुदरग्रन्थिरुदावर्तो गुदग्रहः ॥ ४६९

गतिर्नाडीव्रणे वृद्धिः कुरुण्डश्चाण्डवर्धने । अश्मरी स्यान्मूत्रकृच्छ्रे प्रमेहो बहुमूत्रता ॥ ४७०

अनाहस्तु निबन्धः स्याद्ग्रहणी रुक्प्रवाहिका । व्याधिप्रभेदा विद्रधिभगंदरज्वरादयः ॥ ४७१

दोषज्ञस्तु भिषग्वैद्य आयुर्वेदी चिकित्सकः । रोगहार्यगदंकारो भेषजं तन्त्रमौषधम् ॥ ४७२

भैषज्यमगदो जायुश्चिकित्सा रुक्प्रतिक्रिया । उपचर्योपचारौ च लङ्घनं त्वपतर्पणम् ॥ ४७३

जाङ्गुलिको विषभिषक्स्वास्थ्यं वार्तमनामयम् । सह्यारोग्ये पटूल्लाघवार्तकल्यास्तु नीरुजि ॥ ४७४

कुसृत्या विभवान्वेषी पार्श्वकः संधिजीवकः । सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः॥ ४७५

चपलश्चिकुरो नीली रागस्तु स्थिरसौहृदः । ततो हरिद्रारागोऽन्यः सान्द्रस्निग्धस्तु मेदुरः ॥ ४७६

गेहेनर्दी गेहेशूरः पिण्डीशूरोऽस्तिमान्धनी । स्वस्थानस्थः परद्वेषी गोष्ठश्वोऽथापदि स्थितः ॥ ४७७

आपन्नोऽथापद्विपत्तिर्विपत्स्निग्धस्तु वत्सलः । उपाध्यभ्यागारिकौ तु कुटुम्बव्यापृते नरि ॥ ४७८

जैवातृकस्तु दीर्घायुस्त्रासदायी तु शङ्कुरः । अभिपन्नः शरणार्थी कारणिकः पैरीक्षकः ॥ ४७९

समर्धुकस्तु वरदो व्रातीनाः संघजीविनः । सभ्याः सदस्याः पार्षद्याः सभास्ताराः सभासदः ॥ ४८०

सामाजिकाः सभा संसत्समाजः परिषत्सदः । पर्षत्समज्यागोष्ठ्यास्था आस्थानं समितिर्घटा ॥४८१

सांवत्सरो ज्यौतिषिको मौहूर्तिको निमित्तवित् । दैवज्ञगणकादेशिज्ञानिकार्तान्तिका अपि ॥ ४८२

विप्रश्निकेक्षणिकौ च सैद्धान्तिकस्तु तान्त्रिकः । लेखकेऽक्षरपूर्वाः स्युश्चणजीवकचञ्चवः ॥ ४८३

वार्णिको लिपिकरश्चाक्षरन्यासे लिपिर्लिविः । मषिधानं मषिकूपी मलिनाम्बु मंषिर्मसिः ॥ ४८४

कुलिकस्तु कुलश्रेष्ठी सभिको द्यूतकारकः । कितवो द्यूतकृद्धूर्तोऽक्षधूर्तश्चाक्षदेविनि ॥ ४८५

दुरोदरं कैतवं स्याद्द्यूतमक्षवती पणः । पाशकः पासकोऽक्षश्च देवनस्तत्पणो ग्लहः ॥ ४८६

अष्टापदः शारिफलं शारः शारिश्च खेलनी । परिणायस्तु शारीणां नयनं स्यात्समन्ततः ॥ ४८७

समाह्वयः प्राणिद्यूतं व्यालग्राह्याहितुण्डिकः । स्यान्मनोजवसस्ताततुल्यः शास्ता तु देशकः ॥४८८

सुकृती पुण्यवान्धन्यो मित्रयुर्मित्रवत्सलः । क्षेमंकरोऽरिष्टतातिः शिवतातिः शिवंकरः ॥ ४८९

श्रद्धालुरास्तिकः श्राद्धो नास्तिकस्तद्विपर्यये । वैरङ्गिको विरागार्हो वीतदम्भस्त्वकल्कनः ॥ ४९०

प्रणाय्योऽसंमतोन्वेष्टानुपद्यथ सहः क्षमः । शक्तः प्रभूष्णुर्भूतात्तस्त्वाविष्टः शिथिलः श्लथः ॥ ४९१

---

१. नान्त आबन्तश्च. २. विस्फोटापि. ३. मण्डलकमपि. ४. आक्षपटलिकोऽपि. ५. पारिषद्या अपि. ६. मौहूर्तोऽपि. ७. नैमित्त-नैमित्तिकावपि. ८. मनोरमायां तु 'चुञ्चुः' उकारद्वयवान्' इत्युक्तम्. ९. लिबिकरोऽपि. १०. मषी, मसी. ११. शारिफलकोऽपि.

संवाहकोऽङ्गमर्दः स्यान्नष्टबीजस्तु निष्कलः । आसीन उपविष्टः स्यादूर्ध्वे ऊर्ध्वंदमः स्थितः ॥ ४९२
अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिकदेशिकौ । प्रवासी तद्गणो हारिः पाथेयं शम्बलं समे ॥४९३
जङ्घालोऽतिजवो [1]जङ्घाकरिको जाङ्घिको जवी । जवनस्त्वरिते वेगे रयो रंहस्तरः स्यदः ॥ ४९४
जवो वाजः प्रसरश्च मन्दगामी तु मन्थरः । कामंगाम्यनुगामीनोऽत्यन्तीनोऽत्यन्तगामिनि ॥ ४९५
सहायोऽभिचरोऽनोश्च [2]जीविगामिचरप्लवाः । सेवकोऽथ सेवा भक्तिः परिचर्या प्रसादना ॥ ४९६
शुश्रूषाराधनोपास्तिवरिवस्यापर्येष्टयः । उपचारः पदातिस्तु पत्तिः पद्गः पदातिकः ॥ ४९७
पादातिकः पादचारी पदाजिपदिकावपि । सैरः पुरोऽग्रतोऽग्रेभ्यः पुरस्तो गमगामिगाः ॥ ४९८
प्रष्ठोऽथावेशिकागन्तु प्रघुणोऽभ्यागतोऽतिथिः । प्राघूर्णिके थावेशिकमातिथ्यं चातिथेय्यपि ॥ ४९९
सूर्योढस्तु स संप्राप्तो यः सूर्येऽस्तं गते तिथिः । पादार्थं पाद्यमर्घार्थमर्घ्यं वार्यथ गौरवम् ॥ ५००
अभ्युत्थानं व्यथकस्तु स्यान्मर्मस्पृगरुंतुदः । ग्रामेयके तु ग्रामीणग्राम्यौ लोको जनः प्रजाः ॥ ५०१
स्यादामुष्यायणोऽमुष्यपुत्रः प्रख्यातवप्तृकः । कुल्यः कुलीनोऽभिजातः कौलेयकमहाकुलौ ॥ ५०२
जात्यो गोत्रं तु संतानोऽन्ववायोऽभिजनः कुलम् । अन्वयो जननं वंशः स्त्री नारी वनिता वधूः ५०३
वशा सीमन्तिनी वामा वर्णिनी महिलाबला । योषा [10]योषिद्विशेषास्तु कान्ता भीरुर्नितम्बिनी ५०४
प्रमदा सुन्दरी रामा रमणी ललनाङ्गना । स्वगुणेनोपमानेन मनोज्ञादिपदेन च ॥ ५०५
विशेषिताङ्गकर्मा स्त्री यथा तरललोचना । अलसेक्षणा मृगाक्षी मत्तेभगमनापि च ॥ ५०६
वामाक्षी सुस्मितास्याः स्वं मानलीलास्मरादयः । लीला विलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम् ॥
मोट्टायितं कुट्टमितं ललितं विहृतं तथा । विभ्रमश्चेत्यलंकाराः स्त्रीणां स्वाभाविका दश ॥ ५०८
प्रागल्भ्यौदार्यमाधुर्यशोभाधीरत्वकान्तयः । दीप्तिश्चायत्नजा भावहावहेलास्त्रयोऽङ्गजाः ॥ ५०९
सा कोपना भामिनी स्याच्छेका मत्ता च वाणिनी । कन्या कनी कुमारी च गौरी तु नग्निकारजाः ॥
मध्यमा तु दृष्टरजास्तरुणी [11]युवतिश्चरी । तलुनी दिक्करी वर्या पतिंवरा स्वयंवरा ॥ ५११
सुवासिनी वधूटी स्याच्चि[12]रिण्ट्यथ सधर्मिणी । पत्नी सहचरी पाणिगृहीती गृहिणी गृहाः ॥ ५१२
दाराः क्षेत्रं वधूर्भार्या जनी जाया परिग्रहः । द्वितीयोढा कलत्रं च पुरंध्री तु कुटुम्बिनी ॥ ५१३
प्रजावती भ्रातुर्जाया सूनोः स्नुषा जनी [13]वधूः । भ्रातृवर्गस्य या जाया यातरस्ताः परस्परम् ॥ ५१४
वीरपत्नी वीरभार्या कुलस्त्री कुलबालिका । प्रेयसी दयिता कान्ता प्राणेशा वल्लभा प्रिया ॥ ५१५
हृदयेशा प्राणसमा प्रेष्ठा प्रेणयणी च सा । प्रेयस्याद्याः पुंसि पत्यौ भर्ता सेक्ता पतिर्वरः ॥ ५१६
विवोढा रमणो भोक्ता रुच्यो वरयिता धवः । जन्यास्तु तस्य सुहृदो विवाहः पाणिपीडनम् ॥५१७
पाणिग्रहणमुद्वाह [15]उपायामयमावपि । दारकर्म परिणयो जामाता दुहितुः पतिः ॥ ५१८
उपपतिस्तु जारः स्याद्भुजङ्गो गणिकापतिः । जम्पती दम्पती भार्यापती जायापती समाः ॥ ५१९
यौतकं युतयोर्देयं सुदायो हरणं च तत् । कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः ॥ ५२०
सैरंध्री यान्यवेश्मस्था स्वतन्त्रा शिल्पजीविनी । असिक्न्यन्तःपुरःप्रेष्या दूतीसंचारिके समे ॥ ५२१

---

१. जाङ्घाकरोऽपि. २. जीव्यादयोऽनोः परे ज्ञेयाः. ३. अनुगोऽपि. ४. पर्येषणापि. ५. पुरआदिभ्यः परः सरो ज्ञेयः ६. 'पुरस्' इत्यस्मात्परे गमादयो बोध्याः ७. आतिथ्यमपि. ८. अभिज्ञोऽपि. ९. महेलापि. १०. योषितापि. ११. 'युवती' इत्यपि. १२. 'चरिण्टी' इत्यपि. १३. वधूटीत्यपि. १४. प्रेमवत्यपि. १५. उपात् परौ याम-यमशब्दौ.

प्राज्ञी प्रज्ञा प्रज्ञानन्त्यां प्राज्ञा तु प्रज्ञयान्विता। स्यादाभीरी महाशूद्री जातिपुंयोगयोः समे ॥ ५२२
पुंयुज्याचार्याचार्यानी मातुलानी तु मातुली। उपाध्यायान्युपाध्यायी क्षत्रिय्यार्यी च शूद्र्यपि ॥ ५२३
स्वत आचार्या शूद्रा च क्षत्रियाक्षत्रियाण्यपि। उपाध्याय्युपाध्याया स्यादर्योर्याण्यौ पुनः समे ॥ ५२४
दिधिषूस्तु पुनर्भूर्द्विरूढास्या दिधिषूः पतिः। स तु द्विजोऽग्रेदिधिषुर्यस्य स्यात्सैव गेहिनी ॥ ५२५
ज्येष्ठेऽनूढे परिवेत्तानुजो दारपरिग्रही। तस्य ज्येष्ठः परिवित्तिर्जाया तु परिवेदिनी ॥ ५२६
वृषस्यन्ती कामुकी स्यादिच्छायुक्ता तु कामुका। कृतसापत्निकाध्यूढाधिविन्नाथ पतिव्रता ॥ ५२७
एकपत्नी सुचरित्रा साध्वी सत्यसतीत्वरी। पुंश्चली चर्षणी बन्धक्यविनीता च पांशुला ॥ ५२८
स्वैरिणी कुलटा याति या प्रियं साभिसारिका। वयस्यालिः सखी सध्रीच्यशिश्वी तु शिशुं विना ५२९
पतिवत्नी जीवत्पतिर्विश्वस्ता विधवा समे। निर्वीरा निष्पतिसुता जीवत्तोका तु जीवसूः ॥ ५३०
नश्यत्प्रसूतिका नन्दुः सश्मश्रुर्नरमालिनी। कात्यायिनी त्वर्धवृद्धा काषायवसनाधवा ॥ ५३१
श्रवणा भिक्षुकी मुण्डा पोटा तु स्त्रीनृलक्षणा। साधारणस्त्री गणिका वेश्या पण्यपणाङ्गना ॥ ५३२
भुजिष्या लञ्जिका रूपाजीवा वारवधूः पुनः। सा वारमुख्याथ चुन्दी कुट्टनी शंभली समाः ॥ ५३३
पोटा वोटा च चेटी च दासी च कुटहारिका। नग्ना तु कोटवी वृद्धा पलिक्न्यथ रजस्वला ॥ ५३४
पुष्पवत्यधिरात्रेयी स्त्रीधर्मिणी मलिन्यवी। उदक्या ऋतुमती च पुष्पहीना तु निष्कला ॥ ५३५
राका तु सरजाः कन्या स्त्रीधर्मः पुष्पमार्तवम्। रजस्तत्कालस्तु ऋतुः सुरतं मोहनं रतम् ॥ ५३६
संवेशनं संप्रयोगः संभोगश्च रहो रतिः। ग्राम्यधर्मो निधुवनं कामकेलिः पशुक्रिया ॥ ५३७
व्यवायो मैथुनं स्त्रीपुंसौ द्वंद्वं मिथुनं च तत्। अन्तर्वत्नी गुर्विणी स्याद्गर्भवत्युदरिण्यपि ॥ ५३८
आपन्नसत्त्वा गुर्वी च श्रद्धालुर्दोहदान्विता। विजाता च प्रजाता च जातापत्या प्रसूतिका ॥ ५३९
गर्भस्तु गरभो भ्रूणो दोहदलक्षणं च सः। गर्भाशयो जरायूल्वे कललोल्वे पुनः समे ॥ ५४०
दोहदं दौर्हृतं श्रद्धा लालसा सूतिमासितु। वैजननो विजननं प्रसवो नन्दनः पुनः ॥ ५४१
उद्वहोऽङ्गात्मजः सूनुस्तनयो दारकः सुतः। पुत्रे दुहितरि स्त्रीत्वे तोकापत्यप्रसूतयः ॥ ५४२
तुक्प्रजोभयोर्भ्रात्रीयो भ्रातृव्यो भ्रातुरात्मजे। स्वस्रीयो भागिनेयश्च जामेयः कुतपश्च सः ॥ ५४३
नप्ता पौत्रः पुत्रपुत्रो दौहित्रो दुहितुः सुतः। प्रतिनप्ता प्रपौत्रः स्यात्तत्पुत्रस्तु परम्परः ॥ ५४४
पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः। मातृष्वस्रीयस्तु मातृष्वसुर्मातृष्वसेयवत् ॥ ५४५
विमातृजो वैमात्रेयो द्वैमातुरो द्विमातृजः। सत्यास्तु तनये सांमातुरवद्भाद्रमातुरः ॥ ५४६
सौभागिनेयकानीनौ सुभगाकन्ययोः सुतौ। पौनर्भवपारस्त्रैणेयौ पुनर्भूपरस्त्रियोः ॥ ५४७
दास्या दासेरदासेयौ नाटेरस्तु नटीसुतः। बन्धुलो बान्धकिनेयः कौलटेरोऽसतीसुतः ॥ ५४८
स तु कौलटिनेयः स्याद्यो भिक्षुकसतीसुतः। द्वावप्येतौ कौलटेयौ क्षेत्रजो देवरादिजः ॥ ५४९
स्वजाते त्वौरसोरस्यौ मृते भर्तरि जारजः। गोलकोऽथामृते कुण्डे भ्राता तु स्यात्सहोदरः ॥ ५५०
समानोदर्यसोदर्यसगर्भसहजा अपि। सोदरश्च स तु ज्येष्ठः स्यात्पित्र्यः पूर्वजोऽग्रजः ॥ ५५१
जघन्यजे यविष्ठः स्यात्कनिष्ठोऽवरजोऽनुजः। स यवीयान्कनीयांश्च पितृव्यश्यालमातुलाः ॥ ५५२
पितुः पत्न्याश्च मातुश्च भ्रातरो देवृदेवरौ। देवा चावरजे पत्युर्जामिस्तु भगिनी स्वसा ॥ ५५३

१. अवीरापि. २. अङ्गनाशब्दस्य पण्येनाप्यन्वयः. ३. नग्निकापि. ४. कुसुममपि. ५. पशुधर्मोऽपि. ६. ज-शब्दस्याङ्गेनाप्यन्वयः. ७. नाटेयोऽपि. ८. अग्रिमोऽपि.

ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनीत्यपि । पत्न्यास्तु भगिनी ज्येष्ठा ज्येष्ठश्वश्रूः कुलीचसा ५५४
कनिष्ठा श्यालिका हाली यवग्रणीकेलिकुञ्चिका । केलिर्द्रवः परीहासः क्रीडा लीला च नर्म च ५५५
देवनं कूर्दनं खेला ललनं वर्करोऽपि च । वप्ता च जनकस्तातो बीजी जनयिता पिता ॥ ५५६
पितामहस्तस्य पिता तत्पिता प्रपितामहः । मातुर्मातामहाद्येवं माताम्बा जननी प्रसूः ॥ ५५७
सवित्री जनयित्री च कुमिला तु बहुप्रसूः । धात्री तु स्यादुपमाता वीरमाता तु वीरसूः ॥ ५५८
श्वश्रूर्माता पतिपत्न्योः श्वशुरस्तु तयोः पिता । पितरस्तु पितुर्वंश्या मातुर्मातामहा कुले ॥ ५५९
पितरौ मातापितरौ मातरपितरौ पिता च माता च । श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ५६०
भ्राता च भगिनी चापि भ्रातरावथ बान्धवः । स्वो ज्ञातिः स्वजनो बन्धुः सगोत्रश्च निजः पुनः ॥ ५६१
आत्मीयः स्वः स्वकीयश्च सपिण्डास्तु सनाभयः । तृतीयाप्रकृतिः पण्डः षण्ढः क्लीबो नपुंसकम् ५६२

इन्द्रियायतनमङ्गविग्रहौ क्षेत्रगात्रतनुभूघनास्तनूः ।
मूर्तिमत्करणकायमूर्तयो वेरसंहननदेहसंचराः ॥ ५६३

घनो बन्धः पुरं पिण्डो वपुः पुद्गलवर्ष्मणी । कलेवरं शरीरेऽस्मिन्नजीवे कुणपं शवः ॥ ५६४
मृतकं रुण्डकबन्धौ त्वपशीर्षे क्रियायुजि । वयांसि तु दशाः प्रायाः सामुद्रं देहलक्षणम् ॥ ५६५
एकदेशे प्रतीकाङ्गावयवापघना अपि । उत्तमाङ्गं शिरो मूर्धा मौलिर्मस्तकमुण्डके ॥ ५६६
वराङ्गं करणत्राणं शीर्षं मस्तिकमित्यपि । तज्जाः केशास्तीर्थवाकाश्चिकुराः कुन्तलाः कचाः ॥ ५६७
वालाः स्युस्तत्पराः पाशो रचना भार उच्चयः । हस्तः पक्षः कलापश्च केशभूयस्त्ववाचकाः ॥ ५६८
अलकस्तु कर्कराल: खंखरश्चूर्णकुन्तलः । स तु भाले भ्रमरकः कुरुलो भ्रमरालकः ॥ ५६९
धम्मिल्लः संयताः केशाः केशवेशे कबर्यथा । वेणिः प्रवेणिः शीर्षण्यशिरस्यौ विशदे कचे ॥ ५७०
केशेषु वर्त्म सीमन्तः पलितं पाण्डुरः कचः । चूडा केशी केशपाशी शिखा शिखण्डिका समाः ५७१
सा बालानां काकपक्षः शिखण्डकशिखाण्डकौ । तुण्डमास्यं मुखं वक्त्रं लपनं वदनानने ॥ ५७२
भाले गोध्यलिकालीकललाटानि श्रुतौ श्रवः । शब्दाधिष्ठानपैक्षूषमहानाद[3]ध्वनिग्रहाः ॥ ५७३
कर्णः श्रोत्रं श्रवणं च वेष्टनं कर्णशष्कुली । पालिस्तु कर्णलतिकाशङ्खो भालश्रवोऽन्तरे ॥ ५७४
चक्षुरक्षीक्षणं नेत्रं नयनं दृष्टिरम्बकम् । लोचनं दर्शनं दृक्च तत्तारा तु कनीनिका ॥ ५७५
वामं तु नयनं सौम्यं भानवीयं तु दक्षिणम् । असौम्येऽक्षण्यनक्षि स्यादीक्षणं तु निशामनम् ॥ ५७६
निभालनं निशमनं निध्यानमवलोकनम् । दर्शनं द्योतनं निर्वर्णनं चाथार्धवीक्षणम् ॥ ५७७
अपाङ्गदर्शनं काक्षः कटाक्षोऽक्षिविकूणितम् । स्यादुन्मीलनमुन्मेषो निमेषस्तु निमीलनम् ॥ ५७८
अक्ष्णोर्वाह्यान्तावपाङ्गौ भ्रूरूर्ध्वे रोमपद्धतिः । सकोपभ्रूविकारे स्याद्भ्रुकुटिर्भ्रूभृपरा कुटिः ॥ ५७९
कूर्चं कूर्पं भ्रुवोर्मध्ये पक्ष्म स्यान्नेत्ररोमणि । गन्धज्ञा नासिका नासा घ्राणं घोणा विकूणिका ॥ ५८०
नक्रं नर्कुटकं शिञ्चिन्योष्ठोऽधरो रदच्छदः । दन्तवस्त्रं च तत्प्रान्तौ सृक्कणी असिकं त्वधः ॥ ५८१
असिकाधस्तु चिबुकं स्याद्गल्लः सृक्कणः परः । गल्लात्परः कपोलश्च परो गण्डः कपोलतः ॥ ५८२
ततो हनुः श्मश्रु कूर्चमास्यलोम च मासुरी । दाँढिका दंष्ट्रिका दाढा दंष्ट्रा जम्भो द्विजा रदाः ५८३
रदना दशना दन्ता दंशखादनमल्लकाः । राजदन्तौ तु मध्यस्थावुपरिश्रेणिकौ क्वचित् ॥ ५८४
रसज्ञा रसना जिह्वा लोला तालु तु काकुदम् । सुधास्रवा घण्टिकाचलम्बिका गलशुण्डिका ॥ ५८५

१. पण्डुरपि. २. चिहुराः. ३. शब्दग्रहोपि. ४. विलोचनमपि. ५. तारकापि. ६. तेन 'भ्रकुटिः' इत्यादयः.
७. द्राढिकापि.

४

28

कंधरा धमनिर्ग्रीवा शिरोधिश्च शिरोधरा । सा त्रिरेखा कम्बुग्रीवावटुर्घाटा कृकाटिका ॥ ५८६
कृकस्तु कंधरामध्यं कृकपार्श्वौ तु वीतनौ । ग्रीवाधमन्यौ ग्राम्रीले पश्चान्मन्ये कलम्बिके ॥ ५८७
गलो निगरणः कण्ठः काकलकस्तु तन्मणिः । अंसो भुजशिरः स्कन्धो जत्रु संधिरुरोंऽसगः ॥ ५८८
भुजो बाहुः प्रवेष्टो दोर्बाहाथ भुजकोटरः । दोर्मूलं खण्डिकः कक्षा पार्श्वं स्यादेतयोरधः ॥ ५८९
कफोणिस्तु भुजामध्यं कफणिः कूर्परश्च सः । अधस्तस्या मणिबन्धात्प्रकोष्ठः स्यात्कलाचिका ॥ ५९०
प्रगण्डः कूर्परांसान्तः पञ्चशाखः शयःशमः । हस्तः पाणिः करस्यादौ मणिबन्धो मणिश्च सः ॥ ५९१
करभोऽस्मादाकनिष्ठं करशाखाङ्गुली समे । अङ्गुरिश्चाङ्गुलोऽङ्गुष्ठस्तर्जनी तु प्रदेशिनी ॥ ५९२
ज्येष्ठा तु मध्यमा मध्या सावित्री स्यादनामिका । कनीनिका तु कनिष्ठावहस्तो हस्तपृष्ठतः ॥ ५९३
कामाङ्कुशो महाराजः करजो नखरो नखः । करशूकोभुजाकण्टः पुनर्भवपुनर्नवौ ॥ ५९४
प्रदेशिन्यादिभिः सार्धमङ्गुष्ठे वितते सति । प्रादेशतालगोकर्णवितस्तयो यथाक्रमम् ॥ ५९५
प्रसारिताङ्गुलौ पाणौ चपेटः प्रतलस्तलः । प्रहस्तस्तालिकस्तालः सिंहतालस्तु तौ युतौ ॥ ५९६
संपिण्डिताङ्गुलिः पाणिर्मुष्टिर्मुस्तुर्मुचुट्यपि । संग्राहश्चार्धमुष्टिः स्यात्खटकः कुब्जितः पुनः ॥ ५९७
पाणिः प्रसृतः प्रसृतिस्तौ युतावञ्जलिः पुनः । प्रसृते तु जलाधारे गण्डूषश्चुलुकश्चलुः ॥ ५९८
हस्तः प्रामाणिको मध्येमध्यमाङ्गुलिकूर्परम् । बद्धमुष्टिरसौ रत्निररत्निर्निष्कनिष्ठिकः ॥ ५९९
व्यामव्यायामन्यग्रोधास्तिर्यग्बाहू प्रसारितौ । ऊर्ध्वीकृतभुजापाणिर्नरमानं तु पौरुषम् ॥ ६००
दघ्नद्वयसमात्रास्तु जान्वादेस्तत्तदुन्मिते । रीढकः पृष्ठवंशः स्यात्पृष्ठं तु चरमं तनोः ॥ ६०१
पूर्वभाग उपस्थोऽङ्कः क्रोड उत्सङ्ग इत्यपि । क्रोडोरो हृदयस्थानं वक्षो वत्सो भुजान्तरम् ॥ ६०२
स्तनान्तरं हृद्धृदयं स्तनौ कुचौ पयोधरौ । उरोजौ च चूचुकं तु स्तनाग्रन्तशिखामुखाः ॥ ६०३
तुन्दं तुन्दिगर्भकुक्षी पिचण्डो जठरोदरे । कालखण्डं कालखञ्जं कालेयं कालकं यकृत् ॥ ६०४
दक्षिणे तिलकं क्लोम वामे तु रक्तफेनजः । पुष्पसः स्यादथ प्लीहा गुल्मोऽन्त्रं तु पुरीतति ॥ ६०५
रोमावली रोमलता नाभिः स्यात्तुन्दकूपिका । नाभेरधो मूत्रपुटं वस्तिर्मूत्राशयोऽपि च ॥ ६०६
मध्योऽवलग्नं विलग्नं मध्यमोऽथ कटः कटिः । श्रोणिः कलत्रं कटीरंकाञ्चीपदं ककुद्मती ॥ ६०७
नितम्बारोहौ स्त्रीकट्याः पश्चाज्जघनमग्रतः । त्रिकं वंशाधस्तत्पार्श्वकूपकौ तु कुकुन्दरे ॥ ६०८
पूतौ स्फिजौ कटिप्रोथौ वराङ्गं तु च्युतिर्बुलिः । भगोऽपत्यपथो योनिः स्मरान्मन्दिरकूपिके ॥ ६०९
स्त्रीचिह्नमथ पुंश्चिह्नं मेहनं शेपशेपसी । शिश्नं मेढ्रः कामलता लिङ्गं च द्वयमप्यदः ॥ ६१०
गुह्यप्रजननोपस्था गुह्यमध्यं गुलो मणिः । सीवनी तदधःसूत्रं स्यादण्डं पेलमण्डकः ॥ ६११
मुष्कोऽण्डकोषो वृषणोऽपानं पायुर्गुदं च्युतिः । अधोमर्म शकृद्द्वारं त्रिबलीकवुली अपि ॥ ६१२
विटपं तु महावीज्यमन्तरा मुष्कवङ्क्षणम् । ऊरुसंधिर्वङ्क्षणः स्यात्सक्थ्यूरुस्तस्य पर्व तु ॥ ६१३
जानुर्नलकीलोऽष्ठीवान्पश्चाद्भागोऽस्य मन्दिरः । कपोली त्वग्रिमो जङ्घा प्रसृता नलकिन्यपि ॥ ६१४
प्रतिजङ्घा त्वग्रजङ्घा पिण्डिका तु पिचण्डिका । गुल्फस्तु चरणग्रन्थिर्घुटिको घुण्टको घुटः ॥ ६१५
चरणः क्रमणः पादः पदंह्रिश्चलनः क्रमः । पादमूलं गोहिरं स्यात्पार्ष्णिस्तु घुटयोरधः ॥ ६१६
पादाग्रं प्रपदं क्षिप्रं त्वङ्गुष्ठाङ्गुलिमध्यतः । कूर्चं क्षिप्रस्योपर्यङ्घ्रिस्कन्धः कूर्चशिरः समे ॥ ६१७

---

१. कूर्परोऽपि. २. संहताल इत्यपि. ३. चलुकोऽपि. ४. यौगिकत्वादुरसिजवक्षोजादयः. ५. स्तनशब्दस्य वृन्तादिभिरन्वयः. ६. तेन स्मरमन्दिरं, स्मरकूपिका. ७. आण्डोऽपि. ८. पेलकोऽपि. ९. अङ्घ्रिरपि.

तलहृदयं तु तलं मध्ये पादतलस्य तत् । तिलकः कालकः पिप्लुर्जडुलस्तिलकालकः ॥ ६१८
रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः । सप्तैव दश वैकेषां रोमत्वक्स्नायुभिः सह ॥ ६१९
रस आहारतेजोऽग्निसंभवः षड्रसासवः । आत्रेयोऽसृक्करो धातुर्घनमूलमहापरः ॥ ६२०
रक्तं रुधिरमाग्नेयं विस्रं तेजोभवं रसात् । शोणितं लोहितमसृक्क्षवासिष्ठं प्राणदासुरे ॥ ६२१
क्षतजं मांसकार्यस्रं मांसं पललजाङ्गले । रक्तात्तेजोभवे क्रव्यं काश्यपं तरसामिषे ॥ ६२२
मेदस्कृत्पिशितं कीनं पलं पेश्यस्तु तल्लताः । वुक्का हृद्दृदयं वृक्का सुरसं च तदग्रिमम् ॥ ६२३
शुष्कं वल्लूरमुत्तप्तं पूयदूष्ये पुनः समे । मेदोऽस्थिकृद्वपा मांसात्तेजोजे गौतमं वसा ॥ ६२४
गोदं तु मस्तकस्नेहो मस्तिष्को मस्तुलुङ्गकः । अस्थि कुल्यं भारद्वाजं मेदस्तेजश्च मज्जकृत् ॥ ६२५
मांसपित्तं श्वदयितं कर्करो देहधारकम् । मेदोजं कीकसं सारं करोटिः शिरसोऽस्थनि ॥ ६२६
कपालकर्परौ तुल्यौ पृष्ठस्यास्थ्नि कशेरुका । शाखास्थनि स्यान्नलकं पार्श्वास्थ्नि वङ्क्रिपर्शुके ॥ ६२७
शरीरास्थि करङ्कः स्यात्कङ्कालमस्थिपञ्जरः । मज्जा तु कौशिकः शुक्रकरोऽस्थ्नः स्नेहसंभवौ ॥ ६२८
शुक्रं रेतो बलं वीर्यं बीजं मज्जसमुद्भवम् । आनन्दप्रभवं पुंस्त्वमिन्द्रियं किट्टवर्जितम् ॥ ६२९
पौरुषं प्रधानधातुर्लोम रोम तनूरुहम् । त्वक्छविश्छादनी कृत्तिश्चर्मोजिनमसृग्धरा ॥ ६३०
वस्नसा तु स्नसास्नायुर्नाड्यो धमनयः शिराः । कण्डरा तु महास्नायुर्मलं किट्टं तदक्षिजम् ॥ ६३१
दूषीका दूषिका जैह्वं कुलुकं पिप्पिका पुनः । दन्त्यं कार्णं तु पिञ्जूषः शिङ्घाणो घ्राणसंभवम् ॥ ६३२
सृणीका स्यन्दिनी लालास्यासवः कफकूर्चिका । मूत्रं बस्तिमलं मेहः प्रस्रावो नृजलं स्रवः ॥ ६३३
पुष्पिका तु लिङ्गमलंविड्विष्ठावस्करः शकृत् । गूथं पुरीषं शमलोच्चारौ वर्चस्कवर्चसी ॥ ६३४
वेषो नेपथ्यमाकल्पः परिकर्माङ्गसंस्क्रिया । उद्वर्तनमुत्सादनमङ्गरागो विलेपनम् ॥ ६३५
चर्चिक्यं समालभनं चर्चा स्यान्मण्डनं पुनः । प्रसाधनं प्रतिकर्म मार्ष्टिः स्यान्मार्जना मृजा ॥ ६३६
वासयोगस्तु चूर्णं स्यात्पिष्टातः पटवासकः । गन्धमाल्यादिना यस्तु संस्कारः सोऽधिवासनम् ॥ ६३७
निर्वेश उपभोगः स्यात्स्नानं सवनमाप्लवः । कर्पूरागुरुकक्कोलकस्तूरीचन्दनद्रवैः ॥ ६३८
स्याद्यक्षकर्दमो मिश्रैर्वर्तिर्गात्रानुलेपनी । चन्दनागुरुकस्तूरीकुङ्कुमैस्तु चतुःसमम् ॥ ६३९
अगुर्वगरु राजार्हं लोहं कृमिजवंशिके । अनार्यजं जोङ्गिकं च मङ्गल्यामल्लिगन्धि यत् ॥ ६४०
कालागुरुः कालतुण्डः श्रीखण्डो रोहणद्रुमः । गन्धसारो मलयजश्चन्दने हरिचन्दने ॥ ६४१
तैलपर्णिकगोशीर्षौ पत्राङ्गं रक्तचन्दनम् । कुचन्दनं ताम्रसारं रञ्जनं तिलपर्णिका ॥ ६४२
जातिकोशं जातिफलं कर्पूरो हिमवालुका । घनसारः सिताभ्रश्च चन्द्रोऽथ मृगनाभिजा ॥ ६४३
मृगनाभिर्मृगमदः कस्तूरी गन्धधूल्यपि । कश्मीरजन्म घुसृणं वर्णं लोहितचन्दनम् ॥ ६४४
बाल्हीकं कुङ्कुमं वह्निशिखं कालेयजागुडे । संकोचपिशुनं रक्तं धीरं पीतनदीपने ॥ ६४५
लवङ्गं देवकुसुमं श्रीसंज्ञमथ कोलकम् । कक्कोलकं कोशफलं कोलीयकं तु जापकम् ॥ ६४६
यक्षधूपो बहुरूपः सालवेष्टोऽग्निवल्लभः । सर्जमणिः सर्जरसो रालः सर्वरसोऽपि च ॥ ६४७

---

१. तेन घनधातुः, मूलधातुः, महाधातुः. २. तेन रसतेजः, रसभवम्. ३. तेन रक्ततेजः, रक्तभवम्. ४. तेन मांसतेजः, मांसजम्. ५. कशेरुका. ६. तेन अस्थिस्नेहः, अस्थिसंभवः. ७. नाडिरपि. ८. अशुचि च. ९. आम्नावोऽपि. १०. वाह्लिकमपि. ११. संकोचं पिशुनम् इति नामद्वयमपि. १२. कालानुसार्यमपि.

धूपो वृक्षात्कृत्रिमाच्च तुरुष्कः सिल्हपिण्डकौ । पायसस्तु वृक्षधूपः श्रीवासः सरलद्रवः ॥ ६४८
स्थानात्स्थानान्तरं गच्छन्धूपो गन्धपिशाचिका । स्थासकस्तु हस्तबिम्बमलंकारस्तु भूषणम् ॥ ६४९
परिष्कराभरणे च चूडामणिः शिरोमणिः । नायकस्तरलो हारान्तर्मणिर्मुकुटं पुनः ॥ ६५०
मौलिः किरीटकोटीरमुष्णीषं पुष्पदाम तु । मूर्ध्नि माल्यं माला स्रक्स्वगर्भकः केशमध्यगम् ॥ ६५१
प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् । तिर्यग्वक्षसि वैकक्षं प्रालम्बमृजुलम्बि यत् ॥ ६५२
संदर्भो रचना गुम्फः श्रन्थनं ग्रन्थनं समाः । तिलके तमालपत्त्रचित्रपुण्ड्रविशेषकाः ॥ ६५३
आपीडशेखरोत्तंसाः वतंसाः शिरसः स्रजि । उत्तरौ कर्णपूरेऽपि पत्त्रलेखा तु पत्त्रतः ॥ ६५४
भङ्गिवल्लीलताङ्गुल्यः पत्त्रपाश्या ललाटिका । वालपाश्या पारितथ्याकर्णिका कर्णभूषणम् ॥ ६५५
ताडङ्कस्तु ताडपत्त्रं कुण्डलं कर्णवेष्टकः । उत्क्षिप्तिका तु कर्णान्दुर्बालीका कर्णपृष्ठगा ॥ ६५६
ग्रैवेयकं कण्ठभूषा लम्बमाना ललम्बिका । प्रालम्बिका कृता हेम्नोरःसूत्रिका तु मौक्तिकैः ॥ ६५७
हारो मुक्तातःप्रालम्बस्रक्कलापावलीलता । देवच्छन्दः शतं साष्टं त्विन्द्रच्छन्दःसहस्रकम् ॥ ६५८
तदर्धविजयच्छन्दो हारस्त्वष्टोत्तरं शतम् । अर्धं रश्मिकलापोऽस्य द्वादश त्वर्धमाणवः ॥ ६५९
द्विर्द्वादशार्धगुच्छः स्यात्पञ्च हारफलं लताः । अर्धहारश्चतुःषष्टिर्गुच्छमाणवमन्दराः ॥ ६६०
अपि गोस्तनगोपुच्छावर्धमर्धं यथोत्तरम् । इति हारायष्टिभेदादेकावल्येकयष्टिका ॥ ६६१
कण्ठिकाप्यथ नक्षत्रमाला तत्संख्यमौक्तिकैः । केयूरमङ्गदं बाहुभूषाथ करभूषणम् ॥ ६६२
कटको वलयं पारिहार्यावापौ तु कङ्कणम् । हस्तसूत्रं प्रतिसर ऊर्मिका त्वङ्गुलीयकम् ॥ ६६३
साक्षराङ्गुलिमुद्रा सा कटिसूत्रं तु मेखला । कलापो रशना सा रसनं काञ्ची च सप्तकी ॥ ६६४
सा शृङ्खलं पुंस्कटीस्था किंकिणी क्षुद्रघण्टिका । नूपुरं तु तुलाकोटिः पादतः कटकाङ्गदे ॥ ६६५
मञ्जीरं हंसकं शिञ्जिन्यंशुकं वस्त्रमम्बरम् । सिचयो वसनं चीराच्छादौ सिक्चेलवाससी ॥ ६६६
पटः प्रोतोऽञ्चलोऽस्यान्तो वर्तिर्वस्तिश्च तद्दशाः । पत्त्रोर्णं धौतकौशेयमुष्णीषो मूर्धवेष्टनम् ॥ ६६७
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् । त्वक्फलकृमिरोमभ्यः संभवत्वाच्चतुर्विधम् ॥ ६६८
क्षौमकार्पासकौशेयराङ्कवादिविभेदतः । क्षौमं दुकूलं दुगूलं स्यात्कार्पासं तु बादरम् ॥ ६६९
कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् । कम्बलः पुनरूर्णायुराविकौरभ्ररल्लकाः ॥ ६७०
नवं वासोऽनाहतं स्यात्तन्त्रकं निष्प्रवाणि च । प्रच्छादनं प्रावरणं संव्यानं चोत्तरीयकम् ॥ ६७१
वैकक्षे प्रावारोत्तरासङ्गौ बृहतिकापि च । वराशिः स्थूलशाटः स्यात्परिधानं त्वधोंशुकम् ॥ ६७२
अन्तरीयं निवसनमुपसंव्यानमित्यपि । तद्ग्रन्थिरुच्चयो नीवीवरस्त्र्यर्धोरुकांशुकम् ॥ ६७३
चण्डातकं चलनकं चलनी त्वितरस्त्रियाः । चोलः कञ्चुलिका कूर्पासकोङ्गिका च कञ्चुके ॥ ६७४
शाटी चोट्यथ नीशारो हिमवातापहांशुके । कच्छा कच्छाटिका कक्षा परिधानापराञ्चले ॥ ६७५
कक्षापटस्तु कौपीनं समौ नक्तककर्पटौ । निचोलः प्रच्छदपटो निचुलश्चोत्तरच्छदे ॥ ६७६
उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते । वस्त्रमाल्यादि तत्पूर्णपात्रं पूर्णानकं च तत् ॥ ६७७
तत्तु स्यादाप्रपदीनं व्याप्नोत्याप्रपदं हि यत् । चीवरं भिक्षुसंघाटी जीर्णवस्त्रं पटच्चरम् ॥ ६७८

---

१. तेन वृक्षधूपः, कृत्रिमधूपः. २. यावनोऽपि. ३. चूडारत्नशिरोरत्ने अपि. ४. ललाम नान्तमदन्तं च. ५. चित्रकमपि. ६. उत्तंसावतंसौ. ७. तेनत्पत्त्रभङ्गिः, पत्त्रवल्लिः, पत्त्राङ्गुलिः; एवं पत्त्रवल्लरी-पत्त्रमञ्जरीत्यादयोऽपि. ८. मुक्ताशब्दात्परं प्रालम्बादिलतान्ताः. ९. परिहार्यमपि. १०. कङ्कणीत्येके. ११. पादकटकम्, पादाङ्गदम्.

शाणी गोणी छिद्रवस्त्रे जलार्द्रा क्लिन्नवाससि । पर्यस्तिकापरिकरः पर्यङ्कश्चावसक्थिका ॥ ६७९
कुथे वर्णपरिस्तोमप्रवेणीनवतास्तराः । अपटी काण्डपटः स्यात्प्रतिसीरा जवन्यपि ॥ ६८०
तिरस्करिण्यथोल्लोचो वितानं कदकोऽपि च । चन्द्रोदये स्थूलं दूष्ये केणिका पटकुट्यपि ॥ ६८१
गुणलयनिकायां स्यात्संस्तरस्रस्तरौ समौ । तल्पं शय्या शयनीयं शयनं तलिनं च तत् ॥ ६८२
मञ्चमञ्चकपर्यङ्कपल्यङ्काः खट्वया समाः । उच्छीर्षकमुपाद्धानवर्हौपाले पतद्ग्रहः ॥ ६८३
प्रतिग्राहे मुकुरात्मदर्शादर्शास्तु दर्पणे । स्याद्वेत्रासनमासन्दी विष्टरः पीठमासनम् ॥ ६८४
कसिपुर्भोजनाच्छादावौशिरं शयनाशने । लाक्षा द्रुमामयो राक्षा रङ्गमाता पलंकषा ॥ ६८५
जतु क्षतघ्ना कृमिजा यावालक्तौ तु तद्रसः । अञ्जनं कज्जलं दीपः प्रदीपः कज्जलध्वजः ॥ ६८६
स्नेहप्रियो गृहमणिर्दशाकर्षो दशेन्धनः । व्यजनं तालवृन्तं तद्धवित्रं मृगचर्मणा ॥ ६८७
आलावर्तं तु वस्त्रस्य कङ्कतः केशमार्जनम् । प्रसाधनश्चाथ बालक्रीडनके गुडो गिरिः ॥ ६८८
गिरियको गिरिगुडः समौ कन्दुकगेन्दुकौ । राजा राट्पृथिवीशक्रमध्यलोकेशभूभृतः ॥ ६८९
महीक्षित्पार्थिवो मूर्धाभिषिक्तो भूप्रजानृपः । मध्यमो मण्डलाधीशः स सम्राट् शास्ति यो नृपान् ६९०
यः सर्वमण्डलस्येशो राजसूयं च योऽजयत् । चक्रवर्ती सार्वभौमस्ते तु द्वादश भारते ॥ ६९१
आर्षभिर्भरतस्तत्र सगरस्तु सुमित्रभूः । मघवा वैजयिरथाश्वसेननृपनन्दनः ॥ ६९२
सनत्कुमारोऽथ शान्तिः कुन्थुररो जिना अपि । सुभूमस्तु कार्तवीर्यः पद्मः पद्मोत्तरात्मजः ॥ ६९३
हरिषेणो हरिसुतो जयो विजयनन्दनः । ब्रह्मसूनुर्ब्रह्मदत्तः सर्वेऽपीक्ष्वाकुवंशजाः ॥ ६९४
प्रजापत्यस्त्रिपृष्ठोऽथ द्विपृष्ठो ब्रह्मसंभवः । स्वयंभू रुद्रतनयः सोमभूः पुरुषोत्तमः ॥ ६९५
शैवः पुरुषसिंहोऽथ महाशिरःसमुद्भवः । स्यात्पुरुषपुण्डरीको दत्तोऽग्निसिंहनन्दनः ॥ ६९६
नारायणो दाशरथिः कृष्णस्तु वसुदेवभूः । वासुदेवा अमी कृष्णा नव शुक्ला बलास्त्वमी ॥ ६९७
अचलो विजयो भद्रः सुप्रभश्च सुदर्शनः । आनन्दो नन्दनः पद्मो रामो विष्णुद्विषस्त्वमी ॥ ६९८
अश्वग्रीवस्तारकश्च मेरको मधुरेव च । निशुम्भबलिप्रल्हादलङ्केशमगधेश्वराः ॥ ६९९
जिनैः सह त्रिषष्टिः स्युः शलाकापुरुषा अमी । आदिराजः पृथुर्वैन्यो मांधाता युवनाश्वजः ॥ ७००
धुन्धुमारः कुवलाश्वो हरिश्चन्द्रस्त्रिशङ्कुजः । पुरूरवा बौध ऐल उर्वशीरमणश्च सः ॥ ७०१
दौष्यन्तिर्भरतः सर्वदमः शकुन्तलात्मजः । हैहयस्तु कार्तवीर्यो दोःसहस्रभृदर्जुनः ॥ ७०२
कौशल्यानन्दनो दाशरथी रामोऽस्य तु प्रिया । वैदेही मैथिली सीता जानकी धरणीसुता ॥ ७०३
रामपुत्रौ कुशलवावेकयोक्त्या कुशीलवौ । सौमित्रिर्लक्ष्मणो वाली वालिरिन्द्रसुतश्च सः ॥ ७०४
आदित्यसूनुः सुग्रीवो हनुमान्वज्रकङ्कटः । मारुतिः केसरिसुत आञ्जनेयोऽर्जुनध्वजः ॥ ७०५
पौलस्त्यो रावणो रक्षो लङ्केशो दशकंधरः । रावणिः शक्रजिन्मेघनादो मन्दोदरीसुतः ॥ ७०६
अजातशत्रुः शल्यारिर्धर्मपुत्रो युधिष्ठिरः । कङ्कोऽजमीढो भीमस्तु मरुत्पुत्रो वृकोदरः ॥ ७०७

१. पल्यङ्कोऽपि. २. यमनीत्यपि. ३. प्रस्तरोऽपि. ४. तेन उपधानम्, उपबर्हः. ५. प्रतिग्रहोऽपि. ६. पतद्ग्राहोऽपि. ७. गिरिकोऽपि. ८. गिरीयकोऽपि. ९. गेण्डुकोऽपि. १०. मूर्धावसिक्तोऽपि. ११. 'प'शब्दस्य 'भू'प्रभृतिनान्वयः; यौगिकत्वात् भूपालः, लोकपालः, नरपालः, इत्यादयः. १२. सर्वदमनोऽपि. १३. सुग्रीवाग्रजोऽपि. १४. हनूमानपि. १५. 'ईश'शब्दस्य रक्षसाप्यन्वयः; यौगिकत्वात् राक्षसेशः, लङ्कापतिः. १६. दशास्य-दशशिरो-दशकण्ठा अपि.

किर्मीरकीचकबकहिडम्बानां निसूदनः । अर्जुनः फाल्गुनः पार्थः सव्यसाची धनंजयः ॥ ७०८
राधावेधी किरिटयैन्द्रिर्जिष्णुः श्वेतहयो नरः । बृहन्नलो गुडाकेशः सुभद्रेशः कपिध्वजः ॥ ७०९
बीभत्सः कर्णजित्तस्य गाण्डीवं गाण्डिवं धनुः । पाञ्चाली द्रौपदी कृष्णा सैरंध्री नित्ययौवना ॥ ७१०
वेदिजा याज्ञसेनी च कर्णश्चम्पाधिपोऽङ्गराट् । राधासुतोऽर्कतनयः कालपृष्ठं तु तद्धनुः ॥ ७११
श्रेणिकस्तु भंभासारो हालः स्यात्सातवाहनः । कुमारपालश्चौलुक्यो राजर्षिः परमार्हतः ॥ ७१२
मृतस्वमोक्ता धर्मात्मा मारिव्यसनवारकः । राजबीजी राजवंश्यो बीजवंश्यौ तु वंशजे ॥ ७१३
स्वाम्यमात्यः सुहृत्कोशो राष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ ७१४
तत्रं स्वराष्ट्रचिन्ता स्यादावापस्त्वरिचिन्तनम् । परिस्पन्दः परिकरः परिवारः परिग्रहः ॥ ७१५
परिच्छदः परिबर्हस्तत्रोपकरणे अपि । राजशय्या महाशय्या भद्रासनं नृपासनम् ॥ ७१६
सिंहासनं तु तद्धैमं छत्रमातपवारणम् । चामरं बालव्यजनं रोमगुच्छः प्रकीर्णकम् ॥ ७१७
स्थगी ताम्बूलकरङ्को भृङ्गारः कनकालुका । भद्रकुम्भः पूर्णकुम्भः पादपीठं पदासनम् ॥ ७१८
अमात्यः सचिवो मन्त्री धीसखः सामवायिकः । नियोगी कर्मसचिव आयुक्तो व्यापृतश्च सः ॥ ७१९
द्रष्टा तु व्यवहाराणां प्राड्विवाकोऽक्षदर्शकः । महामात्रः प्रधानानि पुरोधास्तु पुरोहितः ॥ ७२०
सौवस्तिकोऽथ द्वारस्थः क्षत्ता स्याद्द्वारपालकः । दौवारिकः प्रतीहारो वेत्र्युत्सारकदण्डिनः ॥ ७२१
रक्षिवर्गेऽनीकस्थः स्यादध्यक्षाधिकृतौ समौ । पौरोगवः सूदाध्यक्षः सूदस्त्वौदनिको गुणः ॥ ७२२
भक्तकारः सूपकारः सूपारालिकबल्लवाः । भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः ॥ ७२३
स्थानाध्यक्षः स्थानिकः स्याच्छुल्काध्यक्षस्तु शौल्किकः । शुल्कस्तु घट्टादिदेयं धर्माध्यक्षस्तु धार्मिकः ७२४
धर्माधिकरणी चाथ हट्टाध्यक्षोऽधिकर्मिकः । चतुरङ्गबलाध्यक्षः सेनानीर्दण्डनायकः ॥ ७२५
स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु । स्यातामन्तःपुराध्यक्षेऽन्तर्वंशिकावरोधिकौ ॥ ७२६
शुद्धान्तः स्यादन्तःपुरमवरोधोऽवरोधनम् । सौविदल्ला कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ७२७
षण्ढे वर्षवरः शत्रौ प्रतिपक्षः परो रिपुः । शात्रवः प्रत्यवस्थाता प्रत्यनीकोभियात्यरी ॥ ७२८

दस्युः सपत्नोऽसहनो विपक्षो द्वेषी द्विषन्वैर्यहितो जिघांसुः ।
दुर्हृत्परेः पन्थकपन्थिनौ द्विट्प्रत्यर्थ्यमित्रावभिमात्यराती ॥ ७२९

वैरं विरोधो विद्वेषो वयस्यः सवयाः सुहृत् । स्निग्धः सहचरो मित्रं सखा सख्यं तु सौहृदम् ॥ ७३०
सौहार्दं साप्तपदीनमैत्र्यजर्याणि संगतम् । आनन्दनं त्वाप्रच्छनं स्यात्सभाजनमित्यपि ॥ ७३१
विषयानन्तरो राजा शत्रुर्मित्रमतः परम् । उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ॥ ७३२
अनुवृत्तिस्त्वनुरोधो हेरिको गूढपूरुषः । प्रणिधिर्यथार्हवर्णोऽवसर्पो मन्त्रविच्चरः ॥ ७३३
वार्तायनः स्पशश्चार आप्तप्रत्ययितौ समौ । सन्निणि स्याद्गृहपतिर्दूत संदेशहारकः ॥ ७३४
संधिविग्रहयानान्यासनद्वैधाश्रया अपि । षड्गुणाः शक्तयस्तिस्रः प्रभुत्वोत्साहमन्त्रजाः ॥ ७३५
सामदानभेददण्डा उपायाः साम सान्त्वनम् । उपजापः पुनर्भेदो दण्डः स्यात्साहसं दमः ॥ ७३६

१. 'निसूदन'पदस्य किर्मीरेणाप्यन्वयः; यौगिकत्वात् किर्मीरारित्यादयोऽपि. २. बीभत्सुरपि. ३. यौगिकत्वात् कर्णारिरित्यादयोऽपि. ४. यौगिकत्वात् राधेय इत्यादयोऽपि. ५. सालवाहनोऽपि. ६. परिजनोऽपि. ७. टङ्कपतिरपि. ८. आन्तःपुरिकोऽपि. ९. तेन परिपन्थकः; परिपन्थी.

प्राभृतं ढौकनं लम्बोत्कोचः कौशलिकामिषे । [1]उपाचारः प्रदानं दा हारो ग्राह्यायने अपि ॥ ७३७
मायोपेक्षेन्द्रजालानि क्षुद्रेपाया इमे त्रयः । मृगयाक्षः स्त्रियः पानं वाक्पारुष्यार्थदूषणे ॥ ७३८
दण्डपारुष्यमित्येतद्धेयं व्यसनसप्तकम् । पौरुषं विक्रमः शौर्यं शौटीर्यं च पराक्रमः ॥ ७३९
यत्कोषदण्डजं तेजः स प्रभावः प्रतापवत् । भिया धर्मार्थकामैश्च परीक्षा या तु सोपधा ॥ ७४०
तन्मन्त्राद्यषडक्षीणं यत्तृतीयाद्यगोचरः । रहस्यालोचनं मन्त्रो रहश्छन्नमुपह्वरम् ॥ ७४१
विविक्तविजनैकान्तनिःशलाकानि केवलम् । गुह्ये रहस्यं न्यायस्तु देशरूपं समञ्जसम् ॥ ७४२
कल्याभ्रेषौ नयो न्याय्यं तूचितं युक्तसांप्रते । लभ्यं प्राप्तं भजमानाभिनीतोपयिकानि च ॥ ७४३
प्रक्रिया त्वधिकारोऽथ मर्यादा धारणा स्थितिः । संस्थापराधस्तु मन्तुर्व्यलीकं विप्रियागसी ॥७४४
बलिः करो भागधेयो द्विपाद्यो द्विगुणो दमः । वाहिनी पृतना सेना बलं सैन्यमनीकिनी ॥ ७४५
कटकं ध्वजिनी तन्त्रं दण्डोऽनीकं पताकिनी । वरूथिनी चमूश्चक्रं [2]स्कन्धावारोऽस्य तु स्थितिः ७४६
शिबिरं रचना तु स्याद्व्यूहो दण्डादिको युधि । प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ ७४७
एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । सेना सेनामुखं गुल्मो वाहिनी पृतना चमूः ॥ ७४८
अनिकिनी च पत्तेः स्यादिभ्याद्यैस्त्रिगुणैः क्रमात् । दशानिकिन्येऽक्षौहिणी सज्जनं तूपरक्षणम् ॥७४९
वैजयन्ती पुनः केतुः [3]पताका केतनं ध्वजः । अस्योच्चूलावचूलाख्यावूर्ध्वाधोमुखकूर्चकौ ॥ ७५०
गजो वाजी रथः पत्तिः सेनाङ्गं स्याच्चतुर्विधम् । युद्धार्थे चक्रवद्याने शताङ्गः स्यन्दनो रथः ॥ ७५१
स क्रीडार्थः पुष्परथो देवार्थस्तु मरुद्रथः । योग्यो रथो वैनयिकोऽध्वरथःपरियानिकः ॥ ७५२
कर्णीरथः प्रवहणं डयनं रथगर्भकः । अनस्तु शकटोऽथ स्याद्गन्त्रीकम्बलिबाह्यकम् ॥ ७५३
अथ काम्बलवास्त्राद्यास्तैस्तैः परिवृते रथे । स पाण्डुकम्बली यः स्यात्संवीतः पाण्डुकम्बलैः ॥ ७५४
स तु द्वैपो वैयाघ्रश्च यो वृतो द्विपिचर्मणा । रथाङ्गं रथपादोऽरि चक्रं धारा पुनः प्रधिः ॥ ७५५
नेमिरक्षाग्रकीले त्वण्याणी नाभिस्तु पिण्डिका । युगंधरं कूवरं स्याद्युगमीशान्तबन्धनम् ॥ ७५६
युगकीलकस्तु शम्या प्रासङ्गस्तु युगान्तरम् । अनुकर्षो दार्वधःस्थं धुर्त्री यानमुखं च धूः ॥ ७५७
रथगुप्तिस्तु वरूथो रथाङ्गानि त्वपस्कराः । शिबिका याप्ययानेऽथ दोला प्रेङ्खादिका भवेत् ॥ ७५८
वैनीतकं परस्परावाहनं शिबिकादिकम् । यानं युग्यं पत्रं वाह्यं वह्यं वाहनधोरणे ॥ ७५९
नियन्ता प्राजिता यन्ता सूतः सव्येष्ठृसारथी । दक्षिणस्थप्रचेतारौ क्षत्ता रथकुटुम्बिकः ॥ ७६०
रथारोहिणि तु रथी रथिके रथिरो रथी । अश्वारोहे त्वश्ववारः सादी च तुरगी च सः ॥ ७६१
हस्त्यारोहे सादियन्तृमहामात्रनिषादिनः । आधोरणा हस्तिपकगजाजीवेभपालकाः ॥ ७६२
योद्धारश्च भटा योधाः सेनारक्षास्तु सैनिकाः । सेनायां ये समवेतास्ते सैन्याः सैनिका अपि ॥७६३
ये सहस्रेण योद्धारस्ते साहस्राः सहस्रिणः । छायाकरश्छत्रधारः पताकी वैजयन्तिकः ॥ ७६४
परिधिस्थः परिचर आमुक्तः प्रतिमुक्तवत् । अपिनद्धः पिनद्धोऽथ संनद्धो व्यूढकङ्कटः ॥ ७६५
दंशितो [4]वर्मितः सज्जः संनाहो वर्म कङ्कटः । जगरः कवचं [5]दंशस्तनुत्रं माठ्युरश्छदः ॥ ७६६
निचोलकः स्यात्कूर्पासो वारवाणश्च कञ्चुकः । सारसनं [6]त्वधिकाङ्गहृदि धार्यं सकञ्चुकैः ॥ ७६७
शिरस्त्राणे तु शीर्षण्यं शिरस्कं शीर्षकं च [7]तत् । नागोदमुदरत्राणं जङ्घात्राणं तु मत्कुणम् ॥ ७६८

---

१. तेन उपचारः, उपप्रदानम, उपदा, उपहारः, उपग्राह्यः, उपापनम्. २. शिबिरमित्यन्ये. ३. पटाकापि. ४. कवचितोऽपि. ५. तनुत्राणमपि. ६. अधियाङ्गमित्येके; धियाङ्गमित्यन्ये. ७. खोलमपि.

वाहुत्राणं बाहुलं स्याज्जालिका त्वङ्गरक्षणी । जालप्रायायसी स्यादायुधीयः शस्त्रजीविनि ॥ ७६९
काण्डपृष्ठायुधिकौ च तुल्यौ प्रासिककौन्तिकौ । पारश्वधिकस्तु पारश्वधः परश्वधायुधः ॥ ७७०
स्युर्नैस्त्रिंशिकशाक्तीकयाष्टीकास्तत्तदायुधाः । तूणी धैनुर्भृद्धानुष्कः स्यात्काण्डीरस्तु काण्डवान् ॥ ७७१
कृतहस्तः कृतपुङ्खः सुप्रयुक्तशरो हि यः । शीघ्रवेधी लघुहस्तोऽपराद्धेषुस्तु लक्ष्यतः ॥ ७७२
च्युतेषुर्दूरवेधी तु दुरापाल्यायुधं पुनः । हेतिः प्रहरणं शस्त्रमस्त्रं तच्च चतुर्विधम् ॥ ७७३
मुक्तं द्विधा पाणियन्त्रमुक्तं शक्तिशरादिकम् । अमुक्तं शस्त्रिकादि स्याद्यष्टयाद्यं तु द्वयात्मकम् ॥ ७७४
धैनुश्चापोऽस्त्रमिष्वासः कोदण्डं धन्व कार्मुकम् । द्रुणासौ लस्तकोऽस्यान्तरग्रं त्वर्तिरटन्यपि ॥ ७७५
मौर्वी जीवा गुणो गव्या शिञ्जा बाणासनं द्रुणा । शिञ्जिनी ज्या च गोधा तु तलं ज्याघातवारणम् ॥ ७७६
स्थानान्यालीढवैशाखप्रत्यालीढानि मण्डलम् । समपादं च वेध्यं तु लक्ष्यं लक्षं शरव्यकम् ॥ ७७७

बाणे पृषत्कविशिखौ खगगार्ध्रपक्षौ काण्डाशुगप्रदरसायकपत्रवाहाः ।
पत्रीष्वजिह्मगशिलीमुखकङ्कपत्ररोपाः कलम्बशरमार्गणचित्रपुङ्खाः ॥ ७७८

प्रक्ष्वेडनः सर्वलोहो नाराच एषणश्च सः । निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ॥ ७७९
बाणमुक्तिर्व्यवच्छेदो दीप्तिर्वेगस्य तीव्रता । क्षुरप्रतद्भलार्धेन्दुतीरामुख्यास्तु तद्भिदः ॥ ७८०
पक्षो वाजः पत्रणा तन्न्यासः पुङ्खस्तु कर्तरी । तूणो निषङ्गस्तूणीर उपासङ्गः शराश्रयः ॥ ७८१

शरधिः कलापोऽप्यथ चन्द्रहासः करवालनिस्त्रिंशकृपाणखड्गाः ।
तरवारिकौक्षेयकमण्डलाग्रा असिर्ऋष्टिरिष्टी त्सरुरस्य मुष्टिः ॥ ७८२

प्रत्याकारः परीवारः कोशः खड्गपिधानकम् । अङ्कनं फलकं चर्म खेटकावरणस्फराः ॥ ७८३
अस्य मुष्टिस्तु संग्राहः क्षुरी छुरी कृपाणिका । शस्त्र्यसेर्धेनुपुत्र्यौ च पत्रपालस्तु सायता ॥ ७८४
दण्डो यष्टिश्च लगुडः स्यादीली करवालिका । भिन्दिपाले सृगः कुन्ते प्रासोऽथ द्रुघणो घनः ॥ ७८५
मुद्गरः स्यात्कुठारस्तु परशुः पर्शुपर्श्वधौ । परश्वधः स्वधितिश्च परिघः परिघातनः ॥ ७८६
सर्वला तोमरे शल्यं शङ्कौ शूलेत्रिशीर्षकम् । शक्तिपट्टिशदुःस्फोटचक्राद्याः शस्त्रजातयः ॥ ७८७
खुरली तु श्रमो योग्याभ्यासस्तद्भूः खलूरिका । सर्वाभिसारः सर्वौघः सर्वसंहननं समाः ॥ ७८८
लोहाभिसारो दशम्यां विधिर्नीराजनात्परः । प्रस्थानं गमनं व्रज्याभिनिर्याणं प्रयाणकम् ॥ ७८९
यात्राभिषेणनं तु स्यात्सेनयाभिगमो रिपौ । स्यात्सुहृद्बलमासारः प्रचक्रं चलितं बलम् ॥ ७९०
प्रसारस्तु प्रसरणं तृणकाष्ठादिहेतवे । अभिक्रमो रणे यानमभीतस्य रिपून्प्रति ॥ ७९१
अभ्यमित्र्योऽभ्यमित्रीयोऽभ्यमित्रीणोऽभ्यरि व्रजन् । स्यादुरस्वानुरसिल उर्जस्व्युर्जस्वलौ समौ ॥ ७९२
सांयुगीनो रणे साधुर्जेता जिष्णुश्च जित्वरः । जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके ॥ ७९३
वैतालिका बोधकरा अर्थिकाः सौखसुप्तिकाः । घाण्टिकाश्चाक्रिकाः सूतो बन्दी मङ्गलपाठकः ॥ ७९४
मागधो मगधः संशप्तका युद्धानिवर्तिनः । नग्नः स्तुतिव्रतस्तस्य ग्रन्थो भोगावली भवेत् ॥ ७९५

प्राणः स्थाम तरः पराक्रमबलद्युम्नानि शौर्यौजसी
शुष्मं शुष्म च शक्तिरूर्जसहसी युद्धं तु संख्यं कलिः ।

---

१. निषङ्गीत्यपि. २. यौगिकत्वात् धनुर्धरः, धन्वी, धनुष्मानित्यादयः. ३. धनूरपि. ४. स्फरकोऽपि. ५. असिधेनुः, असिपुत्री. ६. तरवालिकेत्यन्ये. ७. पलिघोऽपि. ८. सौखशायनिक-सौखसुप्तिकावपि. ९. ऊर्गपि.

संग्रामाहवसंप्रहारसमरा जन्यं युदायोधनं
[1]संस्फोटः कलहो मृधं प्रहरणं संयद्रणो विग्रहः ॥ ७९६
द्वन्द्वं समाघातसमाह्वयाभिसंपातसंमर्दसमित्प्रघाताः ।
आस्कन्दनाजिप्रधनान्यनीकमभ्यागमश्च प्रविदारणं च ॥ ७९७
समुदायः समुदयो राटिः समितिसंगरौ । अभ्यामर्दः संपरायः समीकं सांपरायिकम् ॥ ७९८
आक्रन्दः संयुगश्चाथ नियुद्धं तन्नुजोद्भवम् । पटहाडम्बरौ तुल्यौ तुमुलं रणसंकुलम् ॥ ७९९
नासीरं त्वग्रयानं स्यादवमर्दस्तु पीडनम् । प्रपातस्[2]त्वभ्यवस्कन्दो धाट्यभ्यासादनं च सः ॥ ८००
तद्रात्रौ सौप्तिकं वीराशंसनं त्वाजिभीष्मभूः । नियुद्धभूरक्षवाटो मोहो मूर्छा च कश्मलम् ॥ ८०१
वृत्ते भाविनि वा युद्धे पानं स्याद्वीरपाणकम् । पलायनमपयानं संदावद्रवविद्रवाः ॥ ८०२
अपक्रमः [3]समुत्प्रेभ्यो द्रावोऽथ विजयो जयः । पराजयो रणे भङ्गो डमरे डिम्बविप्लवौ ॥ ८०३
वैरनिर्यातनं वैरशुद्धिर्वैरप्रतिक्रिया । बलात्कारस्तु प्रसभं हठोऽथ स्खलितं छलम् ॥ ८०४
परापर्यभितो [4]भूतो जितो भग्नः पराजितः । पलायितस्तु नष्टः स्याद्गृहीतदिक्तिरोहितः ॥ ८०५
जिताहवो जितकाशी प्रस्कन्नः पतितः समौ । चारः कारा गुप्तौ वन्द्यां ग्रहकः प्रापतो [5]ग्रहः ॥ ८०६
चातुर्वर्ण्यं द्विजक्षत्रवैश्यशूद्रा नृणां भिदः । ब्रह्मचारी गृही वानप्रस्थो भिक्षुरिति क्रमात् ॥ ८०७
चत्वार आश्रमास्तत्र वर्णी स्याद्ब्रह्मचारिणि । ज्येष्ठाश्रमी गृहमेधी गृहस्थः स्नातको गृही ॥ ८०८
वैखानसो वानप्रस्थो भिक्षुः सांन्यासिको यतिः । कर्मन्दी रक्तवसनः परिव्राजकतापसौ ॥ ८०९
पाराशरी पारिकाङ्क्षी मस्करी पारिरक्षकः । स्थाण्डिलः स्थण्डिलशायी यः शेते स्थण्डिले व्रतात् ॥ ८१०
तपःक्लेशसहो दान्तः शान्तः श्रान्तो जितेन्द्रियः । अवदानं कर्म शुद्धं ब्राह्मणस्तु त्रयीमुखः ॥ ८११
भूदेवो वाडवो विप्रो [6]द्व्यग्राभ्यां जातिजन्मजाः । वर्णज्येष्ठः सूत्रकण्ठः षट्कर्मा मुखसंभवः ॥ ८१२
वेदगर्भः शमीगर्भः सावित्रो मैत्र एव सः । बटुः पुनर्माणवको भिक्षा स्याद्ग्रासमात्रकम् ॥ ८१३
उपनायस्तूपनयो बटूकरणमानयः । अग्नीन्धनं त्वग्निकार्यमग्नीध्रा चाग्निकारिका ॥ ८१४
पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः । बैल्वः सारस्वतो रौच्यः पैलवस्त्वौपरोधिकः ॥ ८१५
आश्वत्थस्तु जितनेमिरौदुम्बर उलूखलः । जटा सटा वृषी पीठं कुण्डिका तु कमण्डलुः ॥ ८१६
श्रोत्रियश्छान्दसो यष्टान्वादेष्टा स्यान्मखे व्रती । याजको यजमानश्च सोमयाजी तु दीक्षितः ॥ ८१७
इज्याशीलो यायजूको यज्वा स्यादासुतीबलः । सोमपः सोमपीथी स्यात्स्थपतिर्गीःपतीष्टिकृत् ॥ ८१८
सर्ववेदास्तु सर्वस्वदक्षिणं यज्ञमिष्टवान् । यजुर्विदध्वर्युर्ऋग्विद्धोतोद्गाता तु सामवित् ॥ ८१९
यज्ञो यागः सवः सत्रं स्तोमो मन्युर्मखः क्रतुः । संस्तरः सप्ततन्तुश्च वितानं बर्हिरध्वरः ॥ ८२०
अध्ययनं ब्रह्मयज्ञः स्याद्देवयज्ञ आहुतिः । होमो होत्रं वषट्कारः पितृयज्ञस्तु तर्पणम् ॥ ८२१
तच्छ्राद्धं पिण्डदानं च नृयज्ञोऽतिथिपूजनम् । भूतयज्ञो बलिः पञ्च महायज्ञा भवन्त्यमी ॥ ८२२
पौर्णमासश्च दर्शश्च यज्ञौ पक्षान्तयोः पृथक् । सौमिकी दीक्षिणीयेष्टिर्दीक्षा तु व्रतसंग्रहः ॥ ८२३
वृत्तिः स्रुगहना कुम्बा वेदी भूमिः परिष्कृता । स्थण्डिलं चत्वरं चान्या यूपः स्याद्यज्ञकीलकः ॥ ८२४
चषालो यूपकटको यूपकर्णौ घृतावनौ । यूपाग्रभागेस्यात्तर्मारणिर्निर्मन्थदारुणि ॥ ८२५

---

१. संस्फेटोऽपि. २. अवस्कन्दोऽपि. ३. द्रावशब्दस्य समादिभिरन्वयः, नशनमपि. ४. भूतशब्दस्य परादिभिरन्वयः. ५. ग्रहशब्दः प्रादिनान्वेति. ५. द्व्यग्रशब्दौ प्रत्येकं जात्यादिनान्वेति.

५

27

स्युर्दक्षिणाहवनीयगार्हपत्यास्त्रयोऽग्नयः । इदमग्नित्रयं त्रेता प्रणीतः संस्कृतोऽनलः ॥ ८२६
ऋक्सामिधेनी धाय्या च समिदाधीयते यया । समिदिन्धनमेधेध्मतर्पणैधांसि भस्म तु ॥ ८२७
स्याद्भूतिर्भसितं रक्षा क्षारः पात्रं स्रुवादिकम् । ध्रुवस्रुगधरा सोपभृज्जुहूः पुनरुत्तरा ॥ ८२८
ध्रुवा तु सर्वसंज्ञार्थं यस्यामाज्यं निधीयते । योऽभिमन्त्र्य निहन्येत स स्यात्पशुरुपाकृतः ॥ ८२९
परम्पराकं [1]शसनं प्रोक्षणं च वधो मखे । हिंसार्थं कर्माभिचारः स्याद्यज्ञार्हं तु यज्ञियम् ॥ ८३०
हविः सांनाय्यमामिक्षा शृतोष्णक्षीरगं दधि । क्षीरशरः पयस्या च तन्मस्तुनि तु वाजिनम् ॥८३१
हव्यं सुरेभ्यो दातव्यं पितृभ्यः कव्यमोदनम् । आज्ये तु दधिसंयुक्ते पृषदाज्यं पृषातकम् ॥ ८३२
दध्ना तु मधुसंयुक्तं मधुपर्को महोदयः । हवित्री तु होमकुण्डं हव्यपाकः पुनश्चरुः ॥ ८३३
अमृतं यज्ञशेषे स्याद्विघसो भुक्तशेषके । यज्ञान्तोऽवभृथः पूर्तं वाप्यादीष्टं मखक्रिया ॥ ८३४
इष्टापूर्तं तदुभयं बर्हिर्मुष्टिस्तु विष्टरः । अग्निहोत्र्यग्निविद्वाहिताग्नावथाग्निरक्षणम् ॥ ८३५
अग्न्याधानमग्निहोत्रं दर्वी तु घृतलेखनी । होमाग्निस्तु महाज्वालो महावीरः प्रवर्ग्यवत् ॥ ८३६
होमधूमस्तु निगणो होमभस्म तु वैष्टुतम् । उपस्पर्शस्त्वाचमनं धारसेकौ तु सेचनम् ॥ ८३७
ब्रह्मासनं ध्यानयोगासनेऽथ ब्रह्मवर्चसम् । वृत्ताध्ययनर्द्धिः पाठे स्याद्ब्रह्माञ्जलिरञ्जलिः ॥ ८३८
पाठे तु मुखनिःक्रान्ता विप्रुषो ब्रह्मबिन्दवः । साकल्यवचनं पारायणं कल्पे विधिक्रमौ ॥ ८३९
मूलेऽङ्गुष्ठस्य स्याद्ब्राह्मं तीर्थं कायं कनिष्ठयोः । पित्र्यं तर्जन्यङ्गुष्ठान्तर्दैवतं त्वङ्गुलीमुखे ॥ ८४०
ब्रह्मत्वं तु ब्रह्मभूयं ब्रह्मसायुज्यमित्यपि । देवभूयादिकं तद्वदथोपाकरणं श्रुतेः ॥ ८४१
संस्कारपूर्वं ग्रहणं स्यात्स्वाध्यायः पुनर्जपः । औपवस्तं तूपवासः कृच्छ्रं सांतपनादिकम् ॥ ८४२
प्रायः संन्यास्यनशने नियमः पुण्यकं व्रतम् । चरित्रं चरिताचारौ चारित्रचरणे अपि ॥ ८४३
वृत्तं शीलं च सर्वैनोध्वंसिजप्येऽघमर्षणम् । समास्तु पादग्रहणाभिवादनोपसंग्रहाः ॥ ८४४
उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे । प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ॥ ८४५
प्राचेतसस्तु वाल्मीकिर्वल्मीककुशिनौ [2]कविः । [3]मैत्रावरुणवाल्मीकौ वेदव्यासस्तु माठरः ॥ ८४६
द्वैपायनः पाराशर्यः कानीनो बादरायणः । व्यासोऽस्याम्बा सत्यवती वासवी गन्धकालिका ॥ ८४७
योजनगन्धा दाशेयी शालङ्कायनजा च सा । जामदग्न्यस्तु रामः स्याद्भार्गवो रे[4]णुकासुतः ॥ ८४८
नारदस्तु देवब्रह्मा पिशुनः कलिकारकः । वसिष्ठोऽरुन्धतीजानिरक्षमाला त्वरुन्धती ॥ ८४९
त्रिशङ्कुयाजी गाधेयो विश्वामित्रश्च कौशिकः । कुशारणिस्तु दुर्वासाः शतानन्दस्तु गौतमः ॥ ८५०
याज्ञवल्क्यो ब्रह्मरात्रिर्योगे[5]शोऽप्यथ पाणिनौ । सालातुरीयदाक्षेयौ गोनर्दीये पतञ्जलिः ॥ ८५१
[6]कात्यायनो वररुचिर्मेधाजिच्च पुनर्वसुः । अथ व्याडिर्विन्ध्यवासी नन्दिनीतनयश्च सः ॥ ८५२
स्फोटायनस्तु कक्षीवान्पालकाप्ये करेणुभूः । वात्स्यायने मल्लनागः कौटल्य[7]श्चणकात्मजः ॥ ८५३
द्रामिलः पक्षिलस्वामीविष्णुगुप्तोऽङ्गुलश्च सः । क्षतव्रतोऽवकीर्णी स्याद्व्रात्यः संस्कारवर्जितः ॥ ८५४
शिश्विदानः कृष्णकर्मा ब्रह्मबन्धुर्द्विजोऽधमः । नष्टाग्निर्वीरहा जातिमात्रजीवी द्विजब्रुवः ॥ ८५५
धर्मध्वजी लिङ्गवृत्तिर्वेदहीनो निराकृतिः । वार्ताशी भोजनार्थं यो गोत्रादि वदति स्वकम् ॥ ८५६
उच्छिष्टभोजनो देवनैवेद्यबलिभोजनः । अजपस्त्वसदध्येता शाखारण्डोऽन्यशाखकः ॥ ८५७

---

१. शमनमित्यन्ये. २. आदिकविरपि. ३. मैत्रावरुणिरपि. ४. रैणुकेयोऽपि. ५. योगीशोऽपि. ६. कात्योऽपि. ७. चाणक्योऽपि.

शस्त्राजीवः काण्डपृष्ठो गुरुहा नरकीलकः । मलो देवादिपूजायामश्राद्धोऽथ मलिम्लुचः ॥ ८५८
पञ्चयज्ञपरिभ्रष्टो निषिद्धैकरुचिः खरुः । सुप्ते यस्मिन्नुदेत्यर्कोऽस्तमेति च क्रमेण तौ ॥ ८५९
अभ्युदिताभिनिर्मुक्तौ वीरोज्झो न जुहोति यः । अग्निहोत्रच्छलाद्याच्ञापरो वीरोपजीविकः ॥ ८६०
वीरविप्लावको जुह्वद्धनैः शूद्रसमाहृतैः । स्याद्वादवाद्यार्हतः[1][2] स्याच्छून्यवादी तु सौगतः[3] ॥ ८६१
नैयायिकस्त्वक्षपादो यौगः सांख्यस्तु कापिलः । वैशेषिकः स्यादौलूक्यो बार्हस्पत्यस्तु नास्तिकः ॥ ८६२
चार्वाको लौकायतिक[4]श्चैते षडपि तार्किकाः । क्षत्रं तु क्षत्रियो राजा राजन्यो बाहुसंभवः ॥ ८६३
अर्या भूमिस्पृशो वैश्या ऊरव्या ऊरुजा विशः । वाणिज्यं पाशुपाल्यं च कर्षणं चेति वृत्तयः ॥ ८६४
आजीवो जीवनं वार्ता जीविका वृत्तिवेतने । उञ्छो धान्यकणादानं कणिशाद्यर्जनं शिलम् ॥ ८६५
ऋतं तद्द्वयमनृतं कृष्टिर्मृतं तु याचितम् । अयाचितं स्यादमृतं सेवावृत्तिः श्वजीविका ॥ ८६६
सत्यानृतं तु वाणिज्यं वणिज्या वाणिजो वणिक् । क्रयविक्रयिकपण्याजीवापणिक[5]नैगमाः ॥ ८६७
वैदेहः सार्थवाहश्च क्रायकः क्रयिकः क्रयी । क्रेयदे तु विपूर्वास्ते मूल्ये वस्नार्घवक्रयाः ॥ ८६८
मूलद्रव्यं परिपणो नीवी लाभोऽधिकं फलम् । परिदानं विनिमयो नैमेयः परिवर्तनम् ॥ ८६९
व्यतिहारः परावर्तो वैमेयो विमयोऽपि च । निक्षेपोपनिधी न्यासे प्रतिदानं तदर्पणम् ॥ ८७०
क्रेतव्यमात्रके क्रेयं क्रय्यं न्यस्तं क्रयाय यत् । पणितव्यं तु विक्रेयं पण्यं सत्यापनं पुनः ॥ ८७१
सत्यंकारः सत्याकृतिस्तुल्यौ विपणविक्रयौ । गण्यं गणेयं संख्येयं संख्या त्वेकादिका भवेत् ॥ ८७२
यथोत्तरं दशगुणं भवेदेको दशामुतः । शतं सहस्रमयुतं लक्षप्रयुतकोटयः ॥ ८७३
अर्बुदमब्जं खर्वं च निखर्वं च महाम्बुजम् । शङ्कुर्वार्धिरन्त्यं मध्यं परार्धं चेति नामतः ॥ ८७४
असंख्यं द्वीपवार्ध्यादि पुद्गलात्माद्यनन्तकम् । सांयात्रिकः पोतवणिग्यानपात्रं वहित्रकम् ॥ ८७५
वोहित्थं वहनं पोतः पोतवाहो नियामकः । निर्यामः कर्णधारस्तु नाविको नौस्तु मङ्गिनी ॥ ८७६
तरीतरिण्यौ वेडी च द्रोणी काष्ठाम्बुवाहिनी । नौकादण्डः क्षेपणी स्याद्गुणवृक्षस्तु कूपकः ॥ ८७७
पोलिन्दास्त्वन्तरादण्डाः स्यान्मङ्गो मङ्गिनीशिरः । अभ्रिस्तु काष्ठकुद्दालः सेकपात्रं तु सेचनम् ॥ ८७८
केनिपातः कोटिपात्रमरित्रेऽथोडुपः प्लवः । कोलो भेलस्तरण्डश्च स्यात्तरपण्यमातरः ॥ ८७९
वृद्ध्याजीवो द्वैगुणिको वार्धुषिकः कुसीदकः । वार्धुषिश्च कुसीदार्थप्रयोगौ वृद्धिजीवने ॥ ८८०
वृद्धिः कलान्तरमृणं तूद्धारः पर्युदञ्चनम् । याच्ञयाप्तं याचितकं परिवृत्त्यापमित्यकम् ॥ ८८१
अधमर्णो ग्राहकः स्यादुत्तमर्णस्तु दायकः । प्रतिभूर्लग्नकः साक्षी स्थेय आधिस्तु बन्धकः ॥ ८८२
तुलाद्यैः पौतवं मानं द्रुवयं कुडवादिभिः । पाय्यं हस्तादिभिस्तत्र स्याद्गुञ्जाः पञ्च माषकः ॥ ८८३
ते तु षोडश कर्षोऽक्षः पलं कर्षचतुष्टयम् । बिस्तः सुवर्णो हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले ॥ ८८४
तुला पलशतं तासां विंशत्या भार आचितः । शाकटः शाकटीनश्च शलाटस्ते दशाचितः ॥ ८८५
चतुर्भिः कुडवैः प्रस्थः प्रस्थैश्चतुर्भिराढकः । चतुर्भिराढकैर्द्रोणः खारी षोडशभिश्च तैः ॥ ८८६
चतुर्विंशत्यङ्गुलानां हस्तो दण्डश्चतुष्करः । तत्सहस्रं तु गव्यूतं क्रोशस्तौ द्वौ तु गोरुतम् ॥ ८८७
गव्या गव्यूतगव्यूती चतुष्क्रोशं तु योजनम् । पाशुपाल्यं जीववृत्तिर्गोमान्गोमी गवीश्वरे[6] ॥ ८८८
गोपाले गोधुगाभीरगोपगोसंख्यबल्लवाः । गोविन्दोऽधिकृतो गोषु जाबालस्त्वजजीविकः ॥ ८८९

---

१. अनेकान्तवाद्यपि. २. जैनोऽपि. ३. बौद्धोऽपि. ४. लौकायितिकोऽपि. ५. प्रापणिकोऽपि. ६. गवेश्वरोऽपि.

कुटुम्बी कर्षकः क्षेत्री हली कृषिककार्षिकौ । कृषीवलोऽपि जित्या तु हलिः सीरस्तु लाङ्गलम् ॥८९०
गोदारणं हलमीषासीते तद्दण्डपद्धती । निरीषे कुटकं फाले कृषकः कुशिकः फलम् ॥ ८९१
दात्रं लवित्रं तन्मुष्टौ वण्टो मत्यं समीकृतौ । गोदारणं तु कुद्दालः खनित्रं त्ववदारणम् ॥ ८९२
प्रतोदस्तु प्रवयणं प्राजनं तोत्रतोदने । योत्रं तु योक्त्रमाबद्धः कोटिशो लोष्टभेदनः ॥ ८९३
मेधिर्मेथिः खले वाली खले गोबन्धदारु यत् । शूद्रान्त्यवर्णौ वृषलः पद्यः पज्जो जघन्यजः ॥८९४
ते तु मूर्धाभिषिक्ताद्या रथकृन्मिश्रजातयः । क्षत्रियायां द्विजान्मूर्धाभिषिक्तो विट्स्त्रियां पुनः ॥८९५
अम्बष्ठोऽथ पारशवनिषादौ शूद्रयोषिति । क्षत्रान्माहिष्यो वैश्यायामुग्रस्तु वृषलस्त्रियाम् ॥ ८९६
वैश्यात्तु करणः शूद्रात्त्वायोगवो विशः स्त्रियाम् । क्षत्रियायां पुनः क्षत्ता चाण्डालो ब्राह्मणस्त्रियाम्॥८९७
वैश्यात्तु मागधः क्षत्र्यां वैदेहिको द्विजस्त्रियाम् । सूतस्तु क्षत्रियाज्जात इति द्वादश तद्भिदः॥८९८
माहिष्येण तु जातः स्यात्करण्यां रथकारकः । कारुस्तु कारी प्रकृतिः शिल्पी श्रेणिस्तु तद्गणे ॥८९९
शिल्पं कला विज्ञानं च मालाकारस्तु मालिकः । पुष्पाजीवी पुष्पलावी पुष्पाणामवचायिनी ॥ ९००
कल्पपालः सुराजिवी शौण्डिको मण्डहारकः । वारिवासः पानवणिग्ध्वजो ध्वज्यासुतीबलः ॥ ९०१

मद्यं मदिष्ठा मदिरा परिस्रुता कश्यं परिस्रुन्मधु कापिशायनम् ।
गन्धोत्तमा कल्पमिरा परिप्लुता कादम्बरी स्वादुरसा हलिप्रिया ॥ ९०२

शुण्डाहाला हारहूरं प्रसन्ना वारुणी सुरा । माद्वीकं मदना देवसृष्टा कापिशमब्धिजा ॥ ९०३
मध्वासवे माधवको मैरेये शीधुरासवः । जगलो मेदको मद्यपङ्कः किण्वं तु नग्नहूः ॥ ९०४
नग्नहुर्मद्यबीजं च मद्यसंधानमासुतिः । आसवोऽभिषवो मद्यमण्डकारोत्तमौ समौ ॥ ९०५
गल्वर्कस्तु चषकः स्यात्सरकश्चानुतर्षणम् । शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः ॥ ९०६
सपीतिः सहपानं स्यादापानं पानगोष्ठिका । उपदंशस्त्ववदंशश्चक्षणं मद्यपाशनम् ॥ ९०७
नाडिंधमः स्वर्णकारः कलादो मुष्टिकश्च सः । तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका ॥ ९०८
आस्फोटिनी वेधनिका शाणस्तु निकषः कषः । संदंशः स्यात्कङ्कमुखो भ्रमः कुन्दं च यन्त्रकम्॥९०९
वैकटिको मणिकारः शौल्विकस्ताम्रकुट्टकः । शाङ्खिकः स्यात्काम्बविकस्तुन्नवायस्तु सौचिकः ॥९१०
कृपाणी कर्तरी कल्पन्यपि सूची तु सेवनी । सूचीसूत्रं पिप्पलिकं तर्कुः कर्तनसाधने ॥ ९११
पिञ्जनं विहननं च तूलस्फोटनकार्मुकम् । सेवनं सीवनं स्यूतिस्तुल्यौ स्यूतप्रसेवकौ ॥ ९१२
तन्तुवायः कुविन्दः स्यात्त्रसरः सूत्रवेष्टनम् । वाणिर्व्यूतिर्वाणदण्डो वेमा सूत्राणि तन्तवः ॥ ९१३
निर्णेजकस्तु रजकः पादुकाकृत्तु चर्मकृत् । उपानत्पादुका पादूः पन्नद्धा पादरक्षणम् ॥ ९१४
प्राणहितानुपदीना त्वाबद्धानुपदं हि या । नध्री वर्ध्री वरत्रा स्यादारा चर्मप्रभेदिका ॥ ९१५
कुलालः स्यात्कुम्भकारो दण्डभृच्चक्रजीवकः । शाणाजीवः शस्त्रमार्जो भ्रमासक्तोऽसिधावकः॥ ९१६
धूसरश्चाक्रिकस्तैली स्यात्पिण्याकखलौ समौ । रथकृत्स्थपतिस्त्वष्टा काष्ठतट्तक्षवर्धकी ॥ ९१७
ग्रामायत्तो ग्रामतक्षः कौटतक्षोऽनधीनकः । वृक्षभित्तक्षणी वासी क्रकचं करपत्रकम् ॥ ९१८
स उद्घनो यत्र काष्ठे काष्ठं निक्षिप्य तक्ष्यते । वृक्षादनो वृक्षभेदी टङ्कः पाषाणदारकः ॥ ९१९
व्योकारः कर्मारो लोहकारः कूटं लयोघनः । प्रश्चनः पत्रपरशुरीषीका तूलिकेषिका ॥ ९२०
भक्ष्यकारः कान्दविकः कन्दुस्वेदनिके समे । रङ्गाजीवस्तौलकिकश्चित्रकृच्चाथ तूलिका ॥ ९२१

---

१. कृषकोऽपि. २. कोटीशोऽपि. ३. भावकोऽपि. ४. पादत्राणम् अपि. ५. तिलंतुदोऽपि. ६. रथकारोऽपि.

कूचिका चित्रमालेख्यं पलगण्डस्तु लेप्यकृत् । पुस्तं लेप्यादिकर्म स्यान्नापितश्चण्डिलः क्षुरी ॥ ९२२
क्षुरमर्दी दिवाकीर्तिर्मुण्डकोऽन्तावसाय्यपि । मुण्डनं भद्राकरणं वपनं परिवापनम् ॥ ९२३
क्षौरं नाराची त्वेषण्यां देवाजीवस्तु देवलः । मार्दङ्गिको मौरजिको वीणावादस्तु वैणिकः ॥ ९२४
वेणुध्मः स्याद्वैणविकः पाणिघः पाणिवादकः । स्यात्प्रातिहारिको मायाजीवी माया तु शाम्बरी॥९२५
इन्द्रजालं तु कुहकं जालं कुसृतिरित्यपि । कौतूहलं तु कुतुकं कौतुकं च कुतूहलम् ॥ ९२६
व्याधो मृगवधाजीवी लुब्धको मृगयुश्च सः । पापर्द्धिर्मृगयाखेटो मृगव्याच्छोदने अपि ॥ ९२७
जालिकश्च वागुरिको वागुरा मृगजालिका । शुम्बं वराटको रज्जुः शुल्वं तन्त्री वटी गुणः ॥ ९२८
धीवरे दाशकैवर्तौ बडिशं मत्स्यवेधनम् । आनायस्तु मत्स्यजालं कुवेणी मत्स्यबन्धनी ॥ ९२९
जीवान्तकः शाकुनिको वैतंसिकस्तु सौनिकः । मांसिकः कौटिकश्चाथ सूना स्थानं वधस्य यत् ॥ ९३०
स्याद्बन्धनोपकरणं वीतंसो मृगपक्षिणाम् । पाशस्तु बन्धनग्रन्थिरवपातावटौ समौ ॥ ९३१
उन्माथः कूटयन्त्रं स्याद्विवर्णस्तु पृथग्जनः । इतरः प्राकृतो नीचः पामरो बर्बरश्च सः ॥ ९३२
[3]चण्डालेऽन्तावसाय्यन्तेवासिश्वपचपुक्कसाः । निषादप्लवमातङ्गदिवाकीर्तिजनंगमाः ॥ ९३३
पुलिन्दा नाहला निष्ट्याः शबरा वरुटा भटाः । माला भिल्लाः किराताश्च सर्वेऽपि म्लेच्छजातयः ॥ ९३४

इत्याचार्यहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां मर्त्यकाण्डस्तृतीयः ॥ ३ ॥

---

भूर्भूमिः पृथिवी पृथ्वी वसुधोर्वी वसुंधरा । धात्री धरित्री धरणी विश्वा विश्वंभरा धरा ॥ ९३५
क्षितिः क्षोणी क्षमानन्ता ज्या कुर्वसुमती मही । गौर्गोत्रा भूतधात्री क्ष्मा गन्धमाताचलावनिः ॥ ९३६
सर्वंसहा रत्नगर्भा जगती मेदिनी रसा । काश्यपी पर्वताधारा स्थिरेला रत्नबीजसूः[4] ॥ ९३७
विपुला सागराद्याग्रे[5] स्युर्नेमीमेखलाम्बराः । द्यावापृथिव्यौ तु द्यावाभूमी द्यावाक्षमे अपि ॥ ९३८
दिवस्पृथिव्यौ रोदस्यौ रोदसी रोदसी च ते । उर्वरा सर्वसस्या भूरिरिणं पुनरूषरम् ॥ ९३९
स्थलं स्थली मरुर्धन्वा क्षेत्राद्यप्रहतं खिलम् । मृन्मृत्तिका सा क्षारोषो मृत्सा मृत्स्ना च साशुभा॥९४०
रुमा लवणखानिः स्यात्सामुद्रं लवणं हि यत् । तदक्षीवं वशिरश्च सैन्धवं तु नदीभवम् ॥ ९४१
[6]माणिमन्थं शीतशिवं रौमकं तु रुमाभवम् । वसुकं वस्तकं तच्च विडपाक्ये तु कृत्रिमे ॥ ९४२
सौवर्चलेऽक्षं रुचकं दुर्गन्धं शूलनाशनम् । कृष्णे तु तत्र तिलकं यवक्षारो यवाग्रजः ॥ ९४३
यवनाजलः पाक्यश्च पाचनकस्तु टङ्कणः । मालतीतीरजो लोहश्लेषणो रसशोधनः ॥ ९४४
समास्तु स्वर्जिकाक्षारकापोतसुखवर्चिकाः । स्वर्जिस्तु स्वर्जिका सुघ्नी योगवाही सुवर्चिका ॥ ९४५
भरतान्यैरावतानि विदेहाश्च कुरून्विना । वर्षाणि कर्मभूम्यः स्युः शेषाणि फलभूमयः ॥ ९४६
वर्षं वर्षधराद्यङ्कं विषयस्तूपवर्तनम् । देशो जनपदो नीवृद्राष्ट्रं निर्गश्च मण्डलम् ॥ ९४७
आर्यावर्तो जन्मभूमिर्जिनचक्र्यर्धचक्रिणाम् । पुण्यभूराचारवेदी मध्यं विन्ध्यहिमागयोः ॥ ९४८
गङ्गायमुनयोर्मध्यमन्तर्वेदिः समस्थली । ब्रह्मावर्तः सरस्वत्या दृषद्वत्याश्च मध्यतः ॥ ९४९
ब्रह्मवेदिः कुरुक्षेत्रे पञ्चरामह्रदान्तरम् । धर्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि ॥ ९५०
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः स मध्यमः ॥ ९५१

---

१. लेपकोऽपि. २. खट्टिकोऽपि. ३. चाण्डालोऽपि. ४. सूशब्दो रत्नशब्देनाप्यन्वेति. ५. सागरशब्दस्याग्रे नेम्यादीनामन्वयः; यौगिकत्वात्—समुद्ररशना, समुद्रमेखला, समुद्रवसना, इत्यादयः. ६. माणिबन्धं माणिमन्तं च.

देशः प्राग्दक्षिणः प्राच्यो नदीं यावच्छरावतीम् ।पश्चिमोत्तरस्तूदीच्यः प्रत्यन्तो म्लेच्छमण्डलम् ९५२
पाण्डूदक्कृष्णतो भूमिः पाण्डूदक्कृष्णमृत्तिके । जेङ्गलो निर्जलोऽनूपोऽम्बुमान्कच्छस्तु तद्विधः ॥९५३
कुमुद्वान्कुमुदावासो वेतस्वान्भूरिवेतसः । नडप्रायो नडकीयो नड्वांश्च नड्वलश्च सः ॥ ९५४
शाद्वलः शादहरिते देशो नद्यम्बुजीवनः । स्यान्नदीमातृको देवमातृको वृष्टिजीवनः ॥ ९५५
प्राग्ज्योतिषाः कामरूपा मालवाः स्युरवन्तयः । त्रैपुरास्तु डाहलाः स्युश्चैद्यास्ते चेदयश्च ते ॥ ९५६
वङ्गास्तु हरिकेलीया अङ्गाश्चम्पोपलक्षिताः । साल्वास्तु कारकुक्षीया मरवस्तु दशेरकाः ॥ ९५७
जालंधरास्त्रिगर्ताः स्युस्तायिकास्तार्जिकाभिधाः । काश्मीरास्तु माधुमताः सारस्वता विकर्णिकाः ॥९५८
वाहीकाष्टक्कनामानो बाल्हीका बल्हिकाह्वयाः । तुरुष्कास्तु साखयः स्युः कारूषास्तु बृहद्गृहाः ॥९५९
लम्पाकास्तु मुरण्डाः स्युः सौवीरास्तु कुमालकाः । प्रत्यग्रथास्त्वहिच्छत्राः कीकटा मगधाह्वयाः ॥९६०
ओड्राः केरलपर्यायाः कुन्तला उपहालकाः । ग्रामस्तु वैसथः संनिप्रतिपर्युपतः परः ॥ ९६१
पटकस्तु तदर्धे स्यादाघाटस्तु घटोऽवधिः । अन्तोऽवसानं सीमा च मर्यादापि च सीमनि ॥ ९६२
ग्रामसीमा तूपशल्यं मालं ग्रामान्तराटवी । पर्यन्तभूः परिसरः स्यात्कर्मान्तस्तु कर्मभूः ॥ ९६३
गोस्थानं गोष्ठमेतत्तु गौष्ठीनं भूतपूर्वकम् । तदाशितंगवीनं स्याद्गावो यत्राशिताः पुरा ॥ ९६४
क्षेत्रे तु वप्रः केदारः सेतौ पाल्यालिसंबराः । क्षेत्रं तु शाकस्य शाकशाकटं शाकशाकिनम् ॥९६५

ब्रैहेयं शालेयं षष्टिक्यं कौद्रवीणमौद्गीने ।
व्रीह्यादीनां क्षेत्रेऽणव्यं स्यादाणवीनमणोः ॥ ९६६

भङ्ग्यं भाङ्गीनमौमीनमुम्यं यव्यं यवक्यवत् । तिल्यं तैलीनं माषीणं माष्यं भङ्गादिसंभवम् ॥ ९६७
सीत्यं हल्यं त्रिहल्यं तु त्रिसीत्यं त्रिगुणाकृतम् । तृतीयाकृतं द्विहल्याद्येवं शम्बाकृतं च तत् ॥९६८
बीजाकृतं तूप्तकृष्टं द्रौणिकाढकिपादयः । स्युर्द्रोणाढकवापादौ खलधानं पुनः खलम् ॥ ९६९
चूर्णे क्षोदोऽथ रजसि स्युर्धूलीपांसुरेणवः । लोष्टे लोष्टुर्दलिर्लेष्टुर्वल्मीकः कृमिपर्वतः ॥ ९७०
वम्रीकूटं वामलूरो नाकुः शक्रशिरश्च सः । नगरी पूः पुरी द्रङ्गः पैत्तनं पुटभेदनम् ॥ ९७१
निवेशनमधिष्ठानं स्थानीयं निगमोऽपि च । शाखापुरं तूपपुरं खेटः पुरार्धविस्तरः ॥ ९७२
स्कन्धावारो राजधानी कोट्टदुर्गे पुनः समे । गया पूर्गयराजर्षेः कान्यकुब्जं महोदयम् ॥ ९७३
कन्याकुब्जं गाधिपुरं कौशं कुशस्थलं च तत् । काशिर्वाराणसी वाराणसी शिवपुरी च सा ॥९७४
साकेतं कोशलायोध्या विदेहा मिथिला समे । त्रिपुरी चेदिनगरी कौशाम्बी वत्सपत्तनम् ॥ ९७५
उज्जयिनी स्याद्विशालावन्तीपुष्यकरण्डिनी । पाटलिपुत्रं कुसुमपुरं चम्पा तु मालिनी ॥ ९७६
लोमपादकर्णयोः पूर्देवीकोट उमावनम् । कोटीवर्षं बाणपुरं स्याच्छोणितपुरं च तत् ॥ ९७७
मधुरा तु मधूपघ्नं मधुराथ गैजाह्वयम् । स्याद्धास्तिनपुरं हस्तिनीपुरं हस्तिनापुरम् ॥ ९७८
तामलिप्तं दामलिप्तं तामलिप्ती तमालिनी । स्तम्बपूर्विष्णुगृहं च स्याद्विदर्भा तु कुण्डिनम् ॥ ९७९
द्वारवती द्वारिका स्यान्निषधा तु नलस्य पूः । प्राकारो वरणः साले चयो वप्रोऽस्य पीठभूः ॥ ९८०

---

१. भूमशब्दः पाण्ड्वादिभिरन्वेति; एवं मृत्तिकशब्दोऽपि. २. जाङ्गलोऽपि. ३. अत्र प्राग्ज्योतिष-मालव-चेदि-वङ्ग-अङ्ग-मगधाः प्राच्याः, मरवः साल्वाश्च प्रतीच्याः, जालंधर-तायिक-कश्मीर-वाहीक-बाल्हीक-तुरुष्क-कारूष-लम्पाक-सौवीर-प्रत्यग्रथा उदीच्याः, ओड्राः कुन्तलाश्च अपाच्याः इति. ४. 'वसथ'शब्दस्य समादितः परप्रयोगः. ५. पट्टनमपि. ६. 'पुर'शब्दस्य लोमपाद-कर्णाभ्यामन्वयः. ७. गजपुरं नागनगरम्. ८. कुण्डिनपुरम्; कुण्डिनापुरम्.

प्राकाराग्रं कपिशीर्षं क्षौमाट्टाट्टालकाः समाः । पूर्द्वारे गोपुरं रथ्याप्रतोलीविशिखाः समाः ॥ ९८१
परिकूटं हस्तिनखो नगरद्वारकूटके । मुखं निःसरणे वाटे प्राचीनावेष्टकौ वृतिः ॥ ९८२
पदव्येकपदी पद्या पद्धतिर्वर्त्म वर्तनी । अयनं सरणिर्मार्गोऽध्वा पन्था निगमः सृतिः ॥ ९८३
सत्पथे स्वतितः [1]पन्था अपन्था अपथं समे । व्यधो दुरध्वः कदध्वा विपथं कापथं तु सः ॥ ९८४
प्रान्तरं दूरशून्योऽध्वा कान्तारो वर्त्म दुर्गमम् । सुरङ्गा तु संधिला स्याद्गूढमार्गो भुवोऽन्तरे॥९८५
चतुष्पथे तु संस्थाने चतुष्कं त्रिपथे त्रिकम् । द्विपथं तु चारुपथो गजाद्यध्वा त्वसंकुलः ॥ ९८६
घण्टापथः संसरणं श्रीपथो राजवर्त्म च । उपनिष्क्रमणं चोपनिष्करं च महापथः ॥ ९८७
विपणिस्तु वणिग्मार्गः स्थानं तु पदमास्पदम् । श्लेषस्त्रिमार्ग्या शृङ्गाटं बहुमार्गी तु चत्वरम् ॥९८८
श्मशानं करवीरः स्यात्पितृप्रेताद्[2]वनं गृहम् । गेहभूर्वास्तु गेहे तु गृहं वेश्म निकेतनम् ॥ ९८९
मन्दिरं सदनं सद्म निकाय्यो भुवनं कुटः । आलयो निलयः शाला सभोदवसितं कुलम् ॥ ९९०
धिष्ण्यमावसथं स्थानं पस्त्यं संस्त्याय आश्रयः । ओको निवास आवासो वसतिः शरणं क्षयः॥९९१
[3]धामागारं निशान्तं च कुट्टिमं त्वस्य बद्धभूः । चतुःशालं संजवनं सौधं तु नृपमन्दिरम् ॥ ९९२
उपकारिको[4]पकार्या सिंहद्वारं प्रवेशनम् । [5]प्रासादो देवभूपानां हर्म्यं तु धनिनां गृहम् ॥ ९९३
मठावसथ्यावसथाः स्युश्छात्रव्रतिवेश्मनि । पर्णशालोटजश्चैत्यविहारो जिनसद्मनि ॥ ९९४
गर्भागारेऽपवरको वासौकः शयनास्पदम् । भाण्डागारं तु कोशः स्याच्चन्द्रशाला शिरोगृहम्॥९९५
कुप्यशाला तु संधानी कायमानं तृणौकसि । होत्रीयं तु हविर्गेहं प्राग्वंशः प्राग्घविर्गृहात् ॥ ९९६
आथर्वणं [6]शान्तिगृहमास्थानगृहमिन्द्रकम् । तैलिशालायन्त्रगृहमरिष्टं सूतिकागृहम् ॥ ९९७
सूदशाला रसवती पाकस्थानं महानसम् । हस्तिशाला तु चतुरं वाजिशाला तु मन्दुरा ॥ ९९८
संदानिनी तु गोशाला चित्रशाला तु जालिनी । कुम्भशाला पाकपुटी तन्तुशाला तु गर्तिका॥९९९
नापितशाला वपनी शिल्पा खरकुटी च सा । आवेशनं शिल्पिशाला सत्रशाला प्रतिश्रयः॥१०००
आश्रमस्तु मुनिस्थानमुपघ्नस्त्वन्तिकाश्रयः । प्रपा पानीयशाला स्याद्गञ्जा तु मदिरागृहम् ॥ १००१
पक्कणः शबरावासो घोषस्त्वाभीरपल्लिका । पुण्यशाला निषद्याट्टो हट्टो विपणिरापणः ॥ १००२
वेश्याश्रयः पुरं वेशो मण्डपस्तु जनाश्रयः । कुड्यं भित्तिस्तदेडूकमन्तर्निहितकीकसम् ॥ १००३
देवी वितर्दिरजिरं [7]प्राङ्गणं चत्वराङ्गने । वलजं प्रतिहारो द्वाद्वरेऽथ परिघोऽर्गला ॥ १००४
साल्पा त्वर्गलिका सूचिः कुञ्चिकायां तु कूचिका । साधारण्यकुटश्चासौ द्वारयन्त्रं तु तालकम्॥१००५
अस्योद्घाटनयन्त्रं तु ताल्यपि प्रतिताल्यपि । तिर्यग्द्वारोर्ध्वदारूत्तरङ्गं स्यादररं पुनः ॥ १००६
[8]कपाटोऽररिः कुवाटः पक्षद्वारं तु पक्षकः । प्रच्छन्नमन्तर्द्वारः स्याद्बहिर्द्वारं तु तोरणम् ॥ १००७
तोरणोर्ध्वे तु माङ्गल्यं दाम वन्दनमालिका । स्तम्भादेः स्यादधोदारौ शिला नासोर्ध्वदारुणि॥१००८
गोपानसी तु वलभीछादने वक्रदारुणि । गृहावग्रहणी देहल्युम्बरोदुम्बरोम्बुराः ॥ १००९
प्रघाणः प्रघणोलिन्दो बहिर्द्वारप्रकोष्ठके । कपोतपाली विटङ्कः पटलछदिषी समे ॥ १०१०
नीध्रं वलीकं तत्प्रान्त इन्द्रकोशस्तमङ्गकः । वलभीछदिराधारो नागदन्तास्तु दन्तकाः ॥ १०११
मत्तालम्बोऽपाश्रयः स्यात्प्रग्रीवो मत्तवारणे । वातायनो गवाक्षश्च जालकोऽथाम्रकोष्टकः ॥ १०१२

---

१. 'पथि'शब्दः स्वतिभ्यां परः. २. वन-गृहशब्दौ पितृ-प्रेतशब्दाभ्यां प्रत्येकमन्वेति. ३. धाममपि. ४. उपकार्यापि. ५. प्रसादनोऽपि. ६. शान्तीगृहमपि. ७. अङ्गनमपि. ८. कवाटमपि. ९. खटकिकापि.

कुसूलोऽस्त्रिस्तु कोणोणिः कोटिः पाल्यस्र इत्यपि । आरोहणं तु सोपानं निःश्रेणिस्त्वधिरोहणी॥१०१३
स्थूणा स्तम्भः शालभञ्जी पाञ्चालिका च पुत्रिका । काष्ठादिघटिता लेप्यमयी त्वञ्जलिकारिका॥१०१४
नन्द्यावर्तप्रभृतयो विच्छिन्दा आढ्यवेश्मनाम् । समुद्गः संपुटः पेटा स्यान्मञ्जूषाथ शोधनी॥१०१५
संमार्जनी बहुकरी वर्धनी च समूहनी । संकरावकरौ तुल्यावुदूखलमुलूखलम् ॥ १०१६
प्रस्फोटनं तु पवनमवघातस्तु कण्डनम् । कटः किलिञ्जो मुसलोऽथोग्रं कण्डोलकः पिटम् ॥१०१७
चालनी तितउः शूर्पं प्रस्फोटनमथान्तिका । चुल्ल्यश्मन्तकमुद्धानं स्यादधिश्रयणी च सा ॥ १०१८
स्थाल्युखा पिठरं कुण्डं चरुः कुम्भी घटः पुनः । कुटः कुम्भः करीरश्च कलशः कलसो निपः॥१०१९
हसन्यङ्गाराच्छकटीधानीपात्र्यो हसन्तिका । भ्राष्ट्रोऽम्बरीष ऋचीषमृजीषं पिष्टपाकभृत् ॥ १०२०
कम्बिर्दर्विः खजाकाथ स्यात्तर्दूर्दारुहस्तकः । वार्धान्यां तु गलन्त्यालूः कर्करी करकोऽथ सः॥१०२१
नालिकेरजः करङ्कस्तुल्यौ कटाहकर्परौ । मणिकोऽलिंजरो गर्गरीकलस्यौ तु मन्थनी ॥ १०२२
वैशाखः खजको मन्था मन्थानो मन्थदण्डकः । मन्थः क्षुब्धोऽस्य विष्कम्भो मञ्जीरः कुटरोऽपि च ॥
शालाजिरो वर्धमानः शरावः कौशिका पुनः । मल्लिका चषकः कंसः पारी स्यात्पानभाजनम्॥१०२४
कुतूश्चर्मस्नेहपात्रं कुतुपं तु तदल्पकम् । दृतिः खल्लश्चर्ममयी त्वालूः करकपात्रिका ॥ १०२५
सर्वमावपनं भाण्डं पात्रामत्रे तु भाजनम् । तद्विशालं पुनः स्थालं स्यात्पिधानमुदञ्चनम् ॥ १०२६

शैलोऽद्रिः शिखरी शिलोच्चयगिरी गोत्रोऽचलः सानुमा-
न्ग्रावः पर्वतभूध्रभूधरधराहार्या नगोऽथोदयः ।
पूर्वाद्रिश्चरमाद्रिरस्त उदगद्रिस्त्वद्रिराण्मेनका-
प्राणेशो हिमवान्हिमालयहिमप्रस्थौ भवानीगुरुः ॥ १०२७

हिरण्यनाभो मैनाकः सुनाभश्च तदात्मजः । रजताद्रिस्तु कैलासोऽष्टापदः स्फटिकाचलः ॥ १०२८
क्रौञ्चः क्रुञ्चोऽथ मलय आषाढो दक्षिणाचलः । स्यान्माल्यवान्प्रस्रवणो विन्ध्यस्तु जलवालकः॥१०२९
शत्रुंजयो विमलाद्रिरिन्द्रकीलस्तु मन्दरः । सुवेलः स्यात्त्रिमुकुटस्त्रिकूटस्त्रिककुच्च सः ॥ १०३०
उज्जयन्तो रैवतकः सुदारुः पारियात्रिकः । लोकालोकश्चक्रवालोऽथ मेरुः कर्णिकाचलः ॥ १०३१
रत्नसानुः सुमेरुः स्वः स्वर्गिकाञ्चनतो गिरिः । शृङ्गं तु शिखरं कूटं प्रपातस्त्वतटो भृगुः ॥ १०३२
मेखला मध्यभागोऽद्रेर्नितम्बः कटकश्च सः । दरी स्यात्कन्दरोऽखातबिले तु गह्वरे गुहा ॥ १०३३
द्रोणी तु शैलयोः संधिः पादाः पर्यन्तपर्वताः । दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ॥ १०३४
अधित्यकोर्ध्वभूमिः स्यादधोभूमिरुपत्यका । स्नुः प्रस्थः सानुरश्मा तु पाषाणः प्रस्तरो दृषत् ॥१०३५
ग्रावा शिलोपलो गण्डशैलाः स्थूलोपलाश्च्युताः । स्यादाकरः खनिः खानिर्गञ्जा धातुस्तु गैरिकम्॥१०३६
शुक्लधातौ पाकशुक्ला कठिनी खटिनी खटी । लोहं कालायसं शस्त्रं पिण्डं पारशवं घनम् ॥ १०३७
गिरिसारं शिलासारं तीक्ष्णकृष्णामिषे अयः । सिंहानधूर्तमण्डूरसरणान्यस्य किट्टके ॥ १०३८
सर्वं च तैजसं लोहं विकारस्त्वयसः कुशी । ताम्रं म्लेच्छमुखं शुल्वं रक्तं द्व्यष्टमुदुम्बरम् ॥१०३९
म्लेच्छशाबरभेदाख्यं मर्कटास्यं कनीयसम् । ब्रह्मवर्धनं वरिष्ठं सीसं तु सीसपत्रकम् ॥ १०४०
नागं गण्डूपदभवं वप्रं सिन्दूरकारणम् । वर्ध्रं स्वर्णारियोगेष्टे यवनेष्टं सुवर्णकम् ॥ १०४१

---

१. कुश्लोऽपि. २. पवन्यापि. ३. अयोनिरपि. ४. अङ्गारशब्दः शकट्यादिनान्वेति. ५ अगोऽपि. ६. 'गिरि'-शब्दः स्वरादिनान्वेति.

वङ्गं त्रपुः स्वर्णजनागजीवने मृद्वङ्गरङ्गे गुरुपत्रपिच्चटे ।
स्याच्चक्रसंज्ञं तमरं च नागजं कस्तीरमालीनकसिंहले अपि ॥ १०४२

स्याद्रूप्यं कलधौततारजतश्वेतानि दुर्वर्णकं
खर्जूरं च हिमांशुहंसकुमुदाभिख्यं सुवर्णं पुनः ।
स्वर्णं हेमहिरण्यहाटकवसून्यष्टापदं काञ्चनं
कल्याणं कनकं महारजतरैगाङ्गेयरुक्माण्यपि ॥ १०४३

कलधौतलोहोत्तमवह्निबीजान्यपि गारुडं गैरिकजातरूपे ।
तपनीयचामीकरचन्द्रभर्मार्जुननिष्ककार्तस्वरकर्बुराणि ॥ १०४४

जाम्बूनदं शातकुम्भं रजतं भूरि भूत्तमम् । हिरण्यकोशाकुप्यानि हेम्नि रूप्ये कृताकृते ॥ १०४५
कुप्यं तु तद्वयादन्यद्रूप्यं तद्वयमाहतम् । अलंकारसुवर्णं तु शृङ्गी कनकमायुधम् ॥ १०४६
रजतं च सुवर्णं च संश्लिष्टे घनगोलकः । पित्तलारेऽथारकूटः कपिलोहं सुवर्णकम् ॥ १०४७
रिरी रीरी च रीतिश्च पीतलोहं सुलोहकम् । ब्राह्मी तु राज्ञी कपिला ब्रह्मरीतिर्महेश्वरी ॥ १०४८
कांस्ये विद्युत्प्रियं घोषं प्रकाशं वङ्गशुल्वजम् । घण्टाशब्दमसुराह्वं रवणं लोहजं मलम् ॥ १०४९
सौराष्ट्रके पञ्चलोहं वर्तलोहं तु वर्तकम् । पारदः पारतः सूतो हरबीजं रसश्चलः ॥ १०५०
अभ्रकं स्वच्छपत्रं खं मेघाख्यं गिरिजामले । स्रोतोञ्जनं तु कापोतं सौवीरं कृष्णयामुने ॥ १०५१
अथ तुत्थं शिखिग्रीवं तुत्थाञ्जनमयूरके । मूषातुत्थं कांस्यनीलं हेमतारं वितुन्नकम् ॥ १०५२
स्यात्तु कर्परिकातुत्थममृतासङ्गमञ्जनम् । रसगर्भं तार्क्ष्यशैलं तुत्थे दार्वीरसोद्भवे ॥ १०५३
पुष्पाञ्जनं रीतिपुष्पं पौष्पकं पुष्पकेतु च । माक्षिकं तु कदम्बः स्याच्चक्रनामाजेनामके ॥ १०५४
ताप्ये नदीजः कामारिस्तारारिर्विटमाक्षिकः । सौराष्ट्री पार्वती काक्षी कालिका पर्पटी सती॥१०५५
आढकी तुवरी कंसोद्भवा काक्षी मृदाह्वया । कासीसं धातुकासीसं खेचरं धातुशेखरम् ॥ १०५६
द्वितीयं पुष्पकासीसं कंसकं नयनौषधम् । गन्धाश्मा शुल्वपामाकुष्ठारिर्गन्धिकगन्धकौ ॥ १०५७
सौगन्धिकः शूकपुच्छो हरितालं तु पिञ्जरम् । विडालकं विस्रगन्धि खर्जूरं वंशपत्रकम् ॥ १०५८
आलपीतनतालानि गोर्दन्तं नटमण्डनम् । वङ्गारिर्लोमहृच्चाथ मनोगुप्ता मनःशिला ॥ १०५९
करवीरा नागमाता रोचनी रसनेत्रिका । नैपाली कुनटी गोला मनोह्वा नागजिह्विका ॥ १०६०
सिन्दूरं नागजं नागं रक्तं शृङ्गारभूषणम् । चीनपिष्टं हंसपादकुरुविन्दे तु हिङ्गुलः ॥ १०६१
शिलाजतु स्याद्गिरिजमर्थ्यं गैरेयमश्मजम् । क्षारः काचः कुलाली तु स्याच्चक्षुष्या कुलत्थिका॥१०६२
बोलो गन्धरसः प्राणः पिण्डो गोपरसः शशः । रत्नं वसु मणिस्तत्र वैदूर्यं बालवायजम् ॥ १०६३
मरकतं त्वश्मगर्भं गारुत्मतं हरिन्मणिः । पद्मरागे लोहितकलक्ष्मीपुष्पारुणोपलाः ॥ १०६४
नीलमणिस्त्विन्द्रनीलः सूचीमुखं तु हीरकः । वरारकं रत्नमुख्यं वज्रपर्यायनाम च ॥ १०६५
विराटजो राजपट्टो राजावर्तोऽथ विद्रुमः । रक्ताङ्गो रक्तकन्दश्च प्रवालं हेमकन्दलः ॥ १०६६
सूर्यकान्तः सूर्यमणिः सूर्याश्मा दहनोपलः । चन्द्रकान्तश्चन्द्रमणिश्चान्द्रश्चन्द्रोपलश्च सः ॥ १०६७

१. चपलोऽपि. २. वैष्णवोऽपि. ३. अरिशब्दः शुल्वादिभिरन्वेति. ४. गोपित्तमपि. ५. नेपाल्यपि.
६. शृङ्गारमपि. ७. हिङ्गुलुरपि. ८. गोपो रसोऽपि. ९. शोणरत्नमपि.

क्षीरतैलस्फटिकाभ्यामन्यौ खस्फटिकाविमौ । शुक्तिजं मौक्तिकं मुक्ता मुक्ताफलं रसोद्भवम् ॥ १०६८

इति पृथ्वीकायः ।

---

नीरं वारि जलं दकं कमुदकं पानीयमम्भः कुशं
तोयं जीवनजीवनीयसलिलार्णांस्यम्बु वाः शंबरम् ।
क्षीरं पुष्करमेघपुष्पकमलान्यापः पयःपाथसी
कीलालं भुवनं वनं घनरसो यादोनिवासोऽमृतम् ॥ १०६९

कुलीनसं कबन्धं च प्राणदं सर्वतोमुखम् । अस्थाथास्थागमस्ताघमगाधं चातलस्पृशि ॥ १०७०

निम्नं गभीरं गम्भीरमुत्तानं तद्विलक्षणम् । अच्छं प्रसन्नेऽनच्छं स्यादाविलं कलुषं च तत् ॥ १०७१

अवश्यायस्तु तुहिनं प्रालेयं मिहिका हिमम् । स्यान्नीहारस्तुषारश्च हिमानी तु महद्धिमम् ॥ १०७२

पारावारः सागरोऽवारपारोऽकूपारोदध्यर्णवा वीचिमाली ।
यादः स्रोतोवार्नदीशः सरस्वान्सिन्धूदन्वन्तौ मितद्रुः समुद्रः ॥ १०७३

आकरो मकराद्रत्नाज्जलान्निधिधिराशयः । द्वीपान्तरा असंख्यास्ते सप्तैवेति तु लौकिकाः ॥ १०७४

लवणक्षीरदध्याज्यसुरेक्षुस्वादुवारयः । तरङ्गे भङ्गवीच्यूर्म्युत्कलिका महति त्विह ॥ १०७५

लहर्युल्लोलकल्लोला आवर्तः पयसां भ्रमः । तालूरो वोलकश्चासौ बेला स्याद्वृद्धिरम्भसः ॥ १०७६

डिण्डीरोऽब्धिकफः फेनो बुद्बुदस्थासकौ समौ । मर्यादा कूलभूः कूलं प्रपातः कच्छरोधसी ॥ १०७७

तटं तीरं प्रतीरं च पुलिनं तज्जलोज्झितम् । सैकतं चान्तरीपं तु द्वीपमन्तर्जले तटम् ॥ १०७८

तत्परं पारमवारं त्ववार्क्पात्रं तदन्तरम् । नदी हिरण्यवर्णा स्याद्रोधोवक्रा तरङ्गिणी ॥ १०७९

सिन्धुः शैवलिनी वहा च ह्रदिनी स्रोतस्विनी निम्नगा
स्रोतो निर्झरिणी सरिच्च तटिनी कूलंकषा वाहिनी ।
कर्षूर्द्वीपवती समुद्रदयिताधुन्यौ स्रवन्तीसर-
स्वत्यौ पर्वतजापगा जलधिगा कुल्या च जम्बालिनी ॥ १०८०

गङ्गात्रिपथगा भागीरथी त्रिदशदीर्घिका । त्रिस्रोता जाह्नवी मन्दाकिनी भीष्मकुमारसूः ॥ १०८१

सरिद्वरा विष्णुपदी सिद्धस्वःस्वर्गिखापगा । ऋषिकुल्या हैमवती स्वर्वापी हरशेखरा ॥ १०८२

यमुना यमभगिनी कालिन्दी सूर्यजा यमी । रेवेन्दुजा पूर्वगङ्गा नर्मदा मेकलाद्रिजा ॥ १०८३

गोदा गोदावरी तापी तपनी तपनात्मजा । शुतुद्रिस्तु शतद्रुः स्यात्कावेरी त्वर्धजाह्नवी ॥ १०८४

करतोया सदानीरा चन्द्रभागा तु चन्द्रका । वासिष्ठी गोमती तुल्ये ब्रह्मपुत्री सरस्वती ॥ १०८५

विपाड्विपाशार्जुनी तु बाहुदा सैतवाहिनी । वैतरणी नरकस्था स्रोतोम्भःसरणं स्वतः ॥ १०८६

प्रवाहः पुनरोघः स्याद्वेणी धारा रयश्च सः । घट्टस्तीर्थोवतारेऽम्बुवृद्धौ पूरः प्लवश्च सः ॥ १०८७

पुटभेदास्तु वक्राणि भ्रमास्तु जलनिर्गमाः । परीवाहा जलोच्छ्वासाः कूपकास्तु विदारकाः ॥ १०८८

---

१. कं बन्धम् इति द्वे नामनी इत्येके. २. धूममहिषी, धूमिकाधूमयोऽपि. ३. ईशपदं यादःप्रभृतिभिरन्वेति, यौगिकत्वात्—यादःपतिरित्यादयः. ४. आकरशब्दो रत्नान्ताभ्यामन्वेति, यौगिकत्वात्—मकरालयो रत्नराशिरपि. ५. जलशब्दो निध्यादिभिरन्वेति, यौगिकत्वात्—वारिनिधिः वारिराशिरित्यादयः. ६. सूपदं भीष्मेणाप्यन्वेति. ७. आपगापदं सिद्धपदेनाप्यन्वेति. ८. कलिन्दतनयापि. ९. चान्द्रभागा च. १०. चक्राणि च.

प्रणाली जलमार्गोऽथ पानं कुल्या च सारणिः । सिकता वालुका विन्दौ पृषत्पृषतविप्रुषः ॥१०८९
जम्बालेर्चिक्किलौ पङ्कः कर्दमश्च निषद्वरः । शादो हिरण्यबाहुस्तु शोणो नदे पुनर्वहः ॥ १०९०
भिद्य उध्यः सरस्वांश्च द्रहोऽगाधजलो ह्रदः । कूपः स्यादुदपानोऽन्धुः प्रहिर्नेमी तु तन्त्रिका ॥१०९१
नान्दीमुखो नान्दीपटो वीनाहो मुखबन्धने । आहावस्तु निपानं स्यादुपकूपेऽथ दीर्घिका ॥ १०९२
वापी स्यात्क्षुद्रकूपे तु चूरी चूण्ढी च चूतकः । उद्घाटकं घटीयन्त्रं पादावर्तोऽरघट्टकः ॥ १०९३
अखातं तु देवखातं पुष्करिण्यां तु खातकम् । पद्माकरस्तडागः स्यात्कासारः सरसी सरः ॥१०९४
वेशन्तः पल्वलोऽल्पं तैत्परिखा खेयखातके । स्यादालवालमावालमावापः स्थानकं च सः ॥१०९५
आधारस्त्वम्भसां बन्धो निर्झरस्तु झरः सरिः । उत्सः स्रवः प्रस्रवणं जलाधारा जलाशयाः ॥१०९६

इति जलकायः ।

---

वह्निर्बृहद्भानुहिरण्यरेतसौ धनंजयो हव्यहविर्हुताशनः ।
कृपीटयोनिर्दमुना विरोचनाशुशुक्षणी छागरथस्तनूनपात् ॥ १०९७
कृशानुवैश्वानरवीतिहोत्रा वृषाकपिः पावकचित्रभानू ।
अप्पित्तधूमध्वजकृष्णवर्त्मार्चिष्मच्छमीगर्भतमोघ्नशुक्राः ॥ १०९८
शोचिष्केशः शुचिहुतवहोषर्बुधाः सप्तमन्त्र-
ज्वालाजिह्वौ ज्वलनशिखिनौ जागृविर्जातवेदाः ।
र्बर्हिः शुष्मानिलसखवसू रोहिताश्वाश्रयाशौ
बर्हिर्ज्योतिर्दहनबहुलौ हव्यवाहोऽनलोऽग्निः ॥ १०९९
विभावसुः सप्तोदर्चिः स्वाहाग्नेयी प्रियास्य च । और्वः संवर्तकोऽब्ध्यग्निर्वाडवो वडवामुखः ॥११००
दवो दावो वनवह्निर्मेघवह्निरिरंमदः । छागणस्तु करीषाग्निः कुकूलस्तु तुषानलः ॥ ११०१
संतापः संज्वरो बाष्प ऊष्मा जिह्वाः स्युरर्चिषः । हेतिः कीला शिखा ज्वालार्चिर्झलका महत्यपि ॥
स्फुलिङ्गोऽग्निकणो लातज्वालोल्कालातमुल्मुकम् । धूमः स्याद्वायुवाहोऽग्निवाहो दहनकेतनम् ॥११०३
अम्भःसूः करमालश्च स्तरीर्जीमूतवाह्यपि । तडिदैरावती विद्युच्चलाशम्पाचिरप्रभा ॥ ११०४
आकालिकी शतह्रदा चञ्चला चपलाशनिः । सौदामनीक्षणिका च ह्रादिनी जलबालिका ॥ ११०५

इत्यग्निकायः ।

---

वायुः समीरसमिरौ पवनाशुगौ नभःश्वासो नभस्वदनलश्वसनाः समीरणः ।
वातोऽहिकान्तपवमानमरुत्प्रकम्पनाः कम्पाङ्कर्नित्यगतिर्गन्धवहप्रभञ्जनाः ॥ ११०६
मातरिश्वा जगत्प्राणः पृषदश्वो महाबलः । मारुतः स्पर्शनो दैत्यदेवो झञ्झा स वृष्टियुक् ॥ ११०७
प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचरः । अपानपवनो मन्यापृष्ठपृष्टान्तपार्ष्णिगः ॥ ११०८
समानः संधिहृन्नाभिषूदानो हृच्छिरोन्तरे । सर्वत्वग्वृत्तिको व्यान इत्यङ्गे पञ्च वायवः ॥ ११०९

इति वायुकायः ।

---

१. चिरकल्लोऽपि. २. उद्घाटनमपि, उद्घातनमपि. ३. तल्लमपि अशनशब्दो हव्याद्यैरन्वेति, यौगिकत्वात्— हव्यभुक् इत्यादयः. ४. दमूना अपि. ५. जिह्वशब्दः सप्तादिभिरन्वेति. ६. व्यस्तं समस्तं च. ७. क्षणप्रभा च. ८. सदागतिरपि. ९. गन्धवाहोऽपि.

अरण्यमटवी सत्रं वार्क्षं च गहनं झषः । कान्तारं विपिनं कक्षः स्यात्षण्डं काननं वनम् ॥११९०
दवो दावः प्रस्तारस्तु तृणाटव्यां झषोऽपि च । अपोपाभ्यां वनं बेलमारामः कृत्रिमे वने ॥ ११११
निष्कुटस्तु गृहारामो वाह्यारामस्तु पौरकः । आक्रीडः पुनरुद्यानं राज्ञां त्वन्तःपुरोचितम् ॥१११२
तदेव प्रमदवनममात्यादेस्तु निष्कुटे । वाटी पुष्पाद्वृक्षाच्चासौ क्षुद्रारामः प्रसीदिका ॥ १११३

वृक्षोऽगः शिखरी च शाखिफलदावद्रिर्हरिद्रुर्द्रुमो
जीर्णो द्रुर्विटपी कुठः क्षितिरुहः कारस्करो विष्टरः ।
नन्द्यावर्तकरालिकौ तरुवसू पर्णी पुलाकर्यङ्घ्रिपः
सालानोकहगच्छपादपनगा रूक्षागमौ पुष्पदः ॥ १११४

कुञ्जनिकुञ्जकुडङ्गाः स्थाने वृक्षैर्वृतान्तरे । पुष्पैस्तु फलवान्वृक्षो वानस्पत्यो विना तु तैः ॥ १११५
फलवान्वनस्पतिः स्यात्फलावन्ध्यः फलेग्रहिः । फलबन्ध्यस्त्ववकेशी फलवान्फलिनः फली ॥१११६
औषधिः स्यादोषधिस्तु फलपाकावसानिका । क्षुपो ह्रस्वशिफाशाखः प्रततिर्व्रततिर्लता ॥ १११७
वल्लयस्यां तु प्रतानिन्यां गुल्मिन्युपलवीरुधः । स्यात्प्ररोहोऽङ्कुरोऽङ्कूरो रोहश्च स तु पर्वणः ॥१११८
समुत्थितः स्याद्वलिशं शिखाशाखालताः समाः । साला शाला स्कन्धशाखा स्कन्धः प्रकाण्डमस्तके॥
मूलाच्छाखावधिर्गण्डिः प्रकाण्डोऽथ जटाशिफा । प्रकाण्डरहिते स्तम्बो विटपो गुल्म इत्यपि ११२०
शिरोनामाग्रं शिखरं मूलं बुध्नोऽङ्घ्रिनाम च । सारो मज्जि त्वचि च्छल्ली चोचं वल्कं च वल्कलम् ॥११२१
स्थाणौ तु ध्रुवकः शङ्कुः काष्ठे दलिकदारुणी । निष्कुहः कोटरो मञ्जामञ्जरिर्वल्लरिश्च सा ॥ ११२२
पत्रं पलाशं छदनं बर्हं पर्णं छदं दलम् । नवे तस्मिन्किसलयं किसलं पल्लवोऽत्र तु ॥ ११२३
नवे प्रबालोऽस्य कोशी शुङ्गा माढिर्दलस्नसा । विस्तारविटपौ तुल्यौ प्रसूनं कुसुमं सुमम् ॥ ११२४
पुष्पं सूनं सुमनसः प्रसवश्च मणीवकम् । जालकक्षारकौ तुल्यौ कलिकायां तु कोरकः ॥ ११२५
कुड्मले मुकुलं गुच्छे गुच्छस्तबकगुत्सकाः । गुलुञ्छोऽथ रजः पौष्पं परागोऽथ रसो मधु ॥११२६
मकरन्दो मरन्दश्च वृन्तं प्रसवबन्धनम् । प्रबुद्धोज्जृम्भफुल्लानि व्याकोशं विकचं स्मितम् ॥११२७
उन्मिषितं विकसितं दलितं स्फुटितं स्फुटम् । प्रफुल्लोत्फुल्लसंफुल्लोच्छ्वसितानि विजृम्भितम् ॥११२८
स्मेरं विनिद्रमुन्निद्रविमुद्रहसितानि च । संकुचितं तु निद्राणं मीलितं मुद्रितं च तत् ॥ ११२९
फलं तु सस्यं तच्छुष्कं वानमामं शलाटु च । ग्रन्थिः पर्व परुर्बीजकोशी शिम्बा शमी शिमिः ११३०
शिम्बिश्च पिप्पलोऽश्वत्थः श्रीवृक्षः कुञ्जराशनः । कृष्णावासो बोधितरुः प्लक्षस्तु पर्कटी जटी॥११३१
न्यग्रोधस्तु बहुपात्स्याद्वटो वैश्रवणालयः । उदुम्बरो जन्तुफलो मशकी हेमदुग्धकः ॥ ११३२
काकोन्दुम्बरिका फल्गुर्मलयुर्जघनेफला । आम्रश्चूतः सहकारः सप्तपर्णस्त्वयुक्छदः ॥ ११३३
शिग्रुः शोभाञ्जनोक्षीवतीक्ष्णगन्धकमोचकाः । श्वेतेऽत्र श्वेतमरिचः पुंनागः सुरपर्णिका ॥ ११३४
बकुलः केसरोऽशोकः कंकेलिः ककुभोऽर्जुनः । मालूरः श्रीफलो बिल्वः किंकिरातः कुरण्टकः ११३५
त्रिपत्रकः पलाशः स्यात्किंशुको ब्रह्मपादपः । तृणराजस्तलस्तालो रम्भा मोचा कदल्यपि ॥ ११३६
करवीरो हयमारः कुटजो गिरिमल्लिका । विदुलो वेतसः शीतो वानीरो वञ्जुलो रथः ॥ ११३७
कर्कन्धुः कुवली कोलिर्बदर्यथ हलिप्रियः । नीपः कदम्बः सालस्तु सर्जोरिष्टस्तु फेनिलः ॥ ११३८

१. वनशब्दः अपोपाभ्यामन्वेति. २. वाटीशब्दः पुष्पवृक्षाभ्यामन्वेति. ३. यौगिकत्वात्—कुजमहीरुहादयः. ४. चरणपोऽपि. ५. त्वचापि. ६. माकन्दोऽपि. ७. कुरुण्टकोऽपि; कुरुण्डक इत्यन्ये. ८. कर्कन्धूरपि.

निम्बोऽरिष्टः पिचुमन्दः समौ पिचुलझावुकौ । कर्पासस्तु बादरः स्यात्पिचव्यस्तूलकं पिचुः॥११३९
आरग्वधः कृतमाले वृषो वा[1]साट[2]रूषके । करञ्जस्तु नक्तमालः स्नुहिर्वज्रो महातरुः ॥ ११४०
महाकालस्तु किंपाके मन्दारः पारिभद्रके । मधूकस्तु मधुष्ठीलो गुडपुष्पो मधुद्रुमः ॥ ११४१
पीलुः सिनो गुडफलो गुग्गुलुस्तु पलंकषः । राजादनः पि[3]याल: स्यात्तिनिशस्तु रथद्रुमः ॥ ११४२
नागरङ्गस्तु ना[4]रङ्ग इङ्गुदी तापसद्रुमः । काश्मीरी भद्रपर्णी श्रीपर्ण्यम्लिका तु तिन्तिडी ॥ ११४३
शेलुः श्लेष्मान्तकः पीतसालस्तु प्रियकोऽसनः । पाटलिः पाटला भूर्जो बहुत्वक्को मृदुच्छदः॥११४४
द्रुमोत्पलः कर्णिकारे निचुले हिज्जलेऽज्जलौ । धात्री शिवा चामलकी कलिरक्षो वि[5]भीतकः॥११४५
हरीतक्यभया पथ्या त्रिफला तत्फलत्रयम् । ता[6]पिंछस्तु तमालः स्याच्चम्पको हेमपुष्पकः ॥ ११४६
निर्गुण्डी सिन्दुवारेऽतिमुक्तके माधवीलता । वासन्ती चौड्रपुष्पं तु ज[7]पा जातिस्तु मालती ॥११४७
मल्लिका स्याद्विचकिलः सप्तला नवमालिका । मागधी यूथिका सा तु पीता स्याद्धेमपुष्पिका ॥११४८
प्रियङ्गुः फलिनी श्यामा बन्धूको बन्धुजीवकः । करुणे मल्लिकापुष्पो जम्बीरे जम्भजम्भलौ॥११४९
मातुलुङ्गो बीजपूरः करीरक्रकरौ समौ । पञ्चाङ्गुलः स्यादेरण्डे धातक्यां धातुपुष्पिका ॥ ११५०
कपिकच्छूरात्मगुप्ता धत्तूरः कनकाह्वयः । कपित्थस्तु दधिफलो नालिकेरस्तु लाङ्गली ॥ ११५१
आम्रातको वर्षपाकी केतकः क्रकचच्छदः । कोविदारे युगपत्रः शल्लकी तु गजप्रिया ॥ ११५२
वंशो वेणुर्यवफलस्त्वचिसारस्तृणध्वजः । मस्करः शतपर्वा च स्वनवान्स तु कीचकः ॥ ११५३
तुकाक्षीरी वंशक्षीरी त्वक्क्षीरी वंशरोचना । पूगे क्रमुकगूवाकौ तस्योद्वेगं पुनः फलम् ॥ ११५४
ताम्बूलवल्ली ताम्बूली नागपर्यायवल्ल्यपि । तुम्ब्यलाबूः कृष्णला तु गुञ्जा द्राक्षा तु गोस्तनी ॥११५५
मृद्वीका हारहूरा च गोक्षुरस्तु त्रिकण्टकः । श्वदंष्ट्रा स्थलशृङ्गाटो गिरिकर्ण्यपराजिता ॥ ११५६
व्याघ्री निर्दिग्धिका कण्टकारिका स्यादथामृता । वत्सादनी गुडूची च विशाला त्विन्द्रवारुणी११५७
उशीरं वीरणीमूले ह्रीवेरे वालकं जलम् । प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ॥ ११५८
लट्वायां महारजनं कुसुम्भं कमलोत्तरम् । लोध्रे तु गालवो रोध्रतिल्वशावरमार्जनाः ॥ ११५९
मृणालिनी पुटकिनी नलिनी पङ्कजिन्यपि । कमलं नलिनं पद्ममरविन्दं कुशेशयम् ॥ ११६०
परं शतसहस्राभ्यां पत्रं राजीवपुष्करे । बिसप्रसूनं नालीकं तामरसं महोत्पलम् ॥ ११६१
तज्जलात्सरसः पङ्कात्परे रु[8]हजन्मजाः । पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ॥ ११६२
रक्तोत्पलं कोकनदं कैरविण्यां कु[9]मुद्वती । उत्पलं स्यात्कुवलयं कुवेलं कुवलं कुवम् ॥ ११६३
श्वेते तु तत्र कु[10]मुदं कैरवं गर्दभाह्वयम् । नीले तु स्यादिन्दीवरं हल्लकं रक्तसंध्यके ॥ ११६४
सौगन्धिकं तु कह्लारं बीजकोशो वराटकः । कर्णिका पद्मनालं तु मृणालं तन्तुलं बिसम् ॥ ११६५
किंजल्कं केसरं संवर्तिका तु स्यान्नवं दलम् । करहाटः शिफा च स्यात्कन्दे सलिलजन्मनाम्॥११६६
उत्पलानां तु शालूकं नील्यां शैवालशेवले । शेवालं शैवलं शेपालं ज[11]लाच्छूकनीलिके ॥ ११६७
धान्यं तु सस्यं सीत्यं च व्रीहिः स्तम्बकरिश्च तत् । आशुः स्यात्पाटलो व्रीहिर्गर्भपाकी तु षष्ठिकः॥
शालयः कलमाद्याः स्युः कलमस्तु कलामकः । लोहितो रक्तशालिः स्यान्महाशालिः सुगन्धिकः११६९

---

१. वाशा च. २. अटरूषोऽपि. ३. प्रियालोऽपि. ४. नार्यङ्गोऽपि. ५. विभेदकोऽपि. ६. तापिञ्छोऽपि. ७. जवापि. ८. रुट्प्रभृतयो जलादिभ्योऽनुयन्ति, यौगिकत्वात्—वारिजसरसीरुहादयः. ९. कुमुदिन्यपि. १०. कुमुत् अपि. ११. जलशब्दस्य शूकादिनान्वयः.

यवो हयप्रियस्तीक्ष्णशूकस्तोक्मस्त्वसौ हरित् । मङ्गल्यको मसूरः स्यात्कलायस्तु सतीनकः[1] ॥११७०
हरेणुः खण्डिकश्चाथ चणको हरिमन्थकः । माषस्तु मदनो नन्दी वृष्यो बीजवरो बली ॥ ११७१
मुद्गस्तु प्रथनो लोभ्यो वलाटो हरितो हरित् । पीतेऽस्मिन्वसुखण्डीरप्रवेलजयशारदाः ॥ ११७२
कृष्णे प्रवरवासन्तहरिमन्थजशिम्बिकाः । वनमुद्गे तुवरकनिगूढककुलीनकाः ॥ ११७३
खण्डी च राजमुद्गे तु मकुष्ठकमयुष्ठकौ । गोधूमे सुमनो वल्ले निष्पावः सितशिम्बिकः ॥ ११७४
कुलत्थस्तु कालवृन्तस्ताम्रवृन्ता कुलत्थिका । आढकी तुवरी वर्णा स्यात्कुलमाषस्तु यावकः ॥११७५
नीवारस्तु वनव्रीहिः शामाकश्यामकौ समौ । कङ्गुस्तु कङ्गुनी कङ्गुः प्रियङ्गुः पीततण्डुला ॥ ११७६
सा कृष्णा मधुका रक्ता शौधिका मुशटी सिता । पीता माधव्यथोद्दालः कोद्रवः कोरदूषकः॥११७७
चीनकस्तु काककङ्गुर्यवनालस्तु योऽनलः । जूर्णाह्वयो देवधान्यं जोन्नाला बीजपुष्पिका ॥ ११७८
शणं भङ्गा मातुलानी स्यादुमा तु क्षुमातसी । गवेधुका गवेधुः स्याज्जर्तिलोऽरण्यजस्तिलः ॥११७९
षण्डतिले तिलपिञ्जस्तिलपेजोऽथ सर्षपः । कदम्बकस्तन्तुभोऽथ सिद्धार्थः श्वेतसर्षपः ॥ ११८०
माषादयः शमीधान्यं शूकधान्यं यवादयः । स्यात्सस्यशूकं किंशारुः कैणिशं[2] सस्यशीर्षकम्॥११८१
स्तम्बस्तु गुच्छो धान्यादेर्नालं काण्डोऽफलस्तु सः । पलः पलालो धान्यत्वक्तुषो बुसे कडंगरः ॥
धान्यमावसितं रिद्धं तत्पूतं निर्बुसीकृतम् । मूलपत्रकरीराग्रफलकाण्डाविरूढकाः ॥ ११८३
त्वक्पुष्पं कवकं शाकं दशधा शिग्रुकं च तत् । तण्डुलीयस्तण्डुलेरो मेघनादोऽल्पमारिषः ॥ ११८४
भिम्बी रक्तफला पीलुपर्णी स्यात्तुण्डिकेरिका । जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा॥११८५
वास्तुकं तु क्षारपत्रं पालङ्क्यां मधुसूदनी । रसोनो लसुनोऽरिष्टो म्लेच्छकन्दो महौषधम् ॥११८६
महाकन्दो रसोनोऽन्यो गृञ्जनो दीर्घपत्रकः । भृङ्गराजो भृङ्गरजो मार्कवः केशरञ्जनः ॥ ११८७
काकमाची वायसी स्यात्कारिवेल्लः कठिल्लकः । कूष्माण्डकस्तु कर्कारुः कोशातकी पटोलिका११८८
चिर्भटी कर्कटी वालुक्येर्वारुस्त्रपुसी च सा । अर्शोघ्नः सूरणः कन्दः शृङ्गवेरकमार्दकम् ॥ ११८९
कर्कोटकः किलासघ्नस्तिक्तपत्रः सुगन्धकः । मूलकं तु हरिपर्णं सेकिमं हस्तिदन्तकम् ॥ ११९०
तृणं नडादि नीवारादि च शष्पं तु तन्नवम् । सौगन्धिकं देवजग्धं पौरं कत्तृणरोहिषे ॥ ११९१
दर्भः कुशः कुथो बर्हिः पवित्रमथ तेजनः । गुन्द्रो मुञ्जः शरो दूर्वा त्वनन्ता शतपर्विका ॥ ११९२
हरिताली रुहा पोटगलस्तु धमनो नडः । कुरुविन्दो मेघनामा मुस्ता गुन्द्रा तु सोत्तमा ॥ ११९३
वल्वजा उलपोऽथेक्षुः स्याद्रसालोऽसिपत्रकः । भेदाः कान्तारपुण्ड्राद्यास्तस्य मूलं तु मोरटम्॥११९४
काशस्त्विषीका घासस्तु यवसं तृणमर्जुनम् । विषः क्ष्वेडो रसस्तीक्ष्णं गरलोऽथ हैलाहलः[3]॥११९५
वत्सनाभः कालकूटो ब्रह्मपुत्रः प्रदीपनः । सौराष्ट्रिकः शौल्किकेयः काकोलो दारदोऽपि च॥११९६
अहिच्छत्रो मेषशृङ्गकुष्टवालूकनन्दनाः । कैराटको हैमवतो मर्कटः करवीरकः ॥ ११९७
सर्षपो मूलको गौरार्द्रकः सक्तुककर्दमौ । अङ्कोल्लसारः कालिङ्गः शृङ्गिको मधुसिक्थकः ॥ ११९८
इन्द्रो लाङ्गलिको विस्फुलिङ्गपिङ्गलगौतमाः । मुस्तको दालवश्चेति स्थावरा विषजातयः ॥ ११९९
कुरण्ट्याद्या अग्रबीजा मूलजास्तूत्पलादयः । पर्वयोऽनय इक्ष्वाद्याः स्कन्धजाः सल्लकीमुखाः॥१२००
शाल्यादयो बीजरुहाः संमूर्छजास्तृणादयः । स्युर्वनस्पतिकायस्य षडेते मूलजातयः ॥ १२०१

इति वनस्पतिकायः ।

---

१. सातीनोऽपि. २. कनिशमपि. ३. हालाहलः, हालहलः अपि.

नीलङ्गुः कृमिरन्तर्जः क्षुद्रः कीटो बहिर्भवः । पूलकास्तूभयेऽपि स्युः कीकसा कृमयोऽणवः ॥ १२०२
काष्ठकीटो घुणो गण्डूपदः किंचुलकः कुसूः । भूलता गण्डूपदी तु शिल्यस्रपा जलौकसः ॥१२०३
जलालोका जलूका च जलौका जलसर्पिणी । मुक्तास्फोटाब्धिमण्डूकी शुक्तिः कम्बुस्तु वारिजः ॥
त्रिरेखः षोडशावर्तः शङ्खोऽथ क्षुद्रकम्बवः । शङ्खनकाः क्षुल्लकाश्च शम्बूकास्त्वम्बुमात्रजाः ॥१२०५
कपर्दस्तु हिरण्यः स्यात्पणास्थिकवराटकौ । दुर्नामा तु दीर्घकोशी पिपीलकस्तु पीलकः ॥ १२०६
पिपीलिका तु हीनाङ्गी ब्राह्मणी स्थूलशीर्षिका । घृतली पिङ्गकपिशाथोपजिह्वोपदेहिका ॥ १२०७
वम्र्युपदीका लिक्षा तु रिक्षा यूका च षट्पदी । गोपालिका महाभीरुर्गोमयोत्था तु गर्दभी ॥१२०८
मत्कुणस्तु कोलकुण उद्दंशः किटिभोत्कुणौ । इन्द्रगोपस्त्वग्निरजो वैराटस्तितिभोऽग्निकः ॥ १२०९
ऊर्णनाभस्तन्तुवायो जालिको जालकारकः । कृमिर्मर्कटको लूतालालास्रावोष्टपाच्च सः ॥ १२१०
कर्णजलौका तु कर्णकीटा शतपदी च सा । वृश्चिको द्रुण आल्यालिरलं तत्पुच्छकण्टकः ॥१२११
भ्रमरो मधुकृद्भृङ्गश्चञ्चरीकः शिलीमुखः । इन्दिन्दिरोऽली रोलम्बो द्विरेफोऽस्य षैडङ्घ्रयः ॥१२१२
भोर्ज्यं तु पुष्पमधुनी खद्योतो ज्योतिरिङ्गणः । पतङ्गः शलभः क्षुद्रा सरघा मधुमक्षिका ॥ १२१३
माक्षिकादि मधु क्षौद्रं मधूच्छिष्टं तु सिक्थकम् । वर्वणा मक्षिका नीला पुत्तिका तु पतङ्गिका १२१४
वनमक्षिका तु दंशो दंशी तज्जातिरल्पिका । तैलाटी वरटा गन्धोली स्याच्चीरी तु चीरुका ॥१२१५
झिल्लीका झिल्लिका वर्षकरी भृङ्गारिका च सा । पशुस्तिर्यक्चरिर्हिंस्रेऽस्मिन्व्यालः श्वापदोऽपि च १२१६

हस्ती मतङ्गजगजद्विपकर्यनेकपा मातङ्गवारणमहामृगसामयोनयः ।
स्तम्बेरमद्विरदसिन्धुरनागदन्तिनो दन्तावलः करटिकुञ्जरकुम्भिपीलवः ॥ १२१७

इभः करेणुर्गर्जोऽस्य स्त्री धेनुका वशापि च । भद्रो मन्द्रो मृगो मिश्रश्चतस्रो गजजातयः ॥ १२१८
कालेऽप्यजातदन्तश्च स्वल्पाङ्गश्चापि मत्कुणः । पञ्चवर्षो गजो बालः स्यात्पोतो दशवार्षिकः ॥१२१९
विक्को विंशतिवर्षः स्यात्कलभस्त्रिंशदब्दकः । यूथनाथो यूथपतिर्मत्ते प्रभिन्नगर्जितौ ॥ १२२०
मदोत्कटे मदकलः समावुद्वान्तनिर्मदौ । सज्जितः कल्पितस्तिर्यग्घाती परिणतो गजः ॥ १२२१
व्यालो दुष्टगजो गम्भीरवेधव्रमताङ्कुशः । राजबाह्यस्तूपबाह्यः संनाह्यः समरोचितः ॥ १२२२
उदग्रदन्नीषादन्तो बहूनां घटना घटा । मदो दानं प्रवृत्तिश्च वमथुः करशीकरः ॥ १२२३
हस्तिनासा करः शुण्डा हस्तोऽस्याग्रं तु पुष्करम् । अङ्गुलिः कर्णिका दन्तौ विषाणौ स्कन्ध आसनम्
कर्णमूलं चूलिका स्यादीषिका त्वक्षिकूटकम् । अपाङ्गदेशो निर्याणं गण्डस्तु करटः कटः ॥ १२२५
अवग्रहो ललाटं स्यादारक्षः कुम्भयोरधः । कुम्भौ तु शिरसः पिण्डौ कुम्भयोरन्तरं विदुः ॥१२२६
वातकुम्भस्तु तस्याधो वाहित्थं तु ततोऽप्यधः । वाहित्थाधः प्रतिमानं पुच्छमूलं तु पेचकः ॥१२२७
दन्तभागः पुरोभागः पक्षभागस्तु पार्श्वकः । पूर्वस्तु जङ्घादिदेशो गात्रं स्यात्पश्चिमोऽपरः ॥ १२२८
बिन्दुजालं पुनः पद्मं शृङ्खलो निगडोऽन्दुकः । हिञ्जीरश्च पादपाशो वारिस्तु गजबन्धभूः ॥ १२२९
त्रिपदी गात्रयोर्बन्ध एकस्मिन्नवरेऽपि च । तोत्रं वेणुकमालानं बन्धस्तम्भोऽङ्कुशः सृणिः ॥ १२३०
अपष्ठं त्वङ्कुशस्याग्रं यातमङ्कुशवारणम् । निषादिनां पादकर्म यतं वीतं तु तद्द्वयम् ॥ १२३१

---

१. किंचुलुकोऽपि. २. क्रिमिरपि. ३. द्रुतोऽपि. ४. इकारान्तो नकारान्तो वा. ५. तेन षट्पदः, षडंह्रिः, षट्चरणः, इत्यादयः. ६. तेन पुष्पलिट्, पुष्पंधयः, मधुव्रतः, मधुलिट्, मधुपः, इति सिद्धम्. ७. ऊपवाह्योऽपि. ८. अवरापि. ९. निगलोऽपि.

कक्ष्या दूष्या वरत्रा स्यात्कण्ठबन्धः कलापकः । घोटकस्तुरगस्तार्क्ष्यस्तुरंगोऽश्वस्तुरंगमः ॥ १२३२
गन्धर्वोऽर्वा सप्तिर्वीती वाहो वाजी हयो हरिः । वडवाश्वा प्रसूर्वामी किशोरोऽल्पवया हयः ॥ १२३३
जवाधिकस्तु जवनो रथ्यो वोढा रथस्य यः । आजानेयः कुलीनः स्यात्तत्तद्देशास्तु सैन्धवाः ॥ १२३४
वनायुजाः पारशीकाः काम्बोजा बाल्हिकादयः । विनीतस्तु साधुवाही दुर्विनीतस्तु शूकलः ॥ १२३५
कश्यः कशार्हो हृद्वृकावर्ती श्रीवृक्षकी हयः । पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥ १२३६
पुच्छोरःखुरकेशास्यैः सितैः स्यादष्टमङ्गलः । श्वेते तु कर्ककोकाहौखोङ्गाहः श्वेतपिङ्गले ॥ १२३७
पीयूषवर्णे सेराहः पीते तु हरियो हये । कृष्णवर्णे तु खुङ्गाहः कियाहो लोहितो हयः ॥ १२३८
आनीलस्तु नीलकोऽथ त्रियूहः कपिलो हयः । वोल्लाहस्त्वयमेव स्यात्पाण्डुकेसरबालधिः ॥ १२३९
उराहस्तु मनाक्पाण्डुः कृष्णजङ्घो भवेद्यदि । सुरूहको गर्दभाभो वोरुखानस्तु पाटलः ॥ १२४०
कुलाहस्तु मनाक्पीतः कृष्णः स्याद्यदि जानुनि । उकनाहः पीतरक्तच्छायः स एव तु क्वचित् १२४१
कृष्णरक्तच्छविः प्रोक्तः शोणः कोकनदच्छविः । हरितः पीतहरितच्छायः स एव हालकः ॥ १२४२
पङ्गुलः सितकाचाभो हलाहश्चित्रितो हयः । ययुरश्वोऽश्वमेधीयः प्रोथमश्वस्य नासिका ॥ १२४३
मध्यं कश्यं निगालस्तु गलोद्देशः खुराः शफाः । अथ पुच्छं बालहस्तो लाङ्गूलं लूम वालधिः १२४४
अपावृत्तपरावृत्तलुठितानि तु वेल्लिते । धोरितं वल्गितं प्लुत्युत्तेजितोत्तेरितानि च ॥ १२४५
गतयः पञ्च धाराख्यास्तुरंगाणां क्रमादिमाः । तत्र धौरितकं धौर्यं धोरणं धोरितं च तत् ॥ १२४६
बभ्रुकङ्कशिखिक्रोडगतिवद्वल्गितं पुनः । अग्रकायसमुल्लासात्कुञ्चितास्यं नतत्रिकम् ॥ १२४७
प्लुतं तु लङ्घनं पक्षिमृगगत्यनुहारकम् । उत्तेजितं रेचितं स्यान्मध्यवेगेन या गतिः ॥ १२४८
उत्तेरितमुपकण्ठमास्कन्दितकमित्यपि । उत्प्लुत्योत्प्लुत्य गमनं कोपादिवाखिलैः पदैः ॥ १२४९
आश्वीनोऽध्वा स योऽश्वेन दिनेनैकेन गम्यते । कवी खलीनं कविका कवियं मुखयन्त्रणम् ॥ १२५०
पञ्चाङ्गी वक्रपट्टे तु तलिका तलसारकम् । दामाञ्चनं पादपाशः प्रक्षरप्रक्खरौ समौ ॥ १२५१
चर्मदण्डे कशा रश्मौ वेल्गावक्षेपणी कुशा । पर्याणं तु पल्ययनं वीतं फल्गु हयद्विपम् ॥ १२५२
वेसरोऽश्वतरो वेगसरश्चाथ क्रमेलकः । कुलनाशः शिशुनामा शलो भोलिर्मरुप्रियः ॥ १२५३
मयो महाङ्गो वासन्तो द्विककुद्दुर्गलङ्घनः । भूतघ्न उष्ट्रो दाशेरो रवणः कण्टकासनः ॥ १२५४
दीर्घग्रीवः केलिकीर्णः करभस्तु त्रिहायणः । स तु शृङ्खलको दारुमयैः स्यात्पादबन्धनैः ॥ १२५५
गर्दभस्तु चिरमेही वालेयो रासभः खरः । चक्रीवाञ्शङ्कुकर्णोऽथ ऋषभो वृषभो वृषः ॥ १२५६
वाडवेयः सौरभेयो भद्रः शक्करशाक्करौ । उक्षानड्वान्ककुद्मान्गौर्बलीवर्दश्च शांकरः ॥ १२५७
उक्षा तु जातो जातोक्षः स्कन्धिकः स्कन्धवाहकः । महोक्षः स्यादुक्षतरो वृद्धोक्षस्तु जरद्गवः १२५८
षण्ढतोचित आर्षभ्यः कूटो भग्नविषाणकः । इट्वरो[3]गोपतिः षण्ढो गौवृषो मदकोहलः ॥ १२५९
वत्सः शकृत्करिस्तर्णो दम्यवत्सतरौ समौ । नस्योतो नस्तितः षष्ठवाट् तु स्याद्युगपार्श्वगः ॥ १२६०
युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः । स तु सर्वधुरीणः स्यात्सर्वां वहति यो धुरम् ॥ १२६१
एकधुरीणैकधुरावुभावेकधुरावहे । धुरीणधुर्यधौरेयधौरेयकधुरंधराः ॥ १२६२
धूर्वहेऽथ गलिर्दुष्टवृषः शक्तोऽप्यधूर्वहः । स्थौरीपृष्ठ्यः पृष्ठवाह्यो द्विदन्षोडन्द्विषड्दौ ॥ १२६३
वहः स्कन्धोंऽसकूटं तु ककुदं नैचिकं शिरः । विषाणं कूणिका शृङ्गं सास्ना तु गलकम्बलः १२६४

१. वल्गावागे अपि. २. मयुरित्येके. ३. इत्वर इत्येके.

गौः सौरभेयी माहेयी माहा सुरभिरर्जुनी । उस्राऽघ्न्या रोहिणी शृङ्गिण्यनड्वाह्यनडुह्युषा ॥ १२६५
तम्पा निलिम्पिका तम्बा सा तु वर्णैरनेकधा । प्रष्ठौही गर्भिणी वन्ध्या वशा वेहद्वृषोपगा ॥ १२६६
अवतोका स्रवद्गर्भा वृषाक्रान्ता तु संधिनी । प्रौढवत्सा बष्कयिणी धेनुस्तु नवसूतिका ॥ १२६७
परेष्टुर्बहुसूतिः स्याद्गृष्टिः सकृत्प्रसूतिका । प्रजने काल्योपसर्या सुखदोह्या तु सुव्रता ॥ १२६८
दुःखदोह्या तु करटा बहुदुग्धा तु वञ्जुला । द्रोणदुग्धा द्रोणदुघा पीनोध्नी पीवरस्तनी ॥ १२६९
पीतदुग्धा तु धेनुष्या संस्थिता दुग्धबन्धकैः । नैचिकी तूत्तमा गोषु पलिक्नी बालगर्भिणी ॥ १२७०
समांसमीना तु सा या प्रतिवर्षं प्रजायते । स्यादचण्डी तु सुकरा वत्सकामा तु वत्सला ॥ १२७१
चतुरब्दा त्रिहायणी त्र्येकाद्व्यायन्यैकादिवर्षिका । आपीनमूधो गोविट् तु गोमयं भूमिलेपनम् ॥ १२७२
तत्र शुष्के तु गोग्रन्थिः करीषच्छगणे अपि । गवां सर्वं गव्यं व्रजे गोकुलं गोधनं धनम् ॥ १२७३
प्रजने स्यादुपसरः कीलः पुष्पलकः शिवः । बन्धनं दाम संदानं पशुरज्जुस्तु दामनी ॥ १२७४
अजः स्याच्छगलश्छागश्छगो बस्तः स्तभः पशुः । अजा तु च्छागिका मञ्जा सर्वभक्षा गलस्तनी ॥
युवाजो वर्करोऽवौ तु मेषोर्णायुहुडोरणाः । उरभ्रो मेण्ढको वृष्णिरेडको रोमशो हुडुः ॥ १२७६
संफालः शृङ्गिणो भेडो मेषी तु कुररी रुजा । जालकिन्यविला वेण्यथैडिकः शिशुवाहकः ॥ १२७७
पृष्ठशृङ्गो वनाजः स्यादविदुग्धे त्ववेः परम् । सोढं दूसं मरीसं च कुक्कुरो वक्रवालधिः ॥ १२७८
अस्थिभुग्भषणः सारमेयः कौलेयकः शुनः । शुनिः श्वानो गृहमृगः कुर्कुरो रात्रिजागरः ॥ १२७९
रसनालिड्रुतपराः कीलशायिव्रणान्दुकाः । शालावृको मृगदंशः श्वालर्कस्तु स रोगितः ॥ १२८०
विश्वकद्रुस्तु कुशलो मृगव्ये सरमा शुनी । विट् चरः शूकरो ग्राम्ये महिषो यमवाहनः ॥ १२८१
रजस्वलो वाहरिपुर्लुलायः सैरिभो महः । धीरस्कन्धः कृष्णशृङ्गो जरन्तो दंशभीरुकः ॥ १२८२
रक्ताक्षः कासरो हंसकालीतनयलालिकौ । अरण्यजेऽस्मिन्गवलः सिंहः कण्ठीरवो हरिः ॥ १२८३
हर्यक्षः केसरीभारिः पञ्चास्यो नखरायुधः । महानादः पञ्चशिखः पारीन्द्रः पत्यरी मृगात् ॥ १२८४
श्वेतपिङ्गोऽप्यथ व्याघ्रो द्वीपी शार्दूलचित्रकौ । चित्रकायः पुण्डरीकस्तरक्षुस्तु मृगादनः ॥ १२८५
शरभः कुञ्जरारातिरुत्पादकोऽष्टपादपि । गवयः स्याद्वनगवो गोसदृक्षोऽश्ववारणः ॥ १२८६
खड्गी वाध्रीणसः खड्गो गण्डकोऽथ किरः किरिः । भूदारः सूकरः कोलो वराहः क्रोडपोत्रिणौ १२८७
घोणी घृष्टिः स्तब्धरोमा दंष्ट्री किट्यास्यलाङ्गलौ । आखनिकः शिरोमर्मा स्थूलनासो बहुप्रजः ॥ १२८८
भाल्लूकभालूकर्क्षाच्छभल्लभल्लूकभल्लुकाः । सृगालो जम्बुकः फेरुः फेरण्डः फेरवः शिवा ॥ १२८९
घोरवाशी भूरिमायो गोमायुर्मृगधूर्तकः । हूरवो भरुजः क्रोष्टा शिवाभेदेऽल्पके किखिः ॥ १२९०
पृशौ गृण्डिबलोपाकौ कोकस्त्वीहामृगो वृकः । अरण्यश्वा मर्कटस्तु कपिः कीशः प्लवंगमः ॥ १२९१
प्लवंगः प्लवगः शाखामृगो हरिर्वलीमुखः । वनौका वानरोऽथासौ गोलाङ्गूलोऽसितानन: ॥ १२९२
मृगः कुरङ्गः सारङ्गो वातायुहरिणावपि । मृगभेदा रुरुन्यङ्कुरङ्कुगोकर्णशम्बराः ॥ १२९३
चमूरुचीनचमराः समूरैणशर्यरौहिषाः । कदली कन्दली कृष्णसारः पृषतरोहितौ ॥ १२९४
दक्षिणेर्मा तु स मृगो व्याधैर्यो दक्षिणे क्षतः । वातप्रमीर्वातमृगः शशस्तु मृदुलोमकः ॥ १२९५
शूलिको लोमकर्णोऽथ शल्ये शललशल्यकौ । श्वाविच्च तच्छलाकायां शललं शलमित्यपि ॥ १२९६

---

१. तेन अविमरीसमित्यन्ता बोध्याः. २. मषकोऽपि. ३. तेन रतकीलः, रतशायी, रतव्रणः, रतान्दुकः.
४. मृगशब्दः पत्यरिभ्यां संबध्यते. ५. अष्टापदोऽपि.

७

31

गोधा निहाका गौधेरगौधारौ दुष्टतत्सुते । गौधेयोऽन्यत्र मुसली गोधिकागोलिके गृहात्[1] ॥ १२९७
माणिक्या भित्तिका पल्ली कुड्यमत्स्यो गृहोलिका । स्यादञ्जनाधिका हालिन्यञ्जनिका हलाहलः १२९८
स्थूलाञ्जनाधिकायां तु ब्राह्मणी रक्तपुच्छिका । कृकलासस्तु सरटः प्रतिसूर्यः[2] शयानकः ॥ १२९९
मूषिको मूषको वज्रदशनः खनकोन्दुरौ । उन्दुरुर्वृष आखुश्च सूच्यास्यो वृषलोचने ॥ १३००
छुछुन्दरीगन्धमूष्यां गिरिका बालमूषिका । बिडाल ओतुर्मार्जारो हीकुश्च वृषदंशकः ॥ १३०१
जाहको गात्रसंकोची मण्डली नकुलः पुनः । पिङ्गलः सर्पहा बभ्रुः सर्पोऽहिः पवनाशनः ॥ १३०२

भोगी भुजंगभुजगावुरगो द्विजिह्वव्यालौ भुजंगममरीसृपदीर्घजिह्वाः ।
काकोदरो विषधरः फणभृत्पृदाकुर्दृक्कर्णकुण्डलि[3]बिलेशयदन्दशूकाः ॥ १३०३
दर्वीकरः कञ्चुकिचक्रिगूढपात्पन्नगा जिह्मगलेलिहानौ ।
कुम्भीनसाशीविषदीर्घपृष्ठाः स्याद्राजसर्पस्तु भुजंगभोजी ॥ १३०४

चक्रमण्डल्यजगरः पारीन्द्रो वाहसः शयुः । अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ ॥ १३०५
भवेत्तिलित्सो गोनासो गोनसो घोणसोऽपि च । कुक्कुटाहिः कुक्कुटाभो वर्णेन च रवेण च ॥ १३०६
नागाः पुनः काद्रवेयास्तेषां भोगावती पुरी । शेषो नागाधिपोऽनन्तो द्विसहस्राक्ष आलुकः ॥ १३०७
स च श्यामोऽथवा शुक्लः सितपङ्कजलाञ्छनः । वासुकिस्तु सर्पराजः श्वेतो नीलसरोजवान् ॥ १३०८
तक्षकस्तु लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः । महापद्मस्त्वतिशुक्लो दशबिन्दुकमस्तकः ॥ १३०९
शङ्खस्तु श्वेतो बिभ्राणो रेखामिन्दुसितां गले । कुलिकोऽर्द्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः ॥ १३१०
अथ कम्बलाश्वतरधृतराष्ट्रबलाहकाः । इत्यादयोऽपरे नागास्तत्तत्कुलसमुद्भवाः ॥ १३११
निर्मुक्तो मुक्तनिर्मोकः सविषा निर्विषाश्च ते । नागाः स्युर्दृग्विषा लूनविषास्तु वृश्चिकादयः ॥ १३१२
व्याघ्रादयो लोमविषा नखविषा नरादयः । लालाविषास्तु लूताद्याः कालान्तरविषाः पुनः ॥ १३१३
मूषिकाद्या दूषीविषं त्ववीर्यमौषधादिभिः । कृत्रिमं तु विषं चारं गरश्चोपविषं च तत् ॥ १३१४
भोगोऽहिकायो दंष्ट्राशीर्दर्वी भोगः फटः स्फटः । फणोऽहिकोशे तु निर्ल्वयनी[4] निर्मोककञ्चुकाः ॥

विहगो विहंगमखगौ पतगो विहंगः शकुनिः शकुन्तशकुनौ विवयः शकुन्ताः ।
नभसंगमो विकिरपत्ररथौ विहायो द्विजपक्षिविष्किरपतत्रिपतत्पतङ्गाः ॥ १३१६

पित्सन्नीडाण्डजौ[5]गौकाश्चञ्चुश्चञ्चू सृपाटिका । त्रोटिश्च पत्रं पतत्रं पिच्छं वाजस्तनूरुहम् ॥ १३१७
पक्षो गरुच्छदश्चापि पक्षमूलं तु पक्षतिः । प्रडीनोड्डीनसंडीनडयनानि नभोगतौ ॥ १३१८
पेशी कोशोऽण्डे कुलायो नीडे केकी तु सर्पभुक् । मयूरबर्हिणौ नीलकण्ठो मेघसुहृच्छिखी ॥ १३१९
शुक्लापाङ्गोऽस्य वाक्केका पिच्छं बर्हं शिखण्डकः । प्रचलाकः कलापश्च मेचकश्चन्द्रकः समौ ॥ १३२०
वनप्रियः परभृतस्ताम्राक्षः कोकिलः पिकः । कलकण्ठः काकपुष्टः काकोऽरिष्टः सकृत्प्रजः ॥ १३२१
आत्मघोषश्चिरजीवी घूकारिः करटो द्विकः । एकदृग्बलिभुग्ध्वाङ्क्षो मौकुलिर्वायसोऽन्यभृत् ॥ १३२२
वृद्ध[6]द्रोणदग्धकृष्णपर्वतेभ्यस्त्वसौ परः । वनाश्रयश्च काकोलो मद्गुस्तु जलवायसः ॥ १३२३
घूके निशाटः काकारिः कौशिकोलूकपेचकाः । दिवान्धोऽथ निशावेदी कुक्कुटश्चरणायुधः ॥ १३२४
कृकवाकुस्ताम्रचूडो विवृताक्षः शिखण्डिकः । हंसाश्चक्राङ्गवक्राङ्गमानसौकःसितच्छदाः ॥ १३२५

---

१. तेन गृहगोधिका, गृहगोलिका. २. 'प्रतिसूर्यशयानकः' इत्येकं नामापि. ३. एककुण्डलोऽपि. ४. निर्लयनीत्यपि. ५. जशब्दो नीडेनाप्यन्वेति. ६. तेन वृद्धकाक इत्यादयः.

राजहंसास्त्वमी चञ्चुचरणैरतिलोहितैः । मल्लिकाक्षास्तु मलिनैर्धार्तराष्ट्राः सितेतरैः ॥ १३२६
कादम्बास्तु कलहंसाः पक्षैः स्यादतिधूसरैः । वारला वरला हंसी वारटा वरटा च सा ॥ १३२७
दार्वाघाटः शतपत्रः खञ्जरीटस्तु खञ्जनः । सारसस्तु लक्ष्मणः स्यात्पुष्कराख्यः कुरंकरः ॥ १३२८
सारसी लक्ष्मणाथ क्रुङ्क्रौञ्चे चाषे किंकीदिविः । चातकः स्तोकको वप्पीहः सारङ्गो नभोम्बुपः १३२९
चक्रवाको रथाङ्गाह्वः कोको द्वन्द्वचरोऽपि च । टिट्टिभस्तु कटुक्वाण उत्पादशयनश्च सः ॥ १३३०
चटको गृहबलिभुक्कलविङ्कः कुविङ्ककः । तस्य योषित्तु चटका स्यपत्ये चटका तयोः ॥ १३३१
पुमपत्ये चाटकैरो दात्यूहे कालकण्टकः । जलरङ्कुर्जलरङ्को बके कह्वो बकोटवत् ॥ १३३२
बलाहकः स्याद्बलाको बलाका बिसकण्ठिका । भृङ्गः कलिङ्गो धूम्याटः कङ्कस्तु कमनच्छदः ॥१३३३
लोहपृष्ठो दीर्घपादः कर्कटः स्कन्धमल्लकः । चिल्लः शकुनिरातापी श्येनः पत्री शशादनः ॥ १३३४
दाक्षाय्यो दूरदृग्गृध्रोऽथोत्क्रोशो मत्स्यनाशनः । कुररः कीरस्तु शुको रक्तपादः फलादनः ॥ १३३५
शारिका तु पीतपादा गोराटी गोकिराटिका । स्याच्चर्मचटकायां तु जतुका जिनपत्रिका ॥ १३३६
वल्गुलिका मुखविष्ठा परोष्णी तैलपायिका । कर्करेटुः करेटुस्त्यात्करटुः कर्कराटुकः ॥ १३३७
आतिराटिः शरारिः स्यात्कृकणक्रकरौ समौ । भासे शकुन्तः कोयष्टौ शिखरी जलकुक्कुभः ॥१३३८
पारावतः कलरवः कपोतो रक्तलोचनः । ज्योत्स्नाप्रिये चलचञ्चुचकोरविषसूचकाः ॥ १३३९
जीवंजीवस्तु गुन्द्रालो विषदर्शनमृत्युकः । व्याघ्राटस्तु भरद्वाजः प्लवस्तु गात्रसंप्लवः ॥ १३४०
तित्तिरिस्तु खरकोणो हारीतस्तु मृदङ्कुरः । कारण्डवस्तु मरुलः सुगृहश्चञ्चुसूचिकः ॥ १३४१
कुम्भकारकुक्कुटस्तु कुकुभः कुहकस्वनः । पक्षिणा येन गृह्यन्ते पक्षिणोऽन्ये स दीपकः ॥ १३४२
छेका गृह्याश्च ते गेहासक्ता ये मृगपक्षिणः । मत्स्यो मीनः पृथुरोमा झषो वैसारिणोऽण्डजः ॥१३४३
संघचारी स्थिरजिह्व आत्माशी स्वकुलक्षयः । विसारः शकली शल्की शंबरोऽनिमिषस्तिमिः ॥१३४४
सहस्रदंष्ट्रे वादालः पाठीने चित्रवल्लिकः । शकुले स्यात्कलकोऽथ गडकः शकुलार्भकः ॥ १३४५
उलूपी शिशुके प्रोष्ठी शफरः श्वेतकोलके । नलमीनश्चिलिचिमो मत्स्यराजस्तु रोहितः ॥ १३४६
मद्गुरस्तु राजशृङ्गः शृङ्गी तु मद्गुरप्रिया । क्षुद्राण्डमत्स्यजातं तु पोताधानं जलाण्डकम् ॥ १३४७
महामत्स्यास्तु चीरल्लितिमिंगिलगिलादयः । अथ यादांसि नक्राद्या हिंसका जलजन्तवः ॥ १३४८
नक्रः कुम्भीर आलास्यः कुम्भी महामुखोऽपि च । तालुजिह्वः शङ्कुमुखो गोमुखो जलसूकरः १३४९
शिशुमारस्त्वम्बुकूर्म उष्णवीर्यो महावसः । उद्रस्तु जलमार्जारः पानीयनकुलो वसी ॥ १३५०
ग्राहे तन्तुस्तन्तुनागोऽवहारो नागतन्तुणौ । अन्येऽपि यादोभेदाः स्युर्बहवो मकरादयः ॥ १३५१
कुलीरः कर्कटः पिङ्गचक्षुः पार्श्वोदरप्रियः । द्विधागतिः षोडशांह्रिः क्रूरचिह्नो बहिश्चरः ॥ १३५२
कच्छपः कमठः कूर्मः क्रोडपादश्चतुर्गतिः । पञ्चाङ्गगुप्तदौलेयौ जीवथः कच्छपी दुली ॥ १३५३
मण्डूके हरिशालूरप्लवभेकप्लवंगमाः । वर्षाभूः प्लवगः शालुरजिह्वव्यङ्गदर्दुराः ॥ १३५४
स्थले नरादयो ये तु ते जले जलपूर्वकाः । अण्डजाः पक्षिसर्पाद्याः पोतजाः कुञ्जरादयः ॥ १३५५
रसजा मद्यकीटाद्या नृगवाद्या जरायुजाः । यूकाद्याः स्वेदजा मत्स्यादयः संमूर्च्छनोद्भवाः ॥१३५६

---

१. लक्ष्मणीत्यपि. २. किकी, दिविः इति द्वे नामनी अपि । किकिदिविरपि. ३. टीटिम इत्येके. ४. दात्योहोऽपि. ५. वकेरुकापि. ६. निशाटन्यपि. ७. चिलीचीमोऽपि. ८. शङ्कुमुखोऽपि. ९. वरुणपाशोऽपि.

उद्भिदः खञ्जनाश्चोपपादुका देवनारकाः । रसयोनय इत्यष्टावुद्भिदुद्भिज्जमुद्भिदम् ॥ १३५७

इत्याचार्यहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां तिर्यक्काण्डश्चतुर्थः ॥ ४ ॥

---

स्युर्नारकास्तु[1] परेतप्रेतयात्यातिवाहिकाः । आजूर्विष्टिर्यातना तु कारणा तीव्रवेदना ॥ १३५८
नरकस्तु नारकः स्यान्निरयो दुर्गतिश्च सः । घनोदधिघनवाततनुवातनभःस्थिताः ॥ १३५९
रत्नशर्करावालुकापङ्कधूमतमःप्रभाः[2] । महातमःप्रभा चेत्यधोधो नरकभूमयः ॥ १३६०
क्रमात्पृथुतराः सप्ताथ त्रिंशत्पञ्चविंशतिः । पञ्च पञ्चदश त्रीणि लक्षाण्यूनं च पञ्चभिः ॥ १३६१
लक्षं पञ्चैव नरकावासाः सीमन्तकादयः । एतांसु स्युः क्रमेणाथ पातालं वडवामुखम् ॥ १३६२
बलिवेश्माधोभुवनं नागलोको रसातलम् । रन्ध्रं बिलं निर्व्यथनं कुहरं शुषिरं शुषिः[3] ॥ १३६३
छिद्रं रोपं विवरं च निम्नं रोकं वपान्तरम् । गर्तश्वभ्रावटागाधदरास्तु विवरे भुवः ॥ १३६४

इत्याचार्यहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां नरककाण्डः पञ्चमः ॥ ५ ॥

---

स्याल्लोको विष्टपं विश्वं भुवनं जगती जगत् । जीवाजीवाधारक्षेत्रं लोकोऽलोकस्ततोऽन्यथा ॥ १३६५
क्षेत्रज्ञ आत्मा पुरुषश्चेतनः[4] स पुनर्भवी । जीवः स्यादसुमान्सत्वं देहभृज्जन्युजन्तवः[5] ॥ १३६६
उत्पत्तिर्जन्मजनुषी[6] जननं जनिरुद्भवः । जीवेऽसुर्जीवितप्राणा[7] जीवातुर्जीवनौषधम् ॥ १३६७
श्वासस्तु श्वसितं सोऽन्तर्मुख उच्छ्वास आहरः । आनो बहिर्मुखस्तु स्यान्निःश्वासः पान एतनः ॥ १३६८
आयुर्जीवितकालोऽन्तःकरणं मानसं मनः । हृच्चेतो हृदयं चित्तं स्वान्तं गूढपथोर्बले[8] ॥ १३६९
मनसः कर्म संकल्पः[9] स्यादथो शर्म[10]निर्वृतिः । सातं सौख्यं सुखं दुःखं त्वसुखं वेदना व्यथा ॥ १३७०
पीडा बाधार्तिराभीलं कृच्छ्रं कष्टं प्रसूतिजम् । आमनस्यं प्रगाढं स्यादाधिः स्यान्मानसी व्यथा ॥ १३७१
सपत्नाकृतिनिष्पत्राकृती त्वत्यन्तपीडने । क्षुज्जाठराग्निजा पीडा व्यापादो द्रोहचिन्तनम् ॥ १३७२
उपज्ञा ज्ञानमाद्यं स्याच्चर्चा संख्या विचारणा । वासना भावना संस्कारोऽनुभूताद्यविस्मृतिः ॥ १३७३
निर्णयो निश्चयोऽन्तः संप्रधारणा समर्थनम् । अविद्याहंमत्यज्ञाने भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥ १३७४
संदेहद्वापरारेका विचिकित्सा तु संशयः । परभागो गुणोत्कर्षो दोषे त्वादीनवाश्रवौ ॥ १३७५
स्वरूपं[11] लक्षणं भावश्चात्मप्रकृतिरीतयः । सहजो रूपतत्त्वं च धर्मः सर्गो निसर्गवत् ॥ १३७६
शीलं सतत्त्वं संसिद्धिरवस्था तु दशा स्थितिः । स्नेहः प्रीतिः प्रेम हार्दे दाक्षिण्यं त्वनुकूलता ॥ १३७७
विप्रतिसारो[12]ऽनुशयः पश्चात्तापोऽनुतापश्च ।
अवधानसमाधानप्रणिधानानि तु समाधौ स्युः ॥ १३७८
धर्मः पुण्यं वृषः श्रेयः सुकृते नियतौ विधिः । दैवं भाग्यं भागधेयं दिष्टं चायस्तु तच्छुभम् ॥ १३७९
अलक्ष्मीर्निर्ऋतिः कालकर्णिका स्यादथाशुभम् । दुष्कृतं दुरितं पापमेनः पाप्मा च पातकम् ॥ १३८०
किल्बिषं कलुषं किण्वं कल्मषं वृजिनं तमः । अंहः कल्कमघं पङ्क उपाधिर्धर्मचिन्तनम् ॥ १३८१
त्रिवर्गो धर्मकामार्थाश्चतुर्वर्गः समोक्षकाः । बलतूर्याश्चतुर्भद्रं प्रमादोऽनवधानता ॥ १३८२
छन्दोऽभिप्राय आकूतं मतभावाशया अपि । हृषीकमक्षं करणं स्रोतः खं विषयीन्द्रियम् ॥ १३८३
बुद्धीन्द्रियं स्पर्शनादि पाण्यादि तु क्रियेन्द्रियम् । स्पर्शादयस्त्विन्द्रियार्था[13] विषया गोचरा अपि ॥ १३८४

---

१. यौगिकत्वात्—नारकिक-नैरयिक-नारकीयादयः. २. प्रभाशब्दः प्रत्येकं रतादिभिरन्वयः. ३. दन्त्यादिरित्येके. ४. जीवोऽपि. ५. यौगिकत्वात्—देहभाक् शरीरीत्यादयः ६. अदन्तोऽपि. ७. जीवातुरपि. ८. अनिन्द्रियमपि. ९. विकल्पोऽपि. १०. शर्ममपि. ११. स्वशब्दो रूपादिभिरन्वेति. १२. विप्रतीसारोऽपि. १३. अर्था अपि.

शीते तुषारः शिशिरः सुशीमः[1] शीतलो जडः । हिमोऽथोष्मे तिग्मस्तीक्ष्णस्तीव्रश्चण्डः खरः पटुः ॥
कोष्णः कवोष्णः कदुष्णो मन्दोष्णश्चेषदुष्णवत् । निष्ठुरः कक्खटः क्रूरः परुषः कर्कशः खरः॥ १३८६
दृढः कठोरः कठिनो जरठः कोमलः पुनः । मृदुलो मृदुसोमालसुकुमारा अकर्कशः ॥ १३८७
मधुरस्तु रसज्येष्ठो गुल्यः स्वादुर्मधूलकः । अम्लस्तु पाचनो दन्तशठोऽथ लवणं सरः ॥ १३८८
सर्वरसोऽथ कटुः स्यादोषणो मुखशोधनः । वक्त्रभेदी तु तिक्तोऽथ कषायस्तुवरो रसाः ॥ १३८९
गन्धो जनमनोहारी सुरभिर्घ्राणतर्पणः । समाकर्षी तु निर्हारी स आमोदो विदूरगः ॥ १३९०
विमर्दोत्थः परिमलोऽथामोदी मुखवासनः । इष्टगन्धः सुगन्धिश्च दुर्गन्धः पूतिगन्धिकः ॥ १३९१
आमगन्धि तु विस्रं स्याद्वर्णाः श्वेतादिका अमी । श्वेतः श्येतः सितः शुक्लो हरिणो विशदः शुचिः ॥
अवदातगौरशुभ्रवलक्षधवलार्जुनाः । पाण्डुरः पाण्डरः पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ १३९३
कापोतस्तु कपोताभः पीतस्तु सितरञ्जनः । हारिद्रः पीतलो गौरः पीते नीलः पुनर्हरित् ॥ १३९४
पालाशो हरितस्तालकाभो रक्तस्तु रोहितः । माञ्जिष्ठो लोहितः शोणः श्वेतरक्तस्तु पाटलः ॥ १३९५
अरुणो बालसंध्याभः पीतरक्तस्तु पिञ्जरः । कपिलः पिङ्गलः श्यावः पिशङ्गः कपिशो हरिः॥ १३९६
बभ्रुः कद्रुः कडारश्च पिङ्गे कृष्णस्तु मेचकः । स्याद्रामः श्यामलः श्यामः कालो नीलोऽसितः शितिः॥
रक्तश्यामे पुनर्धूम्रधूमलावथ कर्बुरः । किर्मीर एतः शबलश्चित्रकल्माषचित्रलाः ॥ १३९८
शब्दो निनादो निर्घोषः स्वानो ध्वानः स्वरो ध्वनिः । निर्ह्रादो निनदो ह्रादो निस्वानो निस्वनः स्वनः ॥
रवो नादः स्वनिर्घोषः संव्याङ्भ्यो रौव[2] आरवः । क्वणनं निक्वणः क्वाणो निक्वाणश्च क्वणो रणः ॥
षड्ज ऋषभगान्धारा मध्यमः पञ्चमस्तथा । धैवतो निषधः सप्त तन्त्रीकण्ठोद्भवाः स्वराः ॥ १४०१
ते मन्द्रमध्यताराः स्युरुरःकण्ठशिरोद्भवाः । रुदितं क्रन्दितं क्रुष्टं तदपुष्टं तु गद्गरम् ॥ १४०२
शब्दो गुणानुरागोत्थः प्रणादः सीत्कृतं नृणाम् । पर्दनं गुदजे शब्दे कर्दनं कुक्षिसंभवे ॥ १४०३
क्ष्वेडा तु सिंहनादोऽथ क्रन्दनं सुभटध्वनिः । कोलाहलः कलकलस्तुमुलो व्याकुलो रवः ॥ १४०४
मर्मरो वस्त्रपत्रादेर्भूषणानां तु शिञ्जितम् । हेषा ह्रेषा तुरंगाणां गजानां गर्ज[3]बृंहिते ॥ १४०५
विस्फारो धनुषां हंभारम्भे गोर्जलदस्य च । स्तनितं गर्जितं गर्जिः स्वनितं रसितादि च ॥ १४०६
कूजितं स्याद्विहंगानां तिरश्चां रुतवाशिते । वृकस्य रेषणं रेषा बुक्कनं भषणं शुनः ॥ १४०७
पीडितानां तु क्वणितं मणितं रतकूजितम् । प्रक्वाणः प्रक्वणस्तन्त्र्या मर्दलस्य तु गुन्दलः ॥ १४०८
क्षीजनं तु कीचकानां भेर्या नादस्तु दर्दुरः । तारोऽत्युच्चैर्ध्वनिर्मन्द्रो[4] गम्भीरो मधुरः कलः ॥ १४०९
कौकली[5] तु कलः सूक्ष्म एकतालो लयानुगः । काकुर्ध्वनिविकारः स्यात्प्रतिश्रुत्तु प्रतिध्वनिः ॥ १४१०

संघाते प्रकरौघवारनिकर[6]व्यूहाः समूहश्चयः
संदोहः समुदायराशिविसरव्राताः कलापो व्रजः ।
कूटं मण्डलचक्रवालपटलस्तोमा गणः पेटकं
वृन्दं चक्रकदम्बके समुदयः पुञ्जोत्करौ संहतिः ॥ १४११

समवायो निकुरम्बं जालं निवहसंचयौ । जातं तिरश्चां तद्यूथं संघसार्थौ तु देहिनाम् ॥ १४१२
कुलं तेषां सजातीनां निकायस्तु सधर्मिणाम् । वर्गस्तु सदृशां स्कन्धो नरकुञ्जरवाजिनाम्॥ १४१३

---

१. सुषीमोऽपि. २. रावशब्दः समादिभिरन्वेति. ३. गर्जापि. ४. मद्रोऽपि. ५. काकलिरपि. ६. आकरोऽपि.

ग्रामो[1] विषयशब्दाद्भूतेन्द्रियगुणाद्व्रजे । समजस्तु पशूनां स्यात्समाजस्त्वन्यदेहिनाम् ॥ १४१४
शुकादीनां गणे शौकमायूरतैत्तिरादयः । भिक्षादेर्भैक्षसाहस्रगार्भिणयौवतादयः ॥ १४१५
गोत्रार्थप्रत्ययान्तानां स्युरौपगविकादयः । उक्षादेरौक्षकं मानुष्यकं वार्द्धकमौष्ट्रकम् ॥ १४१६
स्याद्राजपुत्रकं राजन्यकं राजकमाजकम् । वात्सकौरभ्रके कावचिकं कवचिनामपि ॥ १४१७
हास्तिकं तु हस्तिनां स्यादापूपिकाद्यचेतसाम् । धेनूनां धैनुकं धेन्वन्तानां गौधेनुकादयः ॥ १४१८
केदारकं कैदारकं कैदार्यमपि तद्गणे । ब्राह्मणादेर्ब्राह्मण्यं माणव्यं वाडव्यमित्यपि ॥ १४१९
गणिकानां तु गाणिक्यं केशानां कैश्यकैशिके । अश्वानामाश्वमश्वीयं पर्शूनां पार्श्वमप्यथ ॥ १४२०
वातूलवात्ये वातानां गव्यागोत्रे पुनर्गवाम् । पाश्याखल्यादि पाशादेः खलादेः खलिनीनिभाः ॥ १४२१
जनता बन्धुता ग्रामता गजता सहायता । जनादीनां रथानां तु स्याद्रथ्या रथकट्यया ॥ १४२२
राजिर्लेखा तती वीथी मालाल्यावलिपङ्क्तयः । धोरणीश्रेण्युभौ तु द्वौ युगलं द्वितयं द्वयम् ॥ १४२३
युगं द्वैतं यमं द्वन्द्वं युग्मं यमलयामले । पशुभ्यो गोयुगं युग्मपरं षट्त्वे तु षड्गवम् ॥ १४२४
परश्शताद्यास्ते येषां परा संख्या शतादिकात् । प्राज्यं प्रभूतं प्रचुरं बहुलं बहु पुष्कले ॥ १४२५
भूयिष्ठं पुरुहं भूयो भूयिष्ठं पुरु स्फिरम् । स्तोकं क्षुल्लं तुच्छमल्पं दभ्राणुतलिनानि च ॥ १४२६
तनु क्षुद्रं कृशं सूक्ष्मं पुनः श्लक्ष्णं च पेलवम् । त्रुटौ मात्रा लवो लेशः कणो ह्रस्वं पुनर्लघु ॥ १४२७
अत्यल्पेऽल्पिष्ठमल्पीयः कणीयोऽणीय इत्यपि । दीर्घायते समे तुङ्गमुच्चमुन्नतमुद्धुरम् ॥ १४२८
प्रांशूच्छ्रितमुदग्रं च न्यङ्नीचं ह्रस्वमन्थरे । खर्वं कुब्जं वामनं च विशालं तु विशङ्कटम् ॥ १४२९
पृथूरु पृथुलं व्यूढं विकटं विपुलं बृहत् । स्फारं वरिष्ठं विस्तीर्णं ततं बहु महद्गुरुः ॥ १४३०
दैर्घ्यमायाम आनाह आरोहस्तु समुच्छ्रयः । उत्सेध उदयोच्छ्रायौ परिणाहो विशालता ॥ १४३१
प्रपञ्चाभोगविस्तारव्यामाः शब्दे स विस्तरः[2] । समासस्तु समाहारः संक्षेपः संग्रहोऽपि च ॥ १४३२
सर्वं समस्तमन्यूनं समग्रं सकलं समम् । विश्वाशेषा[3]खण्डकृत्स्नान्यक्षाणि निखिलाखिले ॥ १४३३
खण्डे[4]ऽर्धशकले भित्तं नेमशल्कदलानि च । अंशो भागश्च वण्टरः स्यात्पादस्तु तुरीयकः ॥ १४३४
मलिनं कच्चरं म्लानं कश्मलं[5] च मलीमसम् । पवित्रं पावनं पूतं पुण्यं मेध्यमथोज्ज्वलम् ॥ १४३५
विमलं विशदं वीध्रमवदातमनाविलम् । विशुद्धं शुचि चोक्षं तु निःशोध्यमनवस्करम् ॥ १४३६
निर्णिक्तं शोधितं मृष्टं धौतं क्षालितमित्यपि । संमुखीनमभिमुखं पराचीनं पराङ्मुखम् ॥ १४३७

मुख्यं प्रकृष्टं प्रमुखं प्रबर्हं वर्यं वरेण्यं प्रवरं पुरोगम् ।
अनुत्तरं प्राग्रहरं प्रवेकं प्रधानमग्रेसरमुत्तमाग्रे ॥ १४३८
ग्रामण्यग्रण्यग्रिमजात्याग्र्यानुत्तमान्यनवरार्ध्यवरे ।
प्रेष्ठपरार्ध्यपराणि श्रेयसि तु श्रेष्ठसत्तमे पुष्कलवत् ॥ १४३९

स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्यास्तल्लजश्च मतल्लिका ॥ १४४०
मचर्चिका प्रकाण्डोद्धौ प्रशस्यार्थप्रकाशकाः । गुणोपसर्जनोपाग्र्याण्यप्रधानेऽधमं पुनः ॥ १४४१
निकृष्टमणकं गर्ह्यमवद्यं काण्डकुत्सिते । अपकृष्टं प्रतिकृष्टं याप्यं[6] रेफो[7]ऽवमं ब्रुवम् ॥ १४४२
खेटं पापमपशदं कुपूयं चेलमर्व च । तदासेचनकं यस्य दर्शनाद्दृग्न तृप्यति ॥ १४४३

१. ग्रामशब्दो गुणान्तैरन्वेति. २. विग्रहोऽपि. ३. निःशेषमपि. ४. खण्डनमपि. ५. कल्मषमपि. ६. याव्यमपि. ७. रेपोऽपि.

चारु हारि रुचिरं मनोहरं वल्गु कान्तमभिरामबन्धुरे ।
वामरुच्यसुषमाणि शोभनं मञ्जुमञ्जुलमनोरमाणि च ॥ १४४४
साधुरम्यमनोज्ञानि पेशलं हृद्यसुन्दरे । काम्यं कम्रं कमनीयं सौम्यं च मधुरं प्रियम् ॥ १४४५
व्युष्टिः फलमसारं तु फल्गु शून्यं तु रिक्तकम् । शुन्यं तुच्छं वशिकं च निबिडं तु निरन्तरम् ॥ १४४६
निविरीसं घनं सान्द्रं नीरन्ध्रं बहलं दृढम् । गाढमविरलं चाथ विरलं तनु पेलवम् ॥ १४४७
नवं नवीनं सद्यस्कं प्रत्यग्रं नूत्ननूतने । नव्यं चाभिनवे जीर्णे पुरातनं चिरंतनम् ॥ १४४८
पुराणं प्रतनं प्रत्नं जरन्मूर्तं तु मूर्तिमत् । उच्चावचं नैकभेदमतिरिक्ताधिके समे ॥ १४४९
पार्श्वं समीपं सविधं समीपाभ्याशंसवेशान्तिकसंनिकर्षः ।
सदेशमभ्यग्रसनीडसंनिधानान्युपान्तं निकटोपकण्ठे ॥ १४५०
संनिकृष्टसमर्यादाभ्यर्णान्यासन्नसंनिधी । अव्यवहितेऽनन्तरं संसक्तमपटान्तरम् ॥ १४५१
नेदिष्ठमन्तिकतमं विप्रकृष्टपरे पुनः । दूरेऽतिदूरे दविष्ठं दवीयोऽथ सनातनम् ॥ १४५२
शाश्वतानश्वरे नित्यं ध्रुवं स्थेयस्त्वतिस्थिरम् । स्थास्नु स्थेष्ठं तत्कूटस्थं कालव्याप्येकरूपतः॥ १४५३
स्थावरं तु जङ्गमान्यज्जङ्गमं तु त्रसं चरम् । चराचरं जगदिङ्गं चरिष्णुश्चाथ चञ्चलम् ॥ १४५४
तरलं कम्पनं कम्प्रं परिप्लवचलाचले । चटुलं चपलं लोलं चलं पारिप्लवास्थिरे ॥ १४५५
ऋजावजिह्मप्रगुणाववाग्रेऽवनतानते । कुञ्चितं नतमाविद्धं कुटिले वक्रवेल्लिते ॥ १४५६
वृजिनं भङ्गुरं भुग्नमरालं जिह्ममूर्मिमत् । अनुगेऽनुपदान्वक्षान्वश्चैकाक्येक ऐककः ॥ १४५७
ऐकात्तानायनसर्गाग्राण्यैकाग्रं च तद्गतम् । अनन्यवृत्त्यैकायतनगतं चाथाद्यमादिमम् ॥ १४५८
पौरस्त्यं प्रथमं पूर्वमादिरग्रमथान्तिमम् । जघन्यमन्त्यं चरममन्तपाश्चात्यपश्चिमे ॥ १४५९
मध्यमं माध्यमं मध्यमीयं माध्यंदिनं च तत् । अभ्यन्तरमन्तरालं विचाले मध्यमान्तरे ॥ १४६०
तुल्यः समानः सदृक्षः सरूपः सदृशः समः । साधारणसधर्माणौ सवर्णः संनिभः सदृक् ॥ १४६१
स्युरुत्तरपदे प्रख्यः प्रकारः प्रतिमो निभः । भूतरूपोपमाः काशः संनीप्रप्रतीतः परः ॥ १४६२
औपम्यमनुकारोऽनुहारः साम्यं तुलोपमा । कक्षोपमानमर्चा तु प्रतिमायातना निधिः ॥ १४६३
छाया छन्दः कायो रूपं बिम्बं मानकृती अपि । सूर्मी स्थूणायः प्रतिमा हरिणी स्याद्धिरण्मयी ॥ १४६४
प्रतिकूलं तु विलोममपसव्यमपष्ठुरम् । वामं प्रसव्यं प्रतीपं प्रतिलोममपष्ठु च ॥ १४६५
वामं शरीरेऽङ्गं सव्यमपसव्यं तु दक्षिणम् । अवाधोच्छृङ्खलोद्दामा नियन्त्रितमनर्गलम् ॥ १४६६
निरङ्कुशे स्फुटे स्पष्टं प्रकाशं प्रकटोल्बणे । व्यक्तं वर्तुलं तु वृत्तं निस्तलं परिमण्डलम् ॥ १४६७
बन्धुरं तून्नतानतं स्थपुटं विषमोन्नतम् । अन्यदन्यतरद्भिन्नं त्वमेकमितरच्च तत् ॥ १४६८
करम्बः कबरो मिश्रः संपृक्तः खचितः समाः । विविधस्तु बहुविधो नानारूपः पृथग्विधः ॥ १४६९
त्वरितं सत्वरं तूर्णं शीघ्रं क्षिप्रं द्रुतं लघु । चपलाविलम्बिते च झम्पा संपातपाटवम् ॥ १४७०
अनारतं त्वविरतं संसक्तं सततानिशे । नित्यानवरताजस्रासक्ताश्रान्तानि संततम् ॥ १४७१
साधारणं तु सामान्यं दृढसंधि तु संहतम् । कलिलं गहने संकीर्णे तु संकुलमाकुलम् ॥ १४७२

१. रमणीयमपि. २. लडहोऽपि. ३. शाश्वतिकमपि. ४. अवगणोऽपि. ५. एकशब्दस्य तानादिभिरन्वयः. ६. मध्यंदिनमपि. ७. काशशब्दः समादिभ्यः परो योज्यः. ८. प्रतेः परत्र कृतिपर्यन्ता योज्याः. ९. निरर्गलमपि. १०. बहुरूप-पृथग्रूप-नानाविधा अपि.

कीर्णमाकीर्णं च पूर्णे त्वाचितं छन्नपूरिते । भरितं निचितं व्याप्तं प्रत्याख्याते निराकृतम् ॥ १४७३
प्रत्यादिष्टं प्रतिक्षिप्तमपविद्धं निरस्तवत् । परिक्षिप्ते वलयितं निवृत्तं परिवेष्टितम् ॥ १४७४
परिस्कृतं परीतं च त्यक्तं तूत्सृष्टमुज्झितम् । धूतं हीनं विधूतं च विन्नं वित्तं विचारिते ॥ १४७५
अवकीर्णे त्ववध्वस्तं संवीतं रुद्धमावृतम् । संवृतं पिहितं छन्नं स्थगितं चापवारितम् ॥ १४७६
अन्तर्हितं तिरोहितमन्तर्धिस्त्वपवारणम् । छदनं व्यवधान्तर्धापिधानस्थगनानि च ॥ १४७७
व्यवधानं तिरोधानं दर्शितं तु प्रकाशितम् । आविष्कृतं प्रकटितमुच्चण्डं त्ववलम्बितम् ॥ १४७८
अनादृतमवज्ञातं मानितं गणितं मतम् । रीढावज्ञावहेलान्यसूक्षणं चाप्यनादरे ॥ १४७९
उन्मूलितमावर्हितं स्यादुत्पाटितमुद्धृतम् । प्रेङ्खोलितं तरलितं लुलितं प्रेङ्खितं धुतम् ॥ १४८०
चलितं कम्पितं धूतं वेल्लितान्दोलिते अपि । दोलाप्रेङ्खोलनं प्रेङ्खा फाण्टं कृतमयत्नतः ॥ १४८१
अधःक्षिप्तं न्यञ्चितं स्यादूर्ध्वक्षिप्तमुदञ्चितम् । नुन्ननुत्तास्तनिष्ठ्यूतान्याविद्धं क्षिप्तमीरितम् ॥ १४८२
समे दिग्धलिप्ते रुग्णभुग्ने रूषितगुण्डिते । गूढगुप्ते च मुषितमूषिते गुणिताहते ॥ १४८३
स्यान्निशातं शितं शातं निशितं तेजितं क्ष्णुतम् । वृत्ते तु वृत्तवावृत्तौ ह्रीतह्रीणौ तु लज्जिते॥ १४८४
संगूढः स्यात्संकलिते संयोजित उपाहिते । पक्वे परिणतं पाके क्षीराज्यहविषां शृतम् ॥ १४८५
निष्पक्वं क्वथिते घुष्टघुष्टदग्धेषिताः समाः । तनूकृते त्वष्टतष्टौ विद्धे छिद्रितवेधितौ ॥ १४८६
सिद्धे निर्वृत्तनिष्पन्नौ विलीने विद्रुतद्रुतौ । उतं प्रोते स्यूतमूतमुतं च तन्तुसंतते ॥ १४८७
पाटितं दारितं भिन्ने विदरः स्फुटनं भिदा । अङ्गीकृतं प्रतिज्ञातमूरीकृतोररीकृते ॥ १४८८
संश्रुतमभ्युपगतमुररीकृतमाश्रुतम् । संगीर्णं प्रतिश्रुतं च छिन्ने लूनं छितं दितम् ॥ १४८९
छेदितं खण्डितं वृक्णं कृत्तं प्राप्तं तु भावितम् । लब्धमासादितं भूतं पतिते गलितं च्युतम्॥ १४९०
स्रस्तं भ्रष्टं स्कन्नपन्ने संशितं तु सुनिश्चितम् । मृगितं मार्गितान्विष्टान्वेषितानि गवेषिते ॥ १४९१
तिमिते स्तिमितक्लिन्नसार्द्रार्द्रोन्त्ताः समुन्नवत् । प्रस्थापितं प्रतिशिष्टं प्रतिहतप्रेषिते अपि ॥ १४९२
ख्याते प्रतीतप्रज्ञातवित्तप्रथितविश्रुताः । तप्ते संतापितो दूनो धूपायितश्च धूपितः ॥ १४९३
क्षीने स्त्यानमुपनतस्तूपसन्न उपस्थितः । निर्वातस्तु गते वाते निर्वाणः पावकादिषु ॥ १४९४
प्रवृद्धमेधितं प्रौढं विस्मितान्तर्गते समे । उद्वान्तमुद्गते गूनं हन्ने मीढं तु मूत्रिते ॥ १४९५
विदितं बुधितं बुद्धं ज्ञातं सितगते ऽवात् । मनितं प्रतिपन्नं च स्यन्ने रीणं स्रुतं स्नुतम् ॥ १४९६
गुप्तगोपायितत्रातावितत्राणानि रक्षिते । कर्म क्रिया विधा हेतुशून्या त्वास्या विलक्षणम् ॥ १४९७
कार्मणं मूलकर्माथ संवननं वशक्रिया । प्रतिबन्धे प्रतिष्टम्भः स्यादास्या त्वासना स्थितिः ॥ १४९८
परस्परं स्यादन्योन्यमितरेतरमित्यपि । आवेशाटोपौ संरम्भे निवेशो रचना स्थितौ ॥ १४९९
निर्बन्धोऽभिनिवेशः स्यात्प्रवेशोऽन्तर्विगाहनम् । गतौ वीङ्खा विहारेर्यापरिसर्पपरिक्रमाः ॥ १५००
व्रज्याटाट्या पर्यटनं चर्या त्वीर्या पथस्थितिः । व्यत्यासस्तु विपर्यासो वैपरीत्यं विपर्ययः ॥ १५०१
व्यत्ययेऽथ स्फातिर्वृद्धौ प्रीणनेऽवनतर्पणौ । परित्राणं तु पर्याप्तिर्हस्तधारणमित्यपि ॥ १५०२
प्रणतिः प्रणिपातोऽनुनयेऽथ शयने क्रमात् । विशय उपशायश्च पर्यायोऽनुक्रमः क्रमे ॥ १५०३
परिपाट्यानुपूर्व्यावृदतिपातस्त्वतिक्रमः । उपात्ययः पर्ययश्च समौ संबाधसंकटौ ॥ १५०४

१. अवशब्दस्य ज्ञातादिभिरन्वयः. २. अवमाननावगणने अपि. ३. असूक्षणमपि. ४. आन्दोलनमपि. ५. चोदितमपि. ६. वित्तमपि. ७. अवशब्दात्सितगते बोध्ये. ८. अटाटापि, अट्यापि.

कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् । अत्यर्थे गाढमुद्गाढं बाढं तीव्रं भृशं दृढम् ॥ १५०५
अतिमात्रातिमर्यादनितान्तोत्कर्षनिर्भराः । भरैकान्तातिवेलातिशया जृम्भा तु जृम्भणम् ॥ १५०६
आलिङ्गनं परिष्वङ्गः संश्लेष उपगूहनम् । अङ्कपाली परीरम्भः क्रोडीकृतिरथोत्सवे ॥ १५०७
महः क्षणोद्धवोद्धर्षा मेलके सङ्गसङ्गमौ । अनुग्रहोऽभ्युपपत्तिः समौ निरोधनिग्रहौ ॥ १५०८
विघ्नेऽन्तरायप्रत्यूहव्यवायाः समये क्षणः । वेला वारावक्सरः प्रस्तावः प्रक्रमान्तरम् ॥ १५०९
अभ्यादानमुपोद्घात आरम्भः प्रोपतः क्रमः[1] । प्रत्युत्क्रमः प्रयोगः स्यादारोहणं त्वभिक्रमः ॥ १५१०
आक्रमेऽधिक्रमक्रान्ती व्युत्क्रमस्तूत्क्रमाक्रमौ । विप्रलम्भो विप्रयोगो वियोगो विरहः समाः १५११
आभा राढा विभूषा श्रीरभिख्याकान्तिविभ्रमाः । लक्ष्मीश्छाया च शोभायां सुषमा सातिशायिनी १५१२
संस्तवः स्यात्परिचय आकारस्त्विङ्ग इङ्गितम् । निमित्ते कारणं हेतुर्बीजं योनिर्निबन्धनम् ॥ १५१३
निदानमथ कार्यं स्यादर्थः कृत्यं प्रयोजनम् । निष्ठानिर्वहणे तुल्ये प्रवाहो गमनं बहिः ॥ १५१४
जातिः सामान्यं व्यक्तिस्तु विशेषः पृथगात्मिका । तिर्यक्साचिः संहर्षस्तु स्पर्धाद्रोहस्त्वपक्रिया १५१५
वन्ध्ये मोघाफलमुधा अन्तर्गडुर्निरर्थकम् । संस्थानं संनिवेशः स्यादर्थस्यापगमे व्ययः ॥ १५१६
संमूर्छनं त्वभिव्याप्तिर्भ्रेषो भ्रंशो यथोचितात् । अभावो नाशे संक्रामसंक्रमौ दुर्गसंचरे ॥ १५१७
नीवाकस्तु प्रयामः स्यादवेक्षा प्रतिजागरः । समौ विस्रम्भविश्वासौ परिणामस्तु विक्रिया ॥ १५१८
चक्रावर्तो भ्रमो भ्रान्तिर्भ्रमिर्घूर्णिश्च घूर्णने । विप्रलम्भो विसंवादो विलम्भस्त्वतिसर्जनम् ॥ १५१९
उपलम्भस्त्वनुभवः प्रतिलम्भस्तु लम्भनम् । नियोगे विधिसंप्रैषौ विनियोगोऽर्पणं फले ॥ १५२०
लवोऽभिलावो लवनं निष्पावः पवनं पवः । निष्ठेवष्ठीवनष्ठ्यूतष्ठेवनानि तु थूत्कृते ॥ १५२१
निवृत्तिः स्यादुपरमो व्यपोपाङ्भ्यः परा रतिः[2] । विधूननं विधुवनं रिङ्खणं स्खलनं समे ॥ १५२२
रक्षणस्त्राणे ग्रहो ग्राहे व्यधो वेधे क्षये क्षिया । स्फरणं स्फुरणे ज्यानिर्जीर्णावथ वरो वृतौ ॥ १५२३
समुच्चयः समाहारोऽपहारापचयौ समौ । प्रत्याहार उपादानं बुद्धिशक्तिस्तु निष्क्रमः ॥ १५२४
इत्यादयः क्रियाशब्दा लक्ष्या धातुषु लक्षणम् । अथाव्ययानि वक्ष्यन्ते स्वः स्वर्गे भू रसातले ॥ १५२५
भुवो विहायसा व्योम्नि द्यावाभूम्योस्तु रोदसी । उपरिष्टादुपर्यूर्ध्वे स्यादधस्तादधोऽप्यवाक् ॥ १५२६
वर्जने त्वन्तरेणर्ते हिरुग्नाना पृथग्विना । साकं सत्रा समं सार्धममा सह कृतं त्वलम् ॥ १५२७
भवत्वस्तु च किं तुल्याः प्रेत्यामुत्र भवान्तरे । तूष्णीं तूष्णीकां जोषं च मौनं दिष्ट्या तु संमदे ॥ १५२८
परितः सर्वतो विष्वक्समन्ताच्च समन्ततः । पुरः पुरस्तात्पुरतोऽग्रतः प्रायस्तु भूमनि ॥ १५२९
सांप्रतमधुनेदानीं संप्रत्येतर्ह्यथाञ्जसा । द्राक्स्रागरं झटित्याशु मङ्क्ष्वह्नाय च सत्वरम् ॥ १५३०
सदा सनानिशं शश्वन्भूयोऽभीक्ष्णं पुनः पुनः । असकृन्मुहुः सायं तु दिनान्ते दिवसे दिवा ॥ १५३१
सहसैकपदे सद्योऽकस्मात्सपदि तत्क्षणे । चिराय चिररात्राय चिरस्य च चिराच्चिरम् ॥ १५३२
चिरेण दीर्घकालार्थे कदाचिज्जातु कर्हिचित् । दोषा नक्तमुषा रात्रौ प्रगे प्रातरहर्मुखे ॥ १५३३
तिर्यगर्थे तिरः साचि निष्फले तु वृथा मुधा । मृषा मिथ्यानृतेऽभ्यर्णे समया निकषा हिरुक् ॥ १५३४
शं सुखे बलवत्सुष्ठु किमुतातीव निर्भरे । प्राक्पुरा प्रथमे संवद्वर्षे परस्परं मिथः ॥ १५३५
उषा निशान्तेऽल्पे किंचिन्मनागीषच्च किंचन । आहो उताहो किमुत वितर्के किं किमूत च ॥ १५३६
इतिह स्यात्संप्रदाये हेतौ यत्तद्यतस्ततः । संबोधनेऽङ्ग भोः पाट् प्याट् हे है हंहोऽरे रेऽपि च ॥ १५३७

---

१. क्रमशब्दः प्रोपाभ्यां परो योज्यः. २. रतिशब्दः व्यादिभिरन्वेति.

८
32

श्रौषट्वौषट्वषट्स्वाहा स्वधा देवहविर्हुतौ । रहस्युपांशु मध्येऽन्तरन्तरेणान्तरेऽन्तरा ॥ १५३८
प्रादुराविः प्रकाशे स्यादभावे त्व न नो नहि । हठे प्रसह्यमा मास्म वरणेऽस्तमदर्शने ॥ १५३९
अकामानुगतौ कामं स्यादोमां परमं मते । कच्चिदिष्टपरिप्रश्नेऽवश्यं नूनं च निश्चये ॥ १५४०
बहिर्बहिर्भवे ह्यः स्यादतीतेऽह्नि श्व एष्यति । नीचैरल्पे महत्युच्चैः सत्त्वेऽस्ति दुष्ठु निन्दने ॥ १५४१
ननुच स्याद्विरोधोक्तौ पक्षान्तरे तु चेद्यदि । शनैर्मन्देऽवरे त्ववार्ग्रोषोक्तावुं नतौ नमः ॥ १५४२

इत्याचार्यहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां सामान्यकाण्डः षष्ठः ॥ ६ ॥

इति श्रीहेमचन्द्राचार्यविरचितोऽभिधानचिन्तामणिः समाप्तः ।



॥ श्रीः ॥

# अभिधानसंग्रहः ।

## ( ७ )

श्रीहेमचन्द्राचार्यविरचितः

## अभिधानचिन्तामणिपरिशिष्टः ।

निर्वाणे स्याच्छीतीभावः शान्तिर्नैश्चिन्त्यमन्तिकः । शिष्ये छात्रो भद्रे भव्यं काम्यं सुकृतसूनृते ॥ १

इत्याचार्यहेमचन्द्रविरचितेऽभिधानचिन्तामणिपरिशिष्टे देवाधिदेवकाण्डः प्रथमः ॥ १ ॥

---

फलोदयो मेरुपृष्ठं वासवावाससैरिकौ । दिदिविर्दीदिविर्द्युश्च दिवं च स्वर्गवाचकाः ॥ २

निलिम्पाः कामरूपाश्च साध्याः शोभाश्चिरायुषः । पूंजिता मर्त्यमहिताः सुबाला वेयुभाः सुराः ॥ ३

द्वादशार्का वसवोऽष्टौ विश्वेदेवास्त्रयोदश । षट्त्रिंशत्तुषिताश्चैव षष्टिराभास्वरा अपि ॥ ४

षट्त्रिंशदधिके माहाराजिकाश्च शते उभे । रुद्रा एकादशैकोनपञ्चाशद्वायवोऽपि च ॥ ५

चतुर्दश तु वैकुण्ठाः सुशर्माणः पुनर्दश । साध्याश्च द्वादशेत्याद्या विज्ञेया गणदेवताः ॥ ६

सूर्ये वाजी लोकबन्धुर्भानेमिर्भानुकेसरः । सहस्राङ्को दिवापुष्टः कालभृद्रात्रिनाशनः ॥ ७

पपीः सदागतिः पीतुः सांवत्सररथः कपिः । इशानः पुष्करो ब्रह्मा बहुरूपश्च कर्णसूः ॥ ८

वेदोदयः खतिलकः प्रत्यूषाण्डं सुरावृतः । लोकप्रकाशनः पीथो जगद्दीपोऽम्बुतस्करः ॥ ९

अरुणे विपुलस्कन्धो महासारथिराश्मनः । चन्द्रस्तु मास्तपोराजौ शुभांशुः श्वेतवाहनः ॥ १०

जर्णः सूप्रो राजराजो यजतः कृत्तिकाभवः । यैक्षराडौषधीगर्भस्तपसः शयतो बुधः ॥ ११

स्यन्दः खसिन्धुः सिन्धूत्थः श्रविष्ठारमणस्तैपा । आकाशचमसः पीतुः क्लेदुः पर्वरिचिक्लिदौ ॥ १२

परिज्वा युवनो नेमिश्चन्दिरः स्नेहरेकभूः । भौमे व्योमोल्मुकैकाङ्गौ गीःपतिस्तु महामतिः ॥ १३

प्रख्याः प्रचक्षाः वाग्वाग्मी गौरो दीदिविगीरथौ । शुक्रे भृगुः शनौ पङ्गुः श्रुतकर्मा महाग्रहः ॥ १४

श्रुतश्रवोऽनुजः कालो ब्रह्मण्यश्च यमः स्थिरः । क्रूरात्मा चाथ राहौ स्यादुपराग उपप्लवः ॥ १५

केतावूर्ध्वकचो ज्योतीरथग्रहाश्रयौ ध्रुवे । अगस्त्ये विन्ध्यकूटः स्याद्दक्षिणाशारतिर्मुनिः ॥ १६

सत्याग्निर्वारुणिः क्राथिस्तपनः कलसीसुतः । व्युष्टे निशात्यय(न्त)गोसर्गौ निशा चक्रभेदिनी ॥ १७

निषद्वरी निशीथ्या निट् घोरा वासरकन्यका । शताक्षी राक्षसी याम्या घृतार्चिस्तामसी तमिः ॥ १८

शार्वरीक्षणिनीनक्तापैशाचीवासुरा उशा । दिनात्ययः प्रदोषे स्याद्ध्वान्ते वृत्रो रजोवलम् ॥ १९

---

१. 'पूजिलाः' ख. २. 'वयुनाः' ख. ३. 'भद्राः' ख. ४. 'यक्षराजो' ख. ५. 'स्तथा' ख. ६. 'स्नेदुरेकभूः' ख. ७. 'गीष्पतिः' ख. ८. 'निशि' ख. ९. 'उमा' ख.

रात्रिरागो नीलपङ्को दिनाण्डं दिनकेसरः । खपरागो निशावर्म वियद्भूतिर्दिगम्बरः ॥ २०
पक्षः कृष्णः सितो द्वेधा कृष्णो निशाह्वयोऽपरः । शुक्लो दि[१]नाह्वयः पूर्वो मासे वर्षांशको भवेत् ॥ २१
वर्षकोशो दिनमलः फाल्गुनालस्तु फाल्गुने । चैत्रे मौहनिकः कामसखश्च फाल्गुनानुजः ॥ २२
वैशाखे तूत्सरो ज्येष्ठमासे तु खरकोमलः । ज्येष्ठामूलीय इति च कार्तिके [२]सैरिकौमुदौ ॥ २३
हिमागमस्तु हेमन्ते वसन्ते पिकबान्धवः । पुष्पसाधारणश्चापि ग्रीष्मे तूष्मायणो मतः ॥ २४
आखोरपचौ वर्षे तु ऋतुवृत्तिर्युगांशकः । कालग्रन्थिर्मासमलः संवत्सर्वर्तुशारदौ ॥ २५
वत्स इद्वत्सर इडावत्सरः परवाणिवत् । नक्षत्रवर्त्मनि पुनर्भ्रहनेमिर्न[३]भोटवी ॥ २६
छायापथश्च मेघे तु व्योमधूमो न[४]भोध्वजः । गडयित्नुर्ग[५]र्दयित्नुर्वार्मसिर्वारिवाहनः ॥ २७
खतमालोऽप्यथासारे धारासंपात इत्यपि । करकेऽम्बुघनो मेघकफो मेघास्थि मिं[६]ञ्जिका ॥ २८
[७]वीजोदकं तोयडिम्भो वर्षाबीजमिरावरम् । यथोत्तरेतरापाची तथापाचीतरोत्तरा ॥ २९
इन्द्रे तु खिदिरो नेरी त्र्[८]यस्त्रिंशपतिर्जयः । गौरावस्कन्दी बन्दीको वराणो देवदुन्दुभिः ॥ ३०
किणालातश्च हरिमान्यामनेमिरसन्महाः । [९]शापी विर्मिहिरो वज्रदक्षिणो व[१०]युनोऽपि च ॥ ३१
स्यात्पौलोम्यां तु शक्राणी चारुरावा शतावरी । महेन्द्राणी परिपूर्णसहस्रचन्द्रवत्यपि ॥ ३२
जयन्ते यागसंतानो वृषणश्वो हरेर्हये । मातलौ हयंकषः स्यादैरावणे मदाम्बरः ॥ ३३
सदादानो भद्ररेणुः पुरे त्वैन्द्रे सुदर्शनम् । नासिक्ययोस्तु नासत्यदस्रौ प्रवरवाहनौ ॥ ३४
गदान्तकौ य[११]ज्ञवाहौ यमे तु यमुनाग्रजः । महासत्यः पुराणान्तः कालकूटोऽथ राक्षसे ॥ ३५
पलप्रियः क[१२]खापुत्रः कर्वेरो नरविष्वणः । आशिरो हनुषः शङ्कुर्वि[१३]धुरो जललोहितः ॥ ३६
उद्धरः स्तब्धसंभारो रक्तग्रीवः प्रवाहिकः । संध्याबलो रात्रिबलस्त्रिशिराः समितीपदः ॥ ३७
वरुणे तु प्रतीचीशो दुन्दुभ्युद्दामसंवृताः । धनदे निधनाक्षः स्यान्महासत्त्वः प्रमोदितः ॥ ३८
रत्नगर्भ उत्तराशाधिपतिः सत्यसंगरः । धनकेलिः सुप्रसन्नः परिविद्धोऽलका पुनः ॥ ३९
वसुप्रभा वसुसारा शंकरे नन्दिवर्धनः । बहुरूपः सुप्रसादो मिहिराणोऽपराजितः ॥ ४०
कङ्कटीको गुह्यगुरुर्भगनेत्रान्तकः खरुः । परिणाहो दशबाहुः सुभगोऽण्वे[१४]कलोचनः ॥ ४१
गोपालो वरवृद्धोऽहिपर्यङ्कः पांसुचन्दनः । कूटकृन्मन्दरमणिर्नवशक्तिर्म[१५]हाम्बकः ॥ ४२
कोणवादी शैलधन्वा विशालाक्षोऽक्षतस्वनः । उन्मत्तवेषः शवरः सिताङ्गो धर्मवाहनः ॥ ४३
महाकान्तो वह्निनेत्रः स्त्रीदेहार्धो नृवेष्टनः । महानादो नराधारो भूरिरेको दशोत्तमः ॥ ४४
[१६]यौटी यौटीङ्गोऽर्धकूटः समिरो धूम्रयोगिनौ । उलन्दो [१७]यैतः कालो जटाधरदशाव्ययौ ॥ ४५
संध्यानाटी रेरिहाणः शङ्कुश्च कपिलाञ्जनः । जगद्धो[१८]णिर्रर्धकालो दिशांप्रियतमोऽतलः ॥ ४६
जगत्स्रष्टा कटाटङ्कः कटप्रूहीरहृत्कराः । गौतमी कौशिकी कृष्णा तामसी बाभ्रवी जया ॥ ४७
कालरात्रिर्महामाया भ्रामरी यादवी वरा । बर्हिध्वजा शूलधरा परमब्रह्मचारिणी ॥ ४८
अमोघा विन्ध्यनिलया षष्ठी कान्तारवासिनी । जाङ्गुली बदरीवासा वरदा कृष्णपिङ्गला ॥ ४९

---

१. 'दिवाह्वयः' ख. २. 'सैर' ख. ३. 'नभोवटी' ख. ४. 'नभध्वजः' क. ५. 'गर्दयित्नु' क. ६. 'पुञ्जिका' ख. ७. 'जीवोदकम्' ख. ८. 'त्राय' क-ख. ९. 'शपीवि' ख. १०. 'वियुनो' ख. ११. 'यज्ञवहौ' ख. १२. 'खषापुत्रः' ख. १३. 'विधुरः' ख. १४. 'मेकलोचनः' क. १५. 'महावुकः' ख. १६. 'जोटी जोटिङ्गो' ख. १७. 'यजतः' ख. १८. 'अर्धकलो' ख.

दृषद्वतीन्द्रभगिनी प्रगल्भा रेवती तथा । महाविद्या सिनीवाली रक्तदन्त्येकपाटला ॥ ५०
एकपर्णा बहुभुजा नन्दपुत्री महाजया । भद्रकाली महाकाली योगिनी गणनायिका ॥ ५१
हासा भीमा प्रकूष्माण्डी [1]गदिनी वारुणी हिमा । अनन्ता विजया क्षेमा मानस्तोका कुहावती ॥ ५२
चारणा च पितृगणा स्कन्दमाता घनाञ्जनी । गान्धर्वी कर्वरी गार्गी सावित्री ब्रह्मचारिणी ॥ ५३
कोटिश्रीर्मन्दरावासा केशी मलयवासिनी । कालायनी विशालाक्षी [2]किराती गोकुलोद्भवा ॥ ५४
[3]ऐकानसी नारायणी शैला शाकंभरीश्वरी । प्रकीर्णकेशी कुण्डा च नीलवस्त्रोप्रचारिणी ॥ ५५
अष्टादशभुजा पौत्री शिवदूती यमस्वसा । [4]सुनन्दा विकचा लम्बा जयन्ती नकुलाकुला ॥ ५६
विलङ्का [5]नन्दिनी नन्दा नन्दयन्ती निरञ्जना । कालंजरी शतमुखी वि[6]कराली करालिका ॥ ५७
विरजाः पुरला जारी बहुपुत्री कुलेश्वरी । कैटभी कालदमनी दर्दुरा कुलदेवता ॥ ५८
रौद्री कुन्द्रा महारौद्री कालंगमा महानिशा । बलदेवस्वसा पुत्री ह्रीरी क्षेमंकरी प्रभा ॥ ५९
मारी हैमवती चापि गोला शिखरवासिनी । चामुण्डायां महाचण्डी चण्डमुण्डाप्यथाखुगे ॥ ६०
पृश्निगर्भः प्रश्निशृङ्गो द्विशरीरस्त्रिधातुकः । हस्तिमल्लो विषाणान्तः स्कन्दे तु [7]करवीरकः ॥ ६१
सिद्धसेनो वैजयन्तो बालचर्यो दिगम्बरः । भृङ्गी तु चर्मी ब्रह्मा तु क्षेत्रज्ञः पुरुषः सनत् ॥ ६२
नारायणे तीर्थपादः पुण्यश्लोको वलिंदमः । उरुक्रमोरुगायौ च तमोघ्नः श्रवणोऽपि च ॥ ६३
उदारथिर्लेतापर्णः समुद्रः पांसुजालिकः । चतुर्व्यूहो नवव्यूहो नवशक्तिः [8]प्रगण्डजित् ॥ ६४
द्वादशमूलः शतको दशावतार एकदृक् । हिरण्यकेशः सोमोऽहिस्त्रिधामा त्रिककुत्रिपात् ॥ ६५
मानंजरः पराविद्धः पृश्निगर्भोऽपराजितः । हिरण्यनाभः श्रीगर्भो वृषोत्साहः सहस्रजित् ॥ ६६
ऊर्ध्वकर्मा यज्ञधरो धर्मनेमिरसंयुतः । पुरुषो योगनिद्रालुः खण्डास्यः शलकाजितौ ॥ ६७
कालकुण्ठो वरारोहः श्रीकरो वायुवाहनः । वर्धमानश्चतुर्दंष्ट्रो नृसिंहवपुरव्ययः ॥ ६८
कपिलो भद्रकपिलः सुषेणः समितिंजयः । [9]ऋतुधामा वासुभद्रो बहुरूपो महाक्रमः ॥ ६९
विधाताधार एकाङ्गो वृषाक्षः सुवृषोऽक्षजः । रन्तिदेवः सिन्धुवृषो जितमन्युर्[10]वृकोदरः ॥ ७०
बहुशृङ्गो रत्नबाहुः पुष्पहासो महातपाः । लोकनाभः सूक्ष्मनाभो धर्मनाभः पराक्रमः ॥ ७१
पद्महासो महाहंसः पद्मगर्भः सुरोत्तमः । शतवीरो महामायो ब्रह्मनाभः सरीसृपः ॥ ७२
वृन्दाङ्कोऽधोमुखो धन्वी सुधन्वा विश्वभुक्स्थिरः । शतानन्द[11]श्चरुश्चापि [12]यवनारिप्रमर्दनः ॥ ७३
[13]यज्ञनेमिर्लोहिताक्ष एकपाद्विपदः कपिः । एकशृङ्गो यमकील आसन्दः शिवकीर्तनः ॥ ७४
शद्रुर्वंशः श्रीवराहः सदायोगी सुयामुनः । बलभद्रे तु भद्राङ्गः फालो गुप्तवरो बली ॥ ७५
प्रलापी भद्रचलनः पौरः शेषाहिनामभृत् । लक्ष्म्यां तु भर्भरी विष्णुशक्तिः क्षीराब्धिमानुषी ॥ ७६
कामे तु यौवनोद्भेदः शिखिमृत्युर्महोत्सवः । शमान्तकः सर्वधन्वी [14]रागरज्जुप्रवर्तकः ॥ ७७
मनोदाही मथनश्च गरुडस्तु विषापहः । पक्षिसिंहो महापक्षो महावेगो विशालकः ॥ ७८
[15]उन्नतीशः श्वमुखसूः शिलानीहोऽहिभुक्च सः । बुद्धे तु भगवान्योगी बुधो विज्ञानदेशनः ॥ ७९
महासत्त्वो लोकनाथो बोधिरर्हन्सुनिश्चितः । गुणाब्धिर्विगतद्वन्द्वो वचने स्यात्तु जल्पितम् ॥ ८०

---

१. 'गण्डिनी' ख. २. 'किरामी' ख. ३. 'एकामसा' ख. ४. 'सुमन्दा' ख. ५. 'मन्दिनी मन्दा मन्दयन्ती' ख. ६. 'चिकसला' ख. ७. 'करवारकः' ख. ८. 'षडङ्गजित्' ख. ९. 'ऋतधाना' ख. १०. 'वृषोदरः' क. ११. 'श्चरु-श्चापि' ख. १२. 'यवनारिः' ख. १३. 'ऋक्षनेमिः' ख. १४. 'रागरज्जुः प्रकर्षकः' ख. १५. 'उलूतीशः' ख.

लपितोदितभणिताभिधानगदितानि च । हूतौ हक्कारकारौ च चण्डालानां तु वल्लकी ॥ ८१
काण्डवीणा कुवीणा च डक्कारी किंनरी तथा । सारिका खुङ्खुणी चाथ दर्दरे कलसीमुखः ॥ ८२
सूत्रकोणो डमरुकं समौ पणवर्किंकणौ । शृङ्गवाद्ये शृङ्गमुखं हुडुकस्तालमर्दलः ॥ ८३
काहला तु कुहाला स्याच्चण्डको लाहला च सा । संवेशप्रतिबोधार्थ द्रगडद्रकटावुभौ ॥ ८४
देवतार्चनतूर्ये तु धूमलो वलिरित्यपि । क्षुल्लकं मृतयात्रायां मङ्गले प्रियवादिका ॥ ८५
रणोद्यमे लर्धतूरो वाद्यभेदास्तथापरे । डिण्डिमो झर्झरो मड्डुस्तिमिला किरिकिञ्चिका ॥ ८६
लम्बिका टट्टरी वेध्या कलापूरादयोऽपि च । भयंकरे तु डमरमाभीलं भासुरं तथा ॥ ८७
आश्चर्ये फुल्लकं मोहो वीक्ष्यो लोतस्तु दृग्जले । निद्रायां तामसी सुप्ते सुष्वापः सुखसुप्तिका ॥ ८८
आकारगूहने चावकटिकावकुठारिका । गृहजालिकाथ सूत्रधारे स्याद्दीर्घदर्शकः ॥ ८९
पूज्ये भैरटको भट्टः प्रयोज्यः पूज्यनामतः ॥ ९०

इत्याचार्यहेमचन्द्रविरचितेऽभिधानचिन्तामणिपरिशिष्टे देवकाण्डो द्वितीयः ॥ २ ॥

---

छेकालच्छेकिलौ छेके काहलोऽस्फुटभाषिणि । मूके जडकडौ मूर्खे लनेडो नामवर्जितः ॥ ९१
परतन्त्रे वशायत्तावधीनोऽप्यथ दुर्गते । क्षुद्रो हीनश्च दीनश्च भाटिस्तु गणिकाभृतौ ॥ ९२
त्रेसुत्रस्तौ तु चकितेऽथ क्षुद्रप्रखलौ खले । चोरे तु चोरडो रात्रिचरो याच्ञा तु भिक्षणा ॥ ९३
अभिषस्तिर्मार्गणा च बुभुक्षायां क्षुधाक्षुधौ । भक्तमण्डे तु प्रस्नावप्रस्नवाच्छोदनास्रवाः ॥ ९४
अपूपे पारिशालोऽथ करम्बो दधिसक्तुषु । इण्डेरिका तु वटिका शष्कुली लर्धलोटिका ॥ ९५
पर्पटास्तु मर्मराला घृताण्डी तु घृतौषणी । समिता खण्डाज्यकृतौ मोदको लड्डुकश्च सः ॥ ९६
एलामरिचादियुतः स पुनः सिंहकेसरः । लाजेषु भरुडोद्रूषखेदिकापरिवारकाः ॥ ९७
दुग्धे योग्यं बालसात्म्यं जीवनीयं रसोत्तमम् । सरं गव्यं मधुज्येष्ठं धारोष्णं तु पयोऽमृतम् ॥ ९८
दध्नि श्रीघनमङ्गल्ये तक्रे कट्वरसायणे । अर्शोघ्नं परमरसः कुल्माषाभिषुते पुनः ॥ ९९
गृहाम्बु मधुरा चाथ स्यात्कुस्तुम्बुरुरल्लुका । मरिचे तु द्वारवृत्तं मरीचं वलितं तथा ॥ १००
पिप्पल्यामोषणा शौण्डी चपला तीक्ष्णतण्डुला । ऊषणा तण्डुलफला काला च कृष्णतण्डुला ॥ १०१
जीरे जीरणजरणौ हिङ्गौ तु भूतनाशनम् । अगूढगन्धमत्युग्रं लिप्सौ लालसलम्पटौ ॥ १०२
लोलो लिप्सा तु धनाया रुचिरीप्सा च कामना । पूजा त्वपचितिरथ चिपिटो नम्रनासिके ॥ १०३
पङ्गुलस्तु पीठसर्पी किलातस्त्वल्पवर्ष्मणि । सर्वे ह्रस्वोऽनेडमूकस्त्वन्धे न्युब्जस्त्वधोमुखे ॥ १०४
पित्ते पलाग्निः पललज्वरः स्यादग्निरेचकः । कफे सिंहानकः खेटः स्यात्कूकुदे तु कूपदः ॥ १०५
पारमितोऽथ कायस्थः करणोऽक्षरजीविनि । क्षमे समर्थोऽलंभूष्णुः पादातपदगौ समौ ॥ १०६
जाम्बूलमालिकोद्वाहे वरयात्रा तु दौन्दुभी । गोपाली वर्णके शान्तियात्रा वरनिमन्त्रणे ॥ १०७
स्यादिन्द्राणीमहे हेलिरूलुलुर्मङ्गलध्वनिः । स्याचु स्वस्त्ययनं पूर्णकलसे मङ्गलाह्निकम् ॥ १०८
शान्तिके मङ्गलस्नानं वारिपल्लववारिणा । हस्तलेपे तु करणं हस्तबन्धे तु पीडनम् ॥ १०९

---

१. 'त्रंकिणौ' ख. २. 'चन्द्र' ख. ३. 'क्षुण्णकम्' क. ४. 'लुञ्चिका' ख. ५. 'ढड्डरी' ख. ६. 'वीक्षः' ख. ७. 'भटरक' इति प्रतिभाति; 'भट्टारक' इति ख. पुस्तके पाठः. ८. 'दीनश्च नीचश्च' ख. ९. 'अस्नु' क. १०. 'अर्धमोटिका' ख. ११ 'घृतोत्प्रणी' ख. १२ 'लटिका' क. १३ 'बलसात्म्यम्' क. १४ 'ऊषणा' क. १५ 'उषणा' ख. १६ 'जीरेण' क. १७ 'किरातः' क.

तच्छेदे समयभ्रंशो धूलिभक्ते तु वार्तिकम् । कुलटायां तु दुःशृङ्गी बन्धुदा कलकूणिका ॥ ११०
धर्षणी लाञ्छनी खण्डशीला मदननालिका । त्रिलोचना मनोहारी पालिः सश्मश्रुयोषिति ॥ १११
श्रमणायां भिक्षुणी स्याद्वेश्यायां तु खगालिका । वारवाणिः कामलेखा क्षुद्रा चेट्यां गणेरुका ॥ ११२
वडवा कुम्भदासी च पुत्रे तु कुलधारकः । सदायादो द्वितीयश्च पुत्र्यां धीदा समर्धुका ॥ ११३
देहसंचारिणी चाप्यपत्ये संतानसंतती । नप्ता तु दुहितुः पुत्रे स्यात्कनिष्ठे तु कन्यसः ॥ ११४
ज्येष्ठभगिन्यां तु वीरभवन्ती स्यात्तु नर्मणि । सुखोत्सवो रागरसो विनोदोऽपि किलोऽपि च ॥ ११५
वप्पो जनित्रो रेतोधास्ताते जानी तु मातरि । देहे सिंनं प्रजनुकश्चतुःशाखं षडङ्गकम् ॥ ११६
व्याधिस्थानं च देहैकदेशो गात्रं कचे पुनः । वृजिनो वेल्लिताग्रोऽस्रो धम्मिल्ले मौलिजूटकौ ॥ ११७
कर्परी तु कबर्यां स्यात्प्रलोभ्यो विशदे कचे । मुखे दन्तालयं स्योनं घनं चरं घनोत्तमम् ॥ ११८
कर्णप्रान्तस्तु धारा स्यात्कर्णमूलं तु शीलकम् । अक्ष्णि रूपग्रहो देवदीपो नासा तु गन्धहृत् ॥ ११९
नसा गन्धवहा नस्या नासिक्यं गन्धनालिका । ओष्ठे तु दशनोच्छिष्टो रसालेपी च वाग्दलम् १२०
श्मश्रुणि व्यञ्जनं कोटो दन्ते मुखखुरः खरुः । दालुर्जिह्वा तु रसिका रसा च रसमातृका ॥ १२१
रसा काकुर्ललना च वक्त्रदलं तु तालुनि । अवटौ तु शिरःपीठं कफणौ रत्निपृष्ठकम् ॥ १२२
बाहूपबाहुसंधिश्च हस्ते भुजदलः सलः । अथ व्यामे वियामः स्याद्बाहुचापस्तनूतलः ॥ १२३
हृद्यसहं मर्मवरं गुणाधिष्ठानकं त्रसम् । स्तनौ तु धरणावग्रे तयोः पिप्पलमेचकौ ॥ १२४
जठरे मलुको रोमलताधारोऽथ क्लोमनि । स्यात्ताण्ड्यं क्लपुषं क्लोममथ नाभौ पुंतारिका ॥ १२५
शिरामूलं कटीकूपौ तूबलिङ्गौ रतावुके । शिश्ने तु लङ्गुलं शङ्कु लाङ्गूलं शेफशेफसी ॥ १२६
रक्ते तु शोध्यकीलाले मांसे तूद्धः समारटम् । लेपनं च रोमणि तु त्वग्मलं वालपुत्रकः ॥ १२७
कूपजो मांसनिर्यासः परित्राणमथ स्नसा । तन्त्रीनखारुस्नावानः संधिबन्धनमित्यपि ॥ १२८
अगरौ प्रवरं शृङ्गं शीर्षकं मृदुलं लघु । वरद्रुमः परमदः प्रकरं गन्धदारु च ॥ १२९
चन्दने पुनरेकाङ्गं भद्रश्रीः फलकीत्यपि । जातीफले सोमनसं पुटकं मदशौण्डकम् ॥ १३०
कोशफलं कुङ्कुमे तु करटं वासनीयकम् । प्रियङ्गु पीतकाबेरं घोरं पुष्परजो वरम् ॥ १३१
कुसुम्भं च जवापुष्पं कुसुमान्तं च गौरवम् । वृक्षधूपे तु श्रीवेष्टो दधिक्षीरघृताह्वयः ॥ १३२
रचनायां परिस्पन्दः प्रतियत्नोऽथ कुण्डले । कर्णादर्शो मेखला तु लालिनी कटिमालिका ॥ १३३
अथ किङ्किण्यां घर्घरी विद्या विद्यामणिस्तथा । नूपुरे तु पादशीली मन्दीरं पादनालिका ॥ १३४
पादाङ्गुलीयके पादपालिका पादकीलिका । वस्त्रे निवसनं वस्नं सत्रं कर्पटमित्यपि ॥ १३५
दशासु वस्त्रपेश्योऽथ हिमवातापहांशुके । द्विखण्डको वरकश्च चक्रवर्तिन्यधीश्वरः ॥ १३६
अर्जुने विजयश्चित्रयोधी चित्राङ्गसूदनः । योगी धन्वी कृष्णपक्षो नन्दिघोषस्तु तद्रथः ॥ १३७
ग्रन्थिकस्तु सहदेवो नकुलस्तन्तिपालकः । माद्रेयाविमौ कौन्तेया भीमार्जुनयुधिष्ठिराः ॥ १३८
द्वयेऽपि पाण्डवेयाः स्युः पाण्डवाः पाण्डवायनाः । राजच्छत्रे नृपलक्ष्म चमरः स्यात्तु चामरे ॥ १३९
स्यान्न्यायद्रष्टरि स्थेयो द्वाःस्थे द्वाःस्थितिदर्शकः । क्षुद्रोपकरणानां स्यादध्यक्षः पारिकार्मिकः ॥ १४०

---

१. 'शिनं' ख. २. 'स्तः' ख. ३. 'दन्तालयस्तेरं' ख. ४. 'वरं' ख. ५. 'शीलकः' ख. ६. 'तनूनलः' ख. ७. 'मर्मचरम्' क. ८. 'पुनारिका' ख. ९. 'क्षिरामूलं' क. १०. 'प्रकारं' क. ११. 'अलंकारशेखरश्च' इति पुस्तद्वयेऽप्यधिकमुपलभ्यते. १२ 'द्वाःस्थितदर्शकः' ख.

पुराध्यक्षे कोट्टपतिः पौरिको दाण्डपाशिकः। वेध्यं निमित्तं बाणे तु लक्ष्यहा मर्मभेदनः॥ १४१
वीरश्च वीरशङ्कुश्च कदम्बोऽप्यजकण्टकः। नाराचो लोहनालोऽजसायकोऽसिस्तु सायकः॥ १४२
श्रीगर्भो विजयः शास्ता व्यवहारः प्रजाकरः। धर्मप्रचारो धाराङ्गो धाराधरकरालिकौ॥ १४३
चन्द्रभासश्च शस्त्रोऽथ क्षुर्यसी कोशशायिका। पत्रं च धेनुका पत्त्रपाले तु हुलमातृका॥ १४४
कुट्टन्ती पत्रफलाथ शक्तिः कासूर्महाफला। अष्टतालायता सा च पट्टिसस्तु खुरोपमः॥ १४५
लोहदण्डस्तीक्ष्णधारो दुःस्फोटाराफलौ समौ। चक्रं तु वलयप्रायमरसंचितमित्यपि॥ १४६
शतघ्नी तु चतुस्ताला लोहकण्टकसंचिता। अयःकण्टकसंछन्नाशतघ्ने च महाशिला॥ १४७
भुषुण्डी स्याद्दारुमयी वृत्तायःकीलसंचिता। कणयो लोहमात्रोऽथ चिरिका तु हुलाग्रका॥ १४८
वराहकर्णकोऽन्वर्थः फलपत्त्राग्रके हुलम्। मुनयोऽक्षशेखरं च शराभ्यास उपासनम्॥ १४९
जिष्णौ तु विजयी जैत्रः स्याच्छृगाली तु विप्लवे। करमध्ये सौम्यं तीर्थमथ स्वाभियमे तपः॥ १५०
सत्यवत्यां गन्धवती मत्स्योदर्यथ वक्रये। भाटकोऽथ साक्षिणि स्यान्मध्यस्थः प्राश्निकोऽप्यथ॥ १५१
कूटसाक्षी मृषासाक्षी सूची स्याद्दुष्टसाक्षिणि। पादुकायां पादरथी पादजङ्घुः पदत्वरा॥ १५२
पादवीथी च पेशी च पादपीठी पदायता। नापिते ग्रामणीभण्डिवाहक्षौरिकभाण्डिकाः॥ १५३

इत्याचार्यहेमचन्द्रविरचितेऽभिधानचिन्तामणिपरिशिष्टे मर्त्यकाण्डस्तृतीयः॥ ३॥

---

अथ पृथ्वी महाकान्ता क्षान्ता मेर्वद्रिकर्णिका। गोत्रकीला घनश्रेणी मध्यलोका जगद्वहा॥ १५४
देहिनी केलिनी मौलिर्महास्थल्यम्बरस्थली। गिरौ प्रपाती कुट्टार उर्वङ्गः कंदराकरः॥ १५५
कैलासे धनदावासो हराद्रिर्हिमवद्धसः। मलयश्चन्दनगिरिः स्याल्लोहे धीनधीवरे॥ १५६
ताम्रे पवित्रं कांस्यं च सीसके तु महाबलम्। चीनपिष्टं सैमेलूकं कृष्णं च त्रपुबन्धकम्॥ १५७
त्रपुणि श्वेतरूप्यं स्यात्सठं सलवणं रजः। परासं मधुकं ज्येष्ठं घनं च मुखभूषणम्॥ १५८
रजते त्रापुषं वङ्गजीवनं वसु भीरुकम्। स्वभ्रं सौम्यं च शोध्यं च रूप्रं भीरु जवीयसम्॥ १५९
सुवर्णे लोभनं शुक्रं तारजीवनमौजसम्। दाक्षायणं रक्तवर्णं श्रीमत्कुम्भं शिलोद्भवम्॥ १६०
वैणवं तु कर्णिकारच्छायं वेणुतटीभवम्॥ १६१

इति पृथ्वीकायः।

जले दिव्यमिरा सेव्यं कूपीटं घृतमङ्कुरः। विषं पिप्पलपातालमैलिलानि च कम्बलम्॥ १६२
पावनं षड्रसं चापि पङ्कूरं तु सितं पयः। किट्टिमं तदतिक्षारं शालूकं पङ्कगन्धिकम्॥ १६३
अन्धं तु कलुषं तोयमतिस्वच्छं तु काचिमम्। समुद्रे तु महाकच्छो दारदो धरणीप्लवः॥ १६४
महीप्रावार उर्वङ्गस्तिमिकोशो महाशयः। मुरंदरा तु मुरला सुरवेला तु नन्दिनी॥ १६५
चर्मण्वती रन्तिनदी संभेदः सिन्धुसंगमः। नीका तु सारणौ

इति जलकायः।

---

अग्नौ चैमिर्दीप्रः समन्तभुक्॥ १६६
र्पपरीकः पविर्घासिः पृथुर्घघरिराशिरः। जुहुराणः पृदाकुश्च जुंषाकुर्हवनो हविः॥ १६७

---

१. 'वारश्च' ख. २. 'कलपत्रात्रके' ख. ३. 'समोलूकम्' ख. ४. 'श्वभ्रं' ख. ५. 'साध्यं' ख. ६. 'मलिनानि' क. ७. 'वमिः' ख. ८. 'कर्परीकः' ख. ९. 'घसुरिराशिरः' क. १०. 'कुषाकुः' ख.

घृतार्चिर्नाचिकेतश्च प्रेष्ठो वश्वतिरश्वतिः। भुजिर्भरथपीथौ च स्वनिः पवनवाहनः॥ १६८

इत्यग्निकायः।

---

वायौ सुरालयः प्राणः संभृतो जलभूषणः। शुचिर्वहालो नैघटः पश्चिमोत्तरदिक्पतिः॥ १६९

अङ्कतिः क्षिपणुर्मर्को ध्वजप्रहरणश्चलः। शीतलो जलकान्तारो मेघारिः सृमरोऽपि च॥ १७०

इति वायुकायः।

---

वृक्षे त्वारोहकः स्कन्धी सीमिको हरितच्छदः। [३]ऊरुर्जन्तुर्वह्निभूश्च

इति वनस्पतिकायः।

---

स्यात्तु श्वेतः कपर्दके॥ १७१

खद्योते तु कीटमणिर्ज्योतिर्माली तमोमणिः। परार्बुदो निमेषद्युत् ध्वान्तचित्रोऽथ कुञ्जरे॥ १७२

पेचकी पुष्करी पद्मी पेचिलः सूचिकाधरः। विलोलजिह्वोऽन्तःस्वेदो महाकायो महामदः॥ १७३

शूर्पकर्णो जलाकाङ्क्षो जटी च षष्टिहायनः। असुरो दीर्घपवनः शुण्डालः कपिरित्यपि॥ १७४

वशायां वाशिता कर्णधारिणी गणिकापि च। अश्वे तु क्रमणः कुण्डी प्रोथी हेषी प्रकीर्णकः॥ १७५

पाकलः परुलः किण्वी कुटरः सिंहविक्रमः। माषाशी केसरी हंसो मुद्गभुग्गूढभोजनः॥ १७६

वासुदेवः शालिहोत्रो लक्ष्मीपुत्रो मरुद्रथः। चामर्येकशफोऽपि स्यादश्वायां पुनरर्वती॥ १७७

मल्लिकाक्षः सितैर्नेत्रैः स्याद्वाजीन्द्रायुधोऽसितैः। ककुदी ककुदावर्तो निर्मुष्कस्त्विन्द्रवृद्धिकः॥ १७८

शुनि क्रोधी रसापायी शिवारिः सूचको रुरुः। वनंतपः स्वजातिद्विट्कृतज्ञो भल्लहश्च सः॥ १७९

दीर्घनादः पुरोगामी स्यादिन्द्रमहकामुकः। मण्डलः कपिलो ग्राममृगश्चेन्द्रमहोऽपि च॥ १८०

महिषे कलुषः पिङ्गः कटाहो गद्गदस्वरः। हेरम्बः स्कन्धशृङ्गश्च सिंहे तु स्यात्पलंकषः॥ १८१

शैगाटो वनराजश्च नभःक्रान्तो गणेश्वरः। शृङ्गोष्णीषो रक्तजिह्वो व्यादीर्णास्यः सुगन्धिकः॥ १८२

सूकरे कुमुखः कामरूपी च सलिलप्रियः। तलेक्षणो वक्रदंष्ट्रः पङ्कक्रीडनकोऽपि च॥ १८३

मृगे त्वजिनयोनिः स्यादथो भुजगभोगिनि। अहीरणी द्विमुखश्च भवेत्पक्षिणि चञ्चुमान्॥ १८४

कण्ठाग्निः कीकसमुखो लोमकी रसनारदः। वारङ्गिनाडीचरणौ मयूरे चित्रपिङ्गलः॥ १८५

नृत्यप्रियः स्थिरमदः खिलखिल्लो गरव्रतः। मार्जारकण्ठो मरुको मेघनादानुलासकः॥ १८६

मैयुको बहुलग्रीवो नगावासश्च चन्द्रकी। कोकिले तु मदोल्लापी काकजातो रतोद्वहः॥ १८७

मधुघोषो मधुकण्ठः सुधाकण्ठः कुहूमुखः। घोषयित्नुः पोषयित्नुः कामवालः कुनालिकः॥ १८८

कुक्कुटे तु दीर्घनादश्चर्मचूडो नखायुधः। मयूरचटकः शौण्डो रणेच्छुश्च कलाधिकः॥ १८९

आरणी विष्किरो बोधिर्नन्दीकः पुष्टिवर्धनः। चित्रवाजो महायोगी स्वस्तिको मणिकण्ठकः॥ १९०

उषाकीलो विशोकश्च व्राजस्तु ग्रामकुक्कुटः। हंसेषु तु मरालाः स्युः सारसे दीर्घजानुकः॥ १९१

गोनर्दो मैथुनी कामी श्येनाक्षो रक्तमस्तकः। गृध्रे तु पुरुषव्याघ्रः कामायुः कूणितेक्षणः॥ १९२

सुदर्शनः शकुन्याजौ शुके तु प्रियदर्शनः। श्रीमान्मेधातिथिर्वाग्मी मत्स्ये तु जलपिप्पिकः॥ १९३

मूको जलाशयः शेवः पाठीने मृदुपाठकः॥ १९४

इत्याचार्यहेमचन्द्रविरचितेऽभिधानचिन्तामणिपरिशिष्टे तिर्यक्काण्डश्चतुर्थः॥ ४॥

---

१. 'पृष्ठो' क. २. 'लम्पंटः' क; 'लम्पटः' ख. ३. 'उरुः' ख. ४. 'ग्रहभोजनः' ख. ५. 'मयूको' ख.

अथ रत्नप्रभा घर्मा वंशानुशर्कराप्रभा । स्याद्वालुकाप्रभा शैला भवेत्पङ्कप्रभाञ्जना ॥ १९५
धूमप्रभा पुनारिष्टा माधव्या तु तमःप्रभा । महातमःप्रभा माधव्येवं नरकभूमयः ॥ १९६

इत्याचार्यहेमचन्द्रविरचितेऽभिधानचिन्तामणिपरिशिष्टे नारककाण्डः पञ्चमः ॥ ५ ॥

---

आनुकूल्यार्थकं प्राध्वमसाकल्ये तुचिच्चन । तुहिचस्मह्वै पादपूरणे पूजने स्वती ॥ १९७
वद् वा यथा तथैवैवं साम्येऽहो ही च विस्मये । स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ॥ १९८
ॐ पृच्छायामतीते प्राक् निश्चयेऽद्धाञ्जसाद्वयम् । अतो हेतौ मङ्क्षु प्रत्यारम्भेऽथ स्वयमात्मनि ॥ १९९
प्रशंसने तु सुष्ठु स्यात्परश्वः श्वः परेऽहनि । अद्यात्राह्यथ पूर्वेऽह्नीत्यादौ पूर्वेद्युरादयः ॥ २००
समाने ह्यति सद्यः स्यात्परे त्वह्नि परेद्यवि । उभयद्युस्तूभयेद्युः समे युगपदेकदा ॥ २०१
स्यात्तदानीं तदा तर्हि यदा पर्य्यन्यदैकदा । पत्सरार्येषमोऽब्दे पूर्वे पूर्वतरेऽत्र च ॥ २०२
प्रकारेऽन्यथेतरथा कथमित्थं यथा तथा । द्विधा द्वेधा त्रिधा त्रेधा चतुर्धा द्वैधमादि च ॥ २०३
द्विश्त्रिश्चतुःपञ्चकृत्व इत्याद्यावर्तने कृते । दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २०४

इत्याचार्यहेमचन्द्रविरचितेऽभिधानचिन्तामणिपरिशिष्टे सामान्यकाण्डः षष्ठः ॥ ६ ॥

इति श्रीहेमचन्द्राचार्यविरचितोऽभिधानचिन्तामणिपरिशिष्टः समाप्तः ।

---

॥ श्रीः ॥

# अभिधानसंग्रहः ।

## ( ८ )

श्रीमदाचार्यहेमचन्द्रविरचितः

## अनेकार्थसंग्रहः ।

[1]ध्यात्वार्हतः कृतैकार्थशब्दसंदोहसंग्रहः । एकस्वरादिषट्काण्ड्या कुर्वेऽनेकार्थसंग्रहम् ॥ १
अकारादि[2]क्रमेणादावत्र कादि[3]क्रमोऽन्ततः । [4]उद्देश्यवचनं पूर्वं पश्चादर्थप्रकाशनम् ॥ २
यत्रैक एव रूढोऽर्थो यौगिकस्तत्र [5]दर्शितः । अनेकस्मिंस्तु रूढेऽर्थे यौगिकं प्रोच्यते न वा ॥ ३
पदानां भङ्गतो योऽस्मिन्ननेकार्थः [6]प्रकाशते । प्रदर्शनीयो नैवासौ तस्यान[7]न्त्यप्रसङ्गतः ॥ ४
को ब्रह्मण्यात्मनि रवौ मयूरेऽग्नौ यमेऽनिले । [8]कं शीर्षेऽप्सु सुखे खं स्वः संविदि व्योमनीन्द्रिये ॥ ५
शून्ये बिन्दौ सुखे खस्तु सूर्ये गौरुदके दृशि । स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि ॥ ६
त्वग्वल्कले चर्मणि च न्यग्निम्ने नीचकार्त्स्न्ययोः । [9]रुक्शोभाकिरणेच्छासु वाग्भारत्यां वचस्यपि ॥ ७
जूराकाशसरस्वत्यां पिशाच्यां जवनेऽपि च । ज्ञः स्याद्विचक्षणे पद्मासने [10]चान्द्रमसायनौ[11] ॥ ८
सद्विद्यमाने सत्ये च प्रशस्तार्चितसाधुषु । भः शुक्रे भमुडौ भांशौ भूस्तु भूमिरिव क्षितौ ॥ ९
स्थाने च मः पुनः शंभौ मा लक्ष्म्यां वारणेऽव्ययम् । किं क्षेपनिन्दयोः प्रश्ने वितर्के ज्या तु मातरि १०
क्ष्मामौर्व्योर्द्युर्दिने वह्नौ द्यौस्तु स्वर्गे विहायसि । रस्तीक्ष्णे दहने रास्तु सुवर्णे जलदे धने ॥ ११
[12]द्रूः कामरूपिणि स्वर्णे धूर्यानमुखभारयोः । पूः शरीरे च[13] नगरे श्रीर्लक्ष्म्यां सरलद्रुमे ॥ १२
वेषोपकरणे वे[14]षरचनायां मतौ गिरि । शोभात्रिवर्गसंपत्त्योः स्रूः स्रवे निर्झरेऽपि च ॥ १३
वः पश्चिमदिगीशे [15]स्यादौपम्ये पुनरव्ययम् । द्यौः स्वर्गनभसोः स्वो ज्ञात्यात्मनोः स्वं निजे धने १४
दृग्द[16]ष्टौ दर्शनेऽध्यक्षे विट्प्रवेशे नृवैश्ययोः । तृट् तृष्णावत्तर्षवच्च भवेल्लिप्सापिपासयोः ॥ १५
त्विट् शोभायां जिगीषायां व्यवसाये रुचौ गिरि । भाः प्रभावे मयूखे च मास्तु मासे निशाकरे १६

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसंग्रह एकस्वरकाण्डः प्रथमः ॥ १ ॥

अर्को द्रुभेदे स्फटिके ताम्रे सूर्ये विडौजसि । अर्कं दुःखाघयोरङ्को भूषारूपकलक्ष्मसु ॥ १७
चि[18]त्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः । एकोऽन्यः केवलः श्रेष्ठः संख्या कल्कोऽघविष्ठयोः

१. 'नत्वा हरिम्' ख. २. 'क्रमोऽत्रादौ ककारादि' ख. ३. 'क्रमस्ततः' ग. ४. 'उद्देश' ख. ५. 'दर्श्यते' ख; 'दृश्यते' ग. ६. 'प्रकाश्यते' ख-ग. ७. 'नन्त' ख. ८. 'शीर्षेऽप्सु च' ख. ९. 'ऋक्' ख. १०. 'चान्द्रमसायने' ख-ग. ११. इतः परम् 'प्रा जटायां च राक्षस्यां पतने दुर्भगस्त्रियाम्' इति ख-पुस्तकेऽधिकः पाठः. १२. 'द्रुः' ग. १३. 'नगरे च' क; 'पत्तने च' ग. १४. 'द्रवे' क. १५. 'वेषे' ग. १६. 'च वौपम्ये' ख. १७. 'द्रष्टरि दर्शनेऽध्यक्षे' ग. १८. 'चित्रादौ' ख.

दम्भे पापिनि किट्टे च कङ्को ब्राह्मणलिङ्गिनि । लोहपृष्ठे यमे कर्कः श्वेताश्वे दर्पणे[1] घटे ॥ १९
कर्केतनेऽग्नौ राशौ च काकः स्यात्पीठसर्पिणि । द्वीपमानद्रुभेदेषु शिरोवक्षालने द्विके ॥ २०
कार्कं काकसमूहे स्याद्रतबन्धे च योषिताम् । काका तु काकजङ्घायां काकोलीकाकनाशयोः ॥ २१
काकोदुंबरिकाकाकमाचिकारक्तिकास्वपि । किष्कुः प्रकोष्ठे हस्ते च वितस्तौ कुत्सितेऽपि च ॥ २२
कोको वृके चक्रवाके खर्जूरीद्रुमभेदयोः । छेको विदग्धे विश्वस्त[2]मृगनीड[3]जयोरपि ॥ २३
टङ्को नीलकपित्थेऽसिकोशे कोपेऽश्मदारणे । मानान्तरे खनित्रे च जङ्घायां टङ्कणे[4]ऽपि च ॥ २४
तर्को वितर्के काङ्क्षायामूहकर्म[5]विशेषयोः । त्रिका कूपस्य नेमौ स्यात्त्रिकं पृष्ठाधरे त्रये ॥ २५
तोकं संतानसुतयोर्द्विकः स्यात्काककोकयोः । न्यङ्कुर्मृगे मुनौ नाकः स्वः खे नाकुस्तु पर्वते ॥ २६
मुनिवल्मीकयोर्निष्कः कर्षे हेमनि तत्पले । दीनारे साष्टसुवर्णशते वक्षोविभूषणे ॥ २७
पङ्कोऽघे कर्दमे पाकः पचने शिशुदैत्ययोः । बको रक्षोभिदि श्रीदे शिवमल्लीबकोटयोः ॥ २८
[6]भूकश्छिद्रे काले[7] भेको मेघमण्डूकभीरुषु । मुष्को मोक्षद्रुमे सङ्घे तस्करे मांसलाण्डयोः ॥ २९
मूको दैत्यावाग्दीनेषु रङ्कुः कृपणमल्लयोः । राका कच्छ्वां[8] दृष्टरजःकन्यायां सरिदन्तरे ॥ ३०
पूर्णेन्दुपूर्णिमायां च रेकः शङ्काविरेकयोः । हीनेऽपि रोकं क्रयण[9]भेदे नावि बिलेचरे ॥ ३१
रोकोंऽशौ लङ्का तु शाखा शाकिनी कुलटा पुरी । लोको विश्वे जने वल्कं शकले त्वचि शल्कवत्
शको देशे राजभेदे शङ्का स्यात्संशये भये । शङ्कुः पत्रशिराजाले संख्याकीलकशंभुषु ॥ ३३
यादोऽस्त्रभेदयोर्मेढ्रे[10] शाको द्वीपे नृपे द्रुमे । शक्तौ हरितके चापि शुको व्यासजकीरयोः ॥ ३४
रक्षोऽमात्ये शुकं [11]ग्रन्थिपर्णेऽरत्नुशिरीषयोः । शुल्कं घट्टादिदातव्ये जामातुश्चापि बन्धके ॥ ३५
शूकोऽनुक्रोशार्कशार्वोः शोकेऽभिषवशुङ्ग[12]योः । शूका हृल्लेखे श्लोकस्तु पद्यबन्धे यशस्यपि ॥ ३६
शौकं शुकानां समूहे स्त्रीणां च करणान्तरे । सृका[13] बाणोत्पलवातः स्तोकः स्याच्चातकाल्पयोः ॥ ३७
नखं पुंनर्ग[14]न्धद्रव्ये नखः करजषण्ढ[15]योः । न्युङ्खः सामविशेषस्य षडोंकार्यामतिप्रिये ॥ ३८
पुङ्खः स्यान्मङ्गलाचारे शराङ्गश्येनयोरपि । प्रेङ्खा पर्यटने नृत्ते[16] दोलायां वाजिनां गतौ ॥ ३९
मुखमुपाये प्रारम्भे श्रेष्ठे[17] निःसरणास्ययोः । रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपि ॥ ४०
लेखो लेख्ये दैवते च लेखा राज्यां[18] लिपावपि । वीङ्खा तु शूकशिम्बायां गतिभेदेऽपि[19] नर्तने ॥ ४१
शङ्खः कम्बौ निधिभेदे[20] स्यान्नख्यामलिकास्थनि । शाखा द्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके ॥ ४२
शिखाग्रमात्रे चूडायां केकिचूडाप्रधानयोः । ज्वालायां लाङ्गलिकायां शिफाशाखाघृणिष्वपि ॥ ४३
सखा सहाये मित्रे च सुखं त्रिदिवशर्मणोः । सुखा प्रचेतसः पुर्यामगः स्यान्नगवत्सरौ ॥ ४४
शैले सरीसृपे भानावङ्गमन्तिकगात्रयोः । उपसर्जनभूते स्यादभ्युपायप्रतीकयोः ॥ ४५

---

१ 'दर्पटे' ख. २. 'विश्वस्ते' ग. ३. 'नीडकयो' ग. ४. 'टङ्कने' ग. ५. कर्मविशेषः क्रियाविशेषः । उपहास इति यावत्' इत्यनेकार्थकैरवाकरकौमुदी. 'वर्मविशे' ख; 'तर्कविशे' ग. ६. 'भूकः काले छिद्रे' ग. ७. 'कोले' ख. ८ 'ऽकस्माद्दृष्ट' ख. ९. 'क्रीयते येन तत्क्रयणं दीनारादि' इत्यनेकार्थकैरवाकरकौमुदी. 'कृपण' ग. १०. इतः परम् 'वङ्कः पर्याणभागे स्यान्नदीभेदे च भङ्गुरे' इति ख-पुस्तकेऽधिकः पाठः. ११. 'वस्त्रे वस्त्राञ्चलशिरस्त्रयोः' ग. १२. 'शुङ्गा नवोद्भिन्नपल्लवकोशी' इत्यनेकार्थकैरवाकरकौमुदी. 'मुद्गयोः' ख; 'शृङ्गयोः' ग. १३. 'शृगालबक-निरयेष्वपि । शूकेत्यायुधभेदेऽपि' इत्यनेकार्थकैरवाकरकौमुदी. १४. 'तु गन्धद्रव्ये स्यान्नखः' ख. १५. 'खण्डयोः' ख-ग. १६. 'नृत्ये' ग. १७. 'शेषे' ख. १८. 'ज्यायां' ग. १९. 'च' ख-ग. २०. 'निधेर्भेदे' ख.

अङ्गा नीवृद्विशेषे स्युरिङ्गः स्यादिङ्गितेऽद्भुते । ज्ञानजङ्गमयोश्चापि खगोऽर्कग्रहपक्षिषु ॥ ४६
शरे देवेऽपि खङ्गोऽसौ खङ्गिशृङ्गे च गैण्डके । टङ्कः खनित्रे जङ्घास्योस्त्यागो वर्जनदानयोः ४७
दुर्गं पुंनर्दुर्गमे स्याद्दुर्गा तु नीलिकोमयोः । नागो मतङ्गजे सर्पे पुंनागे नागकेसरे ॥ ४८
क्रूराचारे नागदन्ते मस्तके वारिदेऽपि च । देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः ॥ ४९
नागं रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे । पिङ्गी शम्यां पिङ्गा हिङ्गुनाल्यां गोरोचनोमयोः ॥ ५०
पिङ्गं बालके पिशङ्गे पूगः क्रमुकसंघयोः । फल्गुः काकोदुम्बरिकावृक्षे निरर्थकेऽपि च ॥ ५१
भगोऽर्कज्ञानमाहात्म्ययशोवैराग्यमुक्तिषु । रूपवीर्यप्रयत्नेच्छाश्रीधर्मैश्वर्ययोनिषु ॥ ५२
भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्त्योर्भङ्गा शणे भंङ्गिः पुनः ॥ ५३
भक्तिवीच्योर्भागो रूपार्धके भाग्यैकदेशयोः । भृङ्गं त्वक्पत्रं भृङ्गास्तु खिङ्गधूम्याटमार्कवाः ॥ ५४
षट्पदोऽथ भृगुः सानौ जमदग्निप्रपातयोः । शुक्रे रुद्रे च भोगस्तु राज्ये वेश्याभृतौ सुखे ॥ ५५
धनेऽहिकायफणयोः पालनाभ्यवहारयोः । मार्गो मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि ॥ ५६
मृगः कुरङ्गे याच्ञायां मृगयायां गजान्तरे । पशौ नक्षत्रभेदे च मृगी तु वनितान्तरे ॥ ५७
युगं हस्तचतुष्के स्याद्रथाद्यङ्गे कृतादिके । वृद्धिनामौषधे युग्मे योगो विस्रम्भघातिनि ॥ ५८
अलब्धलाभे संगत्यां कार्मणध्यानयुक्तिषु । वपुःस्थैर्यप्रयोगे च संनाहे भेषजे धने ॥ ५९
विष्कम्भादावुपाये च रङ्गः स्यान्नृत्ययुद्धवोः । रागे रङ्गं तु त्रपुणि रागः स्याल्लोहितादिषु ॥ ६०
गान्धारादौ क्लेशादिकेऽनुरागे मत्सरे नृपे । लङ्गः सङ्गे च षिङ्गे च लिङ्गं मेहनचिह्नयोः ॥ ६१
शिवमूर्तावनुमाने सांख्योक्तविकृतावपि । वङ्गः कर्पासे वृन्ताके वङ्गा जनपदान्तरे ॥ ६२
वङ्गं त्रपुणि सीसे च वल्गुश्छागमनोज्ञयोः । व्यङ्गो भेके च हीनाङ्गे वेगो रयप्रवाहयोः ॥ ६३
रेतःकिंपाकयोश्चापि शार्ङ्गं विष्णुधनुर्धनुः । शुङ्गश्चाम्राते वटे प्लक्षे शृङ्गं चिह्नविषाणयोः ॥ ६४
क्रीडाम्बुयन्त्रे शिखरे प्रभुत्वोत्कर्षसानुषु । शृङ्गः कूर्चशीर्षे शृङ्गी स्वर्णमीनविशेषयोः ॥ ६५
विषायामृषभौषध्यां सर्गस्त्यागस्वभावयोः । उत्साहे निश्चयेऽध्याये मोहानुमतिसृष्टिषु ॥ ६६
अर्घः पूजाविधौ मूल्येऽर्घं दुःखे व्यसनैनसोः । उद्धो हस्तपुटे वह्नौ श्लाघायां देहजानिले ॥ ६७
ओघः प्रवाहः संघातो द्रुतनृत्तं परम्परा । उपदेशश्च मेघस्तु मुस्तके जलदेऽपि च ॥ ६८
मोघो दीने निष्फले च मोघा स्यात्पाटलातरौ । लघुः स्पृक्का लब्धसारं ह्रस्वं चार्वगुरु द्रुतम् ॥ ६९
श्लाघोपास्तीच्छयोः स्तोत्रेऽर्चा पूजा प्रतिमापि च । कचः शुष्कव्रणे केशे बन्धे पुत्रे च गीःपतेः ७०
कचा करेण्वां काचोऽक्षिरोगे शिक्ये मणौ मृदि । काञ्ची गुञ्जामेखलयोः पुर्यां कूर्चो विकत्थने ७१

१. 'अङ्गो नीवृद्विशेषे स्यादिङ्गः' ग. २ 'द्विशेषाः' ख. ३. 'खङ्ग' क. ४. 'कण्टके' ग. ५. इतः प्राक् 'गर्गो मुनिविशेषे स्याद्वृषे किंचुलिकेऽपि च' इत्यधिकः पाठः ख-ग-पुस्तकयोः. ६. इतः परम् 'तुङ्गः पुंनागनगयोर्बुधे स्यादुन्नतेऽपि च । तुङ्गी प्रोक्ता हरिद्रायां वर्वरायामपीष्यते ॥' इत्यधिकः पाठः ख-ग-पुस्तकयोः. तत्र ग-पुस्तके 'उन्नतेऽन्यवत्' इति पाठः. ७. 'कोटे दु' ख; 'भवेद्दुर्गमे तु' ग. ८. 'स्यान्नीलिको' ग. ९. 'बलाके' ग. १०. अनेकार्थकैरवाकरकौमुद्यां तु 'भङ्गीभिरङ्गीकृतमानताङ्गयाः' इति भक्तौ, 'भङ्गी-भक्त्या विरचिततनुः स्तम्भितान्तर्जलौघः' इति वीच्यामुदाहृतम्. ११. 'चतुर्थे' ग-घ. १२. सांख्योक्तायाः प्रकृतेः कार्यभूता विकृतिः । तत्र यथा—'लिङ्गाल्लिङ्गमिवानुरूपचरितं पुत्रं स लेभे मुनिः' इत्यनेकार्थकैरवाकरकौमुदी. १३. 'प्रकृतावपि' ख-ग-घ. १४ 'जनपदान्तरे पुंभूम्नि' इति टीका. १५. 'मलोत्सर्गे प्रभावे शृङ्गारभावेऽपि' इत्यनेकार्थकैरवाकरकौमुदी. १६. 'अपदेश' ख.

श्मश्रुणि दम्भे भ्रूमध्ये क्रौञ्चो द्वीपे खगे गिरौ । चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि ॥ ७२
चञ्चुः पञ्चाङ्गुले त्रोट्यां नीचः पामरखर्वयोः । मोचा शाल्मलिकदल्योर्मोचः शिग्रौ रुचिर्द्युतौ ७३
स्पृहाभिष्वङ्गशोभासु वचः शुके वचौषधौ । शारिकायां विच्याल्यूर्म्योरवकाशे सुखाल्पयोः ॥ ७४
शचीन्द्राणीशतावर्योः शुचिः शुद्धे सितेऽनिले । ग्रीष्माषाढानुपहतेषूपधाशुद्धमन्त्रिणि ॥ ७५
शृङ्गारे सूच्यभिनये व्यधने करणे स्त्रियाम् । अच्छो भल्लूके स्फटिकेऽमलेऽच्छाभिमुखेऽव्ययम् ७६
कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च । कच्छास्तु देशे कच्छा स्यात्परिधानापराञ्चले ॥ ७७
चीर्यां वाराह्यां च गुच्छो गुच्छे हारकलापयोः । पिच्छः पुच्छे पिच्छं वाजे पिच्छा शाल्मलिवेष्टके ७८
पङ्क्तौ पूगच्छटाकोशमण्डेष्वश्वपदामये । मोचायां पिच्छिले म्लेच्छो जातिभेदेऽपभाषणे ॥ ७९
अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे । अब्जो धन्वन्तरौ चन्द्रे शङ्खेऽब्जं पद्मसंख्ययोः ८०
आजिः क्षणे समक्ष्मायां युध्यूर्जः कार्तिके बले । कंजो वेधसि केशे च कंजं पीयूषपद्मयोः ॥ ८१
कुञ्जो हनौ दन्तिदन्ते निकुञ्जे च कुजो द्रुमे । आरे नरकदैत्ये च कुब्जो न्युब्जद्रुभेदयोः ॥ ८२
खजा दर्वीमथोः खर्जूः खर्जूरीकीटकण्डुषु । गञ्जो भाण्डागारे रीढाखन्योर्गञ्जा सुरागृहे ॥ ८३
गुञ्जा तु कृष्णलायां स्यात्पटहे मधुरध्वनौ । द्विजो विप्रक्षत्रिययोर्वैश्ये दन्ते विहंगमे ॥ ८४
द्विजा भार्गीरेणुकयोर्ध्वजः पूर्वदिशो गृहे । शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च ॥ ८५
निजो नित्ये स्वकीये च न्युब्जः कुब्जे कुशे स्रुचि । अधोमुखेऽपि च न्युब्जं कर्मरङ्गतरोः फले ॥ ८६
प्रजा लोके संततौ च पिञ्जा तूलहरिद्रयोः । पिञ्जो व्यग्रे वधे पिञ्जं बले बीजं तु रेतसि ॥ ८७
स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे । भुजो बाहौ करे मेर्जूः शुद्धौ च रजकेऽपि च ॥ ८८
राजी रेखायां पङ्क्तौ च रुजा त्वामयभङ्गयोः । लञ्जः पट्टे च कच्छे च लाजः स्यादार्द्रतण्डुले ॥ ८९
लाजास्तु भृष्टधानाः स्युर्लाजं पुनरुशीरके । व्रजोऽध्वगोष्ठसंघेषु वणिग्वाणिज्यजीविनि ॥ ९०
वाणिज्ये करणभेदे वाजं सर्पिषि वारिणि । यज्ञान्ने वाजस्तु पक्षे मुनौ निस्वनवेगयोः ॥ ९१
व्याजः शाठ्येऽपदेशे च सज्जौ संनद्धसंभृतौ । सञ्जौ ब्रह्मशिवौ प्रज्ञः प्राज्ञे प्रज्ञा तु शेमुषी ॥ ९२
यज्ञः स्यादात्मनि मखे नारायणहुताशयोः । संज्ञा नामनि गायत्र्यां हस्ताद्यैरर्थसूचने ॥ ९३
चेतनार्कस्त्रियोरट्टो हट्टाट्टालकयोर्भृशे । चतुष्कभक्तयोरिष्टमीप्सिते क्रतुकर्मणि ॥ ९४
पूज्ये प्रेयसि संस्कारे योगेऽथेष्टिर्मखेच्छयोः । संग्रहश्लोकेऽथ कटो गजगण्डे कटौ भृशम् ॥ ९५
शवे शवरथौषध्योः क्रियाकारश्मशानयोः । किलिञ्जे समये चापि कष्टं गहनकृच्छ्रयोः ॥ ९६
कट्वकार्ये मत्सरे च दूषणे च कटू रसे । तिक्ते प्रियङ्गुसुरभिकटुकाराजिकास्वपि ॥ ९७
कुटः कोटे शिलाकुट्टे गेहे घटे कुटी सुरा । चित्रगुच्छः कुम्भदासी कूटं पूर्द्वारयन्त्रयोः ॥ ९८
मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयोः । निश्चलेऽयोघने राशौ कृष्टिः कर्षणधीमतोः ॥ ९९
कोटयुत्कर्षाटनीसंख्यास्त्रिषु खटस्तृणे कफे । टङ्केऽन्धकूपे प्रहारे खाटिः शवरथे किणे ॥ १००
एकग्रहेऽथ खेटः स्याद्ग्रामभेदे कफेऽधमे । स्फारे मृगव्ये गृष्टिस्तु सकृत्सूतगवी भवेत् ॥ १०१
वराहक्रान्ता च घटा घटने गजसंहतौ । गोष्ठ्यां घटस्त्विभशिरः कूटे समाधिकुम्भयोः ॥ १०२

---

१. 'पटाञ्चले' ख. २. 'पिच्छस्तुच्छे' ख. ३. 'पङ्क्तिपूग' ख-ग-घ. ४. 'कुशस्रुचि' क. ५. 'मर्जः' ख. ६. 'धान्ये' ख. ७. 'घृते च' ख. ८. 'यज्ञान्ते' क-ख. ९ 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति वाक्यव्याख्यायां 'वाजोऽन्नम्' इति मीमांसकैरुक्तत्वात्. १०. 'कान्ता' ख-ग-घ.

घृष्टिः स्पर्धाघर्षणयोर्विष्णुक्रान्तावराहयोः । घोण्टा पूगवदरयोश्चटुश्चाटुपिचण्डयोः ॥ १०३
प्रत्यासने जटा केशविकारे मांसिमूलयोः । झाटो व्रणादिसंमार्ष्टौ कुञ्जकान्तारयोरपि ॥ १०४
त्वष्टार्के विश्वकृत्तक्ष्णोस्त्रुटिः संशयलेशयोः । सूक्ष्मैलायां कालमाने त्रोटिश्चञ्च्वां खगान्तरे॥१०५
मीनकट्फलयोर्दिष्टं दैवे दिष्टस्त्वनेहसि । दिष्टिरानन्दे माने च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥ १०६
पट्टश्चतुष्पथे पीठे राजादेः शासनान्तरे । व्रणादिबन्धने पेषाश्मनि पट्टी ललाटिका ॥ १०७
रोध्रोऽथ पटु लवणे पटुस्तीक्ष्णपटोलयोः । स्फुटे रोगविहीने च छत्रायां चतुरेऽपि च ॥ १०८
पुष्टिः स्यात्पोषणे वृद्धौ फटा तु कैतवे फणे । भटो वीरे म्लेच्छभेदेऽपि च भृष्टिस्तु भर्जने १०९
शून्यवाट्यामथ म्लिष्टं म्लानमस्पष्टभाषितम् । यष्टिर्भार्ग्यां मधुयष्ट्यां ध्वजदण्डेऽस्त्रहारयोः॥ ११०
रिष्टं क्षेमेऽशुभे रिष्टोऽसौ लाटो वस्त्रदेशयोः । वटो गोले गुणे भक्ष्ये वृक्षे साम्यवराटयोः॥ १११
वाटः पथि वृतौ वाटं वरण्डेऽङ्गान्नभेदयोः । वाटी वास्तौ गृहोद्याने[1]त्कट्यो[2]र्विटस्तु मूषके ॥ ११२
खदिरे लवणे षिङ्गेऽद्रौ च व्युष्टं फले दिने । पर्युषिते प्रभाते च व्युष्टिः स्तुतिफलर्द्धिषु ॥ ११३
विष्टिः कर्मकरे मूल्ये भद्राजूप्रे[3]षणेषु च । सटा जटाकेसरयोः स्फुटो व्यक्तप्रफुल्लयोः ॥ ११४
सिते व्याप्ते स्फुटिस्त्वङ्घ्रिस्फोटे निर्भिन्नचिर्भिटे । सृष्टिः स्वभावे निर्माणे सृष्टं नि[4]श्चितयुक्तयोः ११५
प्रचुरे निर्मिते चाथ हृ[5]ष्टः स्यात्के[6]शरोमसु । जातहर्षे प्र[7]तिहते विस्मिते हृषितो यथा ॥ ११६
कठो मुनौ स्वर ऋचां भेदे तत्पाठवेदिनोः । कण्ठो ध्वनौ संनिधाने ग्रीवायां मदनद्रुमे ॥ ११७
काष्ठं दारुणि काष्ठा तु प्रकर्षे स्थानमात्रके । दिशि दारुहरिद्रायां कालमानप्रभिद्यपि ॥ ११८
कुण्ठोऽकर्मण्ये मूर्खे च कुष्ठं भेषजरोगयोः । कोष्ठो निजे कुसूले च कु[8]क्षेरन्तर्गृहस्य च ॥ ११९
गोष्ठं गोस्थानके गोष्ठी संलापे परिषद्यपि । ज्येष्ठः स्यादग्रजे श्रेष्ठे मासभेदातिवृद्धयोः ॥ १२०
ज्येष्ठा भे गृहगोधायां निष्ठोत्कर्षव्यवस्थयोः । क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते ॥१२१
पृष्ठं पश्चिममात्रे स्याच्छरीरावयवान्तरे । वण्ठः कुण्ठायुधे खर्वे भृत्याकृतविवाहयोः ॥ १२२
शठो मध्यस्थपुरुषे धूर्ते धत्तूरकेऽपि च । श्रेष्ठोऽग्र्ये धनदे षष्ठी गौरी षण्णां च पूरणी ॥ १२३
हठोऽम्बुपर्ण्यां प्रसभेऽण्डं पेशीकोशमुष्कयोः । इडेलावत्स्वर्गनाडीभूवाग्गोषु बुधस्त्रियाम् ॥ १२४
काण्डो नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे । सेहः[9] श्लाघाम्बुषु स्तम्बे क्रीडा केल्यामनादरे ॥ १२५
कुण्डी कमण्डलौ कुण्डो जाराज्जीवत्पतेः सुते । देवतोयाशये स्थाल्यां क्ष्वेडः कर्णामये ध्वनौ १२६
विषे वक्रे क्ष्वेडा सिंहनादवंशशलाकयोः । क्ष्वेडं लोहितार्कफले घोषपुष्पे दुरासदे ॥ १२७
क्रोडः [10]कोले शनौ क्रोडमङ्के खण्डोऽर्ध ऐक्षवे । मणिदोषे च गण्डस्तु वीरे पिट[11]कचिह्नयोः ॥१२८
कपोले गण्डके योगे वाजिभूषणबुद्बुदे । गडुः पृष्ठगुडे कु[12]ब्जे गडो मीनान्तराययोः ॥ १२९
गुडः कुञ्जरसंनाहे गोलकेक्षुविकारयोः । गुडा तु [13]गुलिकास्नुह्योर्गोण्डः स्याद्वृद्धनाभिके ॥ १३०
पामरजातौ चण्डस्तु यमदासेऽतिकोपने । तीव्रे दैत्यविशेषे च चण्डी तु शिवयोषिति ॥ १३१
चण्डा धनहरीशङ्खपुष्प्योश्चूडा शिखाग्रयोः । बाहुभूषावलभ्योश्च चोडः कञ्चुकदेशयोः ॥ १३२

---

१. 'गृहोद्यानकट्योः' ख; 'गृहोद्याने कट्यां' ग-घ. २ 'हत्कटी औषधिविशेषः' इत्यनेकार्थकैरवाकरकौमुदी. ३. 'प्रेरणेषु' ख. ४. 'निश्रुत' ग-घ. ५ 'हृष्टो रोमाञ्चसंयुते' ख-ग-घ. ६. 'केशरोमस्विति वैषयिकेऽधिकरणे सप्तमी । तेन केशरोमविषये नानयोः पर्यायशब्दता' इत्यनेकार्थकैरवाकरकौमुदी. ७. 'प्रहसिते' ख. ८. 'कुहरेऽन्त' ख; 'कुक्षावन्त' ग-घ. ९. 'रहः' ख-ग-घ. 'सहो बलम्' इति टीका. १०. 'केले' ग-घ. ११. 'कपट' ख. १२. 'कोणे' ख. १३. 'गुडिका' ख-ग-घ.

जडो मूर्खे हि[1]माघ्राते जडा स्याच्छूकशिम्बिका । ताडोऽद्रौ ताडने घोषे मुष्टिमेयतृणादिके ॥ १३३
ताडी तालीदलतरौ दण्डः सैन्ये दमे यमे । मानव्यूहग्रहभेदेष्वश्वेऽर्कानुचरे मथि ॥ १३४
प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयोः । नाडी कुहनचै[2]र्यायां घटिकागण्डदूर्वयोः ॥ १३५
नाले गै[3]णान्तरे स्नायौ नीडं स्थाने खगालये । पण्डः षण्डे पण्डा बुद्धौ पाण्डुः कुन्तीपतौ सिते १३६
पिण्डो वृन्दे जपापुष्पे गोले बोलेऽङ्गसिह्रयोः । कवले पिण्डं तु वेश्मैकदेशे जीवनायसोः ॥ १३७
बले सान्द्रे पिण्ड[4]यलाबूखर्जूर्योस्तगरेऽपि च । पीडार्तिमर्दनोत्तंसकृपासु सरलद्रुमे ॥ १३८
भाण्डं मूलवणिग्वित्ते तुरङ्गाणां च मण्डने । नदीकूलद्वयीमध्ये भूषणे भाजनेऽपि च ॥ १३९
मण्डो मस्तुनि भूषायामेरण्डे सारपिच्छयोः । शाके मण्डा त्वामलक्यां मुण्डो मुण्डितशीर्षयोः॥
राहौ दैत्यान्तरे रण्डा त्वाखुकर्णी मृतप्रिया । व्याडो हिंस्रपशौ सर्पे शुण्डा करिकरः सुरा ॥१४१
जलेभी नलिनी वारस्त्री शुण्डो मदनिर्भरे । शौण्डी चविकपिप्पल्योः शौण्डो विख्यातमत्तयोः १४२
षडः पेयान्तरे भेदे षण्डः कानन ई[5]ड्वरे । गूढं रहःसंवृतयोर्दाढा दंष्ट्राभिलाषयोः ॥ १४३
दृढः शक्ते भृशे स्थूले बाढं भृशप्रतिज्ञयोः । माढिर्दैन्यं पत्रसिरार्चा मूढस्तन्द्रिते जडे ॥ १४४
राढा शुभेषु शोभायां व्यूढा न्य[6]स्तोरुसंहताः । वोढा स्याद्भारिके सूते शण्ढषण्ढौ तु सौ[7]विदे १४५
वन्ध्यपुंसीड्वरे क्लीबे सोढा मर्षणशक्तयोः । अणिराणिवदस्रौ स्यात्सीमन्यक्षाग्रकीलके ॥ १४६
अणुर्व्रीह्यल्पयोरुष्णा ग्रीष्मदक्षातपाहिमाः । ऊर्णा भ्रूमध्यगावर्ते मेषादीनां च लोमनि ॥ १४७
ऋणं देये जले दुर्गे कणो धान्यांशलेशयोः । कणा जीरकपिप्पल्योः क[8]र्णश्चम्पापतौ श्रुतौ ॥ १४८
क्षणः कालविशेषे स्यात्पर्वण्यवसरे महे । व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः ॥ १४९
कीर्णः क्षिप्ते हते छन्ने कुणिः कुकरवृक्षयोः । कृष्णः काके पिके वर्णे विष्णौ व्यासेऽर्जुने कलौ १५०
कृष्णा तु नील्यां द्रौपद्यां पिप्पलीद्राक्षयोरपि । कृष्णं तु मरिचे लोहे कोणो वीणादिवादने ॥१५१
लगुडेऽस्रौ लोहिताङ्गे गणः प्रमथसंख्ययोः । समूहे सैन्यभेदेऽथ गुणो ज्यासूं[10]दतन्तुषु ॥ १५२
रज्जौ सत्त्वादौ संध्यादौ शौर्यादौ भीम इन्द्रिये । रू[11]पादावप्रधाने च दोषान्यस्मिन्विशेषणे ॥ १५३
गे[12]ष्णो नटे गायने च घ्राणं तु घ्रा[13]तघोणयोः । घृणा तु स्याज्जुगुप्सायां करुणायां घृणिः पुनः १५४
अंशुज्वालातरङ्गेषु चू[14]र्णानि वा[15]सयुक्तिषु । चू[16]र्णं क्षोदे क्षारभेदे जै[17]र्णो जीर्णद्रुमेन्दुषु ॥ १५५
जि[18]र्ष्णुः शक्रेऽर्जुने विष्णौ जित्वरेऽर्के वसुष्वपि । झू[19]र्णिः क्रमुकभेदे स्याद्दुष्टदेवश्रुतावपि ॥१५६
त्राणं त्राते रक्षणे च त्रायमाणौषधावपि । तीक्ष्णं समुद्रलवणे विषायोऽमरकाजिषु ॥ १५७
आत्मत्यागिनि तिग्मे च तूणी नीलीनिषङ्गयोः । द्रुणः स्याद्वृश्चिके भृङ्गे द्रुणं चापकृपाणयोः ॥१५८
द्रुणी कूर्म्यां जलद्रोण्यां दे[20]ष्णो दातरि दुर्गमे । द्रोणः पार्थगुरौ काके माने द्रोणी तु नीवृति ॥१५९
नौभेदे शै[21]लेसंधौ च पणः कार्षापणे ग्लहे । विक्रय्यशा[22]कादिबद्धमुष्टौ मूल्ये भृतौ धने ॥ १६०

---

१. 'हिमाघाते' ग-घ. २. 'चर्चायां' ग-घ. ३. 'व्रणान्तरे' ख. ४. 'पर्णी' ख. ५. 'इत्वरे' ख. ६. 'व्यस्तो' ख. ७. 'सौविदौ' ग-घ. ८. 'कर्णोऽरित्रे नृपे श्रुतौ' ख. ९. 'प्रथम' ग-घ. १०. 'सूत्र' ख. ११. 'रूपादौ च प्रधाने' ग-घ. १२. 'गादाभ्यामेष्णक्' । वाच्यलिङ्गः । द्वयोर्यथा—'गेष्णो विष्णुचरित्रस्य' इत्यनेकार्थकैरवाकरकौमुदी. 'गेष्णुर्नटे' ख-ग-घ. १३. 'घ्रातृघ्रेययोः' ग. १४. 'चूर्णो निवासमुक्तकोः' ख. १५. 'चूर्यन्ते स्म चूर्णानि प्रायेण बहुवचनान्तः' इति टीका. १६. 'चूर्णः' ग. १७. 'जीर्णो' ग-घ. १८. 'जिष्णः' ग-घ. १९. 'झूणिः' ख-ग. २०. 'देष्णुर्दातरि दुर्दमे' ख-ग-घ. २१. 'शैलभेदे' ग-घ. २२. 'शाकादिमुष्टौ बद्धे' ग.

व्यवहारे च द्यूता[1]द्युत्सृष्टे गण्डकविंशतौ । पर्ण[2]त्रिपत्रे पर्णं तु पत्रे प्राणोऽनिले बले ॥ १६१
हृद्वायौ पूरिते गन्धरसे प्राणास्तु जीविते । पार्ष्णिः कुम्भ्यां चमूपृष्ठे पादमूलोन्मदस्त्रियोः ॥ १६२
पूर्णः कृत्स्ने पूरिते च फाणिर्गुडकै[3]रम्बयोः । बाणो वृक्षविशेषे स्याच्छरस्यावयवे शरे ॥ १६३
बलिपुत्रेऽप्यथ भ्रूणो गर्भिण्यां श्रोत्रियद्विजे । अर्भके स्त्रैणगर्भे च मणिस्त्वजागलस्तने ॥ १६४
मेढ्राग्रेऽलिंजरे रत्ने मौर्णः[4] सर्पकरण्डके । वाने नक्रमक्षिकायां रणः कोणे क्व[5]णे युधि ॥ १६५
रेणुर्धूल्यां पर्पटके वर्णः स्वर्णे व्रते स्तु[6]तौ । रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे ॥ १६६
भेदे गीतक्रमे चित्रे यशस्तालविशेषयोः । अङ्गरागे च वर्णं तु कुङ्कुमे वाणिरम्बुदे ॥ १६७
व्यू[7]तौ मूल्ये सरस्वत्यां वीणा स्याद्वल्लकी तडित् । वृष्णिर्मेषे यादवे च वेणी सेतुप्रवाहयोः॥ १६८
देवताडे केशबन्धे वेणुर्वंशे नृपान्तरे । शाणः कषे मानभेदे श्रेण्याल्यां कारुसंहतौ ॥ १६९
शोणो नदे रक्तवर्णे श्योनाकेऽग्नौ हयान्तरे । स्थाणुः कीले हरे स्थूणा सूर्म्यां स्तम्भे रुगन्तरे १७०
अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽप्यथार्हन्स्यात्पूज्ये तीर्थकरेऽपि च ॥ १७१
अस्तः क्षिप्ते पश्चिमाद्रावर्तिस्त्वटनिपीडयोः । आप्तो लब्धे च सत्ये चाप्याप्तिः संबन्धलाभयोः १७२
ईतिरजन्ये प्रवासे स्यादूतिः[10] स्फूर्तिरक्षयोः । ऋतं शिलोञ्छे पानीये पूजिते दीप्तसत्ययोः ॥ १७३
ऋतिर्जुगुप्साकल्याणगतिस्पर्धास्वथो ऋतुः । स्त्रीणां पुष्पे वसन्तादावेतः कर्बुर आगते ॥ १७४
क्षत्ता शूद्रात्क्षत्रियायां जाते सारथिवेधसोः । नियुक्ते दा[11]सेये द्वाःस्थे कन्तुः कामकुसूलयोः॥ १७५
कान्तो रम्ये प्रिये प्राण्णि कान्ता प्रियङ्गुयोषितोः । कान्तिः शोभाका[12]मनयोः क्षितिर्गेहे भुवि क्षये॥
कीर्तिर्यशसि विस्तारे प्र[13]सादे कर्दमेऽपि च । कृ[14]तं पर्याप्तयुगयोर्विहिते हिंसिते फले ॥ १७७
कृत्तं छिन्ने वे[15]ष्टिते च केतुर्द्युतिपताकयोः । ग्रहोत्पाता[16]रिचिह्नेषु गर्तोऽवटे ककुन्दरे ॥ १७८
त्रिगर्तांशेऽप्यथ ग्रस्तं जग्धे लुप्तपदोदिते । गतिर्व्र[17]णे ज्ञाने यात्रोपायदशाध्वसु ॥ १७९
[19]गीतिश्छन्दसि गाने च गीतं शब्दितगानयोः । गु[20]प्तं गूढे त्राते गुप्तिर्यमे भूगर्तरक्षयोः ॥ १८०
कारायां घृतमाज्याम्बुदीप्तेष्वथ चिताचिती । मृतार्थदारुषु चये जगल्लोके[21]ऽङ्गवायुषु ॥ १८१
जातं जा[22]त्योऽघजनिषु जातिः सामान्यगोत्र[23]योः । मालत्यामामलक्यां च चुल्ल्यां काम्पिल्यजन्मनोः॥
जातीफले छन्दसि च ज्ञा[24]तिः पितृसगोत्रयोः । ततं वीणादिवाद्ये स्यात्ततो व्याप्तेऽनिले पृथौ १८३
तातोऽनुकम्प्ये पितरि तिक्तस्तु सुरभौ रसे । तिक्ता तु कटुरोहिण्यां तिक्तं पर्पटकौषधे ॥ १८४
त्रेता युगेऽग्नित्रये च दन्तो दशनसानुनोः । दन्त्यौषध्यामथ दितिर्दैत्यमातरि खण्डने ॥ १८५
दीप्तं नि[25]र्भासिते दग्धे द्रुतं शीघ्रविलीनयोः । द्युतिस्तु शोभादीधि[26]त्योर्धाता वेधसि पालके ॥ १८६
धातू रसादौ श्लेष्मादौ भ्वादिभावविकारयोः । महाभूतेषु लोहे[27]षु शब्दादाविन्द्रियेऽस्थनि ॥ १८७

१. 'दाताद्युत्सृष्टे' ग-घ. २. 'पर्णः पलाशे' ख; 'पर्णत्रिपर्णे' ग-घ. ३. 'करण्डयोः' ग-घ. ४. 'माणः' ख. ५. 'घुणे' ख. ६. 'स्तुतौ' ख. ७. 'सूतौ' ख. ८. 'द्रौ वर्ति' ग-घ. ९. 'प्रवाहे' ख. १०. 'स्याहूतिः' ग-घ. ११ 'दासजे' ख-ग-घ. १२ 'कमनयोः' ख. १३. 'प्रासादे' ख-ग-घ. १४. इतः प्राक् 'कुन्ती पाण्डुप्रियायां स्यात्सल्लक्यां गुग्गुलुद्रुमे' इत्यधिकं ख-पुस्तके. १५. 'चेष्टिते' ग-घ. १६. 'दिचि' ग. 'अरिः शत्रुः' इति टीका. १७. 'बृहद्व्रणे' ग-घ. 'वहद्व्रणो नाडीव्रणः' इति टीका. १९ इतः प्राक् 'गाता पुंस्कोकिले भृङ्गे गन्धर्वे रोषणेऽपि च' इति ख-ग-घ-पुस्तकेषु. २०. 'गूढं गुप्ते' ख. २१. 'इङ्गं जङ्गमम्' इति टीका. २२. 'जातोऽथ' ग-घ. २३. 'गात्रयोः' ग-घ. २४. 'जातः' ख. २५. 'निर्भासने' ग-घ. २६. 'संदीप्त्योः' ख. २७. 'लोहेषु' ख-ग-घ.

धुतं त्यक्ते [1]कम्पिते च धूतौ कम्पितभर्त्सितौ । धूर्तं तु खण्डलवणे धूर्तो धत्तूरमायिनोः ॥ १८८
धृतिर्योगविशेषे स्याद्धारणाधैर्ययोः सुखे । संतोषाध्वरयोश्चापि नतस्तगरनम्रयोः ॥ १८९
नीतिर्नये प्रापणे च [2]पंक्तिगौरवपाकयोः । पङ्क्तिश्छन्दःश्रेण्योः पत्तिः सेनाभित्पद्गयोर्गतौ ॥ १९०
प्राप्तिर्महोदये लाभे पित्सन्पिपतिषन्यथा । पतनेच्छौ विहङ्गे च पीतो वर्णनिपीतयोः ॥ १९१
पीता हरिद्रा पीतिः पानेऽश्वे प्रीतिः स्मरस्त्रियाम् । प्रेम्णि योगमुदो पुस्तं शिल्पे लेप्यादिकर्मणि ॥
पुस्तके प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके । पूर्तं पूरितखाताद्योः पृषतवत्पृषन्मृगे ॥ १९३
बिन्दौ प्रेतो मृते भूतविशेषे च परेतवत् । पोतः शिशौ प्रवहणे प्रोतं गुम्फितवा[3]ससोः ॥ १९४
भक्तमन्ने तत्परे च भर्ता पोष्टरि धारके । भक्तिः सेवागौणवृत्त्योर्भङ्ग्यां श्रद्धाविभागयोः ॥ १९५
भास्वान्[4]दीप्रे रवौ भ्रान्तिर्मिथ्याज्ञानेऽनवस्थितौ । भित्तिः कुड्ये [5]प्रदेशे च भूतं सत्योपमानयोः १९६
प्राप्तेऽतीते पिशाचादौ [6]पृथ्व्यादौ जन्तुयुक्तयोः । भूभृन्महीधरे पृथ्वीपतौ भूतिस्तु भस्मनि ॥ १९७
मांसपाकविशेषे च संपदु[7]त्पा[8]दयोरपि । भृतिर्मूल्यभरणयोर्मतं तु संमतेऽर्चिते ॥ १९८
महद्बृहति धीतत्वे राज्ये मरुत्सुरेऽनिले । मतिर्बुद्धीच्छयोर्माता गौर्दुर्गा जननी मही ॥ १९९
मातरस्तु ब्रह्माण्याद्या मितिर्[9]यत्यमानयोः । मुक्ता मौक्तिकपुंश्चल्योर्मुक्तिर्मोचनमोक्षयोः ॥ २००
मूर्तिः पुनः प्रतिमायां कायकाठिन्ययोरपि । मृतं मृतौ याचिते च यन्ता सूते निषादिनि ॥ २०१
यतिर्निकारे वि[10]रतौ भिक्षौ युतोऽन्विते पृथक् । युक्तिर्न्याये योजने च रक्तं नील्यादिरञ्जिते ॥ २०२
कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरुणे । रतिः स्मरस्त्रियां रागे रते रीतिस्तु पित्तले ॥ २०३
वैदर्भ्यादौ लोहकिट्टे सीमनि [11]स्रवणे [12]गतौ । लता ज्योतिष्मतीदूर्वाशाखावल्लीप्रियङ्गुषु ॥ २०४
स्पृक्कामाधव्योः कस्तूर्यां लिप्तं भुक्तविलिप्तयोः । विषाक्ते लूता तु रोगे पिपीलिकोर्णनाभयोः ॥ २०५
वर्तिर्गात्रानुले[13]पन्यां दशायां दीपकस्य च । दीपे भेषजनिर्माणे नयनाञ्जनलेखयोः ॥ २०६
व्यक्तो मनीषिस्फुटयोर्वार्ता वार्ताक्युदन्तयोः । कृष्यादौ वर्तने वार्तं त्वारोग्यारोगफल्गुषु ॥ २०७
वृत्तिशालिन्यथ व्याप्तिर्व्यापने लम्भनेऽपि च । वास्तु स्याद्गृहभूपुर्योर्गृहे सीमसुरङ्ग्योः ॥ २०८
वित्तं विचारिते ख्याते धने वित्तिस्तु संभवे । ज्ञाने लाभे विचारे च वीतमङ्कुशकर्मणि ॥ २०९
[14]असाराश्वगजे शान्ते वीतिरश्वेऽशने गतौ । प्रजने धावने दीप्तौ वृत्तं [15]वृत्तौ दृढे मृते ॥ २१०
चरित्रे वर्तुले छन्दस्यतीताधीतयो[16]र्वृते । वृन्तं स्तनमुखे पुष्पबन्धे वृत्तिस्तु [17]वर्तने ॥ २११
कैशिक्यादौ विवरणे वृतिर्वरणवाटयोः । शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियाम् ॥ २१२
शस्तं क्षेमे प्रशस्ते च शान्तो दान्ते रसान्तरे । शास्ता जिने शासके च शान्तिर्भद्रे शमेऽर्हति ॥
शितः शातौ कृशे तीक्ष्णे शितिर्भूर्जेऽसितेसिते । श्रीमान्मनोज्ञे ति[18]लकपादपे धनवत्यपि ॥ २१४
शीतो हिमे च जिह्मे च वानीर[19]बहुवारयोः । शीतं गुणे शुक्तमम्ले [20]पूतिभूते च कर्कशे ॥ २१५
शुक्तिः शङ्खनके शङ्खे [21]कपालखण्डहृद्ग्रुजोः । नख्यश्वावर्तयोर्मुक्तास्फोटदुर्नामयोरपि ॥ २१६

---

१. 'कम्पने' ग-घ. २. 'पङ्क्ति' ग-घ. ३. 'वासयोः' ग-घ. ४. 'दीप्ते' ख; 'दीप्तौ' ग-घ. ५. 'प्रभेदे' ख. ६. 'पृथ्व्यादौ' ग-घ. ७. 'उत्पाद उत्पत्तिः' इति व्याख्या. ८. 'दुत्पातयो' ग-घ. ९. 'स्यात्' ख-ग-घ. १०. 'विरते' ख. ११. 'श्रवणे' ख. १२. 'स्रवणं स्यन्दनम्' इति टीका. १३. 'लेपिन्यां' क. १४. 'असारेऽश्वगतौ' ख. १५. 'वृत्ते' ख. १६. 'व्रते' ख. १७. 'वर्तिनि' ख. १८. 'तिलके' ख-ग-घ. १९. 'बहुवातयोः' ख. २० 'पूते भूते' ख-ग-घ. 'पूतिभूतं दुर्गन्धम्' इति टीका. २१. 'कपालखण्डं शिरोस्थिशकलम्' इति टीका. 'कपाले खङ्गहृग्रुजोः' ख.

श्रुतमाकर्णिते शास्त्रे श्रुतिराम्नायवार्तयोः । षड्ज[1]ाद्यारम्भिकायां च कर्णाकर्णनयोरपि ॥ २१७
श्वेतं रूप्ये श्वेतो द्वीपे वर्णे शैले कपर्दके । श्वेता तु शङ्खिनीकाष्ठपाटल्योः स्यात्सती पुनः॥ २१८
कात्यायन्यां च साध्व्यां च सातिर्दानावसानयोः । सितस्त्ववसिते बद्धे वर्णे सिता तु शर्करा२१९
स्थित ऊर्ध्वे सप्रतिज्ञे स्थितिः स्थाने च सीम्नि च । सीता जनकजागङ्गाभेदयोर्हलपद्धतौ ॥२२०
सुतः पुत्रे नृपे सुप्तिः स्वापे स्पर्शाज्ञतारुजि । सूतः पारदसारथ्योः प्रसूतेरितबन्दिषु ॥ २२१
ब्राह्मण्यां क्षत्रियाज्जाते तक्ष्णि सृतिर्गतौ पथि । स्मृतिः स्मरणधीच्छासु शास्त्रे सेतुस्तु संवरे[2]॥२२२
नदीसंक्रमेऽथ हस्तः करे मानोडु[3]भेदयोः । केशात्कलापे शुण्डायां हरिदिशि तृणान्तरे ॥ २२३
वर्णभेदेऽश्वभेदे च हितं पथ्ये गते धृते । हेतिर्ज्वालास्त्रसूर्यांशुष्वर्थो हेतौ प्रयोजने ॥ २२४
निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु[4] । आस्था यत्नालम्बनयोरास्थानापेक्षयोरपि ॥ २२५
कन्था पुरे प्रावरणे क्राथो व्यसनदुःखयोः । द्रवनिष्पाकेऽथ कुथः स्यादास्तरणदर्भयोः ॥ २२६
कोथस्तु मथने नेत्ररुग्भेदे शौटिते[5]ऽपि च । ग्रन्थो गुम्फे धने शास्त्रे द्वात्रिंशद्वर्णनिर्मितौ ॥ २२७
ग्रन्थिर्वस्त्रादिबन्धे रुग्भेदे कौटिल्यपर्वणोः । ग्रन्थि तु ग्रन्थिपर्णे स्याद्गाथा वाग्भेदवृत्तयोः ॥२२८
तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः । ऋषिजुष्टे जले सत्रिण्युपाये स्त्रीरजस्यपि ॥ २२९
योनौ पात्रे दर्शने च तुत्थोऽग्नौ तुत्थमञ्जने । तुत्था नील्यां सूक्ष्मैलायां दुःस्थो दुर्गतमूर्खयोः२३०
प्रस्थः सानौ मानभेदे पीथोऽर्के पीथमम्बुनि । पृथुर्विशाले भूपाले [6]वापिका[7]कृष्णजीरयोः ॥ २३१
प्रोथोऽश्वघोणाध्वगयोः कट्यां मन्थो रवौ मथि । सात्तवे नेत्ररोगे च यूथं तिर्यग्गणे गणे॥२३२
यूथी तु मागधीपुष्पविशेषयोः कुरण्टके । रथस्तु स्यन्दने पादे शरीरे वेतसद्रुमे ॥ २३३
वीथी वर्त्मनि पङ्क्तौ च गृहाङ्गे नाट्यरूपके । [8]संस्था स्पशे स्थितौ मृत्यौ सार्थो वृन्दे वणिग्गणे२३४
सिक्थं नील्यां मधूच्छिष्टे सिक्थो भक्तपुलाकके[9] । अब्दः संवत्सरे मेघे मुस्तके गिरिभिद्यपि ॥२३५
अन्दुः स्यान्निगडे भूषाभेदे ककुदवत्ककुत् । श्रेष्ठे वृषाङ्के[10] राट्चिह्ने क्रव्यान्मांसाशिरक्षसोः॥२३६
कन्दोऽब्दे सूरणे सस्यमूले कुन्दोऽच्युते निधौ । चक्रभ्रमौ च माघ्ये च क्षोदः पेषणचूर्णयोः२३७
गदः कृष्णानुजे रोगे गदा प्रहरणान्तरे । छदः पत्रे पतत्रे च ग्रन्थिपर्णतमालयोः ॥ २३८
छन्दो वशेऽभिप्राये च दृषत्पाषाणमात्रके । निष्पेषणार्थपट्टेऽपि धीदा कन्यामनीषयोः ॥ २३९
नदो वह्दे[11]ऽब्धौ निनदे नन्दा संपद्यलिंजरे । तिथिभेदे[12]ऽपि नन्दिस्तु प्रतीहारे पिनाकिनः ॥ २४०
आनन्दने च द्यूते च निन्दा कुत्सापवादयोः।पदं स्थाने विभक्त्यन्ते शब्दे वाक्ये[13]ऽङ्के[14]वस्तुनोः २४१
त्राणे पादे पादचिह्ने व्यवसायापदेशयोः । पादो मूलोस्रतुर्यांशाङ्घ्रिषु प्रत्यन्तपर्वते ॥ २४२
भन्द्रं[15] कल्याणे सौख्ये च भसन्द्भास्वरमांसयोः । भेदो विदारणे द्वैधे[16] उपजापविशेषयोः ॥ २४३
मदो रेतस्यहंकारे मद्ये हर्षेभदानयोः । कस्तूरिकायां क्षैब्ये च मदी कृषक[17]वस्तुनि ॥ २४४
मन्दो मूढे शनौ रोगिण्यलसे भाग्यवर्जिते । गजजातिप्रभेदेऽल्पे स्वैरे मन्दरते खले ॥ २४५

---

१. 'खड्गाद्यारम्भिकायां' ख. २. 'संचरे' ग-घ. ३ 'मानोडुमानयोः' ख; 'मानद्रुभेदयोः' ग-घ. ४. 'द्रव्य' ग-घ. ५. 'घटिते' ख. ६. 'पृथ्वी च कृष्णजीरके' ख. ७. 'वापिका हिङ्गुपर्णी' इति टीका. ८. 'संस्था नाशे व्यवस्थायां व्यक्तिसादृश्ययोः स्थितौ। क्रतुभेदे समाप्तौ च चरे च निजराष्ट्रगे ॥ सार्थो वणिग्गणे वृन्दे धनेन सहितेऽपि च ॥' ख-ग-घ. ९.'पिलाकके' ख. १०'विषाङ्के' ग-घ. ११.'ह्रदे' ख-ग-घ. १२.'भेदे नदी सिन्धुर्नन्दिर्द्वाःस्थे' ख. १३'वाक्यैकवस्तुनोः' ग-घ. १४. 'अङ्के लक्ष्मणि' इति टीका. १५. 'भद्रं' ग-घ. १६. 'द्वैधे द्विधाकरणे' इति टीका. 'वेधे' ख-ग-घ. १७. 'कृषकः कृषीवलः' इति टीका. 'चषक' ख-ग-घ.

मृद्व[1]तीक्ष्णे कोमले च **रदो** दन्ते विलेखने । **विदा** ज्ञानधियो**र्बिन्दु**र्विप्रुट्ज्ञात्रो रदक्षते ॥ २४६
वेदिरङ्गुलिमुद्रायां बुधेऽलंकृतभूतले । **शब्दो**ऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ ॥ २४७
**शरद्व**र्षात्यये वर्षे **शादः** कर्दमशष्पयोः । **संवित्**संभाषणे ज्ञाने [2]संग्रामे नाम्नि तोषणे ॥ २४८
क्रियाकारे प्रतिज्ञायां संकेताचारयोरपि । **संप**[3]**द्वृद्धौ** गुणोत्कर्षे हारे **स्वादुस्तु** सुन्दरे ॥ २४९
मृष्टे **सूदः** सूपकारे व्यञ्जनेऽपि च सूपवत् । **स्वेदो** घर्मे स्वेदने **चान्धो**ऽन्धकारेऽक्षिवर्जिते ॥ २५०
**अर्धः** खण्डेऽर्धे समांशेऽथा**ब्धिः** सरसि सागरे । **आधिर्म**नोर्त्तौ व्यसनेऽधिष्ठाने बन्धकाशयोः ॥
**ऋद्धं** समृद्धे [4]सिद्धान्ने[5] **गन्धः** संबन्धलेशयोः । गन्धकामोदगर्वेषु स्या[6]द्गाधः [7]स्ताघलिप्सयोः ॥ २५२
**गोधा** प्राणिविशेषे स्याज्ज्याघातस्य च वारणे । [8]**दिग्धो** लिप्ते विषाक्ते[9]षौ प्रवृद्धस्नेहयोरपि ॥ २५३
**दुग्धं** क्षीरे पूरिते च **दोग्धा** गोपालवत्सयोः । अर्थोपजीव[10]कं कवौ **बन्ध** आधौ च बन्धने ॥ २५४
**बन्धुर्भ्रा**तृबान्धवयो**र्बाधा** दुःखनिषेधयोः । **बुधः** सौम्ये कवौ **बुद्धः** पण्डिते [11]बुधिते जिने ॥ २५५
**बोधिर्बौ**द्धसमाधौ चार्हद्धर्माप्तौ च पिप्पले । **मधुश्चै**त्रर्तुदैत्येषु [12]जीवाशा[13]कमधूकयोः ॥ २५६
**मधु** क्षीरे जले मद्ये क्षौद्रे पुष्परसेऽपि च । **मिद्धं** चि[14]न्ता[15]भिसंक्षेपे निद्राल[16]सितयोरपि ॥ २५७
**मुग्धो** मूढे रम्ये **मेधः** क्रतौ **मेधा** तु शेमुषी । **राधो** वैशाखमासे स्या**द्राधा** विद्युद्विशाखयोः २५८
विष्णुक्रान्तामलक्योश्च गोपीवे[17]ध्यविशेषयोः । **लुब्ध** आकाङ्क्षिणि व्याधे **वधो** हिंसकहिंसयोः २५९
**वधूः** पत्न्यां स्नुषानार्योः स्पृक्काशारिवयोरपि । नवपरिणीतायां च **व्याधो** मृगयुदुष्टयोः ॥ २६०
**विद्धं** सदृग्वेधितयोः क्षिप्ते **विधा**र्द्धिमूल्ययोः । प्रकारे भाग्नविधिषु **विधिर्ब्र**ह्मविधानयोः ॥ २६१
विधिवाक्ये च दैवे च प्रकारे कालकल्पयोः । **विधुश्च**न्द्रेऽच्युते वीरुल्लतायां विटपेऽपि च ॥ २६२
**वृद्धः** प्राज्ञे स्थविरे च **वृद्धं** शैलेयरूढयोः । **वृद्धिः** कलान्तरे हर्षे वर्धने भेषजान्तरे ॥ २६३
**श्रद्धा**स्तिक्येऽभिलाषे च **श्राद्धं** श्रद्धासमन्विते । हव्यकव्यविधाने च **शुद्धः** केवलपूतयोः ॥ २६४
**स्कन्धः** प्रकाण्डे कायेंऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च **संधा** स्थितिप्रतिज्ञयोः ॥ २६५
**संधिर्यो**नौ सुरङ्गायां नाट्याङ्गे [18]श्लेषभेदयोः । **साधुर्जै**[19]नमुनौ वार्धुषिके सज्जनरम्ययोः ॥ २६६
**सिद्धो** [20]व्याड्यादिके देवयोनौ निष्पन्नमुक्तयोः । नित्ये प्रसिद्धे **सिद्धिस्तु** मोक्षे निष्पत्तियोगयोः २६७
**सिन्धुर्न**द्यां गजमदेऽब्धौ देशनदभेदयोः । **सुधा** गङ्गेष्टिकास्नुह्योर्मूर्वालेपामृतेषु च ॥ २६८
**अन्नं** भक्तेऽशितेऽर्वाश्वेऽधमे**ऽध्वा** कालवर्त्मनोः । संस्थाने सास्नवस्कन्धे**ऽर्थिनौ** याचकसेवकौ २६९
**आत्मा** चित्ते धृतौ यत्ने धिषणायां कलेवरे । परमात्मनि जीवेऽर्के हुताशनसमीरयोः ॥ २७०
स्वभावेऽथेन **ईशे**ऽर्केऽथो**ऽन्नं** क्लिन्ने दयापरे । **ऊष्माण**स्तु निदाघोष्णग्रीष्माः शषसहा अपि ॥ २७१
**कर्म** कारकभेदे स्यात्क्रियायां च शुभाशुभे । **कामी** स्यात्कमने चक्रवाके पारावतेऽपि च ॥ २७२

---

१. 'मृदुतीक्ष्णे' ग-घ. २. 'संयमे' ख-ग-घ. ३. 'द्वृद्धौ' ख-ग-घ. ४. 'सिद्धान्ते' ख-ग-घ. ५. 'सिद्धं संपन्नमन्नं सिद्धान्नम् । तत्र यथा 'सुस्निग्धमृद्धं मधुरं गुरुभ्यः' इति टीका. ६. 'गाधः स्यात्स्थानलिप्सयोः' ग-घ. ७. 'स्ताघे लभ्यतलस्पर्शे' इति टीका. ८. इतः प्राक् 'दधि गोरसभेदे स्यात्तथा श्रीवासवासयोः' इत्यधिकं ख-ग-घ-पुस्तकेषु. ९. 'ऽग्नौ' ग-घ. १०. 'जीविनि' ग-घ. ११. 'बोधिते' ख-ग-घ. १२. 'जीवाशाको डोडीशाकः' इति टीका. १३. 'जीवाशोक' ख-ग-घ. १४ 'चिन्ताभिसंक्षेपे' ख-ग-घ. १५. 'चित्ताभिसंक्षेपश्चित्तव्याक्षेपः' इति टीका. १६. 'लसितयो' ख-ग-घ. १७. 'वेध' ख-ग-घ. १८. "श्लेषे यथा—'स्रस्ताङ्गसंधौ विगताक्षपाटवे रुजा निकामं विकलीकृते रथे ।' संधानसंहितागुणविशेषा अपि श्लेषभेदा एव । भेदे विश्लेषे" इति टीका. 'श्लेष्म' ख-ग-घ. १९. 'जिने मुनौ' ग-घ; 'जैने मुनौ' ख. २०. 'व्याघ्रादिके' ख; 'व्यासादिके' ग-घ.

कृती योगे बुधे खड्गी गण्डके खड्गधारिणि। ग्रावाश्मनि गिरौ गोमी फेरौ गोमत्युपासके ॥२७३
घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे। संघे मुस्ते घनं मध्यनृत्तवाद्यप्रकारयोः ॥ २७४
चर्म त्वचि [3]स्फरे चर्मी भूर्जे फलकिभृङ्गिणोः। चक्री कोके कुलालेऽहौ वैकुण्ठे चक्रवर्तिनि ॥२७५
चिह्नमङ्के पताकायां चीनो देशैणतन्तुषु। व्रीहौ वस्त्रे छद्म शाठ्येऽपदेशे घातिकर्मणि॥ २७६
छन्नं रहश्छादितयोश्छिन्ना स्यादमृतेत्वरी। छिन्नं भिन्ने जनो लोके जगद्भेदे पृथग्जने ॥ २७७
जनी स्नुषावनितयोर्जिनोऽर्हद्बुद्धविष्णुषु। ज्योत्स्ना स्याज्जोतिःसंयुक्तनिशि चन्द्रातपेऽपि च ॥२७८
[4]ज्यौत्स्नी पटोलीज्योत्स्नावन्निशोस्तनुर्वपुस्त्वचोः। विरलेऽल्पे कृशे दण्डी यमे द्वाःस्थसदण्डयोः२७९
दानं मतं गजमदे रक्षणच्छेदशुद्धिषु। विश्राणनेऽप्यथ द्युम्नं द्रविणवद्धनौजसोः ॥ २८०
धनं वित्ते गोधने च स्याद्धन्व स्थलचापयोः। धन्वा मरौ धन्वी पार्थे छेके ककुभचापिनोः॥२८१
धनुः [5]शब्दः पियालद्रौ राशिभेदे धनुष्यपि। धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः ॥ २८२
धाना भृष्टयवेऽङ्कूरे धान्याके चूर्णसक्तुषु। धेनः समुद्रे [6]धेनी तु नद्यां [8]नग्नो विवाससि ॥ २८३
मागधे च क्षपणके नन्दी गिरिशवेत्रिणि। गर्दभाण्डे वटे न्यूनं हीनवद्योनगर्ह्ययोः ॥ २८४
पर्व प्रस्तावोत्सवयोर्ग्रन्थौ विषुवदादिषु। दर्शप्रतिपत्संधौ च तिथिग्रन्थिविशेषयोः ॥ २८५
पक्ष्माक्षिलोम्नि तन्त्वादिसूक्ष्मांशे कुसुमच्छदे। गरुत्किञ्जल्कयोश्चापि पत्त्री काण्डे खगे द्रुमे॥२८६
रथेऽद्रौ रथिके श्येने प्रेम तु स्नेहनर्मणोः। ब्रह्मा तु तपसि ज्ञाने वेदेऽध्यात्मे द्विजे विधौ ॥ २८७
ऋत्विग्योगभिदोश्चाथ बुध्नो गिरिशमूलयोः। भर्म भारे भृतौ हेम्नि भानु[10]रंशौ रवौ दिने ॥ २८८
भिन्नोऽन्यः संगतः फुल्लो दीर्णो भोगी भुजंगमे। वै[11]यावृत्यकरे राज्ञि ग्रामण्यां नापितेऽपि च २८९
मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे। मीनो मत्स्ये राशिभेदे[12] मृत्स्ना मृत्सा तुवर्यपि २९०
यानं युग्ये गतौ योनिः कारणे भग[13]ता[14]म्रयोः। रत्नं स्वजातिश्रेष्ठे स्यान्मणौ राजा तु पार्थिवे २९१
निशाकरे प्रभौ [15]शक्ते यक्षक्षत्रिययोरपि ॥ २९२
रास्नैलापर्णी[16]सर्पाक्ष्यो रागी कामिनि [17]रङ्करि। रोही रोहीतकेऽश्वत्थे वटे लग्नं तु लज्जिते॥ २९३
राशीनामुदये सक्ते लक्ष्म प्रधानचिह्नयोः। वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने ॥ २९४
वस्नं वस्त्रे धने मूल्ये [18]भृतौ[19] वर्ष्म पुनस्तनौ। प्रमाणे सुन्दराकारे वर्त्म नेत्रच्छदेऽध्वनि॥ २९५
वर्णी पुनश्चित्रकरे लेखके ब्रह्मचारिणि। वानं शुष्कफले शुष्के सीवने गमने कटे ॥ २९६
जलसं[20]प्लवबातोर्मिसुरङ्गासौरभेषु च। वाग्मी पटुबृहस्पत्योर्वाजी बाणे हये खगे ॥ २९७
विन्नं विचारिते लब्धे स्थिते वृषा तु वासवे। वृषभे तुरगे पुंसि शाखी तु द्रुमवेदयोः॥ २९८
राजभेदे शिखी वह्नौ वृक्षे केतुग्रहे शरे। चूडावति बलीवर्दे मयूरे कुक्कुटे हये ॥ २९९
शीनो मूर्खाजगरयोः श्येनः [21]शुक्ले[22] पतत्रिणि। स्वप्नः स्वापे सुप्तज्ञाने स्थानं स्थि[23]र्त्यवकाशयोः ३००

१. 'नृत्य' ख-ग-घ. २. 'प्रभेदयोः' ख. ३. 'स्फटे' ग-घ. ४. 'ज्योत्स्नी' ख-ग-घ. ५. 'शब्दे' ख-ग-घ. ६. 'धेना' ख-ग-घ. ७. 'गौरादित्वाङ्ङी' इति टीका. ८. 'स्याद्भारतीभिदि। धेनुर्गोमात्रके दोग्ध्र्यां गवि नग्नो' ख-ग-घ. ९. 'ध्याये' ख. १० 'रंशे' ख. ११. 'वैयावृत्यकरः परिचारकः। व्यवहारिक इत्यन्ये' इति टीका. १२. इतः परं मुनिर्वाचंयमोऽर्हति। पियालागस्तिपालाशे' इत्यधिकं ख-ग-घ-पुस्तकेषु. १३. 'तोययोः' ख-ग-घ. १४. 'ताम्रं शुल्वम्' इति टीका. १५. 'शक्रे' ग-घ. १६. 'सर्पाख्ये' ख. १७. 'रक्तरि' ख-ग-घ. १८. 'भृतिः कर्मकरादीनां वेतनम्' इति टीका. १९. 'मृतौ' ग-घ. २०. 'संप्लुत' ख-ग-घ. २१. 'शुक्ले गुणे' इति टीका. २२. 'शुक्रे' ग-घ. २३. 'नित्याव' ख.

साहश्ये संनिवेशे च स्त्यानं स्नानीय आप्लवे । स्त्यानं स्यात्स्निग्ध आलस्ये प्रतिध्वानघनत्वयोः ३०१
सादी तुरङ्गमारोहे निषादिरथिनोरपि । स्वामी प्रभौ गुहे सूनं पुष्पे सूना पुनः सुता ॥ ३०२
अधोजिह्वा वधस्थानं सूनुः पुत्रेऽनुजे रवौ । हनुः कपोलावयवे मरणामययोरपि ॥ ३०३
हरिद्रायामायुधे च हली कृषकसीरिणोः । कल्पो विकल्पे कल्पद्रौ[1] संवर्ते ब्रह्मवासरे ॥ ३०४
शास्त्रे न्याये विधौ कूपो गर्तेऽन्धौ गुणवृक्षके । मृन्माने कूपके क्षेपो गर्वे लङ्घननिन्दयोः ॥ ३०५
विलम्बे[2]रण[3]हेलासु गोपौ भूपालबल्लवौ । ग्रामौघगोष्ठाधिकृतौ गोपी गोपालसुन्दरी ॥ ३०६
शारिवा रक्तिका तल्पमट्टे शय्याकलत्रयोः । त्रपा लज्जा कुलटयोस्त्रपु सीसकरङ्गयोः ॥ ३०७
तापः संतापे कृच्छ्रे च तापी तु सरिदन्तरे । दर्पो मृगमदे गर्वे पुष्पं विकास आर्तवे ॥ ३०८
धनदस्य विमाने च कुसुमे नेत्ररुज्यपि । बाष्प ऊष्माक्षिजलयो[4] रूपं तु श्लोकशब्दयोः ॥ ३०९
पाशावाकारे सौन्दर्ये नाणके नाटकादिके । ग्रन्थावृत्तौ स्वभावे च रेपः क्रूरे विगर्हिते ॥ ३१०
रोपौ रोपणेषू रोपं रोध्रे लेपस्तु लेपने । अशने च सुधायां च वपा विवरमेदसोः ॥ ३११
शष्पं तु प्रतिभाहीनतायां बालतृणेऽपि च । शापः शपथ आक्रोशे शिष्पं श्रुवे क्रियोचिते ॥ ३१२
स्वापो निद्रायां रुग्भेदे शपनाज्ञानमात्रयोः । गुम्फो दोर्भूषणे दृब्धौ रेफोऽवद्यरवर्णयोः ॥ ३१३
शर्फ खुरे गवादीनां मूले विटपिनामपि । शिफा मातरि मांस्यां च जटायां च सरित्यपि ॥ ३१४
कैम्बिर्वंशलतादर्व्योः कम्बुर्वलयशङ्खयोः । गजे शम्बूके कर्चूरे ग्रीवायां नलकेऽपि च ॥ ३१५
जम्बूर्मेरुतरङ्गिण्यां द्वीपवृक्षविशेषयोः । डिम्ब एरण्डभययोर्विप्लवे प्रीहि पुष्फसे ॥ ३१६
बिम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले । शम्बः पवौ लोहकाश्यां स्तम्ब आलानगुल्मयोः ३१७
ग्रीष्मादीनां प्रकाण्डे च कुम्भो वेश्यापतौ घटे । द्विपाङ्गे राक्षसे राशौ कुम्भं त्रिवृति गुग्गुलौ ॥ ३१८
कुम्भ्युषायां पाटलायां वारिपर्ण्यां च कट्फले । गर्भः कुक्षौ शिशौ संधौ भ्रूणे पनसकण्टके ॥ ३१९
मध्ये[7]ऽग्नावपवरके जम्भः स्याद्दानवान्तरे । दन्तभोजनयोरंशे हनौ[8] जम्बीरतूणयोः ॥ ३२०
जृम्भा जृम्भणे विकासे डिम्भो वैधेयबालयोः । दम्भः कल्के कैतवे च नाभिः क्षत्रप्रधानयोः ॥
चक्रमध्ये मृगमदे प्राण्यङ्गे मुख्यराजि च । निभः स्यात्सदृशे व्याजे रम्भो वैणवदण्डके ॥ ३२२
रम्भा त्रिदशभामिन्यां कदल्यां च विभुः प्रभौ । व्यापके शंकरे नित्ये शंभुर्ब्रह्मार्हतोः शिवे ॥ ३२३
शुभो योगे शुभं भद्रे स्तम्भः स्थूणागजाड्ययोः । सभा सभ्येषु शालायां गोष्ठ्यां द्यूतसमूहयोः ३२४
स्वभूर्विष्णौ विधावामोऽपक्वे रुग्भेदरोगयोः । उमा गौर्यां हरिद्रायां कीर्तिकान्त्यतसीष्वपि ॥ ३२५
ऊर्मिः पीडाजवोत्कण्ठाभ[12]ङ्गप्राकाश्यवीचिषु । वस्त्रसंकोचलेखायां क्रमः कल्पाङ्घ्रिशक्तिषु ॥ ३२६
परिपाट्यां क्षमः शक्ते हिते युक्ते क्षमावति । क्षमा क्षान्तौ क्षितौ कामं वाढेऽनुमतिरेतसोः ३२७
कामः स्मरेच्छाकाम्येषु क्षुमा स्यान्नीलिकातसी । क्रिमिः कृमिवल्ली[13]लाक्षायां कीटे क्षेमस्तु मङ्गले ३२८

१. 'कल्पाद्रौ' ग-घ. २. 'विलम्बरण' ख. ३. 'ईरणे प्रेरणे' इति टीका. ४. 'जलयोः स्याद्रूपं श्लोक' ग-घ. ५. इतः प्राक् 'शोफ ओषधिभेदे स्याद्वृकृते त्वग्विवर्धने' इत्यधिकं ख-पुस्तके. ६. 'मध्यमे चाप' ख-ग-घ. ७. "अग्नौ यथा—'शशाम न शमीगर्भः'।" इति टीका. ८. 'हानौ' ख. ९. इतः परं 'दर्भो ग्रन्थे कुशेऽपि च । हग्भूः पवौ भास्करे च' इत्यधिकं ख-ग-घ-पुस्तकेषु. १०. 'राशि' ख-ग-घ. ११. इतः परं 'शोभा कान्तीच्छयोर्मता । स्तम्भोऽङ्गजाड्ये स्थूणायां सभा द्यूतसमूहयोः ॥ गोष्ठ्यां सभ्येषु शालायां स्वभूर्विष्णौ विधावपि । स्तोभः स्यात्सामविच्छेदे हेलने स्तम्भनेऽपि च ॥ आमोऽपक्वे रोगभेदे रोगे चेध्मः समिन्धिदि। कामे वसन्ते काष्ठे स्यादुमो नगरघट्टयोः ॥' इत्येवं साधिकः पाठः ख-ग-घ-पुस्तकेषु. १२. 'लेखा' ख. १३. 'श्च लाक्षायां' ख.

लब्धसंरक्षणे मोक्षे क्षेमोमा धनहर्यपि। क्षौमं स्यादतसीवस्त्रे दुकूलेऽट्टालकेऽपि च॥ ३२९
खर्मं [1]क्षौमे पौरुषे च गमोऽध्वद्यूतभेदयोः। सदृक्पाठेऽप्यथ ग्रामो वृन्दे शब्दादिपूर्वकः॥ ३३०
[2]षेङ्गादौ संवसथे च गुल्मः सैन्योपरक्षणे। रुक्सैन्यघट्टभेदेषु स्तम्बे गुल्मी पटौकसि॥ ३३१
आमलक्येलयोर्वन्यामथ घर्मो निदाघवत्। स्वेदाम्भस्यातपे ग्रीष्मोष्मणोर्जाल्मस्तु पामरे॥ ३३२
असमीक्ष्यकारिणि च जामिः स्वसृकुलस्त्रियोः। जिह्मस्तु कुटिले मन्दे जिह्मं तगरपादपे॥ ३३३
तोक्मं कर्णमले तोक्मः स्याद्धरिते हरिद्यवे। [3]दमः स्यात्कर्दमे दण्डे [4]दमने दमथेऽपि च॥ ३३४
[5]दस्मस्तु हव्यवाहे स्याद्यजमाने मलिम्लुचे। [6]धर्मो यमोपमापुण्यस्वभावाचारधन्वसु॥ ३३५
सत्सङ्गेऽर्हत्य[7]हिंसादौ न्यायोपनिषदोरपि। धर्मं दानादिके नेमस्त्वर्धे प्राकारगर्तयोः॥ ३३६
अवधौ कैतवे काले नेमिः कूपत्रिकाप्रधिः। तिनिशोऽरिष्टनेमिश्च पद्मो व्यूहे निधावहौ॥ ३३७
संख्याब्जयोः पद्ममिभबिन्दौ ब्राह्मी तु भारती। शाकभेदः पङ्कगण्डी हञ्जिका सोमवल्लरी॥ ३३८
ब्रह्मशक्तिर्भ्रमस्तु स्याद्भ्रमणे [8]वारिनिर्गमे। भ्रान्तौ कुन्दाख्ययन्त्रे च भीष्मो घोरे वृकोदरे॥ ३३९
हरेऽम्लवेतसे चापि भीष्मो गाङ्गेयरुद्रयोः। राक्षसे भीषणे [9]भौमोऽङ्गारके नरकासुरे॥ ३४०
यमः [10]कालयमजयोरहिंसादिषु पञ्चसु। संयमे यमने ध्वाङ्क्षे यामौ प्रहरसंयमौ॥ ३४१
रमः कान्ते रक्ताशोके मन्मथे च रमा श्रियाम्। रश्मिर्घृणिप्रग्रहयो रामः श्यामे हलायुधे॥ ३४२
पशुभेदे सिते चारौ राघवे रेणुकासुते। रामं तु वास्तुके कुष्ठे रामा [11]हिङ्गुलिनीस्त्रियोः॥ ३४३
रुक्मं लोहे सुवर्णे च रुमा [12]स्योल्लवणाकरे। सुग्रीवपत्न्यां लक्ष्मीः श्रीशोभासंपत्प्रियङ्गुषु॥ ३४४
वमिर्वान्ते नले वामः कामे सव्ये पयोधरे। [13]उमानाथे प्रतिकूले चारौ वामा तु योषिति॥ ३४५
वामी शृगाल्यां करभीरासभीवडवासु च। शमी द्रुभेदे वल्गुल्यां शिम्ब्यां श्यामोऽम्बुदेशितौ ३४६
हरिते प्रयागवटे कोकिले वृद्धदारके। श्यामं सैन्धवे मरिचे श्यामा सोमलतानिशोः॥ ३४७
शारिवावल्गुलीगुन्द्रात्रिवृत्कृष्णाप्रियङ्गुषु। अप्रसूतस्त्रियां नील्यां श्रामो [14]मण्डपकालयोः॥ ३४८
शुष्ममोजसि सूर्ये च समं साध्वखिलं सदृक्। सीमाघाटे स्थितौ क्षेत्रे सूक्ष्मोऽणौ सूक्ष्ममल्पके॥
अध्यात्मे कतके सोमस्त्वोषधीतद्रसेन्दुषु। दिव्यौषध्यां घनसारे समीरे पितृदैवते॥ ३५०
वसुप्रभेदे सलिले वानरे किंनरेश्वरे। हिमं तुषारे शीते च हिमश्चन्दनपादपे॥ ३५१
ह्रोमिः सर्पिषि वह्नौ च स्यादर्यः स्वामिवैश्ययोः। अर्थ्यं शिलाजतुन्य[15]र्थेशालिनि न्याय्यविज्ञयोः ३५२
अन्योऽसदृशेतरयोरन्त्यस्त्वन्तभवेऽधमे। अर्घ्यमर्घार्थमर्घार्हेमास्यं मुखभवे मुखे॥ ३५३
मुखान्तरास्या तु स्थित्यामार्यौ सज्जनसंविदौ। आर्योमाछन्दसोरिज्या दाने सङ्गेऽर्चनेऽध्वरे ३५४
इभ्यो धनवतीभ्या तु करेण्वां सल्लकीतरौ। कल्यं प्रभाते मधुनि सज्जे दक्षे निरामये॥ ३५५
कल्या कल्याणवाचि स्यात्कश्यं कशार्हमद्ययोः। अश्वमध्ये क्षयो गेहे कल्पान्तेऽपचये रुजि ३५६

---

१. 'क्षमे' ख. २. 'खङ्गादौ' ख. ३. 'दमनं तर्णकादीनाम्। दमथ उपशमः' इति टीका. ४. 'मदने' ग-घ. ५. 'दश्मस्तु' ख. ६. इतः प्राक् 'द्रुमस्तु पादपे पारिजाते किंपुरुषेश्वरे' इत्यधिकं ख-ग-घ-पुस्तकेषु. ७. 'हन्यहिंसायां' ख. ८. 'जल' ख. ९. 'भामः क्रोधे रुचौ रवौ। भीमो वृकोदरे घोरे शंकरेऽप्यम्लवेतसे॥ भीष्मो रुद्रे च गाङ्गेये राक्षसे च भयंकरे। भूमिः क्षितौ स्थानमात्रे भौमो मङ्गलदैत्ययोः॥' इति साधिकः पाठः ख-ग-घ-पुस्तकेषु. १०. 'काले च यमजे' ख. ११. 'हिङ्गुलिनिस्त्रियोः' ग-घ. १२. 'तु लव' ख. १३. 'वामस्थिते हरे वक्रे' ख. १४. 'मासयोः' ख. १५. 'न्यर्थ्यः संप्रार्थ्ये' ख-ग-घ.

कन्या नार्यां कुमार्यां च राश्योषधिविशेषयोः । कक्ष्या गृहप्रकोष्ठे स्वात्सादृश्योद्योगकाञ्चिषु ॥३५७
बृहतिकेभनाड्योश्च कार्यं हेतौ प्रयोजने । कायः कदैवते मूर्तौ संघे लक्ष्यस्वभावयोः ॥ ३५८
कायं मनुष्यतीर्थे च काव्या स्यात्पूतनाधियोः । काव्यं ग्रन्थे काव्यः शुक्रे कांस्यं तैजसवाद्ययोः॥
पानपात्रे मानभेदे क्रिया कारणचेष्टयोः । कर्मोपायचिकित्सासु निष्कृतौ संप्रधारणे ॥ ३६०
अर्चाप्रारम्भशिक्षासु कुल्यं तु कुजलेऽस्थनि । सूर्पामिषाष्टद्रोणीषु कुल्या सरिति सारणौ ॥ ३६१
कृत्यो विद्विषि कार्ये च कृत्या स्याद्देवता क्रिया । गव्यं क्षीरादिके ज्यायां रागवस्तुनि गोहिते ३६२
गव्या गोवृन्दगव्यूत्योर्गुह्यः कमठदम्भयोः । गुह्यमुपस्थे रहस्ये गृह्यं तु मलवर्त्मनि ॥ ३६३
गृह्योऽस्वैरिणि पक्ष्ये च गृहासक्तमृगाण्डजे । गृह्या तु शाखानगरे गेयौ गातव्यगायनौ ॥ ३६४
गोप्यौ दासेरगोप्तव्यौ चयः प्राकारपीठभूः । समूहोऽप्यथ चव्या स्याच्चविकाशर्तपर्वयोः ॥ ३६५
चित्यं मृतकचैत्ये स्याच्चित्या मृतचितावपि । चैत्यं जिनौकस्तद्बिम्बं चैत्यो जिनसभातरुः ॥३६६
उद्देश्यवृक्षे चोद्यं तु प्रेर्ये प्रश्नेऽद्भुतेऽपि च । छाया पङ्क्तौ प्रतिमायामर्कयोषित्यनातपे ॥ ३६७
उत्कोचे पालने कान्तौ शोभायां च तमस्यपि । जयो जयन्ते विजये जयोमा तत्सखी तिथिः ३६८
पथ्या जयन्त्यग्निमन्थो जन्यो जामातृवत्सले । जनके जननीये च नवोढानुचरादिषु ॥ ३६९
जन्यं कौलीने युध्यट्टे जन्या मातृसखीमुदोः । त्रयी त्रिवेद्यां त्रितये पुरन्ध्र्यां सुमतावपि ॥ ३७०
तार्क्ष्यस्तु स्यन्दने वाहे गरुडे गरुडाग्रजे । अश्वकर्णाह्वयतरौ स्यात्तार्क्ष्यं तु रसाञ्जने ॥ ३७१
तिष्यः पुष्यवत्कलौ भे तिष्या त्वामलकीतरौ । द्रव्यं भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः॥ ३७२
विनये भेषजे रीर्यां दस्युः प्रत्यर्थिचोरयोः । दायो दाने यौतकादिधने सोल्लुण्ठभाषणे ॥ ३७३
विभक्तव्यपितृद्रव्ये दिव्यं वल्गुलवङ्गयोः । शुभवे दिव्यामलक्यां दूष्यं वाससि तद्गृहे ॥ ३७४
दूषणीये चाथ दैत्योऽसुरे दैत्यासुरौषधौ । धन्यः पुण्ययुते धन्यामलक्यामुपमातरि ॥ ३७५
धान्यं तु व्रीहौ धान्याके धिष्ण्यं स्थानोडुवेश्मसु । बले धिष्ण्योऽग्नौ शुक्रे च नयः स्यान्नैगमादिषु ॥
नीतिर्द्यूतभिदोः पथ्यं हिते पथ्या हरीतकी ॥ ३७७
पद्योऽन्त्यवर्णे स्यात्पद्यं श्लोके पद्या तु वर्त्मनि । प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययोः॥ ३७८
प्रियो वृद्ध्यौषधे हृद्ये पत्यौ पुण्यं तु सुन्दरे । सुकृते पावने धर्मे पूज्यः श्वशुरवन्द्ययोः ॥ ३७९
बल्यं रेतोबलकृतोर्भयं भीतौ भयंकरे । कुब्जकपुष्पे भव्यं तु फले योग्ये शुभेऽस्थनि ॥ ३८०
सत्ये भाविनि भव्यस्तु कर्मरङ्गतरौ सति । भव्योमाकरिपिप्पल्योर्भाग्यं कर्म शुभाशुभम् ॥ ३८१
मध्यं न्याय्येऽवलग्नेऽन्तर्मया दैत्योष्ट्रवेसराः । मैयुर्मृगाश्वमुखयोर्मन्युर्दैन्ये क्रतौ क्रुधि ॥ ३८२
माल्यं मालाकुसुमयोः स्यान्माया शांबरी कृपा । दम्भो बुद्धिश्च मायस्तु पीताम्बरेऽम्बरेऽपि च ॥३८३

---

१. इतः परं 'ग्राम्यो ग्रामभवे जने । ग्राम्यं रतबन्धेऽश्लीले' इत्यधिकं ख-ग-घ-पुस्तकेषु. २. 'प्राकारपीठभूः प्राकारमूलबन्धः' इति टीका. ३. 'पीठयोः । समूहे' ख-ग-घ. ४. 'पर्वणोः' ख-ग-घ. ५. 'चित्यं जनौक' ख-ग-घ. ६. 'वृक्षश्चोद्यं' ख-ग-घ. ७. 'युद्धेऽट्टे' ख-ग-घ. ८ इतः प्राक् 'जन्युः स्याज्जन्तुमात्रे च पावके परमेष्ठिनि' इत्यधिकं ख-ग-घ-पुस्तकेषु. ९. 'रीरी पित्तलम्' इति टीका. १०. 'रीत्यां' ख-ग-घ. ११. इतः परं 'नाट्यं लास्ये तौर्यत्रिकेऽपि च । नित्यं ध्रुवे तते' इत्यधिकं ख-ग-घ-पुस्तकेषु. १२. 'धवे' ख-ग-घ. १३. इतः प्राक् 'पेयं पातव्यपयसोः पेया श्राणाच्छमण्डयोः' इत्यधिकं ख-ग-घ-पुस्तकेषु. १४. इतः प्राक् 'मत्स्यो मीनान्तरे मीने विराटेऽभि(मु)ख्ययादवे' इत्यधिकं ख-ग-घ-पुस्तकषु.

मूल्यं वस्ने वेतने च ययुर्यज्ञहये हये । याम्यापाच्यां भरण्यां च योग्यो योगार्हशक्तयोः ॥ ३८४
उपायिनि प्रवीणे च योग्यमृद्ध्याह्वयौषधौ । योग्यार्कयोषिलभ्यासे रम्यश्चम्पकहृद्ययोः ॥ ३८५
रम्या रात्रावथ रथ्यो रथांशे रथवोढरि । रथ्या तु रथसंघाते प्रतोल्यां पथि चत्वरे ॥ ३८६
रूप्यमाहतहेमादौ रजते रूपवत्यपि । लयस्तूर्यत्रयीसाम्ये संश्लेषणविलासयोः ॥ ३८७
लभ्यं लब्धव्ये युक्ते च विन्ध्यो व्याधाद्रिभेदयोः । विन्ध्या त्रुटौ लवल्यां च वीर्यं तेजःप्रभावयोः ॥
शुक्रे शक्तौ च वीक्ष्यं तु द्रष्टव्ये विस्मयेऽपि च । वीक्ष्यस्तु लासके वाहे वेश्यं तु गणिकागृहे ॥ ३८९
वेश्या तु पण्ययोषायां शल्यः स्यान्मदनद्रुमे । नृपभेदेऽश्वाविधि च सीम्नि शस्त्रशलाकयोः ॥ ३९०
शय्या तल्पे शब्दगुम्फे शून्यं बिन्दौ च निर्जने । शून्या तु नलिका शौर्यं चारभट्यां बलेऽपि च ॥
सह्यमारोग्ये सोढव्ये सह्योऽद्रौ सव्यं तु दक्षिणे । वामे च प्रतिकूले च सत्यं तु शपथे कृते ॥ ३९२
तथ्ये तद्वति सत्यस्तु लोकभित्संख्यमाहवे । संख्यैकादौ विचारे च संध्या कालनदीभिदोः ॥ ३९३
चिन्तायां संश्रवे सीम्नि संधाने कुसुमान्तरे । साध्यो योगे साधनीये गणे दैवतभिद्यपि ॥ ३९४
सायः शरेऽपराह्णे च स्थेयोऽक्षदृक्पुरोधसोः । सेव्यमुशीरे सेवार्हे सैन्यं सैनिकसैन्ययोः ॥ ३९५
सौम्यः सोमात्मजेऽनुग्रे मनोज्ञे सोमदैवते । सौम्याः पुनर्मृगशिरःशिरःस्थाः पञ्चतारकाः ॥ ३९६
हार्यः कलिद्रौ हर्तव्ये हृद्यं धवलजीरके । हृत्प्रिये हृद्विते हृज्जे हृद्या तु वृद्धिभेषजे ॥ ३९७
हृद्यश्च वशकृन्मन्त्रेऽग्रं पुरः प्रथमेऽधिके । उपर्यालम्बने श्रेष्ठे परिमाणे पलस्य च ॥ ३९८
भिक्षाप्रकारे संघाते प्रान्तेऽप्यद्रिस्तु पर्वते । सूर्ये शाखिनि चाभ्रं तु त्रिदिवे गगनेऽम्बुदे ॥ ३९९
अस्रः शिरसिजे कोणे स्यादस्रं शोणितेऽसृणि । अस्त्रं चापे प्रहरणेऽप्यङ्घ्रिः पादद्रुमूलयोः ॥ ४००
अरो जिनेऽरं चक्राङ्गे शीघ्रशीघ्रगयोरपि । आरो रीरी शनिर्भौम आरा चर्मप्रभेदिनी ॥ ४०१
इराम्भोवाक्सुराभूमिष्विन्द्रः शक्रेऽन्तरात्मनि । आदित्ये योगभेदे च स्यादिन्द्रा तु फणिज्झके ४०२
उग्रः क्षत्रियतः शूद्रासूनावुत्कटरुद्रयोः । उग्रा वचाछिक्किकयोरुस्रा गवोपचित्रयोः ॥ ४०३
उस्रो मयूखे स्यादुष्ट्री मृद्भाण्डे करभस्त्रियाम् । ऐन्द्रिरिन्द्रसुते काकेऽप्योड्रा जनपदान्तरे ॥ ४०४
ओड्रो जने जपावृक्षे करः प्रत्यायशुण्डयोः । रश्मौ वर्षोपले पाणौ क्षरो मेघे क्षरं जले ॥ ४०५
कद्रुः कनकपिङ्गे स्यात्कद्रूस्तु नागमातरि । कारो बलौ वधे यत्ने हिमाद्रौ निश्चये यतौ ॥ ४०६
कारा बन्धनशालायां बन्धे दूत्यां प्रसेवके । स्याद्धेमकारिकायां च क्षारः काचे रसे गुडे ॥ ४०७
भस्मनि धूर्ते लवणे कारिः शिल्पी क्रियापि च । कारुस्तु कारके शिल्पे विश्वकर्मणि शिल्पिनि ४०८
कीरः शुके जनपदे क्षीरं पानीयदुग्धयोः । क्षुरो गोक्षुरके कोकिलाख्ये छेदनवस्तुनि ॥ ४०९
क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः । क्षुद्रा व्याघ्रीनटीव्यङ्गाबृहतीसरघासु च ॥ ४१०
चाङ्गेरिकायां हिंस्रायां मक्षिकामात्रवेश्ययोः । कुरुः स्यादोदने भूपभेदे श्रीकण्ठजाङ्गले ॥ ४११
क्रूरा नृशंसघोरोष्णकठिनाः कृच्छ्रमंहसि । कष्टे संतापने क्षेत्रं भरतादौ भगाङ्गयोः ॥ ४१२
केदारे सिद्धभूपत्न्योः क्रोष्ट्री क्षीरविदारिका । सृगालिका लाङ्गली च क्षौद्रं तु मधुनीरयोः ॥ ४१३

---

१. 'चेतने' ग-घ. २. 'तूलिका' ग-घ. ३. 'नलिका वंशादिमयी' इति टीका. ४. 'चारभटी भयहेतावपि निर्भयमनस्कता' इति टीका. ५. 'परे' ग-घ. ६. 'सेव्यः सुशीले' ख-ग-घ. ७. 'उशीरं वीरणमूलम्' इति टीका. ८. 'पललक्षणे परिमाणे इत्यर्थः' इति टीका. ९. 'प्यङ्घ्रिः' ख-ग-घ. १०. 'रीतिः' ख-ग-घ. ११. 'प्रत्यय' ख. १२. 'द्रुः स्यान्ना' ग-घ.



35

**खरो** रक्षोन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च । **खरुः** स्यादश्वहरयोर्दर्पदन्तसितेषु च ॥ ४१४
**खुरः** शफे कोलदले **गरस्तू**पविषे विषे । रोगे **गरं** स्यात्करणे **गात्र**मङ्गशरीरयोः ॥ ४१५
गजाग्रदेशेऽथ **गिरिः** पूज्येऽक्षिरुजि कन्दुके । शैले गिंरियके गीर्णावपि **गुन्द्रस्तु** तेजने ॥ ४१६
**गुन्द्रा** प्रियङ्गौ कैंवर्तीमुस्तके भद्रमुस्तके । **गुरुर्म**हत्याङ्गिरसे पित्रादौ धर्मदेशके ॥ ४१७
अलघौ दुंर्जरे चापि **गृध्रो** गृध्नौ खगान्तरे । **गोत्रं** क्षेत्रेऽन्वये छत्रे संभाव्यबोधवर्त्मनोः ॥ ४१८
वने नाम्नि च **गोत्रो**ऽद्रौ **गोत्रा** भुवि गवां गणे । **गौरः** श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि ४१९
विशदे **गौरं** तु श्वेतसर्षपे पद्मकेसरे । **गौर्यु**मानग्निकोर्वीषु प्रियङ्गौ वरुणस्त्रियाम् ॥ ४२०
रजन्यां रोचनीनद्योर्**घस्रो** वासरहिंस्रयोः । **घोरो** हरे दारुणे च **चरः** स्याज्जङ्गमे स्पशे ॥ ४२१
चले द्यूतप्रभेदे च **चक्रं** प्रहरणे गणे । कुलालाद्युपकरणे राष्ट्रे सैन्यरथाङ्गयोः ॥ ४२२
जलावर्ते दम्भे **चक्रः** कोके **चन्द्रो**ऽम्बुकाम्ययोः । स्वर्णे सुधांशौ कर्पूरे कम्पिल्ये मेचकेऽपि च ४२३
**चरुर्ह**व्यान्ने भाण्डे च **चारो** बन्धापंसर्पयोः । गतौ पियालवृक्षे च **चित्रं** खे तिलकेऽद्भुते ॥ ४२४
आलेख्ये कर्बुरे **चित्रा** त्वाखुपर्णीसुभद्रयोः । गोडुम्बाप्सरसोर्दन्त्यां नक्षत्रोरगभेदयोः ॥ ४२५
**चीरं** वाससि चूडायां गोस्तने सीसपत्रके । **चीरी** कंच्छाटिकाझिल्ल्योश्**चुक्र**स्त्वम्लेऽम्लवेतसे ४२६
वृक्षाम्ले **चुक्री** चाङ्गेर्यां **चैत्रो** मासाद्रिभेदयोः । **चैत्रं** मृतकचैत्ये च **चौरो** दस्युसुगन्धयोः ॥ ४२७
**छत्रं** स्यादातपत्राणे **छत्रा** मधुरिकौषधौ । धान्याके च शिलीन्ध्रे च **छिद्रं** विवररन्ध्रवत् ॥ ४२८
गर्ते दोषे **जारस्तू**पपतौ **जार्यौ**षधीभिदि । **जीरस्त्व**जाज्यां खङ्गे च **टारो** लिंङ्गतुरंङ्गयोः ॥ ४२९
**तन्त्रं** सिद्धान्ते राष्ट्रे च परच्छन्दप्रधानयोः । अगदे कुंटुम्बकृत्ये तन्तुवाने परिच्छदे ॥ ४३०
श्रुतिशाखान्तरे शास्त्रे करणे द्व्यर्थसाधके । इतिकर्तव्यतातन्त्र्वोस्**तन्त्री** स्याद्वल्लकीगुणे ॥ ४३१
अमृतायां च नद्ध्रयां च शिरायां वपुषोऽपि च । **तरिर्द**शायां वेडायां वस्त्रादीनां च पेटके ॥ ४३२
**तन्द्री** निद्रा प्रमीला च **तारो** निर्मलमौक्तिके । मुक्ताशुद्धावुच्चनादे नक्षत्रनेत्रमध्ययोः ॥ ४३३
**तारं** रूप्ये **तारा** बुद्धदेव्यां सुरगुरुस्त्रियाम् । सुग्रीवपत्न्यां **ताम्रं** तु शुल्बे शुंल्बनिभेऽपि च ॥ ४३४
**तीव्रं** कटूष्णात्यर्थेषु **तीव्रा** तु कटुरोहिणी । गण्डदूर्वासुरी **तीरो** वङ्गे **तीरं** पुनस्तटे ॥ ४३५
**तोत्रं** वेणुके प्रतोदे **दरः** स्याद्भयगर्तयोः । **दरी** तु कन्दरे **दस्रः** खरो **दस्रौ** रवेः सुतौ ॥ ४३६
**द्वारं** निर्गमेऽभ्युपाये **धरः** कूर्माधिपे गिरौ । कंर्पासतुलेऽथ **धरा** मेदोभूमिजरायुषु ॥ ४३७
**धारो** जलधरासारवर्षणे स्यादृणेऽपि च । **धारो**त्कर्षे खङ्गाद्यग्रे सैन्याग्रे वाजिनां गतौ ॥ ४३८
जलादिपाते संतत्यां **धात्री** भुव्युपमातरि । आमलक्यां जनन्यां च **धीरो** ज्ञे धैर्यसंयुते ॥ ४३९
खैरे **धीरं** तु घुसृणे **नरो** मर्त्येऽच्युतेऽर्जुने । **नरं** तु रामकर्पूरे **नक्रं** नासाग्रदारुणोः ॥ ४४०
**नक्रो** यादसि **नींध्रं** तु वलीकवननेमिषु । चन्द्रे च रेवतीभे च **नेत्रं** वस्त्रे मथो गुणे ॥ ४४१
मूलाक्षिनेतृषु **परो** दरान्यश्रेष्ठशत्रुषु । **परं** तु केवलं **पत्रं** यानं पक्षश्छदश्छुरी ॥ ४४२

१. 'गैरीयके' ख-ग-घ. 'गिरियको गिरिगुडः काष्ठादिमयं क्रीडनकम्' इति टीका. २. 'कैवर्त्यां' ख-ग-घ. ३. 'दुर्धरे' ख. ४. 'वसर्पयोः' क-ग-घ. ५. 'कच्छाटिका पश्चाल्लम्बमानपरिधानपश्चादञ्चलम्' इति टीका. ६. 'लिङ्गः खङ्गः' इति टीका. ७. 'लङ्ग' ख-ग-घ. ८. 'स्वराष्ट्रचिन्तायां' ख. ९. 'शुल्वनिभोऽरुणः' इति टीका. १०. 'कर्पासमूले' ख. ११. 'नीध्रं' ख-ग-घ.

पारं प्रान्ते परतटे पारी पूरपरागयोः । पात्र्यां कर्पूरिकायां च पादबन्धे च हस्तिनः[1] ॥ ४४३
पात्रं[2] तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि । योग्यभोजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि ॥ ४४४
पुरं शरीरे नगरे गृहपाटलिपुत्रयोः । पुरस्तु गुग्गुलौ पुण्ड्रः कृमौ दैत्येक्षुभेदयोः ॥ ४४५
वासन्त्यां तिलके पुण्डरीके पुण्ड्रास्तु नीवृति । पुरुः परागे प्रचुरे स्वर्लोकनृपभेदयोः ॥ ४४६
पूरः स्यादम्भसां वृद्धौ व्रणसंशुद्धिखाद्ययोः । पोत्रं वक्त्रे मुखाग्रे च सूकरस्य हलस्य च ॥ ४४७
पौरं कत्तृणे पुरजे बभ्रुः पिङ्गाग्निशूलिषु । मुनौ विशाले नकुले विष्णौ भद्रं तु मङ्गले ॥ ४४८
मुस्तकश्रेष्ठयोः साधौ काञ्चने करणान्तरे । भद्रो रामचरे हस्तिजातौ मेरुकदम्बके ॥ ४४९
गवि शंभौ भद्रा विष्टौ[4] नभःसरिति कट्फले । कृष्णानन्ता रास्नासु च भरोऽतिशयभारयोः ॥ ४५०
भरुर्भर्तृकनकयोर्भीरो दशशतीद्वये । पलानां वीवधे चापि भीरुर्योषिति कातरे ॥ ४५१
भूरि स्वर्णे प्रचुरे च मन्त्रो देवादिसाधने । वेदांशे गुप्तवादे च मरुः पर्वतदेशयोः ॥ ४५२
मारोऽनङ्गे मृतौ विघ्ने मारी चण्ड्यां जनक्षये । मात्रं लवधृतौ स्वार्थे कार्त्स्न्ये मात्रा परिच्छदे ४५३
अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे । काले वृत्ते च मित्रं तु सख्यौ मित्रो दिवाकरे ॥ ४५४
यात्रोत्सवे गतौ वृत्तौ राष्ट्रमुत्पातनीवृतोः । रुरुर्दैत्ये मृगे रैत्रं[3] पीयूषपटवासयोः ॥ ४५५
रेतःसूतकयो रोध्रो लोध्रे रोध्रमथागसोः । रौद्रो भीष्मे रसे तीव्रे रौद्री गौर्यां वरो वृतौ ॥ ४५६
विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते । वरं तु घुसृणे किंचिदिष्टे वरी शतावरी ॥ ४५७
वक्रं पुटभेदे वक्रः कुटिले क्रूरभौमयोः । वक्रमास्ये छन्दसि च वप्रः प्राकाररोधसोः ॥ ४५८
क्षेत्रे ताते चये रेणौ वज्रं कुलिशहीरयोः । बालके[5] वज्रा त्वमृता वर्ध्रः[6] सीसवरत्रयोः ॥ ४५९
व्यग्रो व्यापृताकुलयोर्वारः सूर्यादिवासरे । महेश्वरावसरयोर्वृन्दे कुब्जाख्यपादपे ॥ ४६०
वारं तु मदिरापात्रे वारि ह्रीबेरनीर्योः[7] । वारिर्घट्यां[8] सरस्वत्यां गजबन्धनभुव्यपि ॥ ४६१
व्याघ्रः करञ्जे शार्दूले रक्तैरण्डतरावपि । श्रेष्ठे तूत्तरपदस्थः स्याद्व्याघ्री कण्टकारिका ॥ ४६२
वीरो जिने भटे[9] श्रेष्ठे वीरं शृङ्ग्यां न तेऽपि च । वीरा गम्भारिका[10]रम्भातामलक्येलवालुषु[11] ४६३
मदिराक्षीरकाकोलीगोष्टोदुम्बरिकासु च । पतिपुत्रवतीक्षीरविदारीदुग्धिकास्वपि ॥ ४६४
वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिरौ । वेरं घुसृणवृन्ताकशरीरेषु शरं जले ॥ ४६५
शरः पुनर्दधिसरे[12] काण्डतेजनयोरपि । शक्रोऽर्जुनै[13]तराविन्द्रे कुटजे शस्त्रमायुधे ॥ ४६६
लोहे शस्त्री छुरिकायां शद्रिर्जिष्णौ तडित्वति[14] । शरुः कोपे शरे वज्रे शारः शवलवातयोः ॥ ४६७
द्यूतस्य चोपकरणे शास्त्रं ग्रन्थनिदेशयोः । शारिः कुञ्जरपर्याणे शकुनौ द्यूतसाधने ॥ ४६८
शिग्रुः शोभाञ्जने शाके शीघ्रं चक्राङ्गतूर्णयोः । उशीरे शुक्रस्तु शुक्रे[15] ज्येष्ठमासेऽग्निकाव्ययोः ॥ ४६९
शुक्रं तु रेतोऽक्षिरुजोः शुभ्रं दीप्तेऽभ्रके सिते । शूरश्चारभटे सूर्ये सरौ दध्यग्रसायकौ ॥ ४७०
स्वरः शब्देऽचि[16] षड्जादौ सत्रमाच्छादने क्रतौ । सदादाने वने दम्भे[17] स्वरुः स्याद्यूपखण्डके[18] ४७१

---

१. 'हस्तिनाम्' ख-ग-घ. २. इतः प्राक् 'यन्त्रं दैवाद्यधिष्ठाने पात्रभेदे नियन्त्रणे' इत्यधिकं ख-ग-घ. ३. 'वेत्रं' ग-घ. ४. 'दिष्टौ' ग-घ. ५. 'बालकं ह्रीवेरम्' इति टीका. ६. 'नेत्रयोः' ख. ७. 'वन्यां' ख-ग-घ. 'घटी जलोद्धत्री' इति टीका ८. 'वारी घटीभबन्धनी' ख. ९. 'नटे' ग-घ. १०. 'जम्भारिका' ख. ११. 'लुका' ग-घ. १२. 'दध्नि सारे' ख; 'दधिसारे' ग-घ. १३. 'र्जुने' ख. १४. 'तडित्यपि' ख-ग-घ. 'तडित्वान् मेघः' इति टीका. १५. 'शुक्रे' ग-घ. १६. 'पि खड्गादौ' ख. १७. 'चापि' ख. १८. 'षण्डके' ग-घ.

अध्वरे कुलिशे बाणे सारो मज्जास्थिरांशयोः । बले श्रेष्ठे च सारं तु द्रविणन्याय्यवारिषु ॥ ४७२
स्फारस्तु स्फरकादीनां बुद्बुदे विपुलेऽपि च । स्थिरो मोक्षे निश्चले च स्थिरा भूःशालपर्ण्यपि ४७३
सिप्रः स्वेदे सिप्रा नद्यां सिरा नाड्यम्बुवाहिनी । सिरस्तु पिप्पलीमूलं सीरः स्यादंशुमालिनि ॥ ४७४
लाङ्गलेऽथ सुरो देवे सुरा चषकमद्ययोः । सूत्रं तु सूचनाकारग्रन्थे तन्तुव्यवस्थयोः ॥ ४७५
स्वैरो मन्दे स्वतन्त्रे च हरो रासभरुद्रयोः । वैश्वानरेऽप्यथ हरिर्दिवाकरसमीरयोः ॥ ४७६
यमवासवसिंहांशुशशाङ्ककपिवाजिषु । पिङ्गवर्णे हरिद्वर्णे भेकोपेन्द्रशुकाहिषु ॥ ४७७
लोकान्तरे च हारस्तु मुक्तादामनि संयुगे । हिंस्रः स्याद्घातुके हिंस्रा मांसी काकादनी वसा ४७८
हीरो वज्रे हरे सर्पे हीरा पिपीलिकाश्रियोः । होरा तु लग्ने राश्यर्धे शास्त्ररेखाप्रभेदयोः ॥ ४७९
अलिः सुरापुष्पलिहोरम्लो रसेऽम्लवेतसे । अम्ली चाङ्गेर्यामालं स्यादनर्थहरितालयोः ॥ ४८०
आलिः सख्यावलीसेत्वनर्थेषु विशदाशये । आलुर्गलन्तिकायां स्यादालु भेलककन्दयोः ॥ ४८१
इलोर्वीवाग्बुधस्त्री गौः कलं त्वजीर्णरेतसोः । अव्यक्तमधुरध्वाने कला स्यात्कालशिल्पयोः ॥ ४८२
कलने मूलरैवृद्धौ षोडशांशे विधोरपि । कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि ॥ ४८३
कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः । मरणानेहसोः काली कालिकाक्षीरकीटयोः ॥ ४८४
मातृभेदोमयोर्नव्यमेघौघपरिवादयोः । काला कृष्णत्रिवृन्नील्योर्जिग्यां कीलोऽग्नितेजसि ॥ ४८५
कफणिस्तम्भयोः शङ्कौ कीला रेताहतावपि । कुलं कुल्यगणे गेहे देहे जनपदेऽन्वये ॥ ४८६
कूलं तटे सैन्यपृष्ठे तडागस्तूपयोरपि । कोलो भेलक उत्सङ्गेऽङ्कपाल्यां चित्रके किरौ ॥ ४८७
कोलं तु बदरे कोला पिप्पल्यां चव्यभेषजे । खलः कल्के भुवि स्थाने क्रूरे कर्णेजपेऽधमे ॥४८८
खल्लो निम्ने वस्त्रभेदे चर्मचातकपक्षिणोः । खल्ली तु हस्तपादावमर्दनाह्वयरुज्यपि ॥ ४८९
गलः कण्ठे सर्जरसे गोलः स्यात्सर्ववर्तुले । गोला पत्राञ्जने गोदावर्यां सख्यामलिञ्जरे ॥ ४९०
मण्डले च कुनद्यां च बालक्रीडनकाष्ठके । चिल्लः खगे सं[12] चुल्लश्च पिल्लवक्लिन्नलोचने ॥ ४९१
क्लिन्नाक्ष्णि चुल्ली तूद्धाने चेलं गर्हितवस्त्रयोः । छैलं[13] छद्मस्खलितयोः[14]छल्ली संतानवीरुधोः ॥ ४९२
वल्कले पुष्पभेदे च जलं गोकॅलले[15] जडे । ह्रीवेरेऽम्बुनि जालं तु गवाक्षे क्षारके गणे ॥ ४९३
दं[16]म्भानाययोश्च जालो नीपे जाली पटोलिका । झला पुत्र्यामातपोर्मौ झिल्ली तूद्वर्तनाशके ॥ ४९४
वर्त्यातपरुजोश्चीर्यां तलं ज्याघातवारणे । तलश्चपेटे तौलद्रौ[17] स्वभावाधारयोः त्सरौ ॥ ४९५
तल्लो जलाधारभेदे तल्ली तु वरुणस्त्रियाम् । तालः कालक्रियामाने हस्तमानद्रुभेदयोः ॥ ४९६
करास्फोटे करतले हरिताले त्सरावपि । तुला माने पलशते सादृश्ये राशिभाण्डयोः ॥ ४९७
गृहाणां दारुबन्धाय पीठ्यां तूलं तु खे पिचौ । ब्रह्मदारुण्यथ दलं शस्त्री[18]छेदे[19]ऽर्धपर्णयोः ॥ ४९८
उत्सेधवद्वस्तुनि च नलो राज्ञि कपौ नडे । पितृदैवेऽथ नलं स्यात्पद्मे नॅली[20] मनःशिला ॥ ४९९

१. 'शालि' ख. २. 'कारि' ख-ग-घ. ३. 'नाशक' ख-ग-घ. द्वितीयटीकापुस्तके तु 'रुद्रेभसोः' इति दृश्यते. ४. 'पिप्पलिकास्त्रियोः' ख. ५. 'दनल्प' ख-ग-घ. ६. 'दंशशिल्पयोः' ख. ७. 'पापे' ख. ८. 'महाकाले रुद्रे' इति टीका. ९. 'हतौ' ख; 'रत' ग-घ. 'रताहतिः सुरतप्रहरणम्' इति टीका. १०. 'कुल्ये' ख. 'कुल्याः सजातीयाः तेषां गणे' इति टीका. ११. 'गिरौ' ख. १२. 'स इति चिल्लशब्दः' इति टीका. १३. इतः प्राक् 'चोलः कूर्पासके देशे चौलं कर्मणि मुण्डने' इत्यधिकं ख-ग-घ. १४. 'छली' ख. १५. 'कलने' ख. १६. 'दम्भानामययो' ग-घ. १७. 'तालुद्रौ' ख. १८. 'शस्त्रीच्छदे शस्त्रीप्रत्याकारे' इति टीका. १९. 'छेदे' २०. 'नाली' ख.

नालं काण्डे मृणाले च नाली शाककदम्बके। नीलो वर्णे मणौ शैले निधिवानरभेदयोः॥ ५००
नील्यौषध्यां लाञ्छने च पलमुन्मानमांसयोः। पल्लिस्तु ग्रामके कुड्यां पालिर्यूकास्रिपङ्क्तिषु॥ ५०१
जातश्मश्रुस्त्रियां प्रान्ते सेतौ कल्पितभोजने। प्रशंसाकर्णलतयोरुत्सङ्गे प्रस्थचिह्नयोः॥ ५०२
पीलुः पुष्पे द्रुमे काण्डे परमाणौ मतङ्गजे। तालास्थिखण्डेऽथ पुलः पुलके विपुलेऽपि च॥ ५०३
फलं हेतुकृते जातीफले फलकसस्ययोः। त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः॥ ५०४
फली फलिन्यां फालं तु वस्त्रांशे फाल उत्प्लुतौ। कुशिके च बलं रूपे स्थामनि स्थौल्यसैन्ययोः॥
बोले बलस्तु बलिनि काके दैत्ये हलायुधे। बला त्वौषधिभेदे स्याद्बलिर्दैत्योपहारयोः॥ ५०६
करे चामरदण्डे च गृहदारूदरांशयोः। त्वक्संकोचे गन्धके च बालोऽज्ञेऽश्वेभपुच्छयोः॥ ५०७
शिशौ ह्रीवेरकचयोर्बाला तु त्रुटियोषितोः। बाली भूषान्तरे मेधौ बिल उच्चैःश्रवोहये॥ ५०८
बिलं रन्ध्रे गुहायां च भल्लो भल्लूकबाणयोः। भल्ली भल्लातके भालं स्याल्ललाटे महस्यपि॥ ५०९
भेलः प्लवे मुनिभेदे भीरौ बुद्धिविवर्जिते। मल्लः कपाले बलिनि मत्स्ये पात्रे मलस्त्वघे॥ ५१०
किट्टे कदर्ये विष्ठायां मालं तु कपटे वने। मालो जने स्यान्माला तु पङ्क्तौ पुष्पादिदामनि॥ ५११
मालुः स्त्रियां पत्रवल्ल्यां मूलं पार्श्वाद्ययोरुडौ। निकुञ्जशिफयोर्मेला त्वञ्जने मेलकेऽपि च॥ ५१२
मौलिः किरीटे धम्मिल्ले चूलाकङ्केलिमूर्धसु। लीला केलिर्विलासश्च शृङ्गारभावजक्रिया॥ ५१३
लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः। वल्ली स्यादजमोदायां लतायां कुसुमान्तरे॥ ५१४
व्यालो दुष्टगजे सर्पे शठे श्वापदसिंहयोः। वेला बुधस्त्रियां काले सीमनीश्वरभोजने॥ ५१५
अक्लिष्टमरणेऽम्भोधिस्तीरनीरविकारयोः। शालो हाले मत्स्यभेदे शालैकस्तत्प्रदेशयोः॥ ५१६
स्कन्धशाखायां शालिस्तु गन्धोलौ कलमादिषु। शालुः कषायद्रव्ये स्याच्चौरकाख्यौषधेऽपि च॥ ५१७
शिलमुञ्छः शिला द्वाराधोदारु कुनटी दृषत्। शिली गण्डूपदी शीलं साधुवृत्तस्वभावयोः॥ ५१८
शुल्कं रूप्ये शुक्लो योगे श्वेते शूलं रुगस्त्रयोः। योगे शूला तु पण्यस्त्री वधहेतुश्च कीलकः॥ ५१९
शैलो भूभृति शैलं तु शैलेये तार्क्ष्यशैलके। सालः सर्जतरौ वृक्षमात्रप्राकारयोरपि॥ ५२०
स्थालं भाजनभेदे स्यात्स्थाली तु पाटलोखयोः। स्थूलः पीने जडे हालः सातवाहनपार्थिवे॥ ५२१
हाला सुरायां हेला तु स्यादवज्ञाविलासयोः। हेलिरालिङ्गने सूर्येऽप्यविर्मूषिककम्बले॥ ५२२
मेषे रवौ पर्वते च स्यादूर्ध्वं तु समुत्थिते। उपर्युन्नतयोः कण्वो मुनौ कण्वं तु कल्मषे॥ ५२३
क्षवः क्षुते राजिकायां कविः काव्यस्य कर्तरि। विचक्षणे दैत्यगुरौ स्यात्कवी तु खलीनके॥ ५२४
किण्वं पापे सुराबीजे क्लीबोऽपौरुषषण्डयोः। खर्वह्रस्वौ न्यग्वामनौ ग्रीवे शिरोधितच्छिरे॥ ५२५
छविस्तु रुचि शोभायां जवः स्याद्वेगवेगिनोः। जवोड्रपुष्पे जिह्वा तु वाचि ज्वालारसज्ञयोः॥ ५२६
जीवः स्यात्त्रिदशाचार्ये द्रुमभेदे शरीरिणि। जीवितेऽपि च जीवा तु वचायां धनुषो गुणे॥ ५२७
शिञ्जिते क्षितिजीवन्त्योर्वृत्तौ तत्त्वं परात्मनि। वाद्यभेदे स्वरूपे च द्रवो विद्रवनर्मणोः॥ ५२८
प्रद्रावे रसगत्योश्च द्वन्द्वः से द्वन्द्वमाहवे। रहस्ये मिथुने युग्मे दवदावौ वनानले॥ ५२९

१. 'जाति' ख. २. 'हेतुफले' ग-घ. ३. 'फलिन्यां' ख-ग-घ. ४. 'वसने' ख; 'वाससि' ग-घ. ५. 'वचयोः' ख. ६. 'मध्ये' ग-घ. ७. 'कपोले' ख-ग-घ. 'कपालं शिरोस्थि' इति टीका. ८. 'शिफयोः स्त्रीये शिलायां च वशीकृतौ। प्रतिष्ठायामथो मेला' ख. ९. 'चूडा' ख-ग-घ. १०. 'भावजा' ग-घ. ११. 'शीलं' ख. १२. 'शात' ख; 'सीत' ग-घ. १३. 'विद्रवे पलायने' इति टीका. १४. 'आसवे' ख. 'प्रद्रावे प्रस्रवणे' इति टीका. १५. 'स इति समासस्य संज्ञा' इति टीका.

वने दर्वी फणातर्व्वो[1]र्दार्वी स्याद्देवदारुणि । हरिद्राद्वितये चापि दिवं खे त्रिदिवे दिने ॥ ५३०
देवं हृषीके देवस्तु नृपतौ तोयदे सुरे । देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि ॥ ५३१
धवो धूर्ते नरे पत्यौ द्रुभेदेऽथ ध्रुवो वटे । वसुयोगभिदो[2]रौतौ[3] शङ्कावुत्तानपादजे ॥ ५३२
स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः । ध्रुवा मूर्वाशालिपर्ण्योः स्रुग्भेदे गीतभिद्यपि ॥ ५३३
नवो नव्ये स्तुतौ नीवी स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे प्लवः प्लक्षे प्लुतौ कपौ ॥ ५३४
शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे ॥ ५३५
जलान्तरे प्लवं गन्धतृणे मुस्तकमित्यपि । पक्वं परिणते नाशाभिमुखे पार्श्वमन्तिके ॥ ५३६
कक्षाधोवयवे वक्रो[4]पायपर्शु[5]समूहयोः । प्राध्वं दूरपथे प्रह्वे बन्धे पूर्वं तु पूर्वजे ॥ ५३७
प्राग[6]ग्रे श्रुत[7]भेदे च भवः सत्ताप्तिजन्मसु । रुद्रे श्रेयसि संसारे भावोऽभिप्रायवस्तुनोः ॥ ५३८
स्वभावजन्मसत्तात्मक्रियालीलाविभूतिषु । चेष्टायोन्योर्बुधे जन्तौ शृङ्गारादेश्च कारणे ॥ ५३९
शब्दप्रवृत्तिहेतौ र्च[8] रेवा मन्मथयोषिति । नील्यां मेकलकन्यायां लवः कालभिदि छिदि ॥ ५४०
विलासे रामजे लेशे लेट्वा[9] पक्षिकुसुम्भयोः । लघ्वी ह्रस्वविवक्षायां प्रभेदे स्यन्दनस्य च ॥ ५४१
विश्वाः सुरेषु विश्वं तु शुण्ठ्यां भुवनकृत्स्नयोः । विश्वा विषायां शिवं तु मोक्षे क्षेमे सुखे जले ॥
शिवो योगान्तरे वेदे गुग्गुलौ वालुके[10] हरे । पुण्डरीके द्रुमे काले शिवा झाटामलोमयोः ॥ ५४३
फेरौ शम्यां पथ्याधात्र्योः शिबिर्भूर्जे नृपान्तरे । शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ ॥ ५४४
सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः । पिशाचादावात्मभावे बले प्राणेषु जन्तुषु ॥ ५४५
सान्त्व सामनिदाक्षिण्ये स्रुवा मूर्वा स्रुवः स्रुचि । ह्वस्तु सप्ततन्तौ स्यान्निदेशाह्वानयोरपि ॥ ५४६
अंशु[11]ः सूत्रादिसूक्ष्मांशे किरणे चन्द्रदीधितौ । आशा ककुभि तृष्णायामाशुस्तु व्रीहिशीघ्रयोः ५४७
ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके । कौ[12]शस्तृणे रोगभेदे कीशः कपौ दिगम्बरे ॥ ५४८
कुशो रामसुते दर्भे पापिष्ठे योक्त्रमत्तयोः । कुशी लोहविकारे स्यात्कुशा वला कुशं जले ॥ ५४९
केशः शिरसिजे पाशपाणौ ह्रीबेरदैत्ययोः । क्लेशो रा[13]गादौ दुःखे च कोशः कोष इवाण्डके ५५०
कुड्मले चषके दिव्येऽर्थचये योनिशिम्बयोः । जातिकोषेऽसिपिधाने दर्शः सूर्येन्दुसंगमे ॥ ५५१
पक्षान्ते[14]ऽष्टौ[15] दर्शने च दंशो वर्मणि मर्मणि । दोषे वनमक्षिकायां खण्डने भुजगक्षते ॥ ५५२
दशा वर्तावस्थायां दशास्तु वसनाञ्चले । नाशः पलायने मृत्यौ परिध्वस्तावदर्शने ॥ ५५३
निशा हरिद्रायां रात्रौ पशुश्छागे मृगादिषु । प्रमथेऽपि च पाशस्तु मृगपक्ष्यादिबन्धने ॥ ५५४
कर्णान्ते क्षोभनार्थः स्यात्कचान्ते निकरार्थकः । छा[16]त्राद्यन्ते च निन्दार्थः पेशी मांस्यसिकोशयोः ॥

---

१. 'तर्वो' ग-घ. 'तर्दूर्दारुहस्तः' इति टीका. २. 'भिदोः शंभौ' ख-ग-घ. ३. 'आतिः शरारिः' इति टीका. ४. 'चक्रोपान्त' ग-घ. 'वक्रोऽनृजुरुपायः' इति टीका. ५. 'पशुसमूहयोः' ख. ६. 'प्रागिति दिग् देशः कालो वा । अग्रे प्रथमतोऽर्थे । श्रुतभेदे आगमविशेषे' इति टीका. ७. 'श्रुतिभेदे' ख-ग-घ. ८. 'च यवो धान्ये पृथक्कृतौ । यावोऽलक्ते पाकभेदे रेवा' ख-ग-घ. ९. 'तथा किंजल्कपक्ष्मणोः । गोपुच्छलोमस्वपि च लट्वा' ख. १०. 'बालके' ख-ग-घ. 'वालुकमोषधिः' इति टीका. ११. 'अंशो विभाजने प्रोक्त एकदेशेऽपि वस्तुनः । अंशु' ख-ग-घ. १२. 'कशा स्यादश्वताडन्यां रज्जौ मुखगुणेऽपि च' इत्यपीतः प्राक् ख-ग-घ. १३. 'रोगादौ' ग-घ. 'रागादयोऽविद्यास्मिताद्वेषाभिनिवेशाः' इति टीका. १४. 'पक्षान्तेष्टिः पक्षान्तयागः' इति टीका. १५. 'ऽन्धौ' ख-ग-घ. १६. 'छत्राद्यन्ते' ख-ग-घ.

मण्डभेदे पलपिण्डे सुपक्वकणिकेऽपि च । भूस्पृग्वैश्ये मानवे च राशिर्मेषादिपुञ्जयोः ॥ ५५६
वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः । वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि ॥ ५५७
वंशः संघेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च । वेशो वेश्यागृहे गेहे नेपथ्ये च शशः पशौ ॥ ५५८
बोले लोध्रे नृभेदे च स्पशो [2]हेरिकयुद्धयोः । स्पर्शो वर्गाक्षरे दाने स्पर्शने स्पर्शके रुजि ॥ ५५९
अक्षो रथस्यावयवे व्यवहारे विभीतके । पाशके शकटे कर्षे ज्ञाने चात्मनि रावणौ ॥ ५६०
अक्षं सौवर्चले तुत्थे हृषीके स्यादुषा निशि । बाणपुत्र्यां च ऋक्षस्तु स्यान्नक्षत्राच्छभल्लयोः ॥ ५६१
महीधरविशेषे च शोणके कृतवेधने । ऋषिर्वेदे मुनौ कर्षः कर्षणे मानभिद्यपि ॥ ५६२
कक्षो वीरुधिदोर्मूले कच्छे शुष्कवने तृणे । पापे कक्षा खिमरज्जौ काञ्च्यां गेहप्रकोष्ठके ॥ ५६३
भित्तौ साम्ये रथभागेऽन्तरीयपश्चिमाञ्चले । उद्वाहण्यां च कर्षूस्तु तुषाग्नौ कृषिकुल्ययोः ॥ ५६४
घोषः कांस्ये स्वने गोपघोषकाभीरपल्लिषु । घोषा तु शतपुष्पायां चोक्षः सुन्दरगीतयोः ॥ ५६५
शुचौ झषस्तु मकरे वने मीने झषा पुनः । नागबलायां तुषस्तु धान्यत्वचि विभीतके ॥ ५६६
दक्षः प्रजापतौ रुद्रवृषभे कुकुटे पटौ । द्रुमे दक्षा तु मेदिन्यां ध्वाङ्क्षः काके बकेऽर्थिनि ॥ ५६७
गृहे ध्वाङ्क्षी तु कंकोल्यां न्यक्षः कार्त्स्न्यनिकृष्टयोः । जामदग्न्येऽपि पक्षस्तु मासार्धे गृहसाध्ययोः ॥
चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्चये । पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे ॥ ५६९
प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पक्षके । प्रेक्षा धीरीक्षणं नृत्तं प्रैषो प्रेषणपीडने ॥ ५७०
पौषो मासप्रभेदे स्यात्पौषं तु महयुद्धयोः । भिक्षा सेवाप्रार्थनयोर्भृतौ भिक्षितवस्तुनि ॥ ५७१
माषो माने धान्यभेदे मूर्खे त्वग्दोषभिद्यपि । मिषं व्याजे स्पर्धने च मेषो राश्यन्तरे हुडौ ॥ ५७२
मोक्षो निःश्रेयसे वृक्षविशेषे मोचने मृतौ । यक्षः श्रीदे गुह्यके च रक्षा रक्षणभस्मनोः ॥ ५७३
रूक्षोऽस्निग्धपरुषयोर्लक्षं व्याजशरव्ययोः । संख्यायामपि वर्षस्तु समाद्वीपांशवृष्टिषु ॥ ५७४
[13]वर्षवरेऽपि वर्षास्तु प्रावृष्यथ विषं जले । क्ष्वेडे विषा त्वतिविषा वृषो गव्याखुधर्मयोः ॥ ५७५
पुंराशिभेदयोः शृङ्ग्यां वासके शुक्लेऽपि च । श्रेष्ठे स्यादुत्तरस्थश्च वृषी तु व्रतिविष्टरे ॥ ५७६
वृषा पुंनः कपिकच्छ्वां शुषिः शुषिरशोषयोः । शेषोऽनन्ते वधे सीरिण्युपयुक्तेतरेऽपि च ॥ ५७७
शेषा निर्माल्यदाने स्याच्छोषः शोषणयक्ष्मणोः । अर्चिर्मयूखशिखयोररदोऽत्र च परत्र च ॥ ५७८
आगः स्यादेनोवदघे मन्तावाशीर्हितैषिणि । उरगस्य च दंष्ट्रायामुषः संध्याप्रभातयोः ॥ ५७९
उरो वक्षसि मुख्ये स्यादोजो दीप्तिप्रकाशयोः । अवष्टम्भे बले धातुतेजस्योकस्तु सद्मनि ॥ ५८०
ओकास्त्वाश्रयमात्रे स्यात्कंसस्तैजसमानयोः । पानपात्रे दैत्यभेदे कासूः शक्त्यायुधे रुजि ॥ ५८१
बुद्धौ विकलवाचि स्याद्गुत्सः स्तम्बगुलुञ्छयोः । हारभेदे ग्रन्थिपर्णे गोसो बोलविभातयोः ॥ ५८२
चास इक्षुपक्षिभिदोश्छन्दः पद्येच्छयोः श्रुतौ । ज्यायान्वृद्धे प्रशस्ये च ज्योतिर्वह्निदिनेशयोः ५८३

---

१. 'गृहे' ख. २. 'हेरक' ख. ३. 'क्षतवेधने' ख. 'कृतवेधनः कृतच्छिद्रः' इति टीका. ४. 'ऋषि' ख-ग-घ. ५. 'खरे' ख. ६. 'आभीर' ख. ७. 'नागलतायां' ग-घ. ८. 'कंकोल्यां' ख; 'काकोल्यां' ग-घ. ९. 'यामदग्न्ये' ग-घ. १०. 'ग्रह' ख-ग-घ. ११. 'बुद्धयोः' ख. १२. स्पर्शभेदे' ख. १३. 'वर्षधरे' ख-ग-घ. १४. 'वृषीति ऋषि' ख. १५. 'चित्राकपिकच्छ्वोः' ख-ग-घ. १६. 'अंसः स्कन्धे विभागे स्यादसिः खड्गे नदीभिदि' इत्यधिकमितः प्राक् ख-ग-घ. १७. 'देनस्यव' ग-घ. 'एनोवदिति । आगःशब्द एनःशब्दश्चेत्यर्थः इति टीका. १८. 'स्योकं तु' ग-घ.

प्रकाशे दृशि नक्षत्रे तपः कृच्छ्रादिकर्मणि । धर्मे लोकप्रभेदे च तपाः शिशिरमाघयोः ॥ ५८४

तमो राहौ गुणे पापे ध्वान्ते तरो जवे बले । त्रासो भये मणिदोषे तेजस्विट्रेतसोर्बले ॥ ५८५

नवनीते प्रभावेऽग्नौ दासो धीवरभृत्ययोः । वृषले दानपात्रे च दासी झिण्ट्यपि चेट्यपि ॥ ५८६

धेनुः शरासने राशौ पियालद्रौ धनुर्धरे । नभो व्योम्नि नभा घ्राणे बिसतन्तौ पतद्ग्रहे ॥ ५८७

प्रावृषि श्रावणे नासा घोणाद्वारोर्ध्वदारुणोः । पयः क्षीरे च नीरे च प्रसूरश्वा जनन्यपि ॥ ५८८

बर्हिः कुशेऽग्नौ भासस्तु भासि गृध्रशकुन्तयोः । महस्तेजस्युत्सवे च मिसिर्मांस्यजमोदयोः ॥ ५८९

शतपुष्पामधुर्योश्च मृत्सा वासी सुमृत्तिका । रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे ॥ ५९०

बोले रागे देहधातौ तिक्तादौ पारदेऽपि च । रसा तु रसनापाठामल्लकीक्षितिकङ्गुषु ॥ ५९१

रहो गुह्ये रते तत्त्वे रजो रेणुपरागयोः । स्त्रीपुष्पे गुणभेदे च रासः क्रीडासु गोदुहाम् ॥ ५९२

भाषाशृङ्खलके वत्सा उरस्तुर्वर्षतर्णकाः । वयस्तारुण्ये बाल्यादौ खगे वर्चस्तु तेजसि ॥ ५९३

गूथे रूपे वसुस्त्वग्नौ देवभेदे नृपे रुचि । योक्त्रे शुंष्के वसु स्वादौ रत्ने वृद्ध्यौषधे धने ॥ ५९४

वपुः शस्ताकृतौ देहे व्यासो मुनिप्रपञ्चयोः । वासो वेश्मन्यवस्थाने वासा स्यादाटरूषके ॥ ५९५

विद्वान् ज्ञात्मविदोः प्राज्ञे वेधा धातृज्ञविष्णुषु । शंसा वचसि वाञ्छायां शिरो मूर्धप्रधानयोः ॥

सेनाग्रभागे श्रेयस्तु मङ्गले धर्मशस्तयोः । सहो बले ज्योतिषि च सहा हेमन्तमासयोः ॥ ५९७

स्रोतः प्रवाहेन्द्रिययोर्हंसोऽर्के मत्सरेऽच्युते । खगाश्वयोगि[13]मन्त्रादिभेदेषु परमात्मनि ॥ ५९८

निर्लोभनृपतौ प्राणवाते श्रेष्ठेऽग्रतः स्थिते । हविः सर्पिषि होतव्ये हिंसा चौर्यादिके वधे ॥ ५९९

अहिः सर्पे वृत्रे वप्रे स्यादीहोद्यमवाञ्छयोः । कुहूर्नष्टेन्दुदर्शे स्यात्क्वणिते कोकिलस्य च ॥ ६००

ग्रहो ग्रहणनिर्बन्धानुग्रहेषु रणोद्यमे । उपरागे पूतनादावादित्यादौ विधुंतुदे ॥ ६०१

ग्राहो ग्रहे जलचरे गुहः स्कन्दे गुहा पुनः । गह्वरे सिंहपुच्छयां च गृहा दारेषु सद्मनि ॥ ६०२

प्रौहो निपुणतर्के स्याद्गजाङ्घ्रिपर्वणोरपि । बर्हं पर्णे परीवारे कलापे बहु भूयसि ॥ ६०३

त्र्यादिकासु च संख्यासु महावुत्सवतेजसी । मही भुवि नदीभेदे मोहौ मूर्च्छाविपर्ययौ ॥ ६०४

लोहं कालायसे सर्वतेजसे जोङ्गकेऽपि च । वहो वृषस्कन्धदेशे वायौ वाहोऽश्वमानयोः ॥ ६०५

वृषे वाहा तु वाहौ स्याद्व्यूहो निर्माणतर्कयोः । समूहे बलविन्यासे सहः क्षमे बलेऽपि च ॥ ६०६

सहोर्व्यां सहदेवायां कुमार्यां नखभेषजे । मुद्गपर्ण्यां च सिंहस्तु राशिभेदे मृगाधिपे ॥ ६०७

श्रेष्ठे स्यादुत्तरस्थश्च सिंही स्वर्भाणुमातरि । वासाबृहत्योः क्षुद्रायां स्नेहः प्रेम्णि घृतादिके ॥ ६०८

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहे द्विस्वरकाण्डो द्वितीयः ।

---

त्रिस्वरकाण्डः ।

अणुको निपुणेऽल्पे चाशोकौ कङ्केल्लिवञ्जुलौ । निःशोकपारदौ चाप्यशोका तु कटुरोहिणी ॥ ६०९

अभीको निर्भये कम्रेऽप्यनीकं रणसैन्ययोः । अलीकमप्रिये भाले वितथेऽनूकमन्वये ॥ ६१०

---

१. 'दिशि' ग-घ. 'दृगत्र कनीनिकामध्यं: यन्महः' इति टीका. २. 'स्यात्' ख. ३. 'वापे' ग-घ. ४. 'दासपात्रे' ग-घ. ५. 'धनुरिष्वासने' ख. ६. 'प्रियालद्रौ' ख-ग-घ. ७ 'अश्वेति सगर्भा वडवा' इति टीका. ८. 'रोगे ख-ग-घ. 'रागोऽनुरागः' इति टीका. ९. 'तुक् अपत्यम्' इति टीका. १०. 'शुक्रे' ख. ११. 'स्वर्णे' ख. १२. 'ग्रासयोः' ग-घ. १३. 'योग' ख. १४. 'स्वर्भानु' ख-ग-घ. 'पूर्वपदात् इति णत्वम्' इत्यभिधानचिन्तामणिः.

शीलेऽनूको गतजन्मन्यंशुकं सूक्ष्मवाससि । उत्तरीये वस्त्रमात्रेऽप्यलकाश्चूर्णकुन्तलाः ॥ ६११
अलका तु कुबेरस्य नगर्यामन्तिकं पुनः । पार्श्वेऽन्तिका तु चुल्ल्यां स्यात्सातलाख्यौषधेऽपि च ६१२
अलर्को धवलार्के स्याद्योगोन्मादितशुन्यपि । अम्बिकोमापाण्डुमात्रोर्देवताभिदि मातरि ॥ ६१३
अन्धिका तु कैतवे स्यात्सर्षपीमिद्धयोरपि । अम्लिका तिन्तिडीकाम्लोद्गारचाङ्गेरिकासु च ॥ ६१४
आलोको दर्शने वन्दिघोषणोद्द्योतयोरपि । आनकः पटहे भेर्यां ध्वनन्मेघमृदङ्गयोः ॥ ६१५
आन्तको रुजि शङ्कायां संतापे मुरजध्वनौ । आह्निकं स्यात्पुनरहर्निर्वृत्ते नित्यकर्मणि ॥ ६१६
भोजने ग्रन्थभागे चाढकः प्रस्थचतुष्टयम् । आढकी तुवरीक्ष्वाकुः कटुतुम्ब्यां नृपान्तरे ॥ ६१७
उदर्कस्तूत्तरकालफले मदनकण्टके । उष्णको घर्म उद्युक्तातुरयोरूर्मिका पुनः ॥ ६१८
उत्कण्ठायां भृङ्गनादे वस्त्रभङ्गेऽङ्गुलीयके । वीच्यां च कनकं हेम्नि कनको नागकेसरे ॥ ६१९
धत्तूरे चम्पके काञ्चनारकिंशुकयोरपि । करको दाडिमे पक्षिभेदे करे कमण्डलौ ॥ ६२०
लट्वाकरञ्जयोर्वर्षोपले च कटुकं कटु । कटुरोहिणी व्योषं च कञ्चुकश्चोलचर्मणोः ॥ ६२१
वर्धापकगृहीताङ्गवसने वारबाणके । निर्मोके कटकस्त्वद्रिनितम्बे बाहुभूषणे ॥ ६२२
सेनायां राजधान्यां च क्रमुको भद्रमुस्तके । गुवाके पट्टिकालोध्रे कण्टकः क्षुद्रवैरिणि ॥ ६२३
वेणौ द्रुमाङ्गे रोमाञ्चे कलङ्कोऽङ्कापवादयोः । कालायसमले चापि कर्णिका कर्णभूषणे ॥ ६२४
बीजकोशे सरोजस्य करमध्याङ्गुलावपि । कुट्टिन्यां हस्तिहस्ताग्रे कणिका सूक्ष्मवस्तुनि ॥ ६२५
अग्निमन्थे कामुकास्तु काम्यशोकातिमुक्तकाः । कारकं कर्तृकर्माद्ये कारिका यातना नटी ॥ ६२६
कृतिर्विवरणश्लोको नापितादिककर्म च । कावृकः कुक्कुटे कोके पीतमुण्डेऽथ कार्मुकः ॥ ६२७
वंशे कार्मुकमिष्वासे कर्मठे क्षारको रसे । कोरके पक्ष्यादिपाशे कालिका योगिनीभिदि ॥ ६२८
स्वर्णादिदोषे मेघाल्यां सुरागौर्योर्नवाम्बुदे । क्रमदेयवस्तुमूल्ये काष्ण्यवृश्चिकपत्रयोः ॥ ६२९
रोमाल्यां धूमरीमांसीः काकीपटोलशाखयोः । किंपाको वृक्षभिद्यज्ञे कीटको निष्ठुरे कूर्मौ ॥ ६३०
कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे । कुलकं पञ्चादिश्लोकसमन्वये पटोलके ॥ ६३१
कुलकः कुलप्रधाने वल्मीके काकतिन्दुके । कुलिकस्तु कुलश्रेष्ठे द्रुमनागविशेषयोः ॥ ६३२
कुशिको मुनिभेदे स्यात्फाले सर्जे बिभीतके । क्षुल्लकः पामरे स्वल्पे कनिष्ठे दुःस्थिते खले ॥ ६३३
कूर्चिका क्षीरविकृतौ कुञ्चिकायां च कुड्मले । आलेख्यकूर्चिकासूच्योः कृषकौ फालकर्षकौ ॥ ६३४
कोरकं तु कुड्मले स्यात्कक्कोलकमृणालयोः । कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि ॥ ६३५
पारम्पर्यागतख्याते मङ्गलोद्वाहसूत्रयोः । गीतादौ भोगकाले च कौशिकः शक्रघूकयोः ॥ ६३६
कोशज्ञे गुग्गुलावाहितुण्डिके नकुले मुनौ । कौशिकी चण्डिकानद्योः खनकः संधितस्करे ॥ ६३७

---

१. 'गतजन्मा परिणतवयाः' इति टीका. २. 'नाट्योक्तौ ज्येष्ठभगिनी अन्तिका प्रोच्यतेऽपि सा' इत्यधिकमितः प्राक् ख-ग-घ. ३. 'नृपे श्वेतार्के योगो' ख-ग-घ. ४. 'सर्षप्यां रात्रियोषितोः' ख; 'सर्षपीसिद्धयोः' ग-घ. ५. 'मिद्धं निद्राकैतवम्' इति टीका. ६. 'वन्दिभाषणो' ख-ग-घ. ७. 'नदन्मे' ख. ८. 'उलूकः स्यात्काकशत्राविन्द्रे भारतयोधिनि । उष्ट्रिका मृद्भाण्डभेदे करभस्य च योषिति ॥' इत्यधिकमितः प्राक् ख-ग-घ. ९. 'हस्ते' ख. १०. 'व्योषयोश्च' ग-घ. ११. 'कर्मणोः' ख; 'वस्त्रयोः' ग-घ. 'चर्म कवचम्' इति टीका. १२. 'वारबाणके नृनिचोले' इति टीका. १३. 'कृतौ विवरणश्लोके नापितादिककर्मणि' ख. १४. 'कांस्योः' ग-घ. १५. 'अज्ञो मूर्खः' इति टीका. १६. 'कृशे' ख. १७. 'फले' ख. १८. 'दुःखिते' ख-ग-घ. १९. 'कूपको गुणवृक्षे स्यात्तैलपात्रे ककुन्दरे' इत्यधिकमितः प्राक् ख-ग-घ.

मूषिके भूमिविलशे खट्टिको मांसविक्रयी ॥ महिषीक्षीरफेनश्च खल्लकः स्वल्पनीचयोः ॥ ६३८
खोलकः पूगकोशे स्याच्छिरस्त्रे नाकुपाकयोः । ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णकभेषजे ॥ ६३९
ग्रन्थिको गुग्गुलौ दैवज्ञे माद्रेयकरीरयोः ॥ गण्डको विघ्ने विद्यायां संख्यावच्छेदखड्गिषु ॥ ६४०
गण्डकी तु सरिद्भेदे गणको ग्रहवेदिनि । गणिकेभ्यां यूथिकायां तर्कार्यां पण्ययोषिति ॥ ६४१
ग्राहको ग्रहीतरि स्याद्व्याधानां घातिपक्षिणि । गान्धिको लेखके गन्धवाणिजे गुण्डकः पुनः॥६४२
कलोक्तौ मैलने धूलौ स्नेहपात्रेऽथ गैरिकम् । स्वर्णे धातौ गोलकस्तु जारतो विधवासुते ॥ ६४३
अलिञ्जरे गुडे वापि गोरङ्कुर्नग्नवन्दिनोः । खगे च चषको मद्ये सरके मद्यभाजने ॥ ६४४
चलुकः प्रसृतौ भाण्डप्रभेदे चुलुको यथा । चारकोऽश्वादिपाले स्याद्बन्धे संचारकेऽपि च ॥६४५
चित्रकस्तु चित्रकाये द्रुमौषधविशेषयोः । चुम्बकः कामुके धूर्ते बहुगुर्वश्मभेदयोः ॥ ६४६
चुलुकी कुण्डिकाभेदे शिशुमारे कुलान्तरे । चूतकः कूप आम्रे च चूलिका नाटिकाङ्के॥ ६४७
करिणः कर्णमूले च जनकः पितृभूपयोः । जम्बुको वरुणे फेरौ जतुकं हिङ्गुलाक्षयोः ॥ ६४८
जतुका चर्मचटका जीवको वृद्धिजीविनि । क्षपणे प्राणके पीतसालसेवकयोर्द्रुमे ॥ ६४९
व्यालग्राहे जीविका तु जीवन्त्यां वर्तनेऽपि च । झिल्लीका झिल्लिकावत्स्याच्चीर्यां रुच्यातपस्य च६५०
विलेपनस्य च मले तक्षकस्तक्ष्णि पन्नगे । द्रुमभेदे तण्डकस्तु समस्तपदजातके ॥ ६५१
तरुस्कन्धे वेश्मदारुमायाबहुलयोरपि । फेनखञ्जनयोश्चापि तारकः कर्णधारके ॥ ६५२
दैत्ये च तारकमुडौ नेत्रतन्मध्ययोरपि । तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके ॥ ६५३
तिलकं रुचके क्लोम्नि त्रिशङ्कुः शलभे नृपे । मार्जारे च तुरुष्कस्तु देशे श्रीवाससिल्हयोः॥६५४
तूलिका तूलशय्या स्यादालेख्यस्य च लेखनी । दर्शको दर्शयितरि प्रतीहारप्रवीणयोः ॥ ६५५
द्रावकस्तु शिलाभेदे स्याद्घोषकविदग्धयोः । दारको भेदके पुत्रे दीपकं स्यादलंकृतिः ॥ ६५६
दीपकौ दीप्तिकृद्दीपौ दीप्यकं त्वजमोदके । मयूरशिखायवान्योर्धनिको धान्यके धवे ॥ ६५७
धनाढ्ये धनिका वध्वां धेनुका धेनुरिभ्यपि । धैनुकं धेनुसंहत्यां करणेऽपि च योषिताम् ॥ ६५८
नरकौ दैत्यनिरयौ नन्दकः कुलपालके । हर्षके विष्णुखड्गे च नर्तकः केलके नटे ॥ ६५९
द्विपे पोटगले चापि नर्तकी लासिका द्विपी । नालीकोऽस्त्रे शरे शल्ये नालीकं पद्मखण्डने ॥ ६६०
नायको मणिभिन्नेतृप्रधानेष्वथ नालिका । नाले काले चुल्लिरन्ध्रे विवरे वेणुभाजने ॥ ६६१
निर्पाकः पचने स्वेदासत्कर्मफलयोरपि । निर्मोको व्योम्नि संनाहे मोक्षके सर्पकञ्चुके ॥ ६६२

---

१. 'खुल्लकः' ख-ग-घ. २. 'ग्रन्थिलो' ख. ३. 'मलिने' ग-घ. 'मलनं धारणम्' इति टीका. ४. 'पिण्डे' ख-ग-घ. ५. 'चुलको' ख. ६. 'चतुष्की मशकहर्यां पुष्करिण्यन्तरेऽपि च' इत्यधिकमितः प्राक् ख-ग-घ. ७. 'चित्रकारे' ख-ग-घ. 'चित्रकायः श्वापदविशेषः' इति टीका. ८. 'चुल्लकी' ग-घ. ९. 'भूषयोः' ग-घ. १०. 'क्षेपणे' ख. 'क्षपणः श्रमणः' इति टीका. ११. 'समस्तपदपुस्तके' ग-घ. 'समस्तपदजातके कृतसमासपदसमूहे' इति टीका. १२. 'तालाङ्कः करपत्रे स्याच्छाकभेदेऽच्युताग्रजे । महालक्षणसंपूर्णपुरुषे कच्छपे हरे ॥' इत्यधिकमितः प्राक् ख-ग-घ. १३. 'लोम्नि' ग-घ. 'क्लोम हृदयस्य दक्षिणे उदयो जलाधारः' इति टीका. १४. 'स्याद्घोषक' ग-घ. १५. 'दूषिका तूलिका स्मृता । नयनस्य मलेऽपि स्याद्धनिको' ख-ग-घ. १६. 'रित्यपि' ख-ग-घ. १७. 'नग्निकानृतुकन्यायां नग्नको जिनवन्दिनोः' इत्यधिकमितः प्राक् ख-ग-घ. १८. 'बन्धने' ख; 'वर्धने' ग-घ. १९. 'निराकः' ग-घ. २०. 'नीलिका नीलिनीक्षुद्ररोगशेफालिकास्वपि' इत्यधिकमितः प्राक् ख.

पर्यङ्को मञ्चपर्यस्त्योः प्रतीकोऽङ्गप्रतीपयोः । पताकाङ्के ध्वजे केतौ सौभाग्ये नाटकांशके ॥ ६६३
पातुको जलमातङ्गे पतयालुप्रपातयोः । प्राणको जीवकतरौ सत्त्वजातीयबोलयोः ॥ ६६४
पाटको रोधसि ग्रामैकदेशेऽक्षादिपातके । वाद्यभेदे महाकिष्को मूल्यस्यापचयेऽपि च ॥ ६६५
पालङ्कः शाकभेदे स्यात्सल्लक्यां वाजिपक्षिणि । पिनाकः शिवकोदण्डे पांशुवृष्टित्रिशूलयोः॥६६६
प्रियकस्तु चञ्चरीके नीपे कश्मीरजन्मनि । प्रियंगौ चित्रहरणे पीतसालतरावपि ॥ ६६७
पिष्टको नेत्ररोगे स्याद्धान्यादिचमसेऽपि च । पिण्याकः कुङ्कुमे हिङ्गौ सिल्हके तिलचूर्णके॥ ६६८
पुलको गैजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे । अंसुराज्यां[6] मणिदोषे गल्वर्के तालके कृमौ ॥ ६६९
पुलाको भक्तसिक्थे स्यात्संक्षेपासारधान्ययोः । पुष्पकं मृतिकाङ्गारशकट्यां रत्नकङ्कणे ॥ ६७०
कासीसे श्रीदविमाने नेत्ररोगे रसाञ्जने । लोहकांस्ये रीरिकायां[7] पुत्रकः शरभे शठे ॥ ६७१
शैले वृक्षप्रभेदे च पुत्रिका यावतूलिके । पाञ्चालिकादुहित्रोश्च पूर्णकः स्वर्णचूडके ॥ ६७२
पूर्णिका नासिकाच्छिन्न्यां पृथुकश्चिपिटेऽर्भके । पृदाकुश्चित्रकव्याघ्रवृश्चिकेषु सरीसृपे ॥ ६७३
पेचकः करिलाङ्गूलमूले घूकेऽथ पेटकम् । मञ्जूषायां समूहे च बहुको जलखादके ॥ ६७४
दात्यूहे कर्कटेऽर्के च बन्धूकः पीतसालके । बन्धुजीवे बन्धकस्तु सत्यंकारेऽथ बन्धकी ॥ ६७५
स्वैरिण्यां च करिण्यां च बालिका कर्णभूषणे । पिच्छोलायां बालुकायां बालायां भस्मकं रुजि ६७६
विडङ्गे कलधौते च भ्रामकः फेरुधूर्तयोः । सूर्यावर्तेऽश्मभेदे च भालाङ्कः कच्छपे हरे ॥ ६७७
महालक्षणसंपूर्णपुरुषे करपत्रके । रोहिते शाकभेदे च भूतीकं कट्फलौषधे ॥ ६७८
यवान्यां घनसारे च भूनिम्बे भूस्तृणेऽपि च । भूमिका तु रचनायां रूपान्तरपरिग्रहे ॥ ६७९
मशकः क्षुद्ररुग्जन्तुभेदयोर्मधुकं त्रपु । मधुयष्टिश्च मधुको वन्दिश्रीवदपक्षिणोः ॥ ६८०
मण्डूकी मण्डूकपर्ण्यां मण्डूकौ[11] भेकशोणकौ । मल्लिको हंसभेदे स्यान्मल्लिका कुसुमान्तरे ६८१
मीने मृत्पात्रभेदे च मातृका करणेश्वरे । मातृवर्णसमाम्नायोपमातृष्वथ मालिका ॥ ६८२
पक्षिमल्ले सरिद्भेदे ग्रैवेये पुष्पदामनि । मेचकः[12] श्यामले कृष्णे तिमिरे बर्हिचन्द्रके ॥ ६८३
मोचको मोक्षकदलीशिग्रुद्रुमविरागिषु । मोदको हर्षुले[13] खाद्ये यमको यमजे व्रते ॥ ६८४
यमकं वागलंकारे याजको राजकुञ्जरे[14] । याज्ञिके च युतकं तु यौतके युग्मयुक्तयोः ॥ ६८५
संशये चैलनाम्ने[15] जीवकभेदे पटाञ्चले । रजकौ धावकशुकौ रसिका कटिसूत्रके ॥ ६८६
रसनायां रसालायां रौत्रकं[16] पञ्चरात्रके । रात्रकस्तु पणवधू गृहान्तर्वर्षवासिनि ॥ ६८७
राजिका पङ्क्तौ रेखायां केदारे राजसर्षपे । रुचकं तु मातुलुङ्गे निष्के सौवर्चलेऽपि च ॥ ६८८

---

१. 'पद्मकः स्यात्पद्मकाष्ठे बिन्दुजालकयोरपि । पक्षकस्तु पार्श्वद्वारे पार्श्वमात्रेऽपि कथ्यते ॥' इत्यधिकमितः प्राक् ख-ग-घ. २. 'वालयोः' ख. ३. 'पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके । भल्लातके विडङ्गे च शोधयितृनरेऽपि च ॥' इत्यधिकमितः प्राक् ख-ग-घ. ४. 'पिटकः स्यात्तु विस्फोटे मञ्जूषायामपीष्यते' इत्यधिकमितः प्राक् ख-ग-घ. ५. 'यशाङ्गखण्डे' ख. ६. 'असुराज्यां' ग-घ. ७. 'रीतिकायां' ख-ग-घ. ८. 'छित्त्यां' ग-घ. ९. 'बालकः पुनः । शिशौ मूर्खेऽश्वगजयोर्वालधौ' इत्यधिकमितः प्राक् ख-ग-घ. १०. 'श्रीवह' ख. ११. 'मण्डूको भेकशोणयोः' ग-घ. १२. 'मामकं तु मदीये स्यान्मामको मातुले स्मृतः' इत्यधिकमितः प्राक् ख-ग-घ. १३. 'हर्मुके' ग-घ. १४. 'राजकुञ्जरो भूपश्रेष्ठः' इति टीका. १५. 'चलनाम्ने चण्डातकाग्ने' इति टीका. १६. 'रल्लकः कम्बले स्मृतः । तथैव कम्बलमृगे' इत्यधिकमितः प्राक् ख-ग-घ.

रूपकं नाटकाद्येषु काव्यालंकारधूर्तयोः । रेणुका तु हरेण्वां स्याज्जमदग्नेश्च योषिति ॥ ६८९
लम्पाको लम्पटे देशे लासकौ केकिनर्तकौ । लूनकस्तु पशौ भिन्ने लोचको नीलवाससि ॥ ६९०
कज्जले मांसपिण्डेऽक्षितारे स्त्रीभालभूषणे । निर्बुद्धौ कर्णिकामोचाज्यासु भ्रूस्लथचर्मणि ॥ ६९१
वराकः शोच्यरणयोर्वर्तकोऽश्वखुरे खगे । वञ्चको जम्बुके गेहनकुले खलधूर्तयोः ॥ ६९२
वैल्मीको नाकुवाल्मीक्योः रोगभेदेऽथ वर्णकः । विलेपने मलयजे चारणे वसुकं पुनः ॥ ६९३
रोमके वसुकस्तु स्याच्छिवमल्ह्यर्कपर्णयोः । व्यलीकं व्यङ्गवैलक्ष्याप्रियाकार्येषु पीडने ॥ ६९४
वार्षिकं त्रायमाणायां वर्षाभवेऽथ वाल्हिकः । देशभेदेऽश्वभेदे च वाल्हिकं हिङ्गु कुङ्कुमम् ॥ ६९५
वाल्हीकवद्वार्धकं तु वृद्धत्वे वृद्धकर्मणि । वृद्धानां समवाये च वालुकं हरिवालुके ॥ ६९६
वालुका तु सिकतासु वितर्कः संशयोहयोः । विपाकः परिणामे स्याद्दुर्गतिस्वादुनोरपि ॥ ६९७
विवेकः पुनरेकान्ते जलद्रोणीविचारयोः । वृषाङ्कः साधुभल्लातशंकरेषु मेहल्लके ॥ ६९८
वृश्चिकस्तु द्रुणे राशावौषधे शूककीटके । वैजिकं कारणे शिग्रुतैले च वैजिकोऽङ्कुरे ॥ ६९९
शङ्खकं वलये कम्बौ शङ्खकस्तु शिरोरुजि । शम्पाकस्तु विपाके स्यादावके चतुरङ्गुले ॥ ७००
शम्बूको दैत्यविशेषे करिकुम्भान्तशङ्खयोः । शलाका शारिका शल्यं श्वाविदालेख्यकूर्चिका ॥ ७०१
छत्रपञ्जरकाष्ठीषु शल्लकी श्वाविधि द्रुमे । शार्ककः स्याद्दुग्धफेने शर्करायाश्च पिण्डके ॥ ७०२
शिशुकः पादपे बाले शिशुमारेऽथ शीतकः । शीतकालेऽलसे स्वस्थे शूककः प्रावटे रसे ॥ ७०३
स्वस्तिको मङ्गलद्रव्ये गृहभेदचतुष्कयोः । स्यमीकः पादपे नाकौ स्यात्स्यमीका तु नीलिका ॥ ७०४
सरको मदिरापात्रे मदिरापानमद्ययोः । सस्यको नालिकेरान्तः सस्याभमणिखड्गयोः ॥ ७०५
संपर्कः सुरते पृक्तौ सायको बाणखड्गयोः । स्थासको हस्तबिम्बे स्यात्स्फुरकादेश्च बुद्बुदे ॥ ७०६
सूतकं जन्मनि रसे सूचकः शुनि दुर्जने । कथके सीवनद्रव्ये मार्जारे वायसेऽपि च ॥ ७०७
सृदाकुर्वज्रे दावाग्नौ प्रतिसूर्ये समीरणे । सेवकोऽनुगे प्रसेवे सेचकः सेक्तृमेघयोः ॥ ७०८
हेरको गद्यविज्ञानभिदोः कितवचौरयोः । हुडुको मदमत्ते स्याद्दात्यूहे वाद्यभिद्यपि ॥ ७०९
हेतुकस्तु महाकालगणबुद्धविशेषयोः । गोमुखं वाद्यभाण्डे स्याल्लेपने कुटिलौकसि ॥ ७१०
त्रिशिखो रक्षस्त्रिशिखं स्यात्किरीटत्रिशूलयोः । दुर्मुखो मुखरे नागराजे वाजिनि वानरे ॥ ७११
प्रमुखं प्रथमे मुख्ये मयूखा ज्वालरुक्त्विषः । विशिखा खनित्रिकायां रथ्यायां विशिखः शरे ॥ ७१२
विशाखो याचके स्कन्दे विशाखा भे कठिल्लके । वैशाखः खजके रौधे सुमुखो गरुडात्मजे ॥ ७१३
पण्डिते फणिभेदे स्यादयोगः कठिनोद्यमे । विश्लेषे विधुरे कूटेऽपाङ्गो नेत्रान्तपुण्ड्रयोः ॥ ७१४
अङ्गहीनेऽप्यनङ्गं खे चित्तेऽनङ्गस्तु मन्मथे । आभोगः परिपूर्णत्वे वरुणच्छत्रयत्नयोः ॥ ७१५
आयोगो गन्धमाल्योपहारे व्यापृतिरोधयोः । आशुगोऽर्के शरे वायावुत्सर्गस्त्यागदानयोः ॥ ७१६
वर्जने सामान्यविधावुद्वेगं पूगिकाफले । उद्वेगस्तूद्वेजने स्यात्कलिङ्गो नीवृदन्तरे ॥ ७१७
पूतीकरञ्जे धूम्याटे स्यात्कालिङ्गा नितम्बिनी । कलिङ्गं कोटजफले कालिङ्गस्तु भुजङ्गमे ॥ ७१८
द्विरदे भूमिकर्कारौ कालिङ्गी राजकर्कटी । चक्राङ्गः श्वेतगरुति चक्राङ्गी कटुरोहिणी ॥ ७१९

१. 'नाटके प्रोक्तं' ख-ग-घ. २. 'ज्याभ्रूप्रश्लथ' ख-ग-घ. ३. 'व्यलीकं व्यङ्गवैलक्ष्याप्रियाकार्येषु पीडने' इतीतः प्राक् ख-ग-घ. ४. 'वारणे' ख. ५. 'महल्लकः सौविदल्लः' इति टीका. ६. 'प्रवृद्धोऽवटः कूपः' इति टीका. ७. 'समीहा तु' ख. ८. 'मद्ययोः' ख. ९. 'हाटको' ख. १०. 'मासे' ख. ११. 'स्तिमिते शीघ्रगामिनी । उद्वाहो च भयेऽपि स्यात्' इत्यधिकमितः प्राक् ख-ग-घ.

जिह्मगो [1]मन्दगे सर्पे तुरगो वाजिचित्तयोः । तुरगी त्वश्वगन्धायां धाराङ्गस्तीर्थखङ्गयोः ॥ ७२०
[2]नेरङ्गः शफे वरण्डे नारङ्गं विटजन्मिनोः । कणारसे नागरङ्गे निषङ्गस्तूणसङ्गयोः ॥ ७२१
निसर्गः [3]सृष्टौ स्वभावे [4]प्लवगः कपिभेकयोः । अर्कसूते पन्नगस्तु [5]पद्मकाष्ठे भुजङ्गमे ॥ ७२२
परागश्चन्दने रेणौ गिरौ स्यात्युपरागयोः । स्नानीयपुष्परजसोः पतङ्गः सूर्यपक्षिणोः ॥ ७२३
पारते शलभे शालौ पत्राङ्गं रक्तचन्दने । भूर्जपद्मकयोश्चापि प्रयागो वाजिशक्रयोः ॥ ७२४
यज्ञे तीर्थविशेषे च प्रयोगस्तु निदर्शने । [6]कार्मणे च प्रयुक्तौ च प्रियङ्गू राजसर्षपे ॥ ७२५
पिप्पल्यां फलिनीकङ्ग्वोः पुन्नागः पादपान्तरे । जातीफले नरश्रेष्ठे भुजङ्गः सर्पष[7]िङ्गयोः ॥ ७२६
मातङ्गः श्वपचो हस्ती मृदङ्गो घोषवाद्ययोः । रक्ताङ्गो भौमे रक्ताङ्गं कम्पल्लये विद्रुमेऽपि च ७२७
रक्ताङ्गा जीवन्तिकायां रथाङ्गः कोकपक्षिणि । रथाङ्गं चक्रे वराङ्गं योनौ शीर्षे गुडत्वचि ७२८
कुञ्जरे च विडङ्गस्तु स्यादभिज्ञकृमिघ्नयोः । विसर्गो विसर्जनीये वर्चसि त्यागदानयोः ॥ ७२९
संभोगो भोगरतयोः शुण्डायां सर्वगं जले । सर्वगस्तु विभौ रुद्रे सारङ्गो विहगान्तरे ॥ ७३०
चातके चञ्चरीके च द्विपैणशबलेषु च । अमोघः सफलेऽमोघा पुनः पथ्याविडङ्गयोः ॥ ७३१
अनघः स्याद्गतपापे मनोज्ञे निर्मलेऽपि च । उल्लाघो निपुणे [8]हृष्टे शुचिनीरोगयोरपि ॥ ७३२
काञ्चिघस्तु मूषके स्याच्छान्तकुम्भे [9]छेमण्डके । परिघोऽस्त्रे योगभेदे परिघातेऽर्गलेऽपि च ॥ ७३३
पलिघः काचकलशे घटे प्राकारगोपुरे । प्रतिघौ रुट्प्रतीघातौ महार्घो लावकाण्डजे ॥ ७३४
महामूल्येऽप्य[10]थ वीचिस्त्वतरङ्गे नरकान्तरे । कवचस्तु तनुत्राणे पटहे नन्दिपादपे ॥ ७३५
क्रकचः करपत्रे स्याद्ग्रन्थिलाख्यतरावपि । कणीचिः पुष्पितलतागुञ्जयोः शकटेऽपि च ॥ ७३६
नमुचिर्दितिजे कामे नाराचो लोहसायके । [11]जलेभे नाराच्येषण्यां प्रपञ्चो विप्रलम्भने ॥ ७३६
विस्तारे संचये चापि मरीचिः कृपणे घृणौ । ऋषिभेदे च मारीचः कक्कोले [12]याजकद्विपे ॥ ७३७
रक्षोभेदेऽ[13]थाण्डजः स्यात्[14]कृकिण्डेऽहौ खगे झषे । अण्डजा [15]तु मृगनाभावङ्कजो मन्मथे सुते ७३८
मदे केशे[16]ऽङ्कुजं रक्ते कम्बोजो नीवृदन्तरे । शङ्खहस्तिभेदयोश्च करजो नखवृक्षयोः ॥ ७३९
काम्बोजः पुनरश्वानां भेदे पुंनागपादपे । वलक्षखदिरे चापि काम्बोजी माषपर्णिका ॥ ७४०
कारुजः कलभे फेने वल्मीके नागकेसरे । गैरिके शिल्पिनां चित्रे स्वयंजाततिलेऽपि च ॥ ७४१
कुटजोऽगस्त्ये द्रुभेदे द्रोणे गिरिजमभ्रके । शिलाजतुनि लोहे च गिरिजा मातुलुङ्ग्युमा ॥ ७४२
जलजं कमले शङ्खे नीरजं पद्मकुष्ठयोः । परञ्जोऽसौ तैलयन्त्रे क्षुरिकाफलफेनयोः ॥ ७४३
बाहुजस्तु स्वयंजाततिले क्षत्रियकीरयोः । भूमिजौ नरकाङ्गारौ भूमिजा जनकात्मजा ॥ ७४४
बलजं गोपुरे सस्ये क्षेत्रसं[17]गरयोरपि । सदाकारे बलजा तु पृथिव्यां वरयोषिति ॥ ७४५

---

१. 'मदने' ग-घ. २. 'नराङ्गः' ग-घ. ३. 'सर्गे' ग-घ. ४. 'नीलाङ्गुः कृमिजातिके । मम्भराल्यां प्रसूने च' इत्यधिकमितः प्राक् ख-ग-घ. ५. 'पद्मकोष्ठे' ख-ग-घ. ६. 'कर्मणि' ग-घ. ७. 'खिङ्गयोः' ख. ८. 'दुष्टे' ग-घ. ९. 'शेमण्डके' ग-घ. 'छमण्डकः प्रदेशविशेषः' इति टीका. १०. 'वीचिस्तु तरङ्गे' ख; 'वीचिस्तर' ग-घ. ११. 'जलहस्ती' इति टीका. १२. 'याशिकद्विजे' ख. 'याजकस्य द्विपः' इति टीका. १३. 'प्यण्डजः' ख. १४. 'च्छरटे' ग-घ. 'ककिण्डः कृकलासः' इति टीका. १५. 'मृगनाभ्यां स्याद' ख; 'तु मृगीनाभ्यां' ग-घ. १६. 'सुन्दरे च कम्बोजो' ख. १७. 'संगमयोर' ख.

---

१. मेदिन्यामपि 'काचिघः काञ्चनेऽपि स्याच्छेमण्डे मूषकेऽपि च' इत्येकारप्रथम एव दृश्यते.

वनजो मुस्तके स्तम्बेरमे वनजमम्बुजे। वनजा तु मुद्गपर्ण्यां सहजः सहसंभवे॥ ७४६
निसर्गे च साम्रजस्तु सामोत्थे कुञ्जरेऽपि च। हिमजो मेनकापुत्रे हिमजा पार्वती शटी॥ ७४७
क्षेत्रज्ञावात्मनिपुणौ दोषज्ञः प्राज्ञवैद्ययोः। सर्वज्ञस्तु जिनेन्द्रे स्यात्सुगते शंकरेऽपि च॥ ७४८
अवटः कूपबिलयोर्गर्ते कुहकजीविनि। अरिष्टो लशुने निम्बे फेनिले कङ्ककाकयोः॥ ७४९
अरिष्टं सूतकागारेऽन्तचिह्ने तक्रे शुभेऽशुभे। अवटुर्गर्तान्धुघाटासूत्कटस्तीव्रमत्तयोः॥ ७५०
उद्भटा दम्भचर्यायां प्रभेदे लशुनस्य च। करटः करिगण्डे स्यात्कुसुम्भे निन्द्यजीवने॥ ७५१
काके वाद्ये दुर्दुरूढे नवश्राद्धेऽथ कर्कटः। कुलीरे करणे स्त्रीणां राशौ खगेऽथ कर्कटी॥ ७५२
शाल्मलीफलवालुङ्क्योः कार्यटो जतुकार्यिणोः। कीटकः कृपणे निःस्वे देशभेदे तुरङ्गमे॥ ७५३
कुरण्टो झिण्टिकाभेदे कुरण्टी दारुपुत्रिका। कुक्कुटः कुकुभे ताम्रचूडे वह्निकणेऽपि च॥ ७५४
निषादशूद्रयोः पुत्रे कूपीटस्तूदरे जले। चक्राटो धूर्ते दीनारे विषवैद्येऽथ चर्पटः॥ ७५५
चपेटे स्फारविपुले पर्पटे चिपुटः पुनः। पृथुके पिचटेऽपि स्याच्चिरण्टी तु सुवासिनी॥ ७५६
तरुणी च जकूटस्तु वार्ताककुसुमे शुनि। यमले त्र्यङ्कटो धौताञ्जन्यां शिक्यभिदीश्वरे॥ ७५७
त्रिकूटं सिन्धुलवणे त्रिकूटस्तु सुवेलके। त्रिपुटौ तीरसातीनौ त्रिपुटा त्रिवृदोषधौ॥ ७५८
सूक्ष्मैलायां मल्लिकायां द्रोहाटो मृगलुब्धके। चतुष्पदीप्रभेदे च विडालव्रतिकेऽपि च॥ ६५९
धाराटश्चातकेऽश्वे च निर्दटो निष्प्रयोजने। निर्दयेऽन्यदोषरते निष्कुटो गृहवाटिका॥ ७६०
केदारकः कपाटश्च पर्पटो भेषजान्तरे। पिष्टविकृतौ परीष्टिः परीक्षापरिचर्ययोः॥ ७६१
स्यात्पर्कटी प्लक्षतरौ पूगादेर्नूतने फले। पिचटस्तु नेत्ररोगे पिचटं त्रपुसीसयोः॥ ७६२
वर्वटी व्रीहिभिद्वेश्या भाकूटः शैलमीनयोः। भावाटो भावके साधुनिवेशे कामुकेऽपि च॥ ७६३
मर्कटस्तु कपावूर्णनाभे स्त्रीकरणान्तरे। मर्कटी करञ्जभेदे शूकशिम्ब्यथ मोरटम्॥ ७६४
सप्तरात्रात्परे क्षीरेऽङ्कोठपुष्पेक्षुमूलयोः। मोरटा तु मूर्विकायां मोचाटः कृष्णजीरके॥ ७६५
चन्दने कदलीगर्भे वर्णाटश्चित्रकारिणि। गायने स्त्रीकृताजीवे वरटा हंसयोषिति॥ ७६६
गन्धोल्यां चाथ विकटः कराले पृथुरम्ययोः। वेकटो जाततारुण्ये मणिकारेऽथ वेरटः॥ ७६७
मिश्रीकृते च नीचे च वेरटं वदरीफले। शैलाटो देवले शुक्लकाचे सिंहकिरातयोः॥ ७६८
संसृष्टं तु संगते स्याच्छुद्धे च वमनादिना। अम्बष्ठो विप्रतो वेश्यातनये नीवृदन्तरे॥ ७६९

---

१. 'शची' ग-घ. २. 'न्तश्चिह्ने' ख-ग-घ. 'अन्तचिह्ने मरणचिह्ने' इति टीका. ३. 'धूर्तदीनार-विष' ग-घ. ४. 'पिचटे खाद्यभेदे स्याद्विस्तृतावपि। चिरण्टी तु सुवासिन्यां स्याद्वितीयवयःस्त्रियाम्। जकुटं वार्ताकपुष्पे जकुटो मलये शुनि। त्र्यङ्कटं शिक्यभेदे स्याद्धौताञ्जन्यामपि स्मृतम्।' ख. ५. 'यमलं युग्मम्' इति टीका. ६. 'स्याच्चैव पिष्टविकृतौ परीक्षा' ग-घ. ७. 'स्यात्पर्पटी' ख; 'स्यात्कर्कटी' ग-घ. 'पृच्यते पर्कटी' इति टीका. ८. 'कार्वटः कान्तिपुञ्जके। वारुण्डे मकरे पोते भाकूटः' ख. ९. 'भार्याटः पटहाजीवे लोभात्स्वस्त्रीसमर्पके। भावाटः' ख. १०. 'नटे' ख. ११. 'चीवा वानरी। बीजं च राजकर्कट्या प्राचीनामलकस्य च। गवेधुकाफलं चापि चक्राङ्गी करजान्तरम्। मोरटं त्विक्षुमूले स्यादङ्कोटकुसुमेऽपि च। सप्तरात्रात्परक्षीरे मोरटा मूर्विका मता। मोचाटः कदलीगर्भे चन्दने कृष्णजीरके। रवटो दक्षिणावर्तशङ्खे जाङ्गलिकेऽपि च। रेवटो मोरटे रेणौ स्याद्वातूलवराहयोः। वर्णाटो गायने चित्रकारे स्त्रीकृतजीवने। वरटा हंसयोषायां गन्धोल्यां विकटः पृथौ। कराले सुन्दरे चारे वेकटो जातयौवने। वैकटिके मणिकारे वेरटो मिश्रनीचयोः। वेरटं बदरीफले शैलाटो मृगवैरिणि। शुक्लकाचे किराते च देवले गिरिवारिणि। संसृष्टं' ख. 'म्ब्यां च मोरटम्' ग-घ. १२. 'मूले' ग-घ. १३. 'पृथुले' ग-घ. १४. 'वरटी' ग-घ. १५. 'हर्मटः कच्छपे प्रोक्तः सहस्रकिरणेऽपि च। अम्बष्ठो' ख.

अम्बष्ठा[1] स्यादम्ललोण्यां पाठायूथिकयोरपि। कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा त्वन्तिमाङ्गुली॥ ७७०
कमठः कच्छपे दैत्यविशेषे मुनिभाजने। जरठः कर्कशे जीर्णे नर्मठौ षिङ्गचूचुकौ॥ ७७१
प्रकोष्ठः कूर्पराधस्तान्नृपकक्षान्तरेऽपि च। हस्ते च विस्तृतकरे प्रतिष्ठा गौरवे स्थितौ॥ ७७२
छन्दोजातौ योगसिद्धौ[2] मकुष्ठौ धान्यमन्थरौ। लघिष्ठो भेलकेऽत्यल्पे स्याद्गरिष्ठस्तु तित्तिरौ॥ ७७३
वरिष्ठं मरिचे ताम्रे वरोरुतमयोरपि। वैकुण्ठो वासवे विष्णौ श्रीकण्ठः कुरुजाङ्गले॥ ७७४
शंकरे चाथ साधिष्ठोऽत्यार्ये दृढतमेऽपि च। कारण्डो मधुकोशेऽसौ कारण्डवे दलाटके॥ ७७५
कूष्माण्डौ गणकर्कारू कूष्माण्ड्यावम्बिकौषधी[3]। कोदण्डः कार्मुके देशभेदे भ्रूलतयोरपि॥ ७७६
गारुडं तु मरकते विषशास्त्रेऽथ तित्तिडः। दैत्यभेदे तिंत्तिडी तु कालदासे महीरुहे॥ ७७७
तिन्तिडी चुक्रे चिञ्चायां निर्गुण्डी सिन्दुवारकः। नीलशेफाल्यब्जकन्दः प्रचण्डः स्यात्प्रतापिनि॥
वलक्षकरवीरेऽपि प्रकाण्डः स्तम्बशस्तयोः। स्कन्धमूलान्तरे च द्रोः पिचण्डोऽवयवे पशोः॥ ७७९
उदरे चाथ पूत्यण्डो गन्धैणे गन्धकीटके। भेरुण्डौ भीषणखगौ भेरुण्डा देवताभिदि॥ ७८०
मारण्डोऽण्डे भुजङ्गानां मार्गे गोमयमण्डले। मार्तण्डस्तरणौ क्रोडे वरण्डो वदनामये॥ ७८१
अन्तरावेदौ[11] संघे च वेतण्डा[12] शारिका क्षुरी। वर्तिर्वारुण्डस्तु कर्णदृग्मले सेकभाजने॥ ७८२
[13]गणिरथराजे वितण्डा कच्छीशाके शिलाह्वये। करवीर्यां वादभेदे शिखण्डो बर्हचूडयोः॥ ७८३
सैरण्डः स्यात्कृकलासे भूषणान्तरधूर्तयोः। अध्यूढ ईश्वरेऽध्यूढा कृतसापत्न्ययोषिति॥ ७८४
आषाढो मलयगिरौ [15]प्रतिदण्डे च मासि च। उपोढ ऊढे निकटेऽप्युदूढः पीवरोढयोः॥ ७८५
प्ररूढो [16]जरठे वृद्धे प्रगाढो दृढकृच्छ्रयोः। वारूढः शबले वडवाश्वलेऽग्नौ पञ्जरेऽररौ॥ ७८६
विरूढोऽङ्कुरिते जाते विगूढो गर्ह्यगुप्तयोः। समूढः पुञ्जिते सद्योजाते भुग्नेऽनुपप्लुते॥ ७८७
[18]संरूढोऽङ्कुरिते प्रौढेऽरुणोऽर्केऽनूरुपिङ्गयोः। संध्यारागे [19]बुधे कुष्ठे निःशब्दाव्यक्तरागयोः॥ ७८८
[20]अरुणा त्रि[21]वृति श्यामामञ्जिष्ठातिविषासु च। [22]अभीक्ष्णं तु भृशं नित्यमीरिणं शून्य ऊषरे॥ ७८९

१. 'अम्बठा' ग-घ. २. 'योग' ग-घ. ३. 'कूष्माण्डी त्वम्बिकौषधी' ख. ४. 'विषोद्भवे। त्वरण्डो बिसिनीसूत्रबद्धवस्तुनि भेलके। तित्तिडो दैत्यभेदे स्याद्यमदासेऽथ तित्तिडी। कालदोषे पादपे च तिन्तिडी चुक्रचिञ्चयोः। द्रविडो वेधमुख्ये स्यान्नीवृदन्तरशङ्खयोः। निर्गुण्डी नीलशेफाली सिन्दुवारोऽब्जकन्दुकः। प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनि। प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः। पिचण्डो जठरे प्रोक्तः पशोरवयवेऽपि च। पूत्यण्डः स्याद्गन्धमृगे सर्पभिद्गन्धकीटयोः। भेरुण्डौ' ख. ५. 'तिन्तिडीके' ग-घ. ६. 'सिन्धुवारकः' ग-घ. ७. 'तरोः' ग-घ. ८. 'मेरुण्डा' ग-घ. ९. 'मारण्डस्तु भुजङ्गाण्डे' ख. १०. 'वदनव्यथा' ख. ११. 'वेदिसंघौ' ख. १२. 'अवतनोतीति वतण्डा' इति टीका. 'वरण्डा' ख-ग-घ. १३. 'गणिराजद्वारपिण्ड्योर्वार्तण्डः खग उष्ट्रिणि। वितण्डा वादभेदे स्यात्कच्छीशाके शिलाह्वये। करवीर्यामपि प्रोक्तः शिखण्डो' ख. १४. 'सरति सरण्डः' इति टीका. 'शरण्डः' ग-घ. १५. 'प्रतिनां दण्डे मासे च मलयाचले' ख. १६. 'जठरे' ग-घ. १७. 'अररे' ख. 'अररिः कपाटम्' इति टीका. १८. 'संमूढो मूर्च्छिते घने। अभीक्ष्णं तु भृशे नित्येऽप्यरुणोऽनूरुपिङ्गयोः। संध्या-' ख. १९. 'कुष्ठभेदे' ग-घ. २०. 'व्याकुले कपिले वर्णे रक्तवर्णेऽपि वाच्यवत्। अरुणा' ख. २१. 'त्रिवृता' ख. २२. 'अरणिस्तु भवेदग्निमन्थे निर्मथ्यदारुणि। इन्द्राणी तु शचीसिन्दुवारयोः करणे स्त्रियाः। ईरिणं तूषरे शून्येऽपीक्षणं दर्शने दृशि। ऊषणा तु कणायां स्यादूषणं मरिचे मतम्। एषणी व्रणमार्गानुसारिण्यां च तुलाभिदि। कङ्कणं करभूषायां हस्तसूत्रे च शेखरे। कत्तृणं रौहिषं फञ्जा कल्याणं हेम्नि मङ्गले। करणः शूद्रायां विट्पुत्रे करणं क्षेत्रगात्रयोः। श्री-

इन्द्राणी शच्यां निर्गुण्ड्यां स्त्रीकरणेऽप्यथोषणा । कणोषणं तु मरिचे करुणो रसवृक्षयोः ॥७९०

करुणा तु कृपायां स्यात्करणं क्षेत्रगात्रयोः । गीताङ्गहारसंवेशभित्सु कायस्थसंहतौ ॥ ७९१

वर्णानां स्पष्टतादौ च योगिनामासनादिषु । हृषीके साधकतमे ववादौ च कृतावपि ॥ ७९२

करणः शूद्राविट्पुत्रे कङ्कणं करभूषणे । मण्डने हस्तसूत्रे च कल्याणं हेम्नि मङ्गले ॥ ७९३

कत्तृणं रौहिषं फञ्जा करेणुस्तु मतङ्गजे । द्विरदस्य च योषायां कर्णिकारतरावपि ॥ ७९४

कारणं घातने हेतौ करणे कारणा पुनः । यातना कार्मणं मन्त्रादियोगे कर्मकारके ॥ ७९५

काकणी मानदण्डस्य तुरीयांशे पणस्य च । कृष्णलायां वराटे च कृपाणी कर्तरी छुरी ॥ ७९६

कृपाणोऽसौ क्षेपणी तु नौदण्डजालभेदयोः । कोङ्कणः स्याज्जनपदे कोङ्कणं त्वायुधान्तरे ॥ ७९७

ग्रहणं स्वीकृतौ बन्द्यां धीगुणे शब्द आदरे । ग्रहोपरागे प्रत्याये ग्रामणीः क्षुरमर्दिनि ॥ ७९८

प्रधाने भौगिके पत्यौ ग्रामिणी पण्ययोषिति । ग्रामेय्यां नीलिकायां च गोकर्णः प्रमथान्तरे ॥७९९

अङ्गुष्ठा नामिकोन्माने मृगेऽश्वतरसर्पयोः । गोकर्णी तु मूर्विकायां चरणो मूलगोत्रयोः ॥ ८००

बह्वृचादौ च पादे च चरणं भ्रमणेऽदने । जरणो रुचके हिङ्गौ जीरके कृष्णजीरके ॥ ८०१

तरुणः कुब्जपुष्पे स्यादेरण्डे यूनि नूतने । तरणिस्तरणेऽर्केऽंशौ कुमार्योषधिनौकयोः ॥ ८०२

यष्टावब्धौ दक्षिणस्तु परच्छन्दानुवर्तिनि । दक्षेऽपसव्ये सरलेऽपाचीनेऽप्यथ दक्षिणा ॥ ८०३

दिक्प्रतिष्ठा यज्ञदानं द्रुघणः पर्शुवेधसोः । मुद्गरेऽप्यथ दुर्वर्णं कलधौतकुवर्णयोः ॥ ८०४

दौर्वीणं मृष्टपर्णे स्याद्धरितालीरसेऽपि च । धरणोऽहिपतौ लोके स्तने धान्ये दिवाकरे ॥ ८०५

धरणं धारणे मानविशेषे धरणी भुवि । धर्षणं रतेऽभिभवे धर्षणी त्वभिसारिका ॥ ८०६

धिषणस्त्रिदशाचार्यो धिषणा तु मनीषिका । निर्याणं निर्गमे मोक्षगजापाङ्गप्रदेशयोः ॥ ८०७

निर्वाणं मोक्षनिर्वृत्योर्विध्याते करिमज्जने । निर्माणं सारनिर्मित्योः कर्मभेदे समञ्जसे ॥ ८०८

निःश्रेणिरधिरोहिण्यां खर्जूरीपादपेऽपि च । प्रघणोऽलिन्दके ताम्रकलशे लोहमुद्गरे ॥ ८०९

प्रवणस्तु क्षणे प्रह्वे क्रमनिम्ने चतुष्पथे । आयत्ते च प्रमाणं तु मर्यादासत्यवादिनोः ॥ ८१०

प्रमातर्येकतेयत्तानित्येषु हेतुशास्त्रयोः । पत्तोर्णं धौतकौशेये स्यात्पत्तोर्णस्तु शोणके ॥ ८११

पक्षिणी पूर्णिमाखग्योः शाकिनीरात्रिभेदयोः । प्रवेणिर्वेणिकुथयोः पुराणं प्रत्नशास्त्रयोः ॥ ८१२

---

ताङ्गहारसंवेशभिक्षुकायस्थसंहतौ । वर्णानां स्पष्टतादौ च योगिनामासनादिषु । हृषीके साधकतमे ववादौ च कृतावपि । करुणा तु कृपायां स्यात्करुणो रसवृक्षयोः । करेणुर्गजहस्तिन्योः कर्णिकारतरावपि । कारणं' ख.

१. "कक्यते काकणिः । 'कर्केर्णित्' इत्यणिः" इति टीका. 'काकिणी' ख-ग-घ. २. 'मानदण्डे स्यात्' ख. ३. 'हस्त' ग-घ. ४. 'ग्रहणी तु रुगन्तरे । ग्रामणीर्भोगिके पत्यौ प्रधाने क्षुरमर्दिनि । ग्रामणीः पण्ययोषा स्याद्ग्रामेयी नीलिकापि च । गोकर्णोऽश्वतरे सर्पे मृगभेदे गणान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ । चरणो बह्वृचादौ स्यात्पादे च मूलगोत्रयोः । चरणं भ्रमणे अक्षे रासभस्य ध्वनावपि । जरणो' ख. ५. 'ग्रामः पेटकं संवसथो वास्त्यस्या ग्रामिणी' इति टीका. 'ग्रामणीः' ख-ग-घ. ६. 'ग्रामेयायां' ग-घ. ७. 'द्रविणं काञ्चने धने । पराक्रमे बलेऽपि स्याद्द्रुघणः' ख. ८. 'पशु' ग-घ. ९. 'पृष्ट' ख. १०. 'द्विपतौ' ग-घ. ११. 'धरुणः सलिले स्वर्गे परमेष्ठिनि धर्मणः । सर्पभेदे वृक्षभेदे धर्षणी त्वभिसारिका । धर्षणं स्यात्परिभवे धारणी नाडिकाभिदि । धारणा स्यात्तु योगाङ्गे धारणं ग्रहणे मतम् । धिषण' ख. 'धरणं' ग-घ. १२. 'विघाते' ख. 'विभ्रान्ते' ग-घ. १३. 'आवर्ते' ग-घ. १४. 'पत्तोर्णः शोणकद्रुमे' ख.

पुराणः षोडशपणे पूरणं वानतन्तुषु । पूरके पिष्टभेदे च ([1]पूरणी शाल्मलिद्रुमे ॥ ८१३

प्रोक्षणं सेकवधयोर्भरणं वेतने भृतौ । भरणी शोणके भे च) भ्रमणी स्यादधीशितुः ॥ ८१४

क्रीडादौ कारुण्डिकायां भीषणं सल्लकीरसे । भीषणो दारुणे[2]ऽर्गाटे मत्कुणोऽश्मश्रुपूरुषे ॥ ८१५

[3]उद्दंशे नारिकेरे च निर्विषाणगजेऽपि च । मसृणोऽकठिने स्निग्धे मसृणा स्यादतस्यपि ॥ ८१६

मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि । यन्त्रणं बन्धने त्राणे नियमे रमणं पुनः ॥ ८१७

पटोलमूले जघने रमणो रासभे प्रिये । रो[4]षाणो रोषणे हेमघर्षे पारद ऊषरे ॥ ८१८

रोहिणी सोमवल्के भे कण्ठरो[5]गेगोमयोर्गवि । लोहिताकटुरोहिण्योर्लवणो राक्षसे र[6]से ॥ ८१९

[7]अस्थिभेदे लवणा स्त्रिट् लक्षणं नामचिह्नयोः । लक्ष्मणं च लक्षणस्तु सौमित्रौ लक्ष्मणो यथा ॥ ८२०

लक्ष्मणः श्रीयुते लक्ष्मणौषधौ सारसस्त्रियाम् । वरुणोऽर्केऽप्पतौ वृक्षे वरणो वरुणद्रुमे ॥ ८२१

प्राकारे वरणं वृत्यां वारणः स्यान्मतङ्गजे । वारणं तु प्रतिषेधे ब्राह्मणं विप्रसंहतौ ॥ ८२२

वेदे च ब्राह्मणो विप्रे [8]वारुणी पश्चिमा सुरा । गण्डदूर्वा विषाणं तु शृङ्गे कोलेभदन्तयोः ॥ ८२३

विषाणी मेषशृङ्ग्यां स्याद्विपणिः पण्यहट्टयोः । पण्यवीथ्यां श्रमणस्तु निर्ग्रन्थे निन्द्यजीविनि ॥ ८२४

[9]श्रवणो नक्षत्रभेदे श्रवणं श्रवसि श्रुतौ । शरणं रक्षणे गेहे वधरक्षकयोरपि ॥ ८२५

श्रीपर्णमग्निमन्थेऽब्जे श्रीपर्णी शाल्मलौ हठे । संकीर्णौ [10]निचिताशुद्धौ सरणिः श्रेणिमार्गयोः ॥ ८२६

[11]सारणः स्यादतीसारे दशकन्धरमन्त्रिणि । सिंहाणं तु घ्राणमलेऽयःकिट्टे काचभाजने ॥ ८२७

सुषेणो विष्णुसुग्रीववैद्ययोः करमर्दके । सुवर्णं काञ्चने कर्षे सुवर्णालौ मखान्तरे ॥ ८२८

कृष्णागुरुणि वि[12]स्ते च [13]सुपर्णः कृतमालके । गरुडे स्वर्णचूडे च सुपर्णा विनताब्जिनी ॥ ८२९

हरणं [14]तु हृतौ दोष्णि यौतकादिधनेऽपि च । हरिणौ पाण्डुसारङ्गौ हरिणी चारुयोषिति ॥ ८३०

सुवर्णप्रतिमायां च हरितावृत्तभेदयोः । हर्षणस्तु श्राद्धदेवे हर्षके योगरुग्भिदोः ॥ ८३१

हरेणुः कुलयोषायां रेणुकायां सतीनके । हिरणं हिरण्यमिव वराटे हेम्नि रेतसि ॥ ८३२

अमृतं यज्ञ[15]शेषेऽम्बुसुधामोक्षेष्वयाचिते । अन्नकाञ्चनयोर्जग्धौ [16]खे स्वादुनि रसायने ॥ ८३३

घृते हृद्ये गोरसे चामृतो धन्वन्तरौ सुरे । अमृतामलकी पथ्यागडूची[17]मागधीषु च ॥ ८३४

अनृतं कर्षणेऽलीके चाक्षतं स्यादहिंसिते । षण्ढे लाजेष्वर्दितं तु वातव्याधौ हते[18]ऽर्थिते ॥ ८३५

अजितस्तीर्थकृद्भेदे बुद्धे विष्णावनिर्जिते । अच्युतो द्वादश[19]स्वर्गे केशवाभ्रष्टयोरपि ॥ ८३६

अव्यक्तं प्रकृतावात्मन्यव्यक्तोऽस्फुटमूर्खयोः । अनन्तं खे निरवधावनन्तस्तीर्थकृद्भिदि ॥ ८३७

विष्णौ शेषेऽप्यनन्ता तु गडूची भूर्दुरालभा । विशल्या लाङ्गली दूर्वा सारिवा हैमवत्यपि ॥ ८३८

१. धनुश्चिह्नद्वयान्तःपाठो ग-घ-पुस्तकयोर्नास्ति. २. 'अर्गाटोऽपामार्गः' इति टीका. 'गाढे' ग-घ. ३. 'उद्दंशे क्षुद्रजन्तौ' इति टीका. 'उद्देशे' ख. ४. 'रुष्यति रोषाणः कल्याणपर्याणादयः इति साधुः' इति टीका. 'रोषणः क्रोधने' ख; 'रोषणोऽमर्षणे' ग-घ. ५. 'रोमोमयो' ख; 'रोगान्तरे' ग-घ. ६. 'बले' ग-घ. ७. 'अब्धि' ख. ८. 'ब्राह्मणी वाडवस्त्रियाम् । स्पृक्कायां पञ्जिकायां च वारुणी' ख. ९. 'श्रमणा सुलता मांसी मुण्डिनी च सुदर्शना । श्रवणो' ख. १०. 'निबिडा' ख. ११. 'सारणी त्वल्पसरिति प्रसारण्यौषधावपि । सिङ्खाणं' ख. १२. 'विस्तः षष्टिः पलशतानि' इति टीका. 'वित्ते' ख-ग-घ. १३. 'सुवर्णः' ग-घ. १४. 'यौतकद्रव्येऽप्यङ्गहारे भुजे हृतौ' ख; 'च हृतौ' ग-घ. १५. 'शेषाम्बु' ख; 'शेषे तु सुधामोक्षाप्स्वयाचिते' ग-घ. १६. 'स्वे' ग-घ. १७. 'माधवीषु' ख. १८. 'र्थिनि' ख. १९. 'सर्गे' ग-घ.



37

[1]अस्वन्तमशुभे क्षेत्रे चुल्ल्यामनवधौ मृतौ । अमतिः काले चण्डे [2]चाप्यङ्कुतिर्वह्निवेधसोः ॥ ८३९
[3]अग्निहोत्रिण्यगस्तिर्द्रुमुन्योः स्याददितिर्भुवि । देवमातरि पार्वत्यामंहतिस्त्यागरोगयोः ॥ ८४०
आपातः पाते तत्कालेऽप्याहृतः सादरेऽर्चिते । आख्यातं भाषितेत्यादावाघ्राते ग्रस्तर्शिङ्घिते ८४१
आप्लुतः स्नातके [5]स्नातेऽप्यावर्तः पयसां भ्रमे । आवर्तने चिन्तने चानर्तो जनपदे जने ॥ ८४२
समरे नृत्यशालायामाहतं तु मृषार्थके । गुणिते ताडिते चाप्याध्मातः शब्दितदग्धयोः ॥ ८४३
वातरोगेऽप्यथास्फोतः कोविदारार्कपर्णयोः । आस्फोता गिरिकर्ण्यां च वनमल्ल्यामथाचितः ८४४
छादिते शकटोन्मेये पलानामयुतद्वये । संगृहीतेऽप्यथायस्तः क्लेशिते तेजिते हते ॥ ८४५
क्रुद्धे क्षिप्तेऽथायतिः स्यात्प्रभावोत्तरकालयोः । दैर्घ्ये सङ्गेऽप्याकृतिस्तु जातौ रूपे वपुष्यपि ॥ ८४६
आयत्तिर्वासरे स्नेहे वशित्वे स्थाम्नि सीम्नि च । आसत्तिः संगमे लाभेऽप्यापत्तिः प्राप्तिदोषयोः ॥
आपद्यपीङ्गितं तु स्याच्चेष्टायां गमनेऽपि च । उत्तप्तं चञ्चले शुष्कमांससंतप्तयोरपि ॥ ८४८
उचितं विदितेऽभ्यस्ते मिते युक्तेऽप्यथोत्थितम् । वृद्धिमत्प्रोद्यतोत्पन्नेषूदितं तूद्गतोक्तयोः ॥ ८४९
[6]उद्धृतं स्या[7]दुत्तुलिते परिभुक्तोज्झितेऽपि च । उषितं व्युषिते प्लुष्टेऽप्युच्छ्रितं तूच्चजातयोः ॥ ८५०
प्रवृद्धे स्यादथोद्भ्रान्त उद्गीर्णे निर्मदद्विपे । उदात्तो दातृमहतोर्[8]ग्रन्थे च स्वरभिद्यपि ॥ ८५१
उन्मत्तो मुचुकुन्दे स्याद्धत्तूरोन्मादयुक्तयोः । उदन्तः साधौ वार्तायामुद्धातः समुपक्रमे ॥ ८५२
मुद्गरेऽभ्यासयोगाय कुम्भकादित्रयेऽपि च । पादस्खलन [9]उद्गङ्गेऽप्युन्नतिस्तार्क्ष्ययोषिति ॥ ८५३
उदये च समृद्धावप्येधतुर्नरि पावके । क्रन्दितं रुदिते हूतौ कलितं विदिताप्तयोः ॥ ८५४
[10]किरातः स्यादल्पतनौ भूनिम्बम्लेच्छयोरपि । किराती कुट्टिनी गङ्गा कृतान्तोऽक्षेमकर्मणि ॥ ८५५
सिद्धान्तयमदैवेषु गर्जितो मत्तकुञ्जरे । गर्जितं जलदध्वाने [11]ग्रन्थितं हतदब्धयोः ॥ ८५६
आक्रान्ते च गरुत्मांस्तु विहगे पन्नगाशने । गभस्तिः स्याद्दिनकरे स्वाहाकिरणयोरपि ॥ ८५७
गोदन्तो हरिताले स्यात्संनद्धे दंशितेऽपि च । गोपतिः शंकरे षण्ढे नृपतौ त्रिदशाधिपे ॥ ८५८
सहस्रकिरणे चापि ज्वलितौ दग्धभास्वरौ । जयन्तावैन्द्रिगिरिशौ जयन्त्युमापताकयोः ॥ ८५९
जीवन्[12]त्यामिन्द्रपुत्र्यां च जगती छन्दसि क्षितौ । जम्बूवप्रे जने लोके जामाता दुहितुः पतौ ८६०
सूर्यावर्ते वल्लभे च जीमूतो वासवेऽम्बुदे । घोषकेऽद्रौ भृतिकरे जीवन्ती शमिवन्दयोः ॥ ८६१
[13]जीवन्यां च गडूच्यां च जीवातुर्जीवनौषधे । जीविते च जृम्भितं तु [14]विचेष्टितप्रवृद्धयोः ॥ ८६२
जृम्भायां [15]स्फुटिते चापि त्वरितो वेगतद्वतोः । [16]त्रिगर्तो गणिते देशे त्रिगर्ता कामुकस्त्रि[17]याम् ८६३
घुर्घुर्यामथ तृणता तृणत्वे कार्मुकेऽपि च । दंशितो वर्मिते दष्टे स्रवन्ती[18]र्व द्रवन्त्यपि ॥ ८६४
नद्यामोषधिभेदे च द्विजातिर्ब्राह्मणेऽण्डजे । दुर्जातं व्यसनासम्यग्जातयोरथ दुर्गतिः ॥ ८६५
[19]नरके निःस्वतायां च दृष्टान्तः स्यादुदाहृतौ । शास्त्रेऽथ निकृतं विप्रलब्धे विप्रकृतेऽधमे ॥ ८६६
निरस्तः प्रेषितशरे संत्यक्ते त्वरितोदिते । निष्ठ्यूते प्रतिहते च निमित्तं हेतुलक्ष्मणोः ॥ ८६७

---

१. 'अश्मन्त' ख; 'अश्वन्त' ग-घ. २. 'स्यादन्तिकचिह्नवेधसोः' ख. ३. 'अग्निहोत्रेऽप्यगस्ति' ख. ४. 'संधिनि' ग-घ. ५. 'स्नाने' ख-ग-घ. ६. 'उद्वृत्तं' ग-घ. ७. 'दत्तुलिते' ख. ८. 'उद्ग्रन्थे' ग-घ. ९. 'उद्धतौ' ख. १०. 'कपोतः पारावते स्यात्कवकाख्यविहंगमे । कापोतं मज्जने सूर्म्यां कपोतानां च संहतौ । किरातः' ख. ११. 'ग्रथितं' ग-घ. १२. 'न्त्यां सिंहपुत्र्यां' ग-घ. १३. 'शाकभेदे' ख. १४. 'प्रवृद्धे च विचेष्टिते' ख. १५. 'स्फुरिते' ख. १६. 'तानितं स्तनिते वस्त्रे वाद्यभाण्डे गुणे स्तृतौ । त्रिगर्तो' ख. १७. 'स्त्रियोः' ग-घ. १८ 'वद्रवन्त्यपि' ख; 'चन्द्रवत्यपि' ग-घ. १९. 'दारिद्र्ये नरके चापि' ख.

**निवातो** वातरहिते दृढसंनाह आश्रये । **निर्मुक्तो** मुक्तनिर्मोकभुजङ्गे निष्परिग्रहे ॥ ८६८
**निशान्तं** सदने शान्ते प्रभातेऽप्यथ **निर्वृतिः** । मोक्षे मृत्यौ सुखे सौख्ये **निकृतिः** शठशाठ्ययोः ॥
भर्त्सनेऽभिभवे क्षेपे **निर्ऋतिर्निरुपद्रवे** । अलक्ष्म्यां दिक्पतौ चापि **नियती** दैवसंयमौ ॥ ८७०
**प्रभूतमुद्गते** प्राज्ये **प्रसूतं** जातपुष्पयोः । **प्रतीतः** सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः ॥ ८७१
**प्रहृतं** विस्तृतौ क्षुण्णे **पलितं** पङ्कतापयोः । पक्वकेशे केशपाके **पण्डितः** सिल्हधीमतोः ॥ ८७२
**प्रणीत** उपसंपन्ने कृते क्षिप्ते प्रवेशिते । संस्कृताग्नौ **पर्याप्तं** तु शक्ते पूर्णे निवारणे ॥ ८७३
यथेष्टे **प्रसृतस्त्वर्धाञ्जलौ** वेगिविनीतयोः । तते च **प्रसृता** जङ्घा **प्रमीतं** प्रोक्षितेऽमृते ॥ ८७४
**पर्यस्तं** तु हते स्रस्ते **प्रपातः** सौप्तिके भृगौ । **पर्वतो** गिरिदेवर्ष्योः **पक्षतिः** प्रतिपत्तिथौ ॥ ८७५
पक्षमूले **प्रसूतिः** स्यादपत्ये प्रसवेऽपि च । **पद्धतिः** पथि पङ्क्तौ च **प्रकृतिर्योनिशिल्पिनोः** ॥ ८७६
पौरामात्यादिलिङ्गेषु गुणसाम्यस्वभावयोः । प्रत्ययात्पूर्विकायां च **प्रततिर्विस्तृतिर्लता** ॥ ८७७
**प्रवृत्तिर्वृत्तौ** वार्तायां प्रवाहे **प्रार्थितं** हते । याचिते शत्रुसंरुद्धे **पार्वती** द्रुपदात्मजा ॥ ८७८
सल्लकी जीवनी गौरी **पिण्डितं** गुणिते घने । **पिशितं** मांसं **पिशिता** मांसिका **पीडितं** पुनः ८७९
बाधिते करणे स्त्रीणां यन्त्रान्तर्मर्दितेऽपि च । **प्रोक्षितं** सिक्तहतयो**र्भरतः** शबरे नटे ॥ ८८०
क्षेत्रे रामानुजे शास्त्रे दौष्यन्तावृषभात्मजे । तन्तुवाये **भारतं** तु शास्त्रे द्वीपांशभिद्यपि ॥ ८८१
**भारती** पक्षिणीवृत्तिभिदोर्वाच्यथ **भावितम्** । वासिते प्राप्ते **भासन्तो** भे सूर्ये रम्यभासयोः ८८२
**मथितं** निर्जलघोले व्यालोडितनिघृष्टयोः । **मालती** युवतौ काचमाच्यां जातिविशल्ययोः ॥ ८८३
ज्योत्स्नायां निशि नद्यां च **मुषितं** खण्डिते हृते । **मूर्छितं** सोच्छ्रये मूढे **रजतं** दन्तिदन्तयोः ८८४
धवले शोणिते हारे दुर्वर्णे ह्रदशैलयोः । **रसितं** स्वर्णादिलिप्ते रुतस्तनितयोरपि ॥ ८८५
**रेवती** बलभार्यायां नक्षत्रभिदि मातृषु । **रैवतः** स्यादुज्जयन्ते सुवर्णालौ पिनाकिनि ॥ ८८६
**रोहितो** लोहिते मीने मृगे रोहीतकद्रुमे । **रोहितमृजुशक्राख्ये** धीरे **ललितमीप्सिते** ॥ ८८७
लडिते हारभेदे च **लोहितो** मङ्गले नदे । वर्णभेदे **लोहितं** तु कुङ्कुमे रक्तचन्दने ॥ ८८८
गोशीर्षे रुधिरे युद्धे **वर्धितं** छिन्नपूर्णयोः । प्रसृते **वनितं** तु स्यात्प्रार्थिते सेवितेऽपि च ॥ ८८९
**वनितोत्पादितात्यर्थरोगनार्यपि** नार्यपि । **वसतिः** स्यादवस्थाने निशायां सदनेऽपि च ॥ ८९०

---

१. 'पुष्टौ' ख. २. 'सौस्थ्ये' ख. ३. 'केशस्य पाकः शौक्ल्यम्' इति टीका. 'शैलजाते' ख. ४. 'तृप्तौ' ख; 'तृप्ते' ग-घ. ५. 'कृच्छ्रे दोषे च पर्याप्तिः परिरक्षणे । प्राप्तौ कामे प्रसृतोर्धा' ख. ६. 'प्रयातः' ग-घ. ७. 'सौप्तिको रात्रिधारी' इति टीका. 'निर्झरे' ख. ८. 'अवटे पतने कृच्छ्रे. पक्षतिः प्रतिपत्तिथौ । पक्षमूले पर्वतस्तु देवर्षौ धरणीधरे । प्रसूतिः प्रसवोत्पत्तिः पुत्रेषु दुहितर्यपि । पद्धतिः' ख. ९. 'प्रवृत्तिर्वृत्तिवृत्तान्तप्रवाहेषु प्रवर्तते। प्रचित्तः शकटोन्मेये पलानामयुतद्वये । प्रकृतं तु प्रस्तुतेऽपि प्रकृतः प्रकृतिस्थिते । प्रार्थितं शत्रुसंरुद्धे याचिते निहतेष्टयोः । पार्वती सल्लकी गौरी जीवनी द्रुपदात्मजा । पिण्डितं गुणिते सान्द्रे पिशितं मांसवाचकम् । पिशिता मांसिकायां स्यात्पीडितं करणे स्त्रियाः । बाधिते यन्त्रसंमर्दे पुटितः स्यूतपाटिते । हस्तिपुटे पृषतस्तु मृगे बिन्दौ खरोहिते । श्वेतबिन्दुयुतेऽपि स्यात्प्रेषितं प्रेरिते गते । प्रोक्षितं' ख. १०.'पार्षती' ग-घ. ११.'घने' ग-घ. १२.'यन्त्रितं मर्दिते' ग-घ. १३.'दौष्मन्तौ भरतात्मजे' ग-घ. १४. 'र्वाच्यथ' ख. १५.'महती तु बृहत्यां स्याद्वीणायां नारदस्य च । मालती' ख. १६. 'मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च । मूर्छितं' ख. १७. 'स्वनित' ग-घ. १८. 'हरेऽसुरे' ख. १९. 'बलभेदे' ग-घ. २०. 'वृद्धयोः' ख.

प्रततिस्तु प्रतानिन्यां [1]विस्तारेऽप्यथ वापितम्। बीजाकृते मुण्डिते च व्याघातो योगविघ्नयोः ८९१
घातेऽथ व्यायतं दीर्घे व्यापृतेऽतिशये दृढे। वासन्तः [2]परपुष्टे स्यात्करभेऽवहिते विटे॥ ८९२
वासन्ती माधवीयूथी पाटलास्वथ वासितम्। वस्त्रच्छन्ने [3]ज्ञानमात्रे [4]भावितेऽप्यथ वासिता॥ ८९३
स्त्रीकरिण्योर्विवस्वांस्तु देवे सूर्येऽथ विश्रुतम्। ज्ञाते हृष्टे प्रतीते च विदितं बुधिते श्रुते॥ ८९४
विगतो निष्प्रभे वीते विविक्तो [5]वसुनन्दके। विविक्तं स्यादसंपृक्ते रहः पूतविवेकिषु॥ ८९५
[6]विधुतं कम्पिते त्यक्ते विकृतो रोग्यसंस्कृतः। बीभत्सश्च विनीतस्तु निभृते निर्जितेन्द्रिये॥ ८९६
वाणिजे साधु[7]र्वाच्यस्थे विनयग्राहिते हृते। विनतः प्रणते भुग्ने विनता पिटकाभिदि॥ ८९७
सुपर्णायां विहस्तस्तु विह्वले [8]पण्डकेऽपि च। विश्वस्तः कृतविश्वासे विश्वस्ता विधवा स्त्रियाम्॥ ८९८
विजातो विकृते जाते विजाता तु प्रसूतिका। विवर्तो नर्तने संघेऽपावृतौ विकृती रुजि॥ ८९९
डिम्बे विकारे [9]मद्यादौ विपत्तिर्यातनापदोः। विच्छित्तिः स्यादङ्गरागे [10]हावविच्छेदयोरपि॥ ९००
विधाता द्रुहिणे कामे विनेता [11]देशके नृपे। वृत्तान्तस्तु प्रकरणे कार्त्स्न्ये वार्ताप्रकारयोः॥ ९०१
बृहती क्षुद्रवार्ताक्यां छन्दोवसनभेदयोः। महत्यां वाचि वार्धान्यां वेल्लितं कुटिले धुते॥ ९०२
प्लुते वेष्टितं लसके रुद्धे स्त्रीकरणान्तरे। शकुन्तो विहगे भासे श्रीपतिर्विष्णुभूपयोः॥ ९०३
शुद्धान्तः स्याद्रहः कक्षान्तरे राज्ञोऽवरोधने। संख्यावान्[12]मितसुधियोः सरस्वानुदधौ नदे॥ ९०४
संवर्तः प्रलये[13]ऽक्षद्रौ संहतं मिलिते दृढे। स्खलितं छलिते भ्रंशे संस्कृतं लक्षणान्विते॥ ९०५
भूषिते कृत्रिमे शस्ते संघातो घातसंघयोः। [14]संहिता वर्णसंयोगे शास्त्रवेदैकदेशयोः॥ ९०६
स्थपतिः सौविदेऽधीशे बृहस्पतीष्टियज्वनि। कारुके च संततिस्तु तनये दुहितर्यपि॥ ९०७
परम्पराभवे पङ्क्तौ गोत्रविस्तारयोरपि। संनतिः प्रणतिध्वन्योः संगतिर्ज्ञानसङ्गत्योः॥ ९०८
संमतिर्वा[15]ञ्छानुमत्योः समितिर्युधि संगमे। साम्ये सभाया[16]मीर्यादौ संवित्तिर्ध्येयविवादयोः॥ ९०९
स्थापितं निश्चिते न्यस्ते स्तिमितौ क्लिन्ननिश्चलौ। सिकताः स्युर्वालुकायां सिकता सैकते रुजि॥
सुकृतं तु शुभे पुण्ये सुविधानेऽथ सुव्रता। सुखदोह्यसौरभेय्यां सुव्रतोऽर्हति सद्व्रते॥ ९११
सुनीतिर्ध्रुवमाता स्यात्[17]सुनयोऽप्यथ सूनृतम्। मङ्गले प्रियसत्योक्तौ हसन्ती शाकिनीभिदि॥ ९१२
मल्लिकाङ्गारधान्योश्च हारीतो विहगान्तरे। मुनौ छद्मन्यथाश्वत्थः पिप्पले गर्दभाण्डके॥ ९१३

---

१. 'विस्तारे वहतुः पथि। वृषभे वहतिर्धेन्वां सचिवेऽप्यथ वापितम्' ख. २. 'कोकिले मुद्रे' ख. ३. 'ज्ञानमात्रे यथा—'वासितं पादपेष्वपि' इति' इति टीका. 'ज्ञातमात्रे' ख. ४. 'भाविते विहगारवे। वासिता करिणीनार्यो विहितं तु कृते श्रुते। विदितं स्वीकृते ज्ञाते विवस्वान्देवसूर्ययोः। विश्रुतं तु प्रतीते स्याज्ज्ञातहर्षितयोरपि। विगतो' ख. ५. 'वसुनन्दकः स्फुरकः' इति टीका. 'वस्तु निन्दके' ख; 'वसुनन्दने' ग-घ. ६. 'विधूतं' ग-घ. ७. 'वाक्यस्थे' ख. ८. 'पण्डकेऽकरे' ख. ९. 'मद्यादयो मद्यमांसनवनीतमधुदुग्धदधितैलपक्वान्नगुडरूपा दश' इति टीका। 'मघादौ' ग-घ. १०. 'हावधिच्छेदयो' ग-घ. ११. 'देशिके' ग-घ. १२. 'बुधमितयोः' ख. १३. 'क्षुद्रौ' ग-घ. १४. 'नरके च समाप्तिः स्यादवसाने समर्थने। संहिता' ख. १५. 'वाक्यानु' ख. १६.'ईर्या आदिर्यस्यासौ ईर्यादिः। यदाह—'ईर्या भाषैषणादाननिक्षेपोत्सर्गसंज्ञकाः। पञ्चाङ्गः समितिः' इति' इति टीका. 'सभायां संवित्तिः प्रतिपत्त्यविवादयोः' ख-ग-घ. १७.'सुनयः सुरतं पुनः। मैथुने सुरता देवभावे च सुहितः पुनः। तृप्तावुक्ते सुष्ठुहिते सूनृतं प्रियसत्यवाक्। मङ्गलं च हसन्ती तु मल्लिकाङ्गारधानिका। स्मिताद्याशाकिनीभेदो हम्मितं क्षिप्तदग्धयोः। हारीतो मुनिभेदे स्यात्कैतवे विहगान्तरे। हृषितं विस्मिते प्रीते प्रणते हृष्टरोमणि। अश्वत्थो गर्दभाण्डे स्यात्पिप्पले संस्रुतौ जले। अश्वत्थेष' ख.

अश्वत्थेषपौर्णमास्यामतिथिः कुशनन्दने । कुध्यां[1]गन्तावथोपस्थः पायुमेढ्राङ्कयोनिषु ॥ ९१४
उन्माथो मारणे कूटयन्त्रघातकयोरपि । क्षे[2]वथुः कासे छिक्कायां कायस्थोऽक्षरजीवकः ॥ ९१५
परमात्मा च कायस्था हरीतक्यामलक्यपि । [3]दमथो [4]दमने दण्डे निर्ग्रन्थो निःस्वमूर्ख[5]योः ९१६
([6]क्रमेण च निशीथस्तु रात्रिमात्रार्धरात्रयोः । प्रमथः शंकरगणे प्रमथा तु हरीतकी ॥ ९१७
मन्मथः कामचिन्तायां पुष्पचापकपित्थयोः) । रुदथः कुक्कुटशुनोर्वे[7]ञ्जथः पिककालयोः ॥ ९१८
वरूथं तु तनुत्राणे रथगोपनवेश्मनोः । वयःस्थो मध्यमवया वयःस्था शाल्मलीद्रुमे ॥ ९१९
ब्राह्मी गडूची काकोलीसूक्ष्मैलामलकीषु च । वमथुर्वमने कासे [8]गजस्य कर[9]सीकरे ॥ ९२०
विदथो योगिनि प्राज्ञे शमथः सचिवे शमे । शपथः कार आक्रोशे शपने च [10]सुतादिभिः॥ ९२१
[11]शयथः स्यादजगरे नि[12]द्रालौ मरणेऽपि च । षड्ग्रन्थः करञ्जभेदे षड्ग्रन्था तु वचा सठी ९२२
समर्थः शक्तिसंपन्ने संबद्धार्थे हितेऽपि च । सिद्धार्थः सर्षपे शाक्यसिंहेऽ[13]न्त्यजिनवप्तरि ॥ ९२३
अर्बुदः पर्वते मांसकीलके दशकोटिषु । अर्धेन्दुः स्यादतिप्रौढस्त्रीगुह्याङ्गुलियोजने ॥ ९२४
गलहस्ते नखाङ्केऽर्धचन्द्रेऽङ्गदस्तु वालिजे । अङ्गदं तु केयूरे स्याद[14]ङ्गदा याम्यदिग्गजी ॥ ९२५
आस्पदं कृत्यपदयोरामोदो गन्धहर्षयोः । आक्रन्दो दारुण[15]रणे सारावरुदिते नृपे ॥ ९२६
क्षणदं तोये क्षणदो गणके क्षणदा निशि । कपर्दी पार्वतीभर्तुर्जटाजूटे वराटके ॥ ९२७
कर्णान्दुः स्यात्कर्णपाश्युत्क्षिप्तिका कुमुदः कपौ । दिग्नागनागयोर्दैत्यविशेषे च सितोत्पले ॥ ९२८
कुमुदा कुम्भीगम्भार्योः कुसीदं वृद्धिजीवने । वृद्ध्याजीवे कौमुदस्तु कार्तिके कौमुदीन्[16]दुभा ॥ ९२९
गोविन्दस्तु गवाध्यक्षे वासुदेवे बृहस्पतौ । गोष्पदं गो[17]खुरश्वभ्रे गवां च गतिगोचरे ॥ ९३०
जलदो मुस्तके मेघे जीवदो रिपुवैद्ययोः । ग्रन्थिपर्णे [18]तमोनुत्तु शशि[19]मार्तण्डवह्नि[20]षु ॥ ९३१
[21]दारदो विषभेदे स्यात्पारदे हिङ्गुलेऽपि च । दायादौ सुतसपिण्डौ [22]धनदौ दातृगुह्यकौ ॥ ९३२
नलदा मांस्यां नलदमुशीरमकरन्दयोः । नर्मदा रेवानिर्माल्योर्निषादः श्वपचे स्वरे ॥ ९३३
निर्वादस्त्[23]यक्तवादेऽपवादे च प्रमुदो मुदि । प्रमदा स्त्री प्रसादोऽनुग्रहस्वास्थ्य[24]प्रसत्तिषु ॥ ९३४
काव्यगुणे प्रल्हादस्तु निनादे दानवान्तरे । प्रतिपत्संविदि तिथौ प्रासादो राजमन्दिरे ॥ ९३५
देवतायतने चापि मर्यादा स्थितिसीमयोः । माकन्दः स्यात्सहकारे माकन्द्यामलकी फले ॥९३६
मुकुन्दः पारदे रत्नविशेषे गरुडध्वजे । मेनादः केकिनि च्छागे मार्जारे वरदः पुनः ॥ ९३७
प्रसन्ने शान्तचित्ते च वरदा तु कुमारिका । विशदः पाण्डुरे व्यक्ते शारदो वत्सरे नवे ॥ ९३८
शरद्भवे पीतमुद्गे शालीनेऽप्यथ शारदी । [25]सप्तपर्णाम्बुपिप्पल्योः [26]सुनन्दा रोचनाङ्गना ॥ ९३९

१. 'गन्तावव्यथस्तु व्यथाहीने च पन्नगे । अव्यथा तु हरीतक्यामुपस्थो योनिलिङ्गयोः । उत्सङ्गगुदयोश्चापि समीपस्थितवत्यपि । उन्माथो' ख. २. 'उदधस्ताम्रचूडे स्यान्महेन्द्रमहकामुके । क्षवथुः' ख. ३. गोग्रन्थिस्तु करीषे स्याद्गोष्ठे गोजिह्विकौषधौ । दमथो' ख. ४. 'दमके' ग-घ. ५. भिक्षुमूर्खयोः' ख. ६. धनुश्चिन्हान्तर्गतपाठो ग-घ-पुस्तकयोस्त्रुटितः. ७. 'वञ्चतीति वञ्चथः' इति टीका. 'वर्चथः' ख; 'वरूथः' ग. ८. 'मातङ्ग क' ख. ९. 'शीकरे' ग. १०. 'श्रुतादि' ख; 'शपनं सुतादिशरीरस्पर्शः' इति टीका. ११. 'शयथु' ग. १२. 'निद्रादौ' ख. १३. 'अन्त्यजिनो महावीरस्तस्य वप्ता जनकः' इति टीका. 'व्यञ्जनव' ख; 'अपि जिनवप्तरि' ग. १४. 'अङ्गजा' ग. १५. 'रसे' ग. १६. 'तु भा' ख. १७. 'क्षुर' ख. १८. 'तमोभित्तु' ख. १९. 'मार्तङ्ग' ख. २०. इतः परमित्यधिकः पाठः—'तोयदो मुस्तके मेघे तोयदं नवनीतजे' ख. २१. 'दरदो वि' ख. २२. 'दोहदो गर्भलक्षणे । अभिलाषे तथा गर्भे' ख. २३. 'लोकवादे' ग. २४. 'प्रसक्तिषु' ग. २५. 'सप्तपर्ण्यम्बु' ग. २६. 'संभेदः सिन्धुसंगमे । पुष्पादीनां विकासेऽपि स्यात्सुनन्दा तु रोचने' ख.

जननी[1] बाहुबलिनोऽप्यगाधो[2]ऽस्ताघरन्ध्रयोः । अवधिः स्यादवधाने कालसीमबिलेष्वपि ॥ ९४०
आनद्धं बद्धमुरजाद्याविद्धः क्षिप्त[3]चक्रयोः । आबन्धो भूषणे प्रेम्णि बन्धेऽथोत्सेध उच्छ्रये ९४१
संहननेऽप्युपाधिस्तु [4]कर्मध्याने विशेषणे । कुटुम्बव्यापृते छद्मन्युपधिर्व्याधि[5]चक्रयोः ॥ ९४२
कबन्धं [6]तुन्दे रुण्डेऽप्सु कबन्धो राहुरक्षसोः । दुर्विधो दुर्जने निःस्वे न्यग्रोधो वटपादपे ॥ ९४३
शम्यां व्यामे न्यग्रोधी तु मो[7]हनाख्यौषधीभिदि । वृषपर्ण्यां नि[8]षधस्तु पर्वते कठिने [9]स्वरे ॥ ९४४
देशतद्राजयोश्चापि निरोधो नाशरोधयोः । प्रसिद्धो भूषिते ख्याते प्रणिधिर्याचने चरे ॥ ९४५
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके । मागधो मगधोद्भूते शुक्लजीरकबन्दिनोः ॥ ९४६
वैश्यतः क्षत्रियापुत्रे मागधी स्यात्तु पिप्पली । यूथी भाषाविशेषश्च विबुधः पण्डिते सुरे ॥ ९४७
वि[10]स्रब्धोऽनुद्भटे शान्ते विश्वस्तात्यर्थयोरपि । विवधो वीवधो भारे पर्याहाराध्वनोरपि ॥ ९४८
संबाधः संकटे योनौ संरोधः क्षेपरोधयोः । संनद्धो वर्मिते व्यूढे समाधिः स्यात्समर्थने ॥ ९४९
चित्तैकाग्र्यनियमयोर्मौने संनिधिरन्तिके । प्रत्यक्षे चाथ संसिद्धिः सम्यक्सिद्धिस्वभावयोः ॥ ९५०
अयनं पथि गेहेऽर्कस्योदग्दक्षिणतोगतौ । अम्लानस्त्वमले झिण्टीभेदेऽर्जुनं तृणे सिते ॥ ९५१
नेत्ररोगेऽर्जुनः पार्थे [11]हैहये [12]केकिनि द्रुमे । मातुरेकसुते चार्जुन्युषा गौः [13]कुट्टनी सरित् ॥ ९५२
अङ्गनं प्राङ्गणे यानेऽप्यङ्गना तु नितम्बिनी । स्यादपानं गुदेऽपानस्तु तद्वायावञ्जनं [14]मेशौ ॥ ९५३
रसाञ्जनेऽक्तौ सौवीरेऽथाञ्जनो दिग्गजद्गजे । अञ्जना हनुमन्मातर्यञ्जनी लेप्ययोषिति ॥ ९५४
अवनं रक्षणप्रीत्योरर्यमा पितृदैवते । तरणौ सूर्यभक्तायामशनिर्वज्रविद्युतोः ॥ ९५५
अरत्निः कूर्परे पाणौ [15]सप्रकोष्ठतताङ्गुलौ । आसनं विष्टरे [16]हस्तिस्कन्धे यात्रानिवर्तने ॥ ९५६
आसनो जीवकतरा [17]वासनी पण्यवीथिका । [18]आपन्नं सापदि प्राप्तेऽप्यादानं वाजिभूषणे ॥ ९५७
ग्रहणेऽथोत्थानं सैन्यपौरुषे युधि पुस्तके । उद्यमोद्गमहर्षेषु वास्त्वन्तेऽङ्गनचै[19]त्ययोः ॥ ९५८
[20]मलोत्सर्गेऽप्यथोत्तानः सुप्तो[21]न्मुखागभीरयोः । उद्यानं स्यान्निःसरणे वनभेदे प्रयोजने ॥ ९५९
उद्धानमुद्गमे चुल्ल्यामुदानः पवनान्तरे । सर्पभिद्युदरावर्ते कमनोऽशोकपादपे ॥ ९६०
कामिकामाभिरूपेषु कठिनं निष्ठुरो[22]खेयोः । कठिनी तु [23]खटिका स्यात्कठिना गुड[24]शर्करा ॥ ९६१
कर्तनं योषितां तूलसेवने छेदनेऽपि च । क्रन्दनं रोदने ह्वाने [25]कल्पनं क्लृप्तिकर्तने ॥ ९६२
[26]कल्पनेभसज्जनायां कलापी प्लक्षकेकिनोः । कञ्चुकी जोङ्गकतरौ [27]महल्ले पन्नगे विटे ॥ ९६३
काञ्चनं हेम्नि किञ्जल्के काञ्चनो नागकेसरे । उदुम्बरे काञ्चनारे पुन्नागे चम्पकेऽपि च ॥ ९६४
काञ्चनी तु हरिद्रायां कानीनः कन्यकासुते । कर्णे व्यासे काननं तु ब्रह्मास्ये विपिने गृहे ॥ ९६५
कुहनो [28]मूषिके सर्पे कुहना दम्भकर्मणि । कुण्डली वरुणे सर्पे मयूरे कुण्डलान्विते ॥ ९६६
केतनं सदने चिह्ने कृत्ये चोपनिमन्त्रणे । केसर्यर्वणि पुन्नागे नागकेसरसिंहयोः ॥ ९६७

---

१. 'बाहुबलिन आदिनाथपुत्रस्य' इति टीका. 'मर्यादया स्थितौ नार्याम्' ख. २. 'अस्थाघरन्ध्रयोः' ख. ३. 'वक्र' ख-ग. ४. 'धर्म' ख-ग. ५. 'वक्र' ख. ६. 'सलिले तुण्डे' ख; 'उदके' ग. ७. 'सोहनाख्यौषधीभिदि' ग. ८. 'निषेधः' ख. ९. 'श्वरे' ख. १०. 'विश्रब्धोऽनु' ख-ग. ११. 'हैहये' ख-ग. १२. 'ककुभद्रु' ग. १३. 'कुट्टिनी' ख. १४. 'पशौ' ख; 'मस्तै' ग. १५. 'सकोष्ठविततान्न' ग. १६. 'हस्तस्क' ग. १७. 'आसीनी' ख. १८. 'आपन्नः' ख-ग. १९. 'चित्य' ख; २०. 'मलोत्स' ख-ग. २१. 'उन्मुखग' ख-ग. २२. 'रोषयोः' ख-ग. २३. 'खट्टिका' ग. २४. 'शर्करी' ग. २५. 'कल्पने' ख-ग. २६. इभसज्जनायां हस्तिसज्जनायाम्. 'कल्पने भस्वज्ज' ख. २७. 'सौविदल्ले नटेऽप्यहौ' ख. २८. 'मूषके' ख.

**कौपीनं** गुह्यदेशे स्यादकार्ये [1]चीवरान्तरे । **कौलीनं** जनवादे हि पशुपक्षिशुनां युधि ॥ ९६८
[2]अकार्ये गुह्यकौलीन्ये **गहनं** वनदुःखयोः । गह्वरे कलिले चापि **गन्धनं** तु प्रकाशने ॥ ९६९
सूचनोत्साहहिंसासु **गर्जनं** [3]स्तनिते क्षुधि । **गृञ्जनं** विषदि[4]ग्धस्य पशोर्मांसे रसोनके ॥ ९७०
**गोस्तनो** हारभेदे स्याद्गोस्तनी हारह[5]ूरिका । **घट्टना** चलनावृत्त्योश्चलनः पादक[6]म्पयोः ॥ ९७१
**चलनं** कम्पे **चलनी**[7]चौरीभिद्वस्त्रघर्घरी । **चन्दनो** वानरभिदि श्रीखण्डे **चन्दनी** नदी ॥ ९७२
**चेतनः** स्यात्सहृदयप्राणिनोश्चेतना तु धीः । [8]**चोलकी** तु नागरङ्गे किष्कुपर्वकरीरयोः ॥ ९७३
**छर्दनो**ऽलम्बुषे निम्बे **छर्दनं** वमनेऽपि च । **छदनं** [9]पर्णगरुतोश्छेदनं कर्तने भिदि ॥ ९७४
**जयनं** विजयेऽश्वादिसंनाहे **जघनं** कटौ । [10]स्त्रियाः श्रोणिपुरोभागे **जवनो** वेगिवेगयोः ॥ ९७५
वेगयश्वे नीवृति **जवन्य**पट्यामौषधीभिदि । **जीवनस्तु** [11]पुत्रंजीवे **जीवनं** वृत्तिवारिणोः ॥ ९७६
स्याज्जीवना तु मेदायां **जीवनी** तु मधु[12]स्रवा । [13]**तलिनं** विरले स्वच्छे स्तोकेऽथ **तपनो** रवौ ॥ ९७७
भल्लाते नरके ग्रीष्मे **तलुनो** यूनि मारुते । **तमोघ्नो** वह्निसूर्येन्दुबुद्धकेशवशंभुषु ॥ ९७८
**तपस्वी** तापसे दीने **तरस्वी** वेगि[14]शूरयोः । **तेमनं** व्यञ्जने क्लेदे **तेमनी** चुल्लिभिद्यपि ॥ ९७९
**तोदनं** व्यथने तोत्रे [15]**दहनो** दुष्टचेष्टिते । भल्लाते चित्रकेऽग्नौ च **दमनो** वीरपुष्पयोः ॥ ९८०
**दर्शनं** दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयोः । स्वप्नलोचनयोश्चापि **दंशनं** वर्मदंशयोः ॥ ९८१
[16]**द्विजन्मा** वौ रदे विप्रे [17]**दुर्नामा** पुनरर्शसि । **दुर्नामा** दीर्घको[18]श्यां स्याद्देवनोऽक्षेऽथ **देवनम्** ॥ ९८२
व्यवहारे जिगीषायां क्रीडायां **धमनो**ऽ[19]नले । क्रूरे भस्त्राध्मापके च **धमनी** कंधरा [20]सिरा ॥ ९८३
दरिद्रा च **धावनं** तु गते शौचेऽथ **नन्दनम्** । इन्द्रोद्याने **नन्दनस्तु** तनये हर्षकारिणि ॥ ९८४
**नलिनं** नलिकातोयाम्बुजेषु **नलिनी** पुनः । पद्माकरे गङ्गाब्जिन्यो **निधनं** कुलनाशयोः ॥ ९८५
**निदानं** कारणे शुद्धौ तपसः फलयाचने । वत्सदाम्न्यवसाने च [21]**प्रधनं** युधि [22]दारणे ॥ ९८६
**प्रधानं** प्रकृतौ बुद्धावुत्तमे परमात्मनि । महामात्रे **प्रसूनं** तु प्रसूते फलपुष्पयोः ॥ ९८७
**प्रज्ञानं** बुद्धौ चिह्ने च स्यात्प्रसन्नं प्रसादवत् । **प्रसन्ना** तु मदिरायां **पवनो** वायुवल्लयोः ॥ ९८८
**पवनं** पुनरापाके **पद्मिनी** योषिदन्तरे । अब्जेऽब्जिन्यां सरस्यां च **पावनं** जलकृच्छ्रयोः ॥ ९८९
**पावनः** पावके [23]सिद्धेऽध्यासे पावयितर्यपि । **पावनी** तु हरीतक्यां **पाठीनो** गुग्गुलद्रुमे ॥ ९९०
पाठके मीनभेदे [24]च **पिशुनः** सूचके खले । [25]कप्यास्ये **पिशुना** स्पृक्का स्यात्पिशुनं तु कुङ्कुमम् ॥ ९९१
**पीतनं** तु हरिताले पीतदारुणि कुङ्कुमे । **पीतनः** पुनराम्राते **पूतना** तु हरीतकी ॥ ९९२
[26]वंध्या च वासुदेवस्य **पृतना**नीकिनी चमूः । सेना सैन्यविशेषश्च **फाल्गुनो** मासपार्थयोः ॥ ९९३
नदीजेऽर्जुनवृक्षे च [27]**फाल्गुनी** पूर्णिमाभिदि । **भवनं** सदने भावे **भण्डनं** कवचे युधि ॥ ९९४

---

१. 'चाम्बरान्तरे' ग. २. 'कायगुह्ये च कौ' ख. ३. 'स्वनिते' ग. ४. 'दग्धस्य' ख. ५. 'तूरिका' ख. ६. 'कम्प्रयोः' ख. ७. 'वारीभिः' ग. ८. 'चोलना तु' ख; 'चोलनं तु नागरङ्गम्' ग. ९. 'पर्णे गरुते' ग. १०. 'स्त्रियः श्रेणि' ग. ११. 'भवेत्पुत्रे' ग-घ. १२. 'श्रवा' ख. १३ 'तलनं' ख. १४. 'वेगिशू' ग-घ. १५. 'दहनो दु' ख; 'दहने दु' ग-घ. १६. 'द्विजन्मानौ रदविप्रौ' ग-घ. १७. 'दुर्नाम' ग-घ. १८. 'कोशी' ग-घ. १९. 'अनले' ग-घ. २०. 'शिरा' ग-घ. २१. 'प्रधान' ग-घ. २२ 'दारुणे' ख. २३. 'सिद्धे व्यासे' ग. २४. 'प्रार्थना याचने स्मृता । अभियाने रोधने च' इति ख-पुस्तकेऽधिकः पाठः. २५. 'कप्यासं कपिमुखम्' इति टीका. 'कार्पासे' ग-घ. २६. 'दुग्धदा वा' ग-घ. २७. 'फल्गुनीपू' ख.

खलीकारे[1] भट्टिनी तु ब्राह्मण्यां[2] नृपयोषिति । भावना वासना ध्यानं भुवनं[3] लोकखाम्बुषु ॥ ९९५
भूतात्मा द्रुहिणे देहे मदनः सिक्थके स्मरे[4] । राढे वसन्ते धत्तूरे मलिनं कृष्णदोषयोः ॥ ९९६
मलिनी रजस्वलायां मण्डनं तु प्रसाधने । मण्डनोऽलंकरिष्णौ स्यान्मार्जनो लोध्रशाखिनि ॥ ९९७
मार्जनं शुद्धिकरणे मार्जना मुरजध्वनौ । मालिन्युमायां गङ्गायां चम्पावृक्ष[5]प्रभेदयोः ॥ ९९८
मालक्यां मिथुनो राशौ मिथुनं पुंस्त्रियोर्युगे । मुण्डनं रक्षणे क्षौरे मेहनं मूत्रशिश्नयोः ॥ ९९९
मैथुनं रतसंगत्योर्यमनं यमबन्धयोः । यापनं कालविक्षेपे निरासे[6] वर्तनेऽपि च ॥ १०००
योजनं तु चतुःक्रोश्यां स्याद्योगपरमात्मनोः । रसनं ध्वनिते स्वादे रसज्ञाराज्ञयोरपि ॥ १००१
रञ्जनं रञ्जके रक्तचन्दनेऽप्यथ रञ्जनी[7] । मञ्जिष्ठारोचनानीलीगुडासु[8] रजनी निशि ॥ १००२
लाक्षानीलीहरिद्रासु राधनं प्राप्तितोषयोः । साधने रेचनी गुन्द्रा[9]दन्ती रोचनिका[10] त्रिवृत् ॥ १००३
रोदनं त्वश्रुणि क्रन्दे रोचनः कूटशाल्मलौ । रोचना रक्तकह्लारे गोपित्ते वरयोषिति ॥ १००४
लङ्घनं भोजनत्यागे प्लवने क्रमणेऽपि च । ललामवल्ललामा[11]श्वे शृङ्गे चिह्नपताकयोः ॥ १००५
रम्ये प्रधाने भूषायां पुण्ड्रे पुच्छप्रभावयोः । ललना स्त्रीनाडि[12]जिह्वा लाञ्छनं[13] लक्ष्म[14]संज्ञयोः ॥ १००६
लाङ्गली स्याद्धलभद्रे नालिकेरेऽथ लेखनम् । भूर्जे छेदे लिपिन्यासे व्यसनं निष्फलोद्यमे ॥ १००७
दैवानिष्टफले सक्तौ स्त्रीपानमृगयादिषु । पापे विपत्तावशुभे व्यञ्जनं श्मश्रुचिह्नयोः ॥ १००८
तेमनेऽवयवे कादौ वमनं छर्दनेऽर्दने । वसनं छादने वस्त्रे वर्जनं त्यागहिंसयोः ॥ १००९
वर्धनं छेदने वृद्धौ वर्धनी तु गलन्तिका । वपनं मुण्डने बीजाधानेऽथ वर्तनी पथि ॥ १०१०
वर्तने तर्कुपिण्डे[15] च वनश्वा विप्रतारके[16] । शार्दूले गन्धमार्जारे वामनो दिग्गजेऽच्युते ॥ १०११
खर्वेऽङ्कोठे[17] वाहिनी तु सेनातन्नदसिन्धुषु । स्याद्वाणिनी तु नर्तक्यां छेकमत्तस्त्रियोरपि ॥ १०१२
वितानं कदके[18] यज्ञे विस्तारे क्रतुकर्मणि । तुच्छे मन्दे वृत्तभेदे शून्यावसरयोरपि[19] ॥ १०१३
विज्ञानं कार्मणे ज्ञाने विलग्नं मध्यलग्नयोः । विक्लिन्ना जीर्णशीर्णार्द्रौ विलीनौ लीनविद्रुतौ ॥ १०१४
विषण्णः शिरीषतरौ विषघ्ना त्रिवृतामृता । विच्छिन्नं तु कुटिले स्यात्समालब्धविभक्तयोः ॥ १०१५
विमानं देवतायाने सप्तभूमिगृहे[20]ऽपि च । विधानं हस्तिकवले प्रेरणेऽभ्यर्चने धने ॥ १०१६
चेतनोपायविधिषु प्रकारे वैरकर्मणि । विपन्नो भुजगे नष्टे विश्वप्सा वह्निचन्द्रयोः ॥ १०१७
समीरणे कृतान्ते च विलासी भोगि[21]सर्पयोः । विषयी विषयासक्ते वैषयिकजने नृपे ॥ १०१८
कामे विषयि हृषीके व्युत्थानं प्रतिरोधने । विरोधावरणे[22] स्वैरवृत्तौ समधिपारणे ॥ १०१९
वृजिनः केशे वृजिनं भुग्नेऽघे रक्तचर्मणि । वेष्टनं मुकुटे कर्णशष्कुल्युष्णीषयोर्वृतौ ॥ १०२०
वेदना ज्ञाने पीडायां शयनं स्वापशय्ययोः । रते शमनस्तु यमे शमनं शान्ति[23]हिंसयोः ॥ १०२१
श्वसनं श्वासे श्वसनः पवने मदनद्रुमे । शकुनं स्याद्दैवशंसिनिमित्ते शकुनः खगे ॥ १०२२
शकुनिः खगे करणभेदे कौरवमातुले । शतघ्नी तु वृश्चिकाल्यां शस्त्रभेदकरञ्जयोः ॥ १०२३

---

१. 'खलिकारे' ख. २. 'ब्राह्मण्यां' ख-ग-घ. ३. 'लोकनाकारखाम्बुषु' ग-घ. ४. 'अस्मरे' ग-घ. ५. 'वृक्ष प्र' ख-ग. ६. 'निराशे' ख. ७. 'राजिनी' ग-घ. ८. 'क्षुद्दीषु' ख; 'गण्डासु' ग-घ. ९. 'गुन्द्रादं' ग-घ. १०. 'रोचनका' ग-घ. ११. 'कलामा' ग-घ. १२. 'नारी' ग-घ. १३. 'लाञ्चनं' ख. १४. 'लक्ष्याचिह्न' ग-घ. १५. 'पीठे' ग-घ. १६. 'अपि प्रता' ख. १७. 'कोठे' ख; काण्डे' ग-घ. १८. 'कदक उल्लोचः' इति टीका. 'कल्लोले' ख. १९. 'वसथयोः' ख. २० 'सप्तभूमगृ' ख; 'सार्वभौमगृ' ग-घ. २१. 'भोगिस' ख-ग-घ. २२. 'आचरणे' ख-ग-घ. २३ 'शान्तर्हि' ग-घ.

शासनं नृपदत्तोर्व्यां शास्त्राज्ञालेखशास्तिषु । शिखरी कोट्टकोयष्टयोर्द्रुमेऽपामार्गशैलयोः ॥ १०२४
शिखण्डी कुक्कुटे चित्रमेखले बर्हिबर्हयोः । भीष्मारौ बाणे शृङ्गारी सुवेषे क्रमुके द्विपे ॥ १०२५
श्लेष्मघ्ना स्यान्मल्लिकायां कम्पिल्यकफणिज्जयोः । शोभनः सुन्दरे योगे सवनं स्नानयागयोः १०२६
सोमनिर्दलने चापि सदनं जलसद्मनोः । स्तननं कुन्थने मेघगर्जितध्वनिमात्रयोः ॥ १०२७
स्पर्शनं हृषीके दाने स्पर्शे च स्पर्शनोऽनिले । स्यन्दनं स्रवणे तोये स्यन्दनस्तिनिशे रथे ॥ १०२८
संव्यानं छादने वस्त्रे समानो देहमारुते । वर्णभित्सत्समैकेषु संतानोऽपत्यगोत्रयोः ॥ १०२९
संततौ देववृक्षे च संस्थानं त्वाकृतौ मृतौ । चतुष्पथे संनिवेशे सज्जनं घट्टगुल्मके ॥ १०३०
सज्जनस्तु कुलीने स्यात्सज्जनापि च कल्पना । संधानं तु संघट्टनेऽभिषवे संधिनी तु गौः १०३१
वृषाक्रान्ता कालदुग्धा [[11]स्थापनं तु निवेशने । पुंसवने समाधौ च] साधनं सिद्धिसैन्ययोः १०३२
उपाये[12]ऽनुगमे मेण्ढ्रे[13] निवृत्तौ कारके वधे । दापने मृतसंस्कारे प्रमाणे गमने धने ॥ १०३३
सुकर्मा योगभेदे स्यात्सत्क्रिये देवशिल्पिनि । सुदामा पर्वते मेघे सुधन्वा त्वष्टृधन्विनोः ॥ १०३४
सुपर्वा पर्वणि शरे त्रिदशे वंशधूमयोः । सूचना स्यादभिनये गन्धने व्यधने दृशि ॥ १०३५
सेवनं सीवनोपास्त्योः सेनानीः सैन्यपे गुहे । हायनोऽर्चिर्व्रीहिर्वर्षे ह्लादिनी वज्रविद्युतोः १०३६
हिण्डनं क्रीडारतयोर्यानेऽनूपस्तु सैरिभे । जलप्रायेऽप्यथावापः पानभेदालवालयोः ॥ १०३७
प्रक्षेपे भाण्डपचनेऽप्याक्षेपः परिभर्त्सने । काव्यालंकरणाकृष्टयोः स्यादाकल्पस्तु मण्डने ॥ १०३८
कल्पने चाप्युलपस्तु गुल्मिनीतृणभेदयोः । उडुपः प्लवशशिनोः कलापो बर्हतूणयोः ॥ १०३९
संहतौ भूषणे काञ्च्यां कच्छपो मल्लबन्धके । कमठे कच्छपी वीणा कसिपुर्भोज्यवस्त्रयोः ॥ १०४०
एकैकस्मिन्द्वयोश्चापि कश्यपो मुनिमीनयोः । काश्यप्युर्व्यां कुतपस्तु छागकम्बलदर्भयोः ॥ १०४१
वैश्वानरे दिनकरे द्विजन्मन्यतिथौ गवि । भागिनेयेष्टमांशेऽह्नो वाद्येऽथ कुटपो मुनौ ॥ १०४२
निष्कुटे मानभेदे च कुणपः पूतिगन्धिनि । शवे जिह्वापस्तु शुनि व्याघ्रे द्वीपिविडालयोः ॥ १०४३
पादपो द्वौ पादपीठे पादपा पादरक्षणे । रक्तपः स्याद्यातुधाने रक्तपा तु जलौकसि ॥ १०४४
विटपः[21] पल्लवे स्तम्बे विस्तारे षिड्गशाखयोः । सुरूपस्तु बुधे रम्ये प्राप्तरूपाभिरूपवत् ॥ १०४५
कदम्बः सर्षपे नीपे कदम्बं[22] निकुरुम्बके[23] । कलम्बो नालिकाशाके पृषत्के नीपपादपे ॥ १०४६
कादम्बः कलहंसेष्वोर्[24] नितम्बः कटिरोधसोः । स्त्रियाः पश्चात्कटौ सानौ प्रलम्बस्तु प्रलम्बनम् १०४७
दैत्यस्तालाङ्कुरः शाखा प्रालम्बस्तु पयोधरे । त्रपुसे[25] हारभेदे च भूजम्बूस्तु विकङ्कते ॥ १०४८
गोधूमाह्वयधान्ये च हेरम्बः शौर्यगर्विते । महिषे विघ्नराजे चारम्भस्तु वधदर्पयोः ॥ १०४९
त्वरायामुद्यमे चाप्यात्मभूर्ब्रह्मणि मन्मथे । ऋषभः स्यादादिजिने वृषभे भेषजे स्वरे ॥ १०५०
कर्णरन्ध्रे कोलपुच्छे श्रेष्ठे चाप्युत्तरे स्थितः । ऋषभी तु शूकशिम्ब्यां पुरुषाकारयोषिति ॥ १०५१

---

१. 'शान्तर्हि' ग-घ. २. 'चित्रामलेखे वर्षिवर्हयोः' ग-घ. ३. 'श्लेष्माध्मा' ग-घ. ४. 'शोचनः' ग-घ. ५. 'जनस' ग-घ. ६. 'क्रन्दिते' ख. ७. 'श्रवणे' ख. ८. 'वृक्षेषु' ग-घ. ९. 'संघट्टिते' ग-घ. १०. 'अभिषेके' ख. ११. धनुश्चिह्नान्तर्गतपाठः ख-पुस्तके त्रुटितः. १२. 'उपगमे' ख. १३. 'मेढ्रे' ख-ग-घ. १४. 'हापनोऽर्चिर्व्रीहि' ग-घ. १५. 'पवने' ग-घ. १६. 'प्लवशीतांश्वोः' ख. १७. 'कशिपु' ग-घ. १८. 'काश्यपो मु' ग-घ. १९. 'प्रतापस्तेजसि स्वेदे पादपो वृक्षपीठयोः' इति ख-पुस्तकेऽधिकः पाठः. २०. 'रक्तपो रक्षो रक्तपा तु जलौका विटपः पुनः' इति ख-पुस्तक एवं पाठः. २१. 'पल्लवेऽपि च वृक्षे च विस्तारे षिङ्गशाखिनोः' ख-पुस्तक एवम्. २२. 'कदम्बे' ख. २३. 'निकुरम्बके' ग-घ. २४. 'कलहंसेक्ष्वोर्नि' ख. २५. 'त्रपुषे' ग-घ.



38

विधवायां सिरालायां करभो मय[1] उष्ट्रके । अङ्गुलेश्च कनिष्ठाया मणिबन्धस्य चान्तरे ॥ १०५२
ककुभो वीणाप्रसेवे रो[2]गभेदेऽर्जुनद्रुमे । कुसुम्भं तु शातकुम्भे स्या[3]ल्लद्वायां कमण्डलौ ॥ १०५३
गर्दभो रासभे गन्धे गर्दभी जन्तुरुग्भिदोः । गर्दभं कु[4]मुदभेदे दुर्लभः क[5]च्छुरे प्रिये ॥ १०५४
दुष्प्रापेऽपि दुन्दुभिस्तु भेर्यां दितिसुते वि[6]षे । अ[7]क्षबिन्दुत्रिकद्वन्द्वे निकुम्भः कुम्भकर्णजे ॥ १०५५
दन्त्यां च वल्लभोऽध्यक्षे कुलीनाश्वे प्रियेऽपि च । वर्षाभूः पुनर्नवायां स्याद्गण्डूपदभेकयोः ॥ १०५६
विष्कम्भो विस्तृतौ योगविशेषप्रतिबन्धयोः । योगिनां च बन्धभेदे रूपकावयवेऽपि च ॥ १०५७
विश्रम्भः केलिकलहे विश्वासे प्रणये वधे । वृषभः स्यादादिजिने वृषपुंगवयोरपि ॥ १०५८
सनाभिर्ज्ञातिसदृशोः सुरभिर्हेम्नि चम्पके । जातिफले मातृभेदे रम्ये चैत्रवसन्तयोः ॥ १०५९
सुगन्धौ गवि स[8]ल्लक्यामधमो न्यूनगर्ह्ययोः । आगमस्त्वागतौ शास्त्रेऽप्याश्रमो व्रतिनां मठे १०६०
ब्रह्मचर्यादिचतुष्केऽप्युत्तमा दुग्धिकौषधौ । उत्तमं तु प्रधाने स्यात्कलमः शालिचौरयोः ॥ १०६१
कुसुमं स्त्रीर[9]जोनेत्ररोगयोः फलपुष्पयोः । कृत्रिमं लवणभेदे कृत्रिमः कृतसिह्लयोः ॥ १०६२
गोधूमो भेषजे नागरङ्गव्रीहिप्रभेदयोः । गोलोमी वारयोषायां षड्ग्रन्थासितदूर्वयोः ॥ १०६३
गौतमो गणभृद्भेदे शाक्यसिंहर्षिभेदयोः । गौतम्युमायां रोचन्यां तलिमं तल्पखड्गयोः ॥ १०६४
विनाते कुट्टिमे चापि दाडिमः करकैलयोः । निष्क्रमो निर्गमे बुद्धिसंपत्तौ दुष्कुलेऽपि च १०६५
नियमः स्यात्प्रतिज्ञायां निश्चये यन्त्रणे व्रते । निगमाः पूर्वणिग्वेदनिश्चयाध्व[10]वणिक्पथाः ॥ १०६६
नैगमो नयपौरोपनिष[11]द्वृतिषु वाणिजे । प्रथमः स्यात्प्रधानाद्योः प्रक्रमोऽवसरे क्रमे ॥ १०६७
पञ्चमो रुचिरे दक्षे पञ्चानामपि पूरणे । रागभेदे पञ्चमी तु द्रौपद्यां परमः परे ॥ १०६८
अग्रेसरप्रथमयोरो[12]ङ्कारे परमं पुनः । स्यादव्ययमनुज्ञायां [प्र[13]तिमा प्रतिरूपके ॥ १०६९
गजस्य दन्तबन्धे च] मध्यमो मध्यजे स्वरे । देहमध्ये मध्यदेशे मध्यमा कर्णिकाङ्गुलिः ॥ १०७०
र[14]का रजस्वला चापि व्यायामः पौरुषे श्रमे । वियामे दुर्गसंचारे विलोममरघट्टके ॥ १०७१
विलोमो वरुणे सर्पे प्रतीपे कु[15]कुरेऽपि च । विलोमी स्यादामलक्यां विक्रमः शक्तिसंपदि १०७२
क्रा[16]न्तौ च विद्रुमो वृक्षे प्रवालेऽप्यथ विभ्रमः । शोभायां संशये हा[17]वे सत्तमः श्रेष्ठपूज्ययोः १०७३
साधिष्ठे संभ्रमो भीतौ संवेगादरयोरपि । सुषीमः शिशिरे रम्ये सु[18]षुमं रुचिरे समे ॥ १०७४
सुषमा तु स्यात्परमशोभायां कालभिद्यपि । अत्ययो[19]ऽतिक्रमे दोषे विनाशे दण्डकृच्छ्रयोः ॥ १०७५
अवध्यमवधार्हे स्यादनर्थकवचस्यपि । अभयमुशीराभीत्योरभया तु हरीतकी ॥ १०७६
अनयोऽशुभदैवे स्याद्विपद्व्यसनयोरपि । अ[20]श्वीयमश्वसङ्घेऽश्वहितेऽधृष्यः प्रगल्भके ॥ १०७७
अधृष्या निम्नगाभेदेऽहल्या गौतमयोषिति । सरोभेदेऽप्यभिख्या तु शोभायां कीर्तिसंज्ञयोः १०७८
अहार्यो हर्तुमशक्ये शैलेऽ[21]थाशय आश्रये । अभिप्रायपनसयोरादित्यस्त्रिदशार्कयोः ॥ १०७९

---

१. 'भय उ' ख. २. 'रोगभे' ग-घ. ३. 'मञ्जिष्ठायां क' ख. ४. 'कुमुदे श्वेते' ख; 'सितकुमुदे' ग-घ. ५. 'कच्छपे' ख. ६. 'विशे' घ. ७. 'अर्धवि' ग-घ. ८. 'शल्लक्याम्' ख-ग-घ. ९. 'राजन्याम्' ग-घ. १०. 'द्दवणि' ख. ११. 'द्दतिषु' ख-ग-घ. १२. 'आकारे' ख; 'अकारे' ग-घ. १३. 'प्रतिमः प्रतिरूपके' ख; धनुश्चिह्नान्तर्गतपाठो ग-घ-पुस्तकयोस्त्रुटितः. १४. 'कन्यार' ग-घ. १५. 'कुकुरे' ग-घ. १६. 'क्रतौ' ख. १७. 'भावे' ख. १८. 'सुषमम्' ख. १९. 'विक्रमे' ख. २०. 'अश्वीयमश्वनिवहे तथाश्वस्य हितेऽपि च । अव्ययः शब्दभेदेऽपि निर्व्यये परमेश्वरे । अगस्त्यो मुनौ द्रुमभेदे स्यात्' इति ग-घ-पुस्तकयोरधिकः पाठः. २१. 'अप्याश' ख-ग-घ.

आत्रेयो मुनिरात्रेयी पुष्पवत्यां सरिद्भिदि । आतिथ्योऽतिथौ तद्योगेऽप्याम्नायः कुल आगमे १०८०
उपदेशे चेन्द्रियं तु चक्षुरादिषु रेतसि । उदयः [1]पर्वतोन्नत्योरूर्णायुरविकम्बले ॥ १०८१
ऊर्णनाभे च मेषे चैणेयमेणीत्वगादिके । [2]रैतबन्धभिदि स्त्रीणां कषायः सुरभौ रसे ॥ १०८२
रागवस्तुनि निर्यासे क्रोधादिषु विलेपने । वर्णे कालेयस्तु दैत्ये कालेयं कुङ्कुमं यकृत् ॥ १०८३
कुलायः पक्षिणां स्थानगेहयोः क्षेत्रिया [3]स्त्रियः । अन्यदेहचिकित्सार्हा साध्यरुक्पारदारिका १०८४
क्षेत्रियं क्षेत्रजतृणे गाङ्गेयं स्वर्णमुस्तयोः । [4]कैसेरुण्यथ गाङ्गेयो गाङ्गवत्स्कन्दभीष्मयोः ॥ १०८५
चक्षुष्यः सुभगे पुण्डरीकवृक्षे रसाञ्जने । कनकेऽक्षिहिते चापि चक्षुष्या तु कुलत्थिका ॥ १०८६
चाम्पेयो हेम्नि किञ्जल्के चम्पके नागकेसरे । जघन्यं [5]शिंभे [6]गर्ह्येऽन्त्ये जटायुर्गुग्गुलौ खगे १०८७
तपस्यः फाल्गुने [7]मासे तपस्या नियमस्थितौ । द्वितीया तिथिगेहिन्योर्द्वितीयः पूरणे [8]द्वयोः १०८८
नादेयी जलवानीरे भूजम्बूनागरङ्गयोः । [9]काङ्कुष्टे च जपायां च निकायः सद्मसङ्घयोः ॥ [10] १०८९
परमात्मनि लक्ष्ये च प्रणयः प्रेमयाच्ञयोः । [11]विश्रम्भे प्रसरे चापि प्रत्ययो ज्ञानरन्ध्रयोः ॥ १०९०
विश्वासे शपथे हेतावाचार[12]प्रथितत्वयोः । अधीने निश्चये [13]स्यादौ प्रणाय्यः कामवर्जिते ॥ १०९१
असंमते [14]प्रसव्यस्तु प्रतिकूलानुकूलयोः । प्रतीक्ष्यः प्रतिपाल्ये स्यात्पूज्ये च प्रलयो मृतौ ॥ १०९२
संहारे नष्टचेष्टत्वे पर्यायोऽवसरे क्रमे । [15]निर्माणे द्रव्यधर्मे च पर्जन्यो [16]गर्जदम्बुदे ॥ १०९३
वासवे मेघशब्दे च [17]पयस्यं तु पयोभवे । पयोहिते पयस्या तु काकोलीदुग्धिकापि च ॥ १०९४
प्रक्रिया तूत्पादने स्यादधिकारप्रकारयोः । पानीयं पेयजलयोः पारुष्यस्तु बृहस्पतौ ॥ १०९५
पारुष्यं पुरुषभावे संक्रन्दनवनेऽपि च । पौलस्त्यो रावणे श्रीदे भ्रातृव्यो भ्रातृजे रिपौ ॥ १०९६
भुजिष्यः [18]स्यादनधीने किङ्करे [19]हस्तसूत्रके । भुजिष्या गणिकादास्योर्म[20]लयः पर्वतान्तरे ॥ १०९७
शैलांशे देश आरामे मलया त्रिवृतौषधौ । मङ्गल्यो रुचिरेऽश्वत्थे त्रायमाणे मसूरके ॥ १०९८
[21]बिल्वे मङ्गल्यं तु दध्नि मङ्गल्या रोचना शमी । शतपुष्पा शुक्लवचा प्रियङ्गुः शङ्खपुष्प्यपि ॥ १०९९
अन्ध[22]पुष्पी मृगयुस्तु फेरौ ब्रह्मणि लुब्धके । रहस्यं गोपनीये स्याद्रहस्या सरिदन्तरे ॥ ११००
लौहित्योऽब्धौ नदे व्रीहौ ब्रह्मण्यो [23]ब्रह्मणे हिते । शनैश्चरे व्यवायस्तु मैथुनव्यवधानयोः ॥ ११०१
वदान्यः प्रियवा[24]ग्दानशीलयोरुभयोरपि । वक्तव्यो वाच्यव[25]द्गर्ह्ये वचोर्हहीनयोरपि ॥ ११०२
वलयः कङ्कणं कण्ठरुग्वालेयस्तु गर्दभे । वल्यर्थे कोमलेऽङ्गारवल्लर्यां विजयो जये ॥ ११०३
पार्थे विमाने विजयो मातत्सख्योस्तिथावपि । विषयो यस्य योऽज्ञातस्तत्र गोचरदेशयोः ॥ ११०४
शब्दादौ जमपदे च विस्मयोऽद्भुतदर्पयोः । विनयः शिक्षाप्रणत्योर्विनया तु बलौषधौ ॥ ११०५
विशल्या लाङ्गलीदन्तीगडूचीत्रिपुटासु च । शल्येन रहितायां च प्रियायां लक्ष्मणस्य च ॥ ११०६

---

१. 'पर्वतोत्पथ्योः' ग-घ. २. 'रतबन्धादिषु स्त्री' ख. ३. 'त्रयः' ख-ग-घ. ४. 'कशेरु' ख. ५. 'गर्हिते शिभे' ख. ६. 'अल्पे' ग-घ. ७. 'मासि' ख; 'पार्थे' ग-घ. ८. 'द्वये' ग-घ. ९. 'काङ्गुण्यां च' ख; 'व्यङ्गुष्ठे च' ग-घ. १०. 'निलयोऽस्तमये गृहे । गोपनस्य प्रदेशेऽपि नेपथ्यं तु प्रसाधने । रङ्गभूमौ वेषभेदे' इति ख-पुस्तकेऽधिकः पाठः. ११. 'विस्रम्भे' ग-घ. १२. 'प्रेषित' ख. १३. 'स्वादौ' ग-घ. १४. 'प्रसव्यस्तु' ख. १५. 'निर्वाणे' ख. १६. 'गर्जदम्बुजे' ख. १७. 'पयस्यस्तु' ख. १८. 'अवधीने' ग-घ. १९. 'हस्तसूचके' ख. २०. 'भुवन्युर्वह्निसूर्ययोः । मलयीदेश आरामे शैलांशे पर्वतान्तरे । मलया त्रिवृन्मङ्गल्यस्त्रायमाणे मसूरके ।' इति ख-पुस्तकस्थः पाठः. २१. 'विश्वे' ग-घ. २२. 'पुष्पा' ग-घ. २३. 'ब्रह्मणो हि' ग-घ. २४. 'वागुदारशी' ग-घ. २५. 'गृह्ये' ग-घ.

श्वशुर्यो देवरे श्याले शाण्डिल्यः पावकान्तरे । बिल्वे मुनौ च शालेयं शतपुष्पाह्वयौषधौ ॥ ११०७
क्षेत्रे च शालिधान्यस्य शीर्षण्यं शीर्षरक्षणे । शीर्षण्यो विशदे केशे शैलेयं शैलसंभवे ॥ ११०८
सिन्धूत्थे तालपर्ण्यां च शैलेयस्तु मधुव्रते । समयः शपथे भाषासंपदोः कालसंविदोः ॥ ११०९
सिद्धान्ताचारसंकेतनियमावसरेषु च । क्रियाकारे च निर्देशे संस्त्यायो विस्तृतौ गृहे ॥ १११०
संनिवेशे संनयस्तु समवायानुसैन्ययोः । [सामर्थ्यं योग्यताशक्त्योः सौरभ्यं गुणगौरवे ॥ ११११
सौगन्ध्यं चारुतायां च हिरण्यं पुनरक्षये । प्रधानधातौ कनके मानभेदे कपर्दके ॥ १११२
द्रविणाकुप्ययोश्चापि हृच्छयो मन्मथात्मनोः ।] हृदयं वक्षसि स्वान्ते वृक्कायाममरः सुरे ॥ १११३
स्नुहीवृक्षेऽस्थिसंहारेऽप्यमरा त्वमरावती । स्थूणा दूर्वा गडूची चान्तरं रन्ध्रावकाशयोः ॥ १११४
मध्ये विनार्थे तादर्थ्ये विशेषेऽवसरेऽवधौ । आत्मीयात्मपरीधानान्तर्धिबाह्येष्वथावरम् ॥ १११५
चरमेऽवरा तु गौरीगजजङ्घान्त्यदेशयोः । अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोः ॥ १११६
गगने धर्मतपसोरध्वरे मूलकारणे । अधरोऽनूर्ध्वहीनोष्ठेष्वम्बरं व्योमवस्त्रयोः ॥ १११७
कार्पासे सुरभिद्रव्येऽररं छदकपाटयोः । अङ्कुरो रोम्णि सलिले रुधिरेऽभिनवोद्गमे ॥ १११८
अजिरं दर्दुरे काये विषये प्राङ्गणेऽनिले । अशिरोऽर्के राक्षसेऽग्नावङ्गारो लातभौमयोः ॥ १११९
अण्डीरः शक्तनरयोरसुरः सूर्यदैत्ययोः । असुरा रजनीवेश्योरगुरुस्त्वगरौ लघौ ॥ ११२०
शिंशपायामथाहारो हार आहरणेऽशने । आसारो वेगवद्वर्षे सुहृद्बलप्रसारयोः ॥ ११२१
आकार इङ्गिताकृत्योराधारो जलधारणे । आलवालेधिकरणेऽप्याकरो निकरे खनौ ॥ ११२२
इतरः पामरेऽन्यस्मिन्नित्वरः क्रूरकर्मणि । पथिके दुर्विधे नीचे स्यादित्वर्यभिसारिका ॥ ११२३
ईश्वरः स्वामिनि शिवे मन्मथेऽपीश्वराद्रिजा । उदरं तुन्दरणयोरुत्तरं प्रवेरोर्ध्वयोः ॥ ११२४
उदीच्यप्रतिवचसोरुत्तरस्तु विराटजे । उद्धारः स्यादृणोद्धृत्योरुदारो दक्षिणो महान् ॥ १२२५
दातोर्वरा तु भूमात्रे सर्वसस्याढ्यभुव्यपि । ऋक्षरं वारिधारायामृक्षरः पुनरृत्विजि ॥ ११२६
एकाग्रौ तद्गताव्यग्रावौशीरं शयनासने । उशीरजे चामरे च दण्डे च कररः खगे ॥ ११२७
करीरे क्रकचे दीने कर्बुरं काञ्चने जले । कर्बुरो राक्षसे पापे शबले कन्दरोऽङ्कुशे ॥ ११२८
विवरे च गुहायां च कर्करो मुकुरे दृढे । कदरः श्वेतखदिरे क्रकचक्षुद्ररोगयोः ॥ ११२९
कर्परस्तु कटाहे स्याच्छस्त्रभेदकपालयोः । कङ्कुरं कुत्सिते तक्रे कडारो दासपिङ्गयोः ॥ ११३०
[कञ्जारः कुञ्जरे सूर्ये जरठे द्रुहिणे मुनौ । करीरः कलशे वंशाङ्कुरवृक्षविशेषयोः ॥ ११३१
कलत्रं श्रोणौ भार्यायां दुर्गस्थाने च भूभुजाम् । कटित्रं तु कटीवस्त्रे रसनाचर्मभेदयोः ॥] ११३२
कच्छुरः पुंश्चले पामासहिते कच्छुरा संढी । दुःस्पर्शा शूकशिम्बी च कवरं लवणाम्लयोः ॥११३३
कबरी केशविन्यासशाकयोः कन्धरोऽम्बुदे । कन्धरा तु शिरोधौ स्यात्कशेरु पृष्ठकीकसे ॥११३४

---

१. 'विटे' ख. २. 'औषधे' ख-ग-घ. ३. 'शालिधैन्यस्य' ख. ४. धनुश्चिह्नान्तर्गतपाठो ग-घ-पुस्तकयोस्त्रुटितः. ५. 'भानभे' ख. ६. 'आत्मात्मीयप' ख; 'आत्मीयान्तःप' ग-घ. ७. 'अपामार्गे' ग-घ. ८. 'अम्बरे' ख. ९. 'अन्तर्द्धि' ख. १०. 'कार्पासे सुरभिद्रव्ये रदच्छदकपापयोः' ग-घ. ११. 'रोम्नि' ग-घ. १२. 'रास्योः' ग-घ. १३. 'अथावीरा नारीपतिसुतोकिता । रजसासंयुताप्युक्ता' ख. १४. 'वेल' ख. १५. 'प्रवणोर्ध्वे' ग-घ. १६. 'क्रकरः' ग-घ. १७. 'कन्दुरेऽङ्कुरे' ग-घ. १८. 'ककरं' ख. १९. धनुश्चिन्हान्तर्गतपाठः ख-पुस्तके त्रुटितः. २०. 'शढी' ख; 'शठी' ग-घ. २१. 'सूक' ख-ग-घ.

तृणजातौ क्रन्दभेदे कणेरुस्तु गणेरुवत्। वेश्येभीकर्णिकारेषु कटप्रूरक्षदेवने ॥ ११३५
विद्याधरेऽल्पे रुद्रे कान्तारं दुर्गवर्त्मनि। महारण्योपसर्गाद्योः काननेक्षुविशेषयोः ॥ ११३६
काश्मीरं पुष्करमूले टङ्ककुङ्कुमयोरपि। कावेरी तु हरिद्रायां वेश्यायां सरिदन्तरे ॥ ११३७
किर्मीरः शवले दैत्ये किशोरो हयशावके। सूर्ये यून्यथ किंशारुर्धान्यशूके शरेऽपि च ॥ ११३८
कुहरं गह्वरे छिद्रे कुक्कुरं ग्रन्थिपर्णके। कुक्कुरः श्वा कुबेरस्तु धनदे नन्दिपादपे ॥ ११३९
कुर्परौ जानुकफणी कुमारोऽश्वानुचारके। युवराजे शिशौ स्कन्दे शुके वरुणपादपे ॥ ११४०
कुमारं जात्यकनके कुमारी त्वपराजिता। नदीभिर्द्रामतरणी कन्यकानवमाल्युमा ॥ ११४१
जम्बूद्वीपविभागश्च कुटारं केवले रते। कुञ्जरोऽनेकपे केशे कुञ्जरा धातकीद्रुमे ॥ ११४२
पाटलायां कुठारुर्द्रुकीशयोः कूबरः पुनः। कुब्जे युगंधरे रम्ये केसरो नागकेसरे ॥ ११४३
तुरङ्गसिंहयोः स्कन्धकेशेषु बकुलद्रुमे। पुन्नागवृक्षे किञ्जल्के स्यात्केसरं तु हिङ्गुनि ॥ ११४४
केदारः क्षेत्रभिद्यालवाले शङ्करशैलयोः। केनारः कुम्भिनरके शिरःकपालसंधिषु ॥ ११४५
केटिरुः शक्रगोपे स्यान्नकुले पाकशासने। [11]कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके ॥ ११४६
खर्परस्तस्करे भिक्षापात्रे धूर्तकपालयोः। खपुरो मस्तके पूगे लसके खपुरं [13]घंटे ॥ ११४७
खर्जूरं रूप्यफलयोः खर्जूरः कीटवृक्षयोः। खण्डाभ्रमभ्रावयवे स्त्रीणां दन्तक्षतान्तरे ॥ ११४८
खदिरी शाके खदिरो दन्तधावनचन्द्रयोः। खिङ्खिरस्तु शिवाभेदे खट्वाङ्गे वारिवालिके ॥ ११४९
[15]खिङ्गीरावद्धहुल्वे च गह्वरो बिलदम्भयोः। कुञ्जेऽथ गर्गरो मीने स्याद्गर्गरी तु मन्थनी ॥ ११५०
गान्धारो रागसिन्दूरस्वरेषु नीवृदन्तरे। गायत्री खदिरे छन्दोविशेषे गोपुरं पुनः ॥ ११५१
मुस्तके द्वारि पूर्द्वारे घर्घरस्तु नदान्तरे। चलद्वारिध्वनौ घूके चन्दिरश्चन्द्रहस्तिनोः ॥ ११५२
चत्वरं स्यात्पथां श्लेषे स्थण्डिलाङ्गणयोरपि। चक्कुरः स्पन्दने वृक्षे चतुरो नेत्रगोचरे ॥ ११५३
चाटुकारे चक्रगण्डावपि चातुरको यथा। चमरश्चामरे दैत्ये चमरी तु मृगान्तरे ॥ ११५४
चिकुरोऽह्नौ गृहे बभ्रौ केशे चञ्चलशैलयोः। पक्षिवृक्षभिदोश्चापि छिदिरोऽग्नौ परश्वधे ॥ ११५५
करवाले च रज्जौ च छित्वरो वैरिधूर्तयोः। छित्वरं छेदनद्रव्ये जठरः कुक्षिबद्धयोः ॥ ११५६
कठिने च जर्जरं तु वासवध्वजजीर्णयोः। जम्बीरः प्रस्थपुष्पाख्यशाके दन्तशठद्रुमे ॥ ११५७
जलेन्द्रो जम्भकेऽम्भोधौ वरुणेऽप्यथ झर्झरः। वाद्ये नदे कलियुगे झलरीवत्तु झल्लरी ॥ ११५८
वाद्यभेदे [21]केशचक्रे टङ्कारो ज्योरवे[22]ऽद्भुते। प्रसिद्धौ चाथ टगर[23]ष्टङ्कणकेकराक्षयोः ॥ ११५९
टट्टरी त्वनृताख्याने लम्पापटहवाद्ययोः। तमिस्रं तिमिरे कोपे तमिस्रा दर्शयामिनी ॥ ११६०

१. 'शणजा' ग-घ. २. 'कर्चूरं श···तालयोः। कठोरौ पूर्णकठिनौ' ख. ३. 'अब्ज' ग-घ. ४. 'पुष्करे मूले' ख; 'पौष्करे मूले' ग-घ. ५. 'जानुकफोणी' ग-घ. ६. 'रामतरण्योषधिः' इति टीका. 'तरुणी' ख-ग-घ. ७. 'कुटीरं कम्बले' ख; 'कुटीरं' ग-घ. ८. 'कोशे' ख. ९. 'कीटयोः ख. १०. 'केटति केटिरुः सिध्रुगेरुनमेर्वादयः' इति टीका. ११. 'कैटिरः श' ख; 'कोटिरः श' मेदिन्याम्. 'पुष्करिण्या नगर्याः पाटके एकदेशे' इति टीका. १२. 'खर्पर' ख. १३. 'घठे' ग. १४. 'वास्तुके' ख. १५. 'खिङ्खिरा' ख; 'खिङ्खिरी' ग-घ. १६. 'अङ्गनयो' ग-घ. १७. 'चाटुकारे बुधे चक्रगण्डे चा' ख; 'चटुकारे' ग-घ. १८. 'छित्वरो दैत्य' ख; 'छिदुरो वै' ग-घ. १९. 'वृद्ध' ख. २०. 'वाद्ये नदे कलियुगे झल्लरीवत्तु झर्झरी' ख; 'वाद्यभाण्डे कलियुगे झल्लरीवत्तु झिल्लरी' ग-घ. २१. 'केशवक्रे' ग-घ. २२. 'भवेऽद्भु' ख. २३. 'टङ्कने केकराक्षके' ख; 'टङ्कणेकेकराक्षके' ग-घ.

तमस्ततिस्तिमिरं तु दृष्टिरोगान्धकारयोः । तित्तिरिः पक्षिणी मुनौ तुषारो हिमदेशयोः ॥११६१
शीकरे हिमभेदे च तुम्बरी धान्यकं शुनी । तूबरो श्मश्रुपुरुषे प्रौढा शृङ्गानडुह्यपि ॥ ११६२
दहरो मूषिकास्वल्पभ्रात्रोर्डिम्भेऽथ दन्तुरः । उन्नतदन्ते विषमे दर्दुरो भेकमेघयोः ॥ ११६३
वाद्यभाण्डे शैलभेदे दर्दुरं ग्रामजालके । दर्दुरोऽमा दर्दरः स्यादीषद्भग्ने गिरावपि ॥ ११६४
दण्डारो वहने मत्तवारणे शरयन्त्रके । कुम्भकारस्य चक्रे च द्वापरं संशये युगे ॥ ११६५
दासेर उष्ट्रे चेटे च दुर्द्धरस्त्वृषभौषधौ । दुःखर्धार्ये धूसरस्तु रासभे स्तोकपाण्डुरे ॥ ११६६
नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽथ नागरम् । शुण्ठीमुस्तकपौरेषु निर्जरस्त्वजरे सुरे ॥ ११६७
निर्जरा तु तालपत्र्यां गुडूच्यां तत्त्वभिद्यपि । [10]निर्नरोऽर्काश्वे तुषाग्नौ निर्करः सारसह्वयोः ॥११६८
न्यायदातव्यवित्ते च निर्वरं तु गतत्रपे । कठिने निर्भये सारे निकारस्तु पराभवे ॥ ११६९
धान्योत्क्षेपे [12]नीवरस्तु वास्तव्येऽपि वणिज्यपि । प्रवरं संततौ गोत्रे श्रेष्ठे च प्रखरः पुनः॥ ११७०
वेसरे हयसन्नाहे कुक्कुरेऽतिभृशं खरे । प्रकरः [13]कीर्णे पुष्पादौ संहतौ प्रकरं पुनः ॥ ११७१
जोङ्गके प्रकरी त्वर्थप्रकृतौ चत्वरावनौ । प्रस्तरः प्रस्तारे ग्रोञ्णि मणौ च प्रदरः शरे ॥ ११७२
भङ्गे रोगे प्रसरस्तु संगरे प्रणये जवे । प्रकारः सदृशे भेदे पङ्कारो जलकुब्जके ॥ ११७३
सोपाने सेवले सेतौ पदारः पादधूलिषु । पादालिन्दे पवित्रं तु मेध्ये ताम्रे कुशे जले ॥ ११७४
अर्घोपकरणे चापि पवित्रा तु नदीभिदि । प्रान्तरं कोटरेऽरण्ये दूरशून्यपथेऽपि च ॥ ११७५
पार्परो भस्मनि यमे जराटे नीपकेसरे । क्षयरोगे भक्तसिक्थे पामरो मूर्खनीचयोः ॥ ११७६
पाटीरो मूलके वङ्गे तितऊ वार्तिकेऽम्बुदे । केदारे वेणुसारे च पाण्डुरो वर्णतद्वतोः ॥ ११७७
पाण्डुरं तु मरुबके पिण्डारो भिक्षुके द्रुमे । महिषी पालके क्षेपे पिठरं मथि मुस्तके ॥ ११७८
उखायां च पिञ्जरस्तु [15]पीतरक्तेऽश्वभिद्यपि । पिञ्जरं शातकुम्भे स्यात् [illegible]रः स्थूलकूर्मयोः ॥ ११७९
पुष्करं द्वीपतीर्थाहिखगरागौषधान्तरे । तूर्यास्येऽसिफले काण्डे शुण्डा [illegible] खे जलेऽम्बुजे ॥ ११८०
बठरो वैद्यशठयोर्बन्धूरो रम्यनम्रयोः । बन्धुरस्तु तयोर्हंसे बन्धुजीवविडङ्गयोः ॥ ११८१
बन्धुरा पण्ययोषायां बर्बरा नीवृदन्तरे । बर्बरस्तु हञ्जिकायां पामरे केशचक्रले ॥ ११८२
पुष्पे च बर्बरा शाके बर्करः पशुनर्मणोः । [23]बदरा स्यादेलापर्ण्यां विष्णुक्रान्तौषधावपि ॥ ११८३
बदरी कोलिकर्पास्योर्[24]भङ्गुरौ वक्रनश्वरौ । भ्रामरं मधुदृषदोर्भास्करो वह्निसूर्ययोः ॥ ११८४
भार्यारुरन्यस्त्रीपुत्रोत्पादके मृगशैलयोः । भृङ्गारी [25]तु चीरिकायां भृङ्गारः कनकालुका ॥ ११८५
मत्सरः परसंपत्त्युक्षमायां तद्वति क्रुधि । कृपणे मत्सरा तु स्यान्मक्षिका मकरो निधौ ॥ ११८६
नक्रे राशिविशेषे च मन्दरो मन्थपर्वते । स्वर्गमन्दारयोर्मन्दे बहले मधुरं विषे ॥ ११८७
मधुरस्तु प्रिये स्वादौ रसे च रसवत्यपि । मधुरा मथुरा पुर्यां यष्टीमेदामधूलिषु ॥ ११८८

---

१. 'तुबरी धा' ख-ग-घ. २. 'भ्रान्तडिम्भे' ख. ३. 'भेदे' ग-घ. ४. 'भेदे' ख. ५. 'दण्डरो वाहने' घ. ६. 'यन्त्रे' ख. ७. 'चेष्टे' ख. ८. 'धैर्ये' ग-घ. ९. 'असुरे' ख; 'निर्जरे' ग-घ. १०. 'निर्झरः' ग-घ. ११. 'निसारः ग-घ. १२. 'नीवारस्तु वास्तव्ये विपणिष्वपि' ख. १३. 'कीर्णपुष्पादौ' ख-ग-घ. १४. 'आवणिम' ग-घ. १५. 'भीत' ख. १६. 'राजौष' ख. १७. 'मूर्खद्य' ख; 'अम्बष्ठय' ग-घ. १८. 'बन्धुरो र' ग-घ. १९. 'बन्धुरं तु' ग-घ. २०. 'बर्बरो नी' ग-घ. २१. 'बर्बरस्तु दण्डिकायां' ख; 'बर्बरा तु फञ्जिकायां' ग-घ. २२. 'वक्रले' ख. २३. 'बन्दरः' ख. २४. 'बादरं तु तयोः फले । बादरस्तु कर्पासास्थ्नि' ख; 'बदरं तु' ग-घ. २५. 'स्याज्झिल्लिकायाम्' ग-घ.

मधुकुक्कुटिकायां च मिश्रेयाशतपुष्पयोः। मन्दिरो मकरावासे मन्दिरं नगरे गृहे ॥ ११८९
मन्थरः सूचके कोशे वक्रे मन्दे पृथौ मथि। मन्थरं तु कुसुम्भ्यां स्यान्मन्दारश्चित्रद्रुमे ११९०
पारिभद्रेऽर्कपर्णे च मसूरो मसुरोऽपि च। मसुरा च मसूरा च चत्वारः पण्ययोषिति ॥ ११९१
तथा व्रीहिविशेषेऽपि मर्मरो वसनान्तरे। शुष्कपत्रध्वनौ चापि मर्मरी पीतदारुणि ॥ ११९२
मयूरः केकिचूडाख्यौषधेऽपामार्गकेकिनोः। महेन्द्रो वासवे शैले मञ्जरी तिलकद्रुमे ॥ ११९३
वल्लर्यां स्थूलमुक्तायां माठरो व्यासविप्रयोः। सूर्यानुगेऽथ मार्जारः स्यात्खट्वांशबिडालयोः॥११९४
मिहिरोऽर्केऽम्बुदे बुद्धे मुद्गरः कोरकास्त्रयोः। लोष्टादिभेदने चापि मुहिरो मूर्खकामयोः॥११९५
मुदिरः कामुके मेघे मुकुरो मकुरो यथा। कुलालदण्डे बकुले कोरकादर्शयोरपि ॥ ११९६
मुर्मुरो मन्मथे सूर्यतुरगे तुषपावके। रुधिरं घुसृणे रक्ते रुधिरो धरणीसुते ॥ ११९७
वल्लरं कुञ्जमञ्जर्योः क्षेत्रेऽनम्भसि शाद्वले। वल्लूरं तु वनक्षेत्रे वाहनोषरयोषिति ॥ ११९८
शुष्कमांसे कोलमांसे वरत्रा वर्तिकक्षयोः। वागरो वारके शाणे निर्नेरे वाडवे वृके ॥ ११९९
मुमुक्षौ पण्डिते चापि परित्यक्तभयेऽपि च। वासरो रागभेदेऽह्नि वार्दरं कृमिजे जले ॥ १२००
काकचिम्ब्याश्वबीजे वाग्दक्षिणावर्तशङ्खयोः। वासुरा वासितारात्र्योर्भुवि विष्टर आसने ॥ १२०१
पादपे कुशमुष्टौ च विस्तारौ स्तम्बविस्तृती। विदुरो नागरे धीरे धृतराष्ट्रानुजेऽपि च ॥ १२०२
विकारो विकृतौ रोगे विहारस्तु जिनालये। लीलायां भ्रमणे स्कन्धे विदारो युधि दारणे १२०३
विदारी रोगभेदे स्याच्छालपर्णीक्षुगन्धयोः। विधुरं स्यात्प्रविश्लेषे विकले विधुरा पुनः ॥१२०४
रसालायां विसरस्तु समूहे प्रसरेऽपि च। शबरो म्लेच्छभेदेऽप्सु हरेऽथ शम्बरं जले ॥ १२०५
चित्रे बौद्धव्रतभेदे शम्बरो दानवान्तरे। मत्स्यैणगिरिभेदेषु शम्बरी पुनरौषधौ ॥ १२०६
शर्करा खण्डविकृतौ कर्परांशे रुगन्तरे। उपलायां शर्करायुग्देशे च शकलेऽपि च ॥ १२०७
शर्वरी निशि नार्यां च शक्करी सरिदन्तरे। छन्दोजातौ मेखलायां शारीरं देहजे वृषे ॥ १२०८
शार्वरं घातुके ध्वान्ते शावरो रोध्रपापयोः। अपराधे शार्वरी तु शूकशिम्ब्यथ शाक्करम् १२०९
छन्दोभिश्शाक्करस्तूक्षा शालारं पक्षिपञ्जरे। सोपानहस्तिनखयोः शिखरं पुलकाग्रयोः ॥ १२१०
पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च। वृक्षाग्रे पर्वताग्रे च शिशिरः शीतले हिमे ॥ १२११
ऋतुभेदे शिलिन्ध्रस्तु तरुमीनप्रभेदयोः। शिलिन्ध्रं कदलीपुष्पे कवकत्रिपुटाख्ययोः ॥ १२१२
शिलिन्ध्री विहगी गण्डूपदीमृदथ शीकरः। वातास्तजलेऽम्बुकणे शुषिरं वाद्यगर्तयोः ॥ १२१३
शुषिरोऽग्नौ सरन्ध्रे च शृङ्गारो गजमण्डने। सुरते रसभेदे च शृङ्गारं नागसंभवे ॥ १२१४
चूर्णे लवङ्गपुष्पे च संस्तरः संस्तरे मखे। संगरोऽङ्गीकृतौ युद्धे क्रियाकारे विषापदोः ॥ १२१५
संगरं तु फले शम्याः संभारः संभृतौ गणे। संस्कारः प्रतियत्नेऽनुभवे मानसकर्मणि ॥ १२१६
गुणभेदेऽथ संकारोऽवकरेऽग्निचटत्कृतौ। संकारी भुक्तकन्यायां सामुद्रं लवणान्तरे ॥ १२१७

१. 'खट्वाङ्गवि' ख; 'खट्वाशवि' ग-घ. २. 'च कुले' ग-घ. ३. 'वल्लुरं कु' ग-घ. ४. 'निर्नेरो रवितुरगः' इति टीका. 'नगरे वाडवेऽष्टके' ख; 'निर्नये वाड' ग-घ. ५. 'स्याद्' ग-घ. ६. 'वासरा' ग-घ. ७. 'रागभेदे' ख. ८. 'चित्रबौ' ख. ९. 'शिम्ब्यां च' ग-घ. १०. 'शार्करस्तूक्षा' ग-घ. ११. 'गिरिवृक्षाग्रकक्षासु' ख. १२. 'शिलीन्ध्रस्तु' ग-घ. १३. 'शिलीन्ध्रं' ग-घ. १४. 'शिलीन्ध्री' ग-घ. १५. 'वातास्तेऽम्बुकणे क्षारे' ख. १६. 'राज' ग-घ. १७. इतः परम् 'संस्कारः प्रतियत्ने स्यात्संकल्पेऽनुभवेऽपि च । सामुद्रं देहलक्षणे समुद्रलवणेऽपि च' ख. १८. 'प्रस्तरेऽध्वरे' ग-घ. १९. 'कृते' ग-घ. २०. 'सम्यां' ग-घ. २१. 'तु' ग-घ.

लक्षणे च शरीरस्य सावित्रस्तु महेश्वरे । सावित्री देवताभेदे सिन्दूरं नागसंभवे ॥ १२१८
सिन्दूरस्तु वृक्षभेदे सिन्दूरी रक्तचेलिका । [1]रोचनीधातकी सुन्दर्यङ्गनायां द्रुमान्तरे ॥ १२१९
सुनारस्तु शुनीस्तन्ये सर्पाण्डे चटकेऽपि च । सैरन्ध्री परवेश्मस्थशिल्पकृत्स्ववशस्त्रियाम् ॥ १२२०
वर्णसंकरसंभूतस्त्री[2]महल्लिकयोरपि । सौवीरं काञ्जिकास्रोतोऽञ्जनयोर्[3]बदरीफले ॥ १२२१
स्यादर्गलं तु [4]कल्लोले परिघेऽप्यनलोऽनिले । वसुदेवे वसौ वह्नावरालः समदद्विपे ॥ १२२२
वक्रे सर्जरसे चोप्यवेलस्तु स्यादपह्नवे । अवेला तु पूगचूर्णेऽचलस्तु गिरिकीलयोः ॥ १२२३
अचला भुव्यञ्जलिस्तु कुडवे करसंपुटे । अङ्गुलिः करशाखायां कर्णिकायां गजस्य च[5] ॥ १२२४
आभीलं भीषणे कृच्छ्रेऽपील्वलो मत्स्यदैत्ययोः । इल्वलास्तारकभेदेऽप्युपलो ग्रावरत्नयोः १२२५
उपला तु शर्करायामुत्पलं कुष्ठभूरुहे । इन्दीवरे मांसशून्येऽप्युज्ज्वलस्तु विकासिनि ॥ १२२६
शृङ्गारे विशदे दीप्तेऽप्युत्तालस्त्वरिते कपौ । श्रेष्ठोत्कटकरालेषूत्फुलः स्त्रीकरणान्तरे ॥ १२२७
विकस्वरोत्तालयोश्च कमलं [7]क्लोम्नि भेषजे । पङ्कजे सलिले ताम्रे कमलस्तु मृगान्तरे ॥ १२२८
कमला श्रीवरनार्योः कपिलो वह्निपिङ्गयोः । [8]कुर्कुरे मुनिभेदे च कपिला शिंशिपातरौ ॥ १२२९
पुण्डरीककरिण्यां च रेणुकागोविशेषयोः । कपालं कुष्ठरुग्भेदे घटादिशकले गणे ॥ १२३०
शिरोस्थनि कन्दलं तु नवाङ्कूरे[9] कलध्वनौ । उपरागे मृगभेदे [10]कलापे कदली द्रुमे ॥ १२३१
करालो रौद्रतुङ्गोरु[11]व्रणतैलेषु दन्तुरे । करालं तु [12]कुठेरे स्यात्कम्बलः कृमिसास्नयोः ॥ १२३२
नागप्रभेदे प्रावारे वैकक्ष्ये कम्बलं जले । कल्लोलोऽरौ हर्षवीच्योः कदली हरिणान्तरे ॥ १२३३
रम्भायां वैजयन्त्यां च कामलः कामिरोगयोः । मरुदेशेऽवतंसे च काकोलो मौकलौ विषे १२३४
कुलाले काहलं तु [13]स्यान्नृशे [14]चाव्यक्तवाचि च । शुष्के च वाद्यभेदे च काहली [15]तरुणस्त्रियाम् १२३५
किट्टालस्तु लोहगूथे ताम्रस्य कलशेऽपि च । कीलालं रुधिरे [16]नीरे कुशलं क्षेमपुण्ययोः ॥ १२३६
पर्याप्तौ कुशलोऽभिज्ञे[17] कुवलं [18]बदरीफले । मुक्ताफलोत्पलयोश्च कुम्भिलो [19]मेषचौरयोः ॥ १२३७
श्लोकच्छायाहरे श्याले कुद्दालो भूमिदारणे । [20]युंगपत्रेऽथ कुटिलं भङ्गुरे कुटिला नदी ॥ १२३८
कुण्डलं वलये पाशे [21]तौडङ्के कुण्डली पुनः । [22]कौञ्चनद्रौ गुडूच्यां च कुन्तलो हलकेशयोः ॥ १२३९
कुन्तलाः स्युर्जनपदे कुकूलं तु तुषानले । शङ्कुसंयुक्तगर्ते च कुलालो वूकपक्षिणि ॥ १२४०
[23]कुकुभे कुम्भकारे च कुचेलः स्यात्कुवाससि । कुचेला [24]चिर्भे बद्धकर्ण्या केवलं त्वेककृत्स्नयोः ॥ १२४१
[25]निर्णीते कुहने ज्ञाने केवली ग्रन्थभिद्यपि । कोमलं मृदुले तोये कोहलो मुनिमद्ययोः ॥ १२४२
ग्रन्थिलो ग्रन्थिसहिते विकङ्कतकरीरयोः । गरलं पन्नगविषे तृणपूलकमानयोः ॥ १२४३
गन्धोली वरटा[26]शण्ठ्योर्भद्रायामथ गोकिलः । मुसले लाङ्गले चापि गोपालो [27]गोपभूपयोः ॥ १२४४

१. 'रोचना' ग-घ. २. 'महल्लक' ख; 'महल्लीक' ग. ३. 'बर्बरी' ख. ४. 'दण्डोर्मि' ख. ५. 'था' ग-घ. ६. इतः परम् 'अमला कमलायां स्यादमलं विशदेऽभ्रके' ख. ७. 'व्योम्नि' ख. ८. 'कुकुरे' ख; 'कुक्कुरे' ग-घ. ९. 'नवाङ्कुरे कल' ख; 'नवाङ्कुरे कर' ग-घ. १०. 'कपाले कदली' ख. ११. 'व्रण' ख; 'भ्रूण' ग-घ. १२. 'कुठारे' ग-घ. १३. 'भृशे खले' ग-घ. १४. 'असंव्यक्तवा' ख. १५. 'वरुण' ख. १६. 'तोये' ग-घ. १७. 'विज्ञे' ग-घ. १८. 'कदलीफले' ग-घ. १९. 'चौरशालयोः' ग-घ. २०. 'युगपात्रे' ग-घ. २१. 'ताटङ्के' ख-ग-घ. २२. 'काञ्चनाद्रौ' ख. २३. 'कुकुभे' ग-घ. २४. 'स्यात्' ख; 'त्वविकर्ण्यो च' ग-घ. २५. 'निष्णाते' ख. २६. 'शच्यो' ख; 'शुण्ठ्यो' ग-घ. २७. 'नृपगोपयोः' ख.

स्याद्[1]गौरिलस्तु सिद्धार्थे लोहचूर्णेऽथ [2]चन्द्रिलः । नापिते वास्तुके रुद्रे चञ्चलोऽनिलकामिनोः ॥ १२४५
चञ्चला तु तडिल्लक्ष्म्योश्चपलश्चोरके [3]चले । क्षणिके चिकुरे शीघ्रे पारते प्रस्तरान्तरे ॥ १२४६
मीने च [4]चपला तु स्यात्पिप्पल्यां विद्युति श्रियाम् । पुंश्चल्यामथ [5]चात्वालो यज्ञ[6]कुण्डकगर्भयोः १२४७
चूडालश्चूडया युक्ते [7]चूडालापि च [8]चक्रला । छगलश्छागे छगली वृद्धदारकभेषजे ॥ १२४८
छगलं तु नीलवस्त्रे जगलो मदनद्रुमे । मेदके कितवे पिष्टमद्येऽथ जटिलो जटी ॥ १२४९
जटिला तु मांसिकायां जम्बूलः क्रकचच्छदे । जम्बूद्रुमेऽथ जम्बालं कर्दमे शैवलेऽपि च १२५०
जङ्गलो [10]निर्जले देशे पिशितेऽप्यथ जम्भलः । जम्बीरे देवताभेदे जाङ्गलः स्यात्कपिञ्जले ॥ १२५१
जाङ्गली तु शूकशिम्ब्यां जाङ्गलं [11]जालिनीफले । जाङ्गुली विषविद्यायां तरलो भास्वरे [12]चले १२५२
हारमध्यगणौ षिङ्गे तरला [13]मधमुष्टिका । तमालो वरुणे पुण्ड्रेऽसौ तापिच्छेऽथ तण्डुलः १२५३
विडङ्गे धान्यसारे च ताम्बूलं क्रमुकी फले । ताम्बूली नागवल्ल्यां स्यात्तुमुलं रणसंकुले ॥ १२५४
तुमुलो विभीतकद्रौ तैतिलं करणान्तरे । तैतिलो गण्डकपशौ दुकूलं सूक्ष्मवाससि ॥ १२५५
क्षौमवस्त्रेऽथ धवलो महोक्षे सुन्दरे सिते । धवली गौर्नकुलस्तु पाण्डवप्राणिभेदयोः ॥ १२५६
नकुली कुक्कुटीमांस्योर्नाभीलं तूत्तमस्त्रियोः । वंक्षणे नाभिर्गर्भाण्डे नाकुली च व्यरास्नयोः १२५७
कुक्कुटीकन्दे निचूलस्त्वि[15]ज्जलद्रौ निचोलके । निस्तलं तु [16]चले वृत्ते निर्मलं विमलेऽभ्रके ॥ १२५८
निर्माल्ये च निष्कलस्तु नष्टबीजे कलोज्झिते । नेपाली मनःशिला स्यात्[17]सुवहा नवमाल्यपि १२५९
[18]प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे । प्रतलः पातालभेदे तताङ्गुलिकरेऽपि च ॥ १२६०
पटलं तिलके नेत्ररोगे छदिषिसंचये । [19]पिटके परिवारे च पञ्चाला नीवृदन्तरे ॥ १२६१
पञ्चाली पुत्रिकागीत्योः पललं पङ्कमांसयोः । तिलचूर्णे पललस्तु राक्षसे [20]पाचलो[21]ऽनले ॥ १२६२
[22]अनिले राधनद्रव्ये पाकलो द्विरदज्वरे । पाकलं कुष्ठभैषज्ये पातालं वडवानले ॥ १२६३
रसातले पाटलं तु [23]कुसुमश्वेतरक्तयोः । पाटलः स्यादाशुव्रीहौ पाटला पाटलीद्रुमे ॥ १२६४
पांशुलो हरखट्वाङ्गे पुंश्चले पांसुला भुवि । [24]पातली मृत्तिकापात्रे नारीवागुरयोरपि ॥ १२६५
पिप्पलं सलिले वस्त्रच्छेदभेदेऽथ पिप्पलः । निरंशुले वृक्षपक्षिभेदयोः पिप्पली [25]कणा ॥ १२६६
पिङ्गलः कपिले वह्नौ रुद्रेऽर्के[26]पारिपार्श्विके । कपौ मुनौ निधिभेदे पिङ्गला कुमुदस्त्रियाम् ॥ १२६७
[27]करायिकायां वेश्यायां नाडीभेदेऽथ पित्तलम् । पित्तवत्यारकूटे च पित्तला तोयपिप्पली ॥ १२६८
पिचुलो निचुले तोयवायसे [28]श्रावुकद्रुमे । पिञ्जलं स्यात्कुशपत्रे हरिद्राभेऽथ पिच्छिलः ॥ १२६९

---

१. 'गैरिलस्तु' ख. २. 'चन्दति चन्द्रिलः' इति टीका. 'चण्डिलः' ख-ग-घ. ३. 'अचले' ग-घ. ४. 'चञ्चला' ख-ग-घ. ५. 'चाण्डालः' ख; 'चत्वालः' ग-घ. ६. 'कुण्डल' ग-घ. ७. 'चूडाल्यपि' ग-घ. ८. 'वक्रला' ख. ९. 'दारुक' ख. १०. 'निर्जले देशे' ख; 'निर्जने देशे' ग-घ. ११. 'जालिनी लताभेदः' इत्यनेकार्थकैरवाकरकौमुदी; 'जीलिनीफले' ख; 'जलिनीफले' ग-घ. १२. 'अचले' ग-घ. १३. 'मधुमक्षिका' ग-घ. १४. 'गाम्भीर्ये' ग-घ. १५. 'इज्जलद्रौ जलवेतसविशेषे' इत्यनेकार्थकैरवाकरकौमुदी. १६. 'वालवृत्ते' ख; 'तले वृन्ते' ग-घ. १७. 'सुहवा' ख; 'सुहावा' ग-घ. १८. इतः पूर्वम् 'पटोलस्तु समाख्यातः फलवस्त्रविशेषयोः' ख. १९. 'पटिके' ख. २०. 'पाचयतीति पाचलः' इति टीका. 'पाकलः' ख. २१. 'अनिले' ग-घ. २२. 'अनले' ग-घ. २३. 'कुङ्कुमश्वेत' ग-घ. २४. 'पातयति पातली' इति टीका. 'पाटली' ख; 'पातिली' ग-घ. २५. 'कला' ख. २६. 'पारिपार्श्वके' ख; 'परिपार्श्वके' ग-घ. २७. 'करायिका पक्षिणीभेदः' इति टीका. 'कर्णिकायां' ग-घ. २८. 'कामुक' ख.

विज्जले पिच्छिला पोतकिकायां सरिदन्तरे । शाल्मलौ शिंशिपायां च पिण्डिलो गणनापटौ १२७०
स्थूलजङ्घे पुष्कलस्तु पूर्णे श्रेष्ठेऽथ पुद्गलः । काये रूपादिमद्द्रव्ये सुन्दराकार आत्मनि ॥ १२७१
पेशलः कुशले रम्ये फेनिलोऽरिष्टपादपे । फेनिलं मदनफले बदरे फेनवत्यपि ॥ १२७२
बहुलं भूरिवियतोर्बहुलः पावके शितौ । कृष्णपक्षे बहुला तु सुरभ्यां नीलिकैलयोः ॥ १२७३
बहुला सुकृत्तिकासु बिडालो वृषदंशके । पक्षिभेदेऽक्षिगोले च मण्डलो बिम्बदेशयोः ॥ १२७४
भुजङ्गभेदे परिधौ शुनि द्वादशराजके । संघाते कुष्ठभेदे च मञ्जुलं च जलाश्वले ॥ १२७५
रम्ये कुञ्जे मञ्जुलस्तु दात्यूहे मङ्गलं पुनः । कल्याणे मङ्गलो भौमे मङ्गला श्वेतदूर्विका ॥ १२७६
महिला नार्यां गुन्द्रायां मातुलो मदनद्रुमे । धत्तूरेऽहिव्रीहिभिदोः पितुः श्यालेऽथ माचलः ॥ १२७७
वन्दिचौरे रुजिग्राहे मुसलं स्यादयोग्रके । मुसली तालमूल्याखुकर्णिकागृहगोधिका ॥ १२७८
मेखलाद्रिनितम्बे स्याद्रशनाखड्गबन्धयोः । रसाल इक्षौ चूते च रसालं वोलसिल्हयोः ॥ १२७९
रसाला दूर्वाविदार्योर्जिह्वामार्जितयोरपि । रामिलो रमणे कामे लाङ्गूलं शिश्नपुच्छयोः ॥ १२८०
लाङ्गलं तालहलयोः पुष्पभिद्गृहदारुणोः । लाङ्गली जलपिप्पल्यां लोहलोऽस्फुटवादिनि ॥ १२८१
शृङ्खला धार्ये वञ्जुलस्त्वशोके तिनिशद्रुमे । वानीरे चाथ वंवालः शूरयुग्मोत्खनित्रयोः ॥ १२८२
वातूलो वातले वातसमूहे मारुतासहे । वामिलो दाम्भिके वामे विपुलः पृथ्वगाधयोः ॥ १२८३
विपुलार्याभिदि क्षोण्यां विमलोऽर्हति निर्मले । वृषलस्तुरगे शूद्रे शकलं रागवस्तुनि ॥ १२८४
वल्कले त्वचि खण्डे च शम्बलं मत्सरे तटे । पाथेये च शयालुस्तु निद्रालौ वाहसे शुनि ॥ १२८५
श्यामलः पिप्पले श्यामे शार्दूलो राक्षसान्तरे । व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थितः ॥ १२८६
शाल्मलिः पादपे द्वीपे शीतलः शिशिरेऽर्हति । श्रीखण्डे पुष्पकासीसासनपर्ण्योः शिलोद्भवे १२८७
शृगालो दानवे फेरौ शृगाली स्यादुपप्लवे । शृङ्खलं पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने ॥ १२८८
शौष्कलः शुष्कमांसस्य पणिके पिशिताशिनि । षण्डाली सरसीतैलमानयोः कामुकस्त्रियाम् १२८९
सङ्कुलोऽस्पष्टवचने व्याप्ते च सरलस्त्वृजौ । उदारे पूतिकाष्ठे च सप्तला नवमालिका ॥ १२९०
सातला पाटला गुञ्जासन्धिलौकः सुरङ्गयोः । नद्यां सिध्मलः किलासी सिध्मला मत्स्यचूर्णके १२९१
सुतलोऽट्टालिकाबन्धे पातालभुवनान्तरे । सुवेलः प्रणते शान्ते गिरिभेदेऽथ हेमलः ॥ १२९२
कलादे सरटे ग्रावभिद्युद्भवः पुनर्मृतौ । असत्तायामथाक्षीबं वशिरे मदवर्जिते ॥ १२९३
आहवः संगरे यज्ञेऽप्याश्रवो वचनस्थिते । प्रतिज्ञायां च क्लेशे च स्यादार्तवमृतूद्भवे ॥ १२९४
नारीरजसि पुष्पे चोद्धवः केशवमातुले । उत्सवे क्रतुवह्नौ चोत्सवोऽमर्षे महेऽपि च ॥ १२९५
इच्छाप्रसर उत्सेके कारवी कृष्णजीरके । दीप्ये मधुरात्वक्पत्र्योः कितवः कनकाह्वये ॥ १२९६

---

१. 'विज्जुले' ख. २. 'पदे' ख. ३. 'पूर्णश्रेष्ठे' ग-घ. ४. 'सितौ' ग-घ. ५. इतः परम् 'बारला बरला चापि गन्धोलीहंसयोषितोः । बार्दलं दुर्दिने मस्यां मण्डलं देशबिम्बयोः ॥' ग-घ. ६. 'जलाश्वलं सेवालं' इति टीका. 'च जलान्तरे' ख; 'सुन्दरेऽपि च' ग-घ. ७. 'अङ्गनायाम्' ख. ८. 'शाले' ख. ९. 'अयोग्रमायुधविशेषः' इति टीका. 'अयोग्रहे' ख. १०. 'मूर्विकाजिह्वयोरपि' ग-घ. ११. 'तिनिशे द्रुमे' ख. १२. 'वंवयोरालमत्र वंवेरल्यते था वंवालः' इति टीका. 'वण्टालः' ग-घ. १३. 'सूरणे' ख. १४. 'हते' ग-घ. १५. 'पृथुगाधयोः' ख. १६. 'तूत्तमः' ख. १७. 'काशीशतालपर्ण्योः' ग-घ. १८. 'चलीका' ख. १९. 'सारला' ख. २०. 'दूतिकाबन्धे' ख. २१. 'पाताले भुवनान्तरे' ख. २२. 'संगरे' ख.

मत्ते च वञ्चके चापि केशवः केशसंयुते । पुंनागे वासुदेवे च कैतवं[1] द्यूतदम्भयोः ॥ १२९७
कैतवः कितवे शत्रौ कैरवं शैतपङ्कजे[2] । कैरवी तु चन्द्रिकायां गन्धर्वस्तु नभश्चरे ॥ १२९८
पुंस्कोकिले गायने च मृगभेदे तुरङ्गमे । अन्तराभवदेहे च गालवो मुनिलोध्रयोः ॥ १२९९
गाण्डीवगाण्डिवौ[3] चापमात्रे पार्थधनुष्यपि । ताण्डवं तृणभिन्नाट्यभेदयोस्त्रिदिवं तु[4] खे ॥ १३००
स्वर्गे च त्रिदिवा नद्यां द्विजिह्वः खलसर्पयोः । निह्नवः स्यादविश्वासेऽपलापे निकृतावपि ॥ १३०१
निष्पावः पैवने[5] शूर्पपवने निर्विकल्पके । वैल्ले[6] कडङ्गरे शिम्ब्यां प्रभवो जन्मकारणे ॥ १३०२
आद्योपलब्धये[7] स्थानेऽपांमूले मुनिभिद्यपि । प्रसवः पुष्पफलयोरपत्ये गर्भमोचने ॥ १३०३
उत्पादे च प्रसेवस्तु वीणाङ्गस्यूतयोर्हतौ[8] । प्रभावस्तेजसि शक्तौ पल्लवः किंसले[9] चले ॥ १३०४
विटपे विस्तरेऽलक्तरागे शृङ्गारषिङ्गयोः[10] । पञ्चत्वं भावे पञ्चानां प्राणानामत्ययेऽपि च ॥ १३०५
पार्थिवो नृपतौ भूमिविकारे पार्थिवी तुका[11] । पुंगवो गवि भैषज्ये प्रधाने चोत्तरस्थितः[12] ॥ १३०६
फेरवो राक्षसे फेरौ बान्धवो बन्धुमित्रयोः । भार्गवः परशुरामे सुधन्वनि मतङ्गजे ॥ १३०७
दैत्यगुरौ[13] भार्गवी तु कृष्णदूर्वोमयोः श्रियाम् । भैरवो भीषणे रुद्रे रागभेदेऽथ माधवः ॥ १३०८
विष्णौ वसन्ते वैशाखे माधवी मधुशर्करा । वासन्ती कुट्टिनी हाला राघवोऽब्धिझषान्तरे ॥ १३०९
रघुजे[14]ऽप्यथ राजीवो मीनसारङ्गभेदयोः । राजीवमब्जे रौरवो भीषणे नरकान्तरे ॥ १३१०
वल्लवः स्यात्सूपकारे गोदोग्धरि वृकोदरे । वडवाश्वायां स्त्रीभेदे कुम्भदास्यां द्विजस्त्रियाम् ॥ १३११
वाडवं करणे स्त्रीणां वडवौघे रसातले । वाडवो विप्र [15]और्वे च विद्रवो धीः पलायनम् ॥ १३१२
विभावः स्यात्परिचये[16] रत्यादीनां च कारणे । विभवो धननिर्वृत्योः शात्रवं शत्रुसंचये[17] ॥ १३१३
शत्रुत्वे शात्रवः शैत्रौ[18] [19]संभवः कारणे जनौ । आधेयस्याधारानतिरिक्तत्वे[20] जिनेऽपि च ॥ १३१४
सचिवः सैहाये[21]ऽमात्ये सुषवी कृष्णजीरके । [22]जीरके कारवेल्ले च सैन्धवः सिन्धुदेशजे ॥ १३१५
सिन्धूत्थे स्यादादर्शस्तु टीकायां प्रतिपुस्तके । दर्पणे चाप्यथोड्डीशश्चण्डीशे शास्त्रभिद्यपि ॥ १३१६
उपांशुर्जपभेदे स्यादुपांशु विजनेऽव्ययम् । कर्कशो निर्दये क्रूरे कैम्पिल्य[23]ककृपाणयोः ॥ १३१७
इक्षौ साहसिके कासमर्दके परुषे दृढे । कपिशौ सिल्हकश्यौवौ[24] कपिशा मौधवी[25] सुरा ॥ १३१८
कीनाशः क्षुद्रर्यमयोः[26] कर्षकोपांशुघातिनोः । कुलिशो मत्स्यभित्पव्योर्गिरीशो वाक्पतौ हरे १३१९
अद्रिराजेऽथ तुङ्गीशः शशाङ्के शशिशेखरे[27] । निस्त्रिंशो निर्घृणे खड्गे निर्देशः कथनाज्ञयोः १३२०

---

१. 'कोटवी चण्डिका मता । वस्त्रहीना च वनिता' इति ख-पुस्तकेऽधिकः पाठः. २. 'सितपङ्कजे' ख-ग-घ. ३. 'गाङ्गीव' ख. ४. 'खे' इति टीका. 'मुखे' ख. ५. 'पावने सूर्ये पवने' ख. ६. 'वल्लो धान्यभेदः कडङ्गरो बुसं शिम्बी बीजकोशी' इति टीका. 'बोले कडङ्गके शिम्ब्यां' ग-घ. ७. 'आद्या प्रथमा उपलब्धि दर्शनं गङ्गादीनां तदर्थं स्नानं तत्र' इति टीका. 'आद्योपलम्भनस्थाने' ख; 'आद्योपलब्धसुस्थाने' ग-घ. ८. 'दृतिरालूश्चर्ममयी' इति टीका. 'हतौ' ख. ९. 'किशले वले' ग-घ. १०. 'षिङ्गयोः' ख. ११. 'तुका वंशरोचना' इति टीका. 'तुगा' ख; 'तुमा' ग-घ. १२. 'चोत्तरः स्थितः' ग-घ. १३. 'दैत्याचार्ये' ख. १४. 'मधुजे' ग-घ. १५. 'अग्नौ' ग-घ. १६. 'परिभवे रसादीनां च' ख. १७. 'संभवे' ख. १८. 'शात्रौ' ग-घ. १९. 'षाडवो रागमानयोः । संभवो जनने हेतौ मेलके चारुजन्मनि' ख. २०. 'समये' ख. २१. 'भृतके' ख. २२. 'कारवेल्ले च जीरे च सुग्रीवो वानराधिपे । चारुग्रीवे सैन्धवस्तु सिन्धुदेशोद्भवे हये ॥ मणिमन्येऽप्यथादर्शष्टीकायां' ख. २३. 'कम्पिल्लक' ख-ग-घ. २४. 'वशौ' ग-घ. २५. 'माधुरी' ग-घ. २६. 'भययोः' ख. २७. इतःपरम् 'दुःस्पर्शस्तु खरस्पर्शे कण्टकार्यां यवासके' ख.

निर्वेशः स्यादुपभोगे मूर्छने वेतनेऽपि च । निवेशः सैन्यविन्यासे न्यासे द्रङ्ग[1]विवाहयोः ॥१३२१
निदेशः स्यादुपकण्ठे शासने परिभाषणे । नीकाशो निश्चये तुल्ये प्रकाशः स्फुटहासयोः ॥१३२२
उद्योतेऽतिप्रसिद्धे च प्रदेशो देशमात्रके । भित्तौ मानविशेषे च पलाशः किंशुके[2]ऽसुपे ॥ १३२३
हरिते[3] पलाशं पत्रे पिङ्गाशं जात्यकाञ्चने । पिङ्गाशौ मत्स्यपल्लीशौ पिङ्गाशी स्यात्तु नीलिका[4] १३२४
बालिशस्तु शिशौ मूर्खे भूकेशः शैवले वटे[5] । लोमशो लोमयुक्तेऽवौ लोमशा शाकिनीभिदि ॥१३२५
महामेदाकाकजङ्घाशृगालीजटिलासु च । कासीसे[6]ऽतिवलाशूकशिम्बीमर्कटिकासु च ॥ १३२६
विवशः स्यादवश्यात्मानिष्टदुष्ट[7]मतिश्च यः । विकाशो रहसि व्यक्ते विपाशः पाशवर्जिते ॥१३२७
विपाशा तु सरिद्भेदे सदेशोऽन्तिकदेशयोः । सदृशं तूचिते तुल्ये संकाशः सदृशेऽन्तिके ॥१३२८
संवेशः शयने पीठे सुखाशस्तु प्रचेतसि । शुभाशे राजतिनिशे हताशो निष्कृपे खले[8] ॥ १३२९
अध्यक्षोऽधिकृते लक्षेऽभीषुः प्रग्रहरोचिषोः । आरक्षो रक्षके हस्तिकुम्भाधश्चामिषं पले ॥१३३०
सुन्दराकाररूपादौ संभोगे लोभलेशयोः । आकर्षः पाशके धन्वाभ्यासाङ्गे द्यूतइन्द्रिये ॥ १३३१
आकृष्टौ शारिफलकेऽप्युष्णीषं लक्षणान्तरे । शिरोवेष्टि किरीटे चं कलुषं त्वाविलांहसोः ॥१३३२
कल्माषो राक्षसे कृष्णे शबलेऽप्यथ किल्बिषम् । पापे रोगेऽपराधे च कुल्माषं स्यात्तु काञ्जिके १३३३
कुल्माषोऽर्धस्विन्नधान्ये गवाक्षो[11] जालके कपौ । गवाक्षी त्विन्द्रवारुण्यां गण्डूषो मुखपूरणे ॥१३३४
गजास्ये च कराङ्गुल्यां प्रसृत्यां प्रमितेऽपि च । गोरक्षौ गोपनारङ्गौ जिगीषा तु जयस्पृहा ॥१३३५
व्यवसाये प्रकर्षश्च तरीषः शोभमाकृतौ । भेलेऽब्धौ व्यवसाये च ताविषोऽब्धिसुवर्णयोः ॥१३३६
स्वर्गे च नहुषो राजविशेषे नाग[12]भिद्यपि । निकषः शाणफलके निकषा यातुमातरि ॥ १३३७
निमेषनिमिषौ नेत्रमीलने कालभिद्यपि । प्रत्यूषः स्याद्वसौ प्रातः प्रदोषः कालदोषयोः ॥ १३३८
परुषं कर्बुरे[13] रूक्षे स्यान्निष्ठुरवचस्यपि । पियूषममृते नव्यसूतधेनोः पयस्यपि ॥ १३३९
पुरुषस्त्वात्मनि[14] नरे पुन्नागे चाथ पौरुषम् । ऊर्ध्वविस्तृतदोःपाणिपुरुषोन्मानतेजसोः ॥ १३४०
पुंसः कर्मणि भावे च महिषी नृपयोषिति । सैरिभ्यां[15]मौषधीभेदे मारिषस्त्वार्यशाकयोः ॥ १३४१
मारिषा दक्षजननी मृगाक्षी मृगलोचना । त्रियामेन्द्रवारुणी च रक्ताक्षो रक्तलोचने ॥ १३४२
चकोरे महिषे क्रूरे पारावतेऽथ रोहिषः । मृगकत्तृणमत्स्येषु विश्लेषस्तु वियोजने ॥ १३४३
विधुरे चाथ[16] शुश्रूषोपासनाश्रवणेच्छयोः । शैलूषः स्यान्नटे बिल्वे संहर्षः पवने मुदि ॥ १३४४
स्पर्धायां च समीक्षा तु ग्रन्थभेदे समीक्षणे । अलसः स्याद्द्रुमे भेदे पादरोगे क्रियाजडे ॥ १३४५
अलसा तु हंसपाद्यां नगौकोवदगोकसः । विहङ्ग[17]सिंहशरभा आश्वासः स्यात्तु निर्वृतौ ॥ १३४६
आख्यायिकापरिच्छेदेऽपीर्ष्वासो[18] धन्वधन्विनोः । उच्छ्वासः प्राणने श्वासे गन्ध[19]बन्धान्तरेऽपि च १३४७
उत्तंसः शेखरे कर्णपूरे चापि वतंसवत् । उदर्चिरु[20]र्भेऽग्नौ च कनीयाननुजेऽल्पके ॥ १३४८

१. 'द्रङ्गो नगरम्' इति टीका. 'शिबिरोद्वाहयोः' ग-घ. २. 'किंशुकः शठी' ख. ३. 'हरिद्वर्णो राक्षसश्च पलाशं छदने स्मृतम् । पक्षीशो गरुडे विष्णौ' ख. ४. 'नालिका' ग-घ. ५. इतःपरम् 'भूकेशी वल्वजेषु स्याल्लोमशो लोमसंयुते । मुनिभेदे च मेषे च' ख. ६. 'कासीसं धातुभेदः' इति टीका. 'काशीशे' ख-ग-घ. ७. 'अरिष्ट' ग-घ. ८. इतःपरम् 'नष्टवाञ्छे हुताशस्तु पावके हुतभोजिनि' इति ख-पुस्तकेऽधिकः पाठः. ९. 'संचये' ग-घ. १०. 'स्यादुत्प्रेक्षा व्यवधानके । काव्यालंकरणे चापि' ख. ११. 'यवके चणकेऽपि च' ख. १२. 'राग' ख. १३. 'कठिने' ख. १४. 'स्वात्मनि' ग-घ. १५. 'सौरिभ्या' ग-घ. १६. 'विशेषस्तु व्यक्तावयवेऽपि च । आधिक्ये चाथ' ख. १७. 'विहंस' ख. १८. 'पीष्ठासो' ग-घ. १९. 'पद्यान्त' ग-घ. २०. 'वह्नौ' ख.

अतियूनि कीकसस्तु कृमौ कीकसमस्थनि । तामसः सर्पखलयोस्तामसी स्यान्निशोमयोः ॥१३४९
त्रिस्रोता जाह्नवीसिन्धुभिदोरथ दिवौकसौ । चातकस्त्रिदशश्चापि दीर्घायुर्जीवके द्विके ॥ १३५०
मार्कण्डे शाल्मलितरौ नभसस्तु नदीपतौ । गगने ऋतुभेदे च पनसः कपिरुग्भिदोः ॥ १३५१
कण्टके कण्टकिफले प्रचेता वरुणे मुनौ । हृष्टे पायसः श्रीवासे पायसं परमान्नके ॥ १३५२
बीभत्सो विकृते क्रूरे रसे पार्थे घृणात्मनि । बुक्कसी कालिकानील्योर्बुक्कसः श्वपचेऽधमे ॥१३५३
मानसं स्वान्तसरसो रभसो वेगहर्षयोः । राक्षसी कौणपी दंष्ट्रा रोद इव तु रोदसी ॥ १३५४
दिवि भुव्युभयोश्चापि लालसो लोलयाच्ञयोः । तृष्णातिरेक औत्सुक्ये वरीयाञ्श्रेष्ठयोगयोः १३५५
अतियून्यतिविस्तीर्णे वायसस्त्वगुरौ द्विके । श्रीवासे वायसी काकोदुम्बरी काकमाच्यपि ॥ १३५६
वाहसोऽजगरे वारिनिर्याणे सुनिषण्णयोः । विलासो हावे लीलायां विहायो व्योमपक्षिणोः १३५७
श्रीवासः स्याद्वृकधूपे कमले मधुसूदने । श्रेयसी गजपिप्पल्यामभयारास्नयोरपि ॥ १३५८
समासः समर्थनायां स्यात्संक्षेपैकपद्ययोः । सप्तार्चिः क्रूरनेत्रेऽग्नौ साधीयानतिशोभने ॥ १३५९
अतिबाढे साहसं तु दमे दुष्करकर्मणि । अविमृश्यकृतौ धार्ष्ट्ये सारसं सरसीरुहे ॥ १३६०
सारसः पुष्कराख्येन्द्वोः सुमनाः प्राज्ञदेवयोः । जात्यां पुष्पे सुमेधास्तु ज्योतिष्मत्यां विदुष्यपि १३६१
सुरसः स्वादौ पर्णासेऽप्यत्यूहश्चित्रमेखले । अत्यूहा तु नीलिकायामाग्रहोऽनुग्रहे ग्रहे ॥ १३६२
आसङ्गाक्रमणयोश्चाप्यारोहो दैर्घ्य उच्छ्रये । आरोहणे गजारोहे स्त्रीकट्यां मानभिद्यपि ॥ १३६३
कलहो भण्डने खड्गकोशे समरराढयोः । कटाहः स्यात्कूर्मपृष्ठे कर्परे महिषीशिशौ ॥ १३६४
तैलादिपाकपात्रे च दात्यूहः कालकण्ठके । चातकेऽपि नवाहस्त्वाद्यतिथौ नववासरे ॥ १३६५
निर्यूहो[13] द्वारि निर्यासे शेखरे नागदन्तके । निरूहो निश्चिते तर्के वस्तिभेदेऽथ निग्रहः ॥१३६६
बन्धके भर्त्सने सीम्नि प्रग्रहः किरणे भुजे । तुलासूत्रेऽश्वादिरश्मौ सुवर्णहलिपादपे ॥ १३६७
बन्धने वन्द्यां प्रवाहो व्यवहाराम्बुवेगयोः । प्रवहो वायुभेदे स्याद्वायुमात्रे बहिर्गतौ ॥ १३६८
प्रग्राहः स्यात्तुलासूत्रे वृषादीनां च बन्धने । पटहो वाद्य आरम्भे वराहो नाणके किरौ ॥१३६९
मेघे मुस्ते गिरौ विष्णौ वाराही गृष्टिभेषजे । मातर्यपि विदेहस्तु निर्देहे मैथिलेऽपि च ॥ १३७०
विग्रहो युधि विस्तारे प्रविभागशरीरयोः[17] । संग्रहो बृहदुद्धारे ग्राहसंक्षेपयोरपि ॥ १३७१
सुवहस्तु सम्यग्वहे सुवहा सल्लकीद्रुमे । रास्नाशेफालिकागोधापद्येलापर्णिकासु च ॥ १३७२

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहे त्रिस्वरकाण्डस्तृतीयः ।

---

१. 'कीकसकास्थिनि' घ-पुस्तक एवं पाठ उपलभ्यते. २. 'तामस्ते स्यात्' ग. ३.'मार्कण्डेये' ग-घ. ४. 'हृष्टे पायसः पायसं श्रीवासपरमान्नयोः' ग-घ-पुस्तक एतादृशः पाठ उपलब्धः. ५. 'विस्तारे' ख. ६. 'कावमाची औषधीभेदे' इति टीका. 'काकमाची' ख-ग-घ. ७. 'दुष्कृत' ग-घ. ८. 'द्वेषे' ग-घ. ९. 'पक्षिशीतांश्वोः' ग-घ. १०. 'स्यात्सुमधुरे सुरसा त्वौषधीभिदि । अत्यूहस्तु मयूरे स्यादत्यूहा निलिकौषधौ ॥ आग्रहोऽनुग्रहासक्तिग्रहेष्वाक्रमणेऽपि च। आरोहो दैर्घ्य उच्छ्राये स्त्रीकट्यां मानभिद्यपि ॥ आरोहणे गजारोहेऽप्युत्साहः सूत्र उद्यमे।' ख-पुस्तकस्थोऽयं पाठः. ११. 'युद्धवराटयोः' ख. १२. 'राढो देशविशेषः' इत्यनेकार्थकैरवाकरकौमुदी. १३. 'निर्व्यूहो द्वारि' ग-घ. १४. 'कृततमालवृक्षः' इति टीका. 'सुवर्णे हरिपादपे' ख. १५. 'वृणोतीति वराहः इति टीका. 'वाराहः' ग-घ. १६. 'नाणकं रूपकादि' इति टीका. 'नागके' ग-घ. १७. इतःपरम् 'वैदेही पिप्पलीसीतारोचनासु वणिक्स्त्रियाम्' क-ख. १८. 'शल्लकीद्रुमे' ग-घ. १९. 'पटोली' ख.

चतुःस्वरकाण्डः ।

अङ्गारक उल्मुकांशे महीपुत्रे कुरण्टके[1] । अङ्गारिका लिक्षुकाण्डे किंशुकस्य च कोरके ॥१३७३
अलिपकः[2] पिके भृङ्गेऽलमकः[3] पद्मकेसरे । मधुके कोकिले भेकेऽश्मन्तकं मालुकाछदे[4] ॥ १३७४
चुल्ल्यां चाक्षेपको व्याधिनिन्दके वातरुज्यपि । आकल्पकस्तमोमोहग्रन्थावुत्कलिकामुदोः ॥१३७५
आखनिकस्त्वाखुरिव किरावुन्दरचौरयोः । उत्कलिका तु हेलायां तरङ्गोत्कण्ठयोरपि ॥ १३७६
एडमूकोऽनेडमूक इवावाक्श्रुतिके[5] शठे । कटिल्लकस्तु[6] वर्षाभ्वां पर्णासे कारवेल्लके ॥ १३७७
कर्कोटकोऽहौ बिल्वे च कनीनिकाक्षितारके । स्यात्कनिष्ठाङ्गुलिरपि काकरूको दिगम्बरे॥१३७८
उलूके स्त्रीजिते दम्भे भीरुके निर्धनेऽपि च । कुरुवकः शोणाम्लानेऽरुणा पीता च झिण्टिका ॥१३७९
कृकवाकुस्ताम्रचूडे मयूरकृकलासयोः । कोशातकः कचे कोशातकी ज्योत्स्नीपटोलिका ॥१३८०
घोषकेऽथ कौलेयकः सारमेयकुलीनयोः । कौकुटीको दाम्भिके स्याददुरेरितलोचने ॥ १३८१
गुणनिका तु शून्याङ्के नर्तने पाठनिश्चये । गोमेदकं[8] पीतरत्ने काकोले पत्रकेऽपि च ॥ १३८२
गोकण्टको गोक्षुरके गोखुरैः स्थपुटीकृते । गोकुणिकः केकरे स्यात्पङ्गुस्थगव्युपेक्षके ॥ १३८३
घर्घरिका भृष्टधान्ये किङ्कण्यां सरिदन्तरे । वादित्रस्य च दण्डेऽपि चण्डालिकौषधीभिदि॥१३८४
किन्दरायामुमायां[9] च जर्जरीकं जरत्तरे[10] । बहुच्छिद्रेऽथ जैवातृकः स्याद्रजनीकरे ॥ १३८५
कृशायुष्मद्भेषजेषु तर्तरीकं[11] वहित्रके । पारगे त्रिवर्णकस्तु गोक्षुरेऽथ त्रिवर्णकम् ॥ १३८६
त्र्यूषणं त्रिफला तिक्तशाकस्तु पथ्यसुन्दरे[12] । वरुणे खदिरे दन्दशूकस्तु फणिरक्षसोः ॥ १३८७
[13]दलाढकोऽरण्यतिले गैरिके नागकेसरे । कुन्दे महत्तरे फेने करिकर्णशिरीषयोः ॥ १३८८
वात्यायां खातके प्रश्न्यां[14] नियामको नियन्तरि । पोतवाहे कर्णधारे निश्चारकः समीरणे ॥१३८९
पुरीषस्य क्षये स्वैरे प्रचलाको भुजङ्गमे । शराघाते शिखण्डे च प्रकीर्णकं तुरङ्गमे ॥ १३९०
चामरे विस्तरे ग्रन्थभेदे पिप्पलकं पुनः । चूचुके सीवनसूत्रे पिण्डीतकः फणिज्जके[15] ॥ १३९१
तगरे मदनद्रौ च पुण्डरीकं सिताम्बुजे । सितच्छत्रे भेषजे च पुण्डरीकोऽग्निदिग्गजे ॥१३९२
सहकारे गणधरे राजिलाहौ गजज्वरे । कोशकारान्तरे व्याघ्रे पुष्कलकस्तु कीलके ॥ १३९३
कृपणे गन्धमृगे[16] च स्यात्पूर्णानकमानके । पात्रे च पूर्णपात्रे च फर्फरीकं तु मार्दवे ॥ १३९४
फर्फरीकश्चपेटायां बलाहकोऽम्बुदे गिरौ । दैत्ये नागे बर्बरीकः केशविन्यासकर्मणि ॥ १३९५
शाकभेदे महाकाले बकेरुका बलाकिका[17] । वातावर्जितशाखा च भ्रमरको मधुव्रते ॥ १३९६
गिरिके चूर्णके केशे भयानकस्तु भीषणे । व्याघ्रे राहौ रसे भट्टारको राज्ञि मुनौ सुरे ॥ १३९७

---

१. ‘कुरुण्ठके’ ग-घ. २. ‘न लिम्पतीति अलिपकः’ इति टीका. ‘अलिपिकः’ ख. ३. ‘अलमत्यर्थमकति अलमकः’ इति टीका. ‘अलिमकः’ ख; ‘अलिम्पकः’ ग-घ. ४. ‘मालुका छदो वृक्षः’ इति टीका. ‘मल्लिकाछदि’ ग-घ. ५. ‘तु निर्वाणी श्रुतिके’ ग-घ. ६. ‘कटतीति कटिलस्ततः कः’ इति टीका. ‘कचिल्लकः’ ख; कठिल्लकः’ ग-घ. ७. ‘कठे’ ग-घ. ८. ‘गोमेदकः’ ग-घ. ९. ‘किन्दरा चण्डालवादित्रम्’ इति टीका. ‘कन्दरायाम्’ ख-ग-घ. १०. ‘जरातुरे’ ख. ११. ‘तरति तर्तरीकः ‘कृपृवृञ्शृ’ इति बहुवचनादीके साधुः’ इति टीका. ‘कर्तरीकम्’ इति ख. १२. ‘पत्रसुन्दरे’ ख. १३. ‘दलाठकः’ ख. १४. इतः परम् ‘दासेरकस्तु धीवरे । दासीपुत्रे च करभे’ इत्यप्युपलभ्यते पाठः ख-पुस्तके. १५. ‘फणिज्झके’ ग-घ. १६. ‘गन्धहरिणे’ ख. १७. ‘बलाधिका’ ग-घ.

भार्याटिको मृगभेदे भार्यया च विनिर्जिते । मरुवकः पुष्पभेदे मदनद्रौ फणिज्झके ॥ १३९८
मयूरकस्त्वपामार्गे मयूरकं तु तुत्थके । माणवकः कुपुंसि स्याद्बालहारभिदोरपि ॥ १३९९
मृष्टेरुकः स्यान्मृष्टाशे दानशौण्डेऽतिथिद्विषि । रतर्द्धिकं तु दिवसे सुखस्नानेष्टमङ्गले ॥ १४००
राधरङ्कुस्तु नासारे सीकरे जलदोपले । लालाटिकः स्यादाश्लेषभेदे कार्याक्षमेऽपि च ॥ १४०१
प्रभोर्भावदर्शिनि च लेखीलकस्तु तत्त्रयः । स्वहस्तं परहस्तेन लिखितेषु विलेखयेत् ॥ १४०२
लेखहारे वर्तरूकः काकनीले जलावटे । वराटकः पद्मबीजकोशे रज्जौ कपर्दके ॥ १४०३
वरण्डकस्तु मातङ्गवेद्यां यौवनकण्टके । संवर्तुले च भित्तौ च विनायको गणाधिपे ॥ १४०४
बुद्धे तार्क्ष्ये गुरौ विघ्ने वितुन्नकं तु धान्यके । झाटामलौषधौ चापि विदूषकोऽन्यनिन्दके ॥ १४०५
क्रीडनीयकपात्रे च विशेषकस्तु पुण्ड्रके । विशेषाध्यायके चापि वृन्दारको मनोरमे ॥ १४०६
सुरे श्रेष्ठे बृहतिका स्यादुरुवस्त्रभेदयोः । वैतालिकः खेट्टताले मङ्गलपाठकेऽपि च ॥ १४०७
वैनाशिकः स्यात्क्षणिके परायत्तोर्णनाभयोः । वैदेहकः वाणिजके वेश्यापुत्रे च शूद्रतः ॥ १४०८
शतानिको मुनौ वृद्धे शालावृको वलीमुखे । सारमेये शृगाले च शिलाटकस्तिलाट्टयोः ॥१४०९
शृङ्गाटकं पथां श्लेषे पानीयकण्टकेऽपि च[12] । संघाटिका तु कुट्टिन्यां घ्राणे युग्मेऽम्बुकण्टके १४१०
[13]संतानिका [14]क्षीरशरे मर्कटस्य च जालके । सुप्रतीकः स्यादीशानदिग्गजे शोभनाङ्गके ॥ १४११
सैकतिकं पुनर्मातृयात्रामङ्गलसूत्रयोः । सैकतिकः क्षपणके संन्यस्ते भ्रान्तिजीविनि ॥ १४१२
सोमवल्कः [15]कधुले स्याद्बलक्षखदिरद्रुमे । सौगन्धिको गन्धवणिक्सौगन्धिकं तु कत्तृणे ॥ १४१३
गन्धोत्पले पद्मरागे कल्हारेऽग्निमुखो द्विजे । भल्लाके चित्रके देवेऽप्यग्निशिखं तु कुङ्कुमे॥ १४१४
[16]अग्निशिखा लाङ्गलिक्यामिन्दुलेखेन्दुखण्डके । गडूचीसोमलतयोः पञ्चनखस्तु कच्छपे ॥ १४१५
गजे बद्धशिखो वाले बद्धशिखोच्चटौषधौ । महाशङ्खो निधिभेदे संख्याभेदे नरास्थनि ॥१४१६
व्याघ्रनखस्तु कन्दे स्याद्गन्धद्रव्यान्तरेऽपि च । शशिलेखा वृत्तभेदे वाकुची चन्द्रलेखयोः ॥१४१७
शिलीमुखोऽलौ बाणे चापवर्गस्त्यागमोक्षयोः । क्रियावसाने साफल्येऽप्यभिषङ्गः पराभवे॥१४१८
आक्रोशे शपथे चेहामृगः स्याद्रूपकान्तरे । वृके जन्तौ चोपरागो राहुग्रस्तार्कचन्द्रयोः ॥ १४१९
विगाने दुर्नये राहावुपसर्ग उपद्रवे । प्रादौ च रोगभेदे च कटभङ्गो नृपात्यये ॥ १४२०
हस्तच्छेदे च सस्यानां छत्रभङ्गो नृपक्षये । स्वातन्त्र्ये विधवत्त्वे च दीर्घाध्वगः क्रमेलके ॥ १४२१
लेखहारे मल्लनागो वात्स्यायनसुरेभयोः । समायोगस्तु संयोगे समवाये प्रयोजने ॥ १४२२
संप्रयोगो निधुवने संबन्धे कार्मणेऽपि च । जलसूचिः शिशुमारे त्रोटिमत्स्ये जलौकसि ॥ १४२३

---

१. 'भार्यामटति भार्याटिकः' इति टीका. 'भार्याढिकः' इति ग-घ. २. 'नागभेदे' ख; 'मुनिभेदे' ग-घ. ३. अस्य स्थाने 'मण्डोदकं तु चित्तस्य राग आतर्पणेऽपि च' इत्यधिकः पाठ उपलभ्यते ख-पुस्तके. ४. 'शीकरे' ख-ग-घ. ५. 'आश्लेषे भवे' ग-घ. ६. 'लेखयति लेखं लाति वा लेखीलकः' इति टीका. 'लेखनिकः' ग-घ. ७. 'काकनीलो वृक्षभेदः' इति टीका. 'काकनीडे' ख-ग-घ. ८. 'उरुः सक्थि' इति टीका. 'दारु वस्त्र' ग-घ. ९. 'खेट्टेन क्रीडया तालः' इति टीका. 'खञ्जताले' ख; 'खड्जताले' ग-घ. १०. विदिह्यते घञि स्वार्थोऽणि के च वैदेहकः' इति टीका. 'वैदेहिकः' ख. ११. 'शिलाट्टयोः' ग-घ. १२. इतःपरम् 'गृङ्गाटिका शिवायां स्यात्त्रासादपि पलायने' इति ख. १३. 'संतनोति संतानिका' इति टीका. 'शन्तानिका' ग-घ. १४. 'क्षीरशर आमिक्षा' इति टीका. 'ह्रीरराजे' ग-घ. १५. 'कधुलो वृक्षः' इति टीका. 'कट्फले' ख-ग-घ. १६. 'अग्निशाखा' ख.

कङ्कशृङ्गाटयोश्चापि मलिम्लुचस्तु तस्करे । वाते काश्मीरजं कुष्टे कुङ्कुमे पौष्करेऽपि च ॥ १४२४
काश्मीरजातिविषयां क्षीराब्धिजं मौक्तिके। वशिरे क्षीराब्धिजस्तु चन्द्रे क्षीराब्धिजा श्रियाम् ॥
ग्रहराजः शशिन्यर्के जघन्यजोऽनुजन्मनि। शूद्रे च द्विजराजस्तु [1]शेषे तार्क्ष्ये निशाकरे ॥१४२६
धर्मराजस्तु सुगते श्राद्धदेवे युधिष्ठिरे । भरद्वाजः पक्षिभेदे [3]बृहस्पतिसुतेऽपि च ॥ १४२७
[[4]भारद्वाजो मुनौ भारद्वाजी वनपिचुद्रुमे ।] भृङ्गराजो मधुकरे मार्कवे विहगान्तरे ॥ १४२८
राजराजो नृपेशेन्द्वोः कुबेरेऽथ सकृत्प्रजः। [5]काके सिंहेऽथोच्चिङ्गटः कोपने मीनभिद्यपि ॥१४२९
करहाटः पद्मकन्दे [6]देशद्रुमविशेषयोः । कार्यपुटोऽनर्थकारे क्षपणोन्मत्तयोरपि ॥ १४३०
कामकूटो वेश्याविभ्रमेष्टावथ कुटन्नटः । शोणके कैवर्तीमुस्ते कुण्डकीटस्तु जारतः ॥ १४३१
विप्रीपुत्रे [7]दासीपतौ चार्वाकोक्तिविशारदे । खञ्जरीटस्तु [8]खञ्जनेऽसिधाराव्रतचारिणोः[9] ॥ १४३२
गाढमुष्टिस्तु कृपणे कृपाणप्रभृतावपि । चक्रवाटस्तु पर्यन्ते क्रियारोहे शिखातरौ[10] ॥ १४३३
तुलाकोटिर्मानभेदेऽर्बुदे स्यान्नूपुरेऽपि च । नारकीटः स्वदत्ताशाविहन्तर्यश्मकीटके ॥ १४३४
[11]प्रतिशिष्टः पुनः प्रत्याख्याते च प्रेषितेऽपि च। प्रतिकृष्टं तु गुह्ये स्याद्विरावृत्त्या च कर्षिते ॥१४३५
परपुष्टः कलकण्ठे परपुष्टा पणाङ्गना । वर्कराटस्तु तरुणादित्यरोचिःकटाक्षयोः ॥ १४३६
स्त्रीणां पयोधरोत्सङ्गकान्तदत्तनखेऽपि च । शिपिविष्टस्तु खल्वाटे दुश्चर्मणि पिनाकिनि ॥ १४३७
[12]श्रुतिकटः प्राश्वलोहे प्रायश्चित्तभुजङ्गयोः । कलकण्ठः पिके पारावते हंसे कलध्वनौ ॥ १४३८
कालकण्ठनीलकण्ठौ पीतसारे महेश्वरे । दात्यूहे ग्रामचटके खञ्जरीटे शिखावले ॥ १४३९
कालपृष्ठं तु कोदण्डमात्रके कर्णधन्वनि । कालपृष्ठो मृगभेदे कङ्के दन्तशठः पुनः ॥ १४४०
जम्बीरे नागरङ्गे च कर्मरङ्गकपित्थयोः । पूतिकाष्ठं तु सरले देवदारुद्रुमेऽपि च ॥ १४४१
सूत्रकण्ठः खञ्जरीटे द्विजन्मनि कपोतके । [13]हारिकण्ठः हारयुक्तकण्ठे परभृतेऽपि च ॥ १४४२
अपोगण्डोऽतिभीरौ स्याच्छिशुके विकलाङ्गके। चक्रवाडं गणे चक्रवाडोऽद्रौ चक्रवालवत् ॥१४४३
[14]जलरुण्डः पयोरेणौ जलावर्ते भुजङ्गमे । देवताडो घोषकेऽग्नौ राहौ वातखुडा पुनः ॥ १४४४
वात्यायां पिच्छिलस्फोटे वामायां वातशोणिते। अध्यारूढः समारूढेऽभ्य[15]धिकेऽङ्गारिणी पुनः १४४५
भास्करे त्यक्तदिक्षुद्द्योराथर्वणः पुरोधसि । अथर्वज्ञब्राह्मणे चाप्यारोहणं प्ररोहणे ॥ १४४६
समारोहे सोपाने च स्यादुद्धरणमुन्नये । भुक्तोज्झितोन्मूलनयोरुत्क्षेपणमुदञ्चनम् ॥ १४४७

---

१. इत्यत्र 'शेषे तार्क्ष्ये निशाकरे । अमृतादिसमूहे च भवेत्' ग-पुस्तकेऽधिकः पाठः. २. 'शशाङ्के गरुडेऽपि च' ख. ३. 'मुनौ जीवसुतेऽपि च' ग-घ. ४. 'भरद्वाजस्यापत्यं भारद्वाजः' इति टीका. 'भरद्वाजः' ख. कोष्ठान्तर्गतपाठो ग-घ-पुस्तकयोर्नास्ति. ५. 'द्विके' ख. ६. 'पुष्प' ख. ७. 'धवे दास्याः' ख. ८. 'फलके' ख. ९. इतःपरम् 'गन्धकुटी मदिरायां बुद्धाद्यायतनेऽपि च' ख. १०. इतःपरम् 'चतुःषष्टिश्चतुःषष्टिकलासु बह्वृचेऽपि च' ख. ११. 'प्रतिशिष्यते प्रतिशिष्टः' इति टीका. 'प्रतिसृष्टः' ग-घ. १२. 'श्रुतिं शास्त्रं कटति श्रुतिकटः' इति टीका. 'श्रुतिकण्ठः' ग-घ. १३. 'हारी हारवान् मनोहरो वा कण्ठो गलः स्वरो वा यस्य हारिकण्ठः' इति टीका. 'हारकण्ठः' ख. १४. 'जलं रुणद्धि जलरुण्डः' इति टीका. 'जलरण्डः' ग-घ. १५. 'अत्र अप्यधिकेऽप्यभिधेयवत् । अङ्गारिणीह संतप्तां स्याद्भास्करत्यक्तदिश्यपि । आथर्वणोऽथर्वविदि ब्राह्मणे च पुरोधसि । आरोहणं समारोहे सोपाने च प्ररोहणे । आतर्पणं तु सौहित्ये विन्द्यादालिङ्गनेऽपि च । उत्क्षेपणं तु व्यजने धान्यमर्दनवस्तुनि । उदञ्चने चोद्धरणं स्यादुन्मूलन उन्नये। वातान्ने च कामगुणो विषयाभोगयो रतौ। कार्षापणः कार्षिके स्यात्पणषोडशकेऽपि च । जीर्णपर्णस्तु निम्बे स्यात्खर्जूरी भूरुहेऽपि च ॥' ख-पुस्तके एवं पाठः.

व्यजनं धान्यमलनवस्तु कामगुणो रतौ । विषयाभोगयोश्चापि कार्षापणस्तु कार्षिके ॥ १४४८
पर्णं षोडशके चीर्णपर्णः खर्जूरनिम्बयोः । चूडामणिः काकचिञ्चाफले मूर्द्धमणावपि ॥ १४४९
जुहुराणोऽध्वर्युवह्न्योस्तण्डुरीणस्तु वर्वरे । तण्डुलाम्बुनि कीटे च तैलपर्णी तु सिल्हके ॥ १४५०
श्रीवासे चन्दने दाक्षायण्युमायां च भेषु च । रोहिण्यां च देवमणिर्विष्णुवक्षोमणौ हरे ॥ १४५१
अश्वस्य कण्ठावर्ते च नारायणस्तु केशवे । नारायणी शतावर्युमा श्रीर्निःसरणं मृतौ ॥ १४५२
उपाये गेहादिमुखे निर्वाणे निर्गमेऽपि च । निरूपणं विचारावलोकनयोर्निदर्शने ॥ १४५३
निस्तरणं तु निस्तारे तरणोपाययोरपि । निगरणं भोजने स्यान्निगरणः पुनर्गले ॥ १४५४
प्रकरणं स्यात्प्रस्तावे रूपकेऽथ प्रवारणम् । काम्यदाने निषेधे च पैररीणं तु पर्वणि ॥ १४५५
पर्णवृन्तरसे पर्णसिरायां घृतकम्बले । पैरायणं स्यादभीष्टे तत्पराश्रययोरपि ॥ १४५६
परवाणिर्धर्माध्यक्षे वर्षे पारायणं पुनः । कार्त्स्न्ये पारगतौ सङ्गे पीलुपर्ण्यौषधीभिदि ॥ १४५७
मूर्वायां बिम्बिकायां च पुष्करिणी जलाशये । हस्तिन्यां कमलिन्यां च मीनाम्रीणस्तु खञ्जने ॥ १४५८
दर्दराम्रे रक्तरेणुः पलाशकलिकोद्गमे । सिन्दूरे रागचूर्णस्तु खदिरे मकरध्वजे ॥ १४५९
रेरिहाणो वरे रुद्रे लम्बकर्णः पुनश्छगे । अङ्कोठे वारवाणस्तु कूर्पासे कवचेऽपि च ॥ १४६०
विदारणं भेदने स्यात्संपराये विडम्बने । वैतरणी प्रेतनद्यां जनन्यामपि रक्षसाम् ॥ १४६१
शरवाणिः शरमुखे पदातौ शरजीविनि । शिखरिणी वृत्तभेदे रोमालीपेयभेदयोः ॥ १४६२
स्त्रीरत्ने मल्लिकायां च समीरणः फणिज्झके । पान्थे वायौ संसरणं त्वसंबाधचमूगतौ ॥ १४६३
संसारे च समारम्भे नगरस्योपनिर्गमे । हस्तिकर्णः स्यादेरण्डे पलाशगणभेदयोः ॥ १४६४
अवदातस्तु विमले मनोज्ञे सितपीतयोः । अपावृतोऽपरायत्तेऽपिहितेऽवसितं गतौ ॥ १४६५
ऋद्धे ज्ञातेऽवसाने चाप्यवगीतं विगर्हिते । मुहुर्दृष्टेऽपवादे चात्याहितं तु महाभये ॥ १४६६
जीवनिरपेक्षकर्मण्यभिजातः कुलोद्भवे । न्याय्ये प्राज्ञेऽभिनीतस्तु न्याय्येऽमर्षिणि [10]संस्कृते ॥ १४६७
अभियुक्तः परिरुद्धे तत्परेऽन्तर्गतं पुनः । मध्यप्राप्तविस्मृतयोरङ्गारितं तु भस्मिते ॥ १४६८
पलाशकलिकोद्भेदे चातिमुक्तस्तु निष्कले । वासन्तिकायां तिनिशेऽप्यवध्वस्तोऽवचूर्णिते ॥ १४६९
त्यक्तनिन्दितयोश्चाधिक्षिप्तौ निहितभर्त्सितौ । अपचितिर्व्यये हानौ पूजायां निष्कृतावपि ॥ १४७०
अनुमितिः स्यादनुज्ञापौर्णमासीविशेषयोः । अनुशस्तिः पुनर्लोकापवादे प्रार्थनेऽपि च ॥ १४७१
उदास्थितश्चरे द्वाःस्थेऽध्यक्षे चोपाहितः पुनः । आरोपितेऽनलोत्पातेऽप्युपाकृत उपद्रवे ॥ १४७२
मन्त्रेण प्रोक्षितपशावुल्लिखितं तनूकृते । उत्कीर्णे चोपरक्तस्तु स्वर्भानौ व्यसनातुरे ॥ १४७३
राहुग्रस्तार्कशशिनोरुपचितः समाहिते । [11]रूढे दग्धेऽथोज्जृम्भितमुत्फुल्ले चेष्टितेऽपि च ॥ १४७४
उद्ग्राहितमुपन्यस्ते बद्धग्राहितयोरपि । उपसत्तिः सङ्गमात्रे प्रतिपादनसेवयोः ॥ १४७५
ऋष्यप्रोक्ता शूकशिम्ब्यां शतावर्यां बलाभिदि । ऐरावतोऽ[12]ह्रौ नागरङ्गे लकुचे त्रिदशद्विपे ॥ १४७६
ऐरावतं तु शक्रस्य ऋजुदीर्घशरासने । ऐरावती वि[13]द्युद्विद्युन्निदोः शतह्रदा यथा ॥ १४७७

---

१. 'तैलं पर्णेऽस्यास्तैलपर्णी' इति टीका. 'तिलपर्णी' ग-घ. २. 'द्विश्रामे' ग-घ. ३. 'परीपणः' ख. ४. इतः परम् 'दण्डे कूर्मे पाटशाटे पर्वरीणं तु पर्वणि' इति ख. ५. 'परीरणम्' ग-घ. ६. 'मीनानामयति मीनाम्रीणः' इति टीका. 'मीनाप्रीणः' ख; 'मीनाम्रीणः' ग-घ. ७. 'दर्दराम्रो वृक्षभेदः' इति टीका. 'दर्दुराम्रे' ख; 'दर्शरात्रे' ग-घ. ८. 'अपरावृत्ते' ग-घ. ९. 'वद्धे' ख. १०. 'संस्मृते' ख. ११. 'ऋद्धे' ग-घ. १२. 'अद्रौ' ख. १३. 'भरित्' ख.



40

कलधौतं रूप्यहेम्नोः कलधौतः कलध्वनौ । कुहरितं तु रटिते पिकालापे रतस्वने ॥ १४७८
कुमुद्वती कैरविण्यां दयितायां कुशस्य च । कृष्णवृन्ता माषपर्ण्यां पाटलाख्यद्रुमेऽपि च ॥ १४७९
गन्धवती मुरापुर्योः पृथ्वीयोजनगन्धयोः । गृहपतिगृही सत्री चन्द्रकान्तं तु कैरवे ॥ १४८०
चन्द्रकान्तो रत्नभेदे चर्मण्वती नदीभिदि । कदल्यां चित्रगुप्तस्तु कृतान्ते तस्य लेखके ॥ १४८१
दिवाभीतः काकरिपौ कुम्भिले कुमुदाकरे । दिवाकीर्तिर्नापिते स्यादुलूकेऽन्तावसायिनि ॥ १४८२
धूमकेतू वह्न्युत्पातौ नन्द्यावर्तो गृहान्तरे । तगरेऽथ नदीकान्तो निर्गुण्डीनिचुलाब्धिषु ॥ १४८३
नदीकान्ता लताजम्ब्वोः काकजङ्घौषधेऽपि च । नागदन्तो हस्तिदन्ते गेहान्निःसृतदारुणि ॥ १४८४
नागदन्ती श्रीहस्तिन्यां कुम्भाख्यभेषजेऽपि च । निस्तुषितं वर्जिते स्याद्धृतत्वचि लघूकृते ॥ १४८५
निराकृतिरस्वाध्याये निराकारनिषेधयोः । प्रतिहतस्तु विद्विष्टे प्रतिस्खलितरुद्धयोः ॥ १४८६
प्रणिहितं तु संप्राप्तनिहितयोः समाहिते । प्रतिक्षिप्तं प्रतिहते निषिद्धे प्रेषितेऽपि च ॥ १४८७
प्रधूपिता क्लेशितायां रविगन्तव्यदिश्यपि । प्रव्रजिता तु मुण्डीर्यां तापस्यां मांसिकौषधौ ॥ १४८८
प्रजापतिर्ब्रह्मराज्ञोर्जामातरि दिवाकरे । वह्नौ त्वष्टरि दक्षादौ प्रतिकृतिस्तु पूजने ॥ १४८९
प्रतिमायां प्रतीकारे प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये बोधे परिगतं गते ॥ १४९०
प्राप्तचेष्टितयोर्ज्ञाते पल्लवितं सपल्लवे । लाक्षारक्ते तते पश्चगुप्तश्चार्वाकदर्शने ॥ १४९१
कमठे परिवर्तस्तु कूर्मराजे पलायने । युगान्ते विनिमये च परिघातस्तु घातने ॥ १४९२
अस्त्रे चाथ पशुपतिः पिनाकिनि हुताशने । पाशुपतः शिवमह्यां पशुपत्यधिदेवते ॥ १४९३
पारिजातस्तु मन्दारे पारिभद्रे सुरद्रुमे । पारापतः कलरवे गिरौ मर्कटतिन्दुके ॥ १४९४
पारापती तुलबलीफलगोपालगीतयोः । पुष्पदन्तस्तु दिग्नागे जिनभेदे गणान्तरे ॥ १४९५
पुष्पदन्तौ च चन्द्रार्कावेकोक्त्याथ पुरस्कृतम् । पूजिते स्वीकृते सिक्तेऽभिशस्तेऽग्रकृतेऽपि च ॥ १४९६
भोगवती तु सर्पाणां नगरे च सरित्यपि । रङ्गमाता जतुर्चुन्योर्लक्ष्मीपतिर्जनार्दने ॥ १४९७
पूगे लवङ्गवृक्षे च व्यतीपात उपद्रवे । योगभेदेऽपयाने च वनस्पतिर्द्रुमात्रके ॥ १४९८
विना पुष्पं फलेऽद्रौ च विनिपातस्तु दैवतः । व्यसने चावपाने च वैजयन्तो गुहे ध्वजे ॥ १४९९
इन्द्रालये वैजयन्ती त्वग्निमन्थपताकयोः । जयन्त्यां च समाघातस्त्वाहवे घातनेऽपि च ॥ १५००
समाहितः समाधिस्थे संश्रुतेऽथ समुद्धतः । अविनीते समुत्कीर्णे समुद्रान्ता दुरालभा ॥ १५०१
कार्पासिका च स्पृक्का च सदागतिः सदीश्वरे । निर्वाणे पवमाने च सरस्वती सरिद्भिदि ॥ १५०२
वाच्यापगायां स्त्रीरत्ने गोवाग्देवतयोरपि । सूर्यभक्तो बन्धुजीवे भास्करस्य च पूजके ॥ १५०३
हैमवत्यद्रिजा स्वर्णक्षीरी शुक्लवचाभया । अनीकस्थो रक्षिवर्जे युत्खले वीरमर्दने ॥ १५०४
चिह्ने गजशिक्षके चेतिकथा व्यर्थभाषणे । अश्रद्धेये नष्टधर्मेऽप्युदरार्थिर्वियन्मणौ ॥ १५०५

१. 'मुरा औषधिः' इति टीका. 'मुरा' ख-ग-घ. २. 'स्वाधिष्ठे' ग-घ. ३. 'भेषजे' ग-घ. ४. 'लाभे चेष्टितयोः' ख-ग-घ. ५. 'अस्त्रान्तरे' ख. ६. 'पारमापतति पारापतः' इति टीका. 'पारावतः' ग-घ. ७. 'पारावती' ग. ८. 'चुन्दी कुट्टिनी' इति टीका. 'चेट्योः' ख. 'त्रुट्योः ग-घ. ९. अतः परम् 'शुभ्रदन्ती पुष्पदन्तगजस्त्रियाम् । सुदन्त्यां च' ख. १०. इतः परम् 'सेनापतिर्गुहेऽध्यक्षे हिमारातिः खगेऽनिले' इत्यधिकः पाठः ख-पुस्तके. ११. 'युधः खलं रणभूमिः' इति टीका. 'पुंश्चले वीरमर्दले' ख; 'अप्यश्वत्थे वीरमर्दले' ग-घ.

अब्धौ चित्ररथो विद्याधरे गन्धर्वसूर्ययोः । चतुष्पथश्चतुर्मार्गसंगमे ब्राह्मणेऽपि च ॥ १५०६
दशमीस्थः [1]स्थविरे स्यात्क्षीणरोगे मृताशने । वानप्रस्थो मधूकद्रौ किंशुकाश्रमभेदयोः ॥ १५०७
अष्टापदश्चन्द्रमल्ल्यां लूतायां शरभे [3]गिरौ । कनके शारिफलकेऽभिमर्दो मन्थयुद्धयोः ॥ १५०८
स्यादभिस्पन्द आश्रावनेत्ररोगातिवृद्धिषु । अववादस्तु निर्देशे निन्दाविश्रम्भयोरपि ॥ १५०९
उपनिषत्तु वेदान्ते रहस्यधर्मयोरपि । एकपदं तदात्वे स्यादेकपदी तु वर्त्मनि ॥ १५१०
कटुकन्दः शृङ्गवेरे शोभाञ्जनरसोनयोः । कुरुविन्दः पद्मरागे मुकुरव्रीहिभेदयोः ॥ १५११
कुल्माषे हिङ्गुले मुस्ते कोकनदं तु रक्तके । अम्भोजन्मकुमुदयोश्चतुष्पदो गवादिषु ॥ १५१२
स्त्रीणां करणभेदे च [5]रक्तपादो मतङ्गजे । स्पन्दने च जनपदः स्यात्पुनर्जनदेशयोः ॥ १५१३
परिवादस्तु निन्दायां वीणावादनवस्तुनि । प्रियंवदः प्रियवादिनभश्चरविशेषयोः ॥ १५१४
पीठमर्दोऽतिवियाति नाट्योक्त्या नायकप्रिये । पुटभेदस्तु नगरातोद्ययोस्तटिनीमुखे ॥ १५१५
महानादो वर्षुकाब्दे महाध्वाने शयानके । गजे च मुचुकुन्दस्तु द्रुभेदे मुनिदैत्ययोः ॥ १५१६
मेघनादो [7]मेघशब्दे वरुणे रावणात्मजे । विशारदो बुधे धृष्टे विष्णुपदं नभोब्जयोः ॥ १५१७
विष्णुपदस्तु क्षीरोदे विष्णुपदी सुरापगा । संक्रान्तिर्द्वारिका चापि [8]समर्यादं तु संनिधौ ॥ १५१८
मर्यादया च सहितेऽप्यनुबन्धोऽप्रयोगिणि । मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ १५१९
दोषोत्पादेऽनुबन्धी तु हिक्कायां तृष्यति क्वचित् । अवरोधस्तु शुद्धान्ते तिरोधाने नृपौकसि ॥ १५२०
अवष्टब्धमविदूरे समाक्रान्ते[10]ऽवलम्बिते । अनिरुद्धश्वरे पुष्पचापसूनावनर्गले ॥ १५२१
आशाबन्धः समाश्वासे मर्कटस्य च [11]वासके । इष्टगन्धः सुगन्धिः स्यादिष्टगन्धं तु वालुके ॥ १५२२
इक्षुगन्धा काशक्रोष्ट्री कोकिलाक्षेषु गोक्षुरे । उग्रगन्धा वचाक्षेत्रयवान्योश्छिक्किकौषधौ ॥ १५२३
उपलब्धिर्मतौ प्राप्तौ कालस्कन्धस्तु तिन्दुके । तमाले जीवकद्रौ च तीक्ष्णगन्धा वचौषधौ ॥ १५२४
शोभाञ्जने राजिकायां परिव्याधो द्रुमोत्पले । वेतसे महौषधं तु [12]विषौशुण्ठ्यो रसोनके ॥ १५२५
ब्रह्मबन्धुर्निन्द्यविप्रे बान्धवे ब्राह्मणस्य च । समुन्नद्धस्तूर्ध्वबद्धे पण्डितंमन्यदृप्तयोः ॥ १५२६
अपाचीनं विपर्यस्तेऽपागर्थेऽभिजनः कुले । कुलध्वजे जन्मभूम्यामभिमानस्त्वहंकृतौ ॥ १५२७
हिंसायां प्रणये ज्ञानेऽवलग्नो मध्यलग्नयोः । अवदानमितिवृत्ते खण्डने शुद्धकर्मणि ॥ १५२८
अधिष्ठानं प्रभावेऽध्यासने नगरचक्रयोः । अनूचानः साङ्गवेदकोविदे विनयान्विते ॥ १५२९
अन्वासनं स्नेहवस्तौ सेवायामनुशोचने । अग्रजन्माग्रजे विप्रेऽन्तेवासी पुनरन्त्यजे ॥ १५३०
शिष्यप्रान्तगयोश्चाप्यायोधनं समरे वधे । आराधनं पाकप्राप्त्योः साधने तोषणेऽपि च ॥ १५३१
आच्छादनं तु वसने संविधानेऽपवारणे । आकलनं परिसंख्यालाक्ष्ययोर्बन्धनेऽपि च ॥ १५३२
आतञ्चनं स्याज्जवने प्रीणनप्रतिवापयोः । आवेशनं [13]भूतावेशे प्रवेशे शिल्पिवेश्मनि ॥ १५३३
आस्कन्दनं तिरस्कारे संशोषणसमीकयोः । आत्माधीनः सुते प्राणाधारे श्याले विदूषके ॥ १५३४

---

१. 'अतिवृद्धे' ख. २. 'म्रप्रभेदयोः' ख. ३. 'क्रमौ' ग-घ. ४. 'चतुष्पदं' ख. ५. 'रक्ताः पादा अस्य' इति टीका. 'चक्रपादः' ख. ६. 'प्रतिधृष्टे' ख-ग-घ. ७. 'अम्बुदध्वाने' ख. ८. 'शतह्रदा तु विद्युति ॥ वज्रेऽपि च समर्यादं मर्यादासहितेऽन्तिके । अनुबन्धोऽप्रयोगे स्याच्छिशौ मुख्यानुयायिनि ॥ प्रकृतस्यानुवर्ते च दोषस्योत्पादनेऽपि च । अनुवर्ज्या तृषा हिक्कावरोधस्तु नृपौकसि ॥ शुद्धान्ते च तिरोधाने गर्तादौ रोधनेऽपि च ।' ख-पुस्तकस्थोऽयं पाठः. ९. 'तृषिते' ग-घ. १०. 'अवलम्बिनि' ग-घ. ११. 'मर्कटवासको लूतापुटम्' इति टीका. 'वाससि' ग-घ. १२. 'शुण्ठ्यां विषारसोनयोः' ग-घ. १३. 'परिवेशे' ग-घ.

आत्मयोनिः स्मरे वेधस्युद्वर्तनं विलेपने । अपावृत्तावुत्पतने स्यादुपासनमासने ॥ १५३५
शुश्रूषायां शराभ्यासेऽप्युपधानं तु गण्डके[1] । व्रते विशेषे[2] प्रणये स्यादुत्पतनमुत्प्लुतौ ॥ १५३६
उत्पत्तावुदयनस्तु वत्सराजे घटोद्भवे । उत्सादनं समुल्लेखे[3]ोद्वर्तनोद्वाहनेष्[4]वथ ॥ १५३७
उद्वाहनं द्विसीत्ये[5] स्यादुद्वाहनी वराटके । कपीतना गर्दभाण्डशिरीषाम्रातपिप्पलाः ॥ १५३८
कलध्वनिः परभृते पारापत[6]कलापिनोः । कात्यायनो वररुचौ कात्यायनी तु पार्वती ॥ १५३९
काषायवस्त्रविधवार्धवृद्धमहिलापि च । कामचारी कलविङ्के स्वेच्छाचारिणि कामुके ॥ १५४०
कारन्धमी धातुवाद[7]निरते कांस्यकारिणि । किष्कुपर्वा पोटगले स्यादिक्षुत्वचिसारयोः ॥ १५४१
कुचन्दनं वृक्षभेदे पत्राङ्गे रक्तचन्दने । कुम्भयोनिर्द्रोणेऽगस्तौ कृष्णवर्त्मा विधुंतुदे ॥ १५४२
दुराचारे हुताशे च गवादनीन्द्रवारुणी । घासस्थानं गवादीनां गदयित्नुः शरासने ॥ १५४३
जल्पाके पुष्पचापे च घनाघनो निरन्तरे । वासवे घातुके मत्त[8]गजवर्षुकवारिदे ॥ १५४४
घोषयित्नुः पिके विप्रे चिरंजीवी तु वायसे । अजे च चित्रभानुस्तु हुताशनदिनेशयोः ॥ १५४५
जलाटनः कङ्कखगे जलाटनी जलौकसि । तपोधना तु मुण्डीर्यां तपोधनस्तपस्विनि ॥ १५४६
तपस्विनी पुनर्मांसी कटुरोहिणिकापि च । तिक्तपर्वा हिलमोचीगडूचीमधुयष्टिषु ॥ १५४७
देवसेनेन्द्रकन्यायां सैन्ये दिविषदामपि । नागाञ्जना[9] नागयष्टौ द्विरदस्य च मुद्गरे ॥ १५४८
निर्यातनं वैरशुद्धौ दाने न्याससमर्पणे । निधुवनं रते कम्पे निर्वासनं तु मारणे ॥ १५४९
पुरादेश्च बहिष्कारे निरसनं निसूदने[10] । निष्ठीवने निरासे च निशमनं निशामनम्[11] ॥ १५५०
निरीक्षणश्रवणयोर्निर्भर्त्सनमलक्तके । खलीकारे प्रजननं प्रगमे[12] योनिजन्मनोः[13] ॥ १५५१
प्रणिधानमभियोगे समाधानप्रवेशयोः[14] । प्रयोजनं कार्यहेत्वोः स्यात्प्रवचनमागमे । १५५२
प्रकृष्टवचने प्रस्फोटनं सूर्पे[15] प्रकाशने । ताडने प्रतिपन्नस्तु विज्ञाते[16]ऽङ्गीकृतेऽपि च ॥ १५५३
प्रतियत्नः संस्कारे स्यादुपग्रहणलिप्सयोः । प्रहसनं तु प्रहासाक्षेपयो रूपकान्तरे ॥ १५५४
प्रतिमानं प्रतिबिम्बे गजदन्तद्वयान्तरे । प्रसाधनी कङ्कतिकासिद्ध्योः प्रसाधनं पुनः ॥ १५५५
वेषे प्रचलाकी[17] सर्पे मयूरेऽथ पयस्विनी । विभावर्यां गोधेन्वां च पुण्यजनस्तु सज्जने ॥ १५५६
गुह्यके यातुधाने च पृथग्जनोऽधमे जडे । पृष्टशृङ्गी भीमसेने षण्ढसैरभ[18]योरपि ॥ १५५७
महाधनं महामूल्ये सिल्हके चारुवाससि । महासेनो महासैन्ये स्कन्देऽप्यथ महामुनिः॥ १५५८
अगस्तिकुस्तुम्बुरुणोर्मालुधानी लताभिदि[19] । मालुधानो मातुलाहौ मातुलानि पुनः शणे॥ १५५९
कलापे मातुलपत्न्यां रसायनो विहङ्गमे । पक्षीन्द्रे रसायनं तु जराव्याधिजिदौषधे ॥ १५६०
राजादनः पियालद्रौ क्षीरिकायां त्रिपत्रके[20] । वर्धमानो वीरजिने[21] स्वस्तिकैरङ्गविष्णुषु ॥ १५६१
प्रश्नभेदे शरावे च विरोचनोऽग्निसूर्ययोः । प्रह्लादनन्दने चन्द्रे विहेठनं विडम्बने ॥ १५६२
हिंसायां मर्दने विस्मापनाख्या कुहके[22] स्मरे । गन्धर्वनगरे चापि विष्वक्सेनो जनार्दने[23] ॥ १५६३

---

१. 'गण्डुके' ग. २. 'विशे च' ग-घ. ३. 'लेख्यो' ख. ४. 'षु च' ख-ग-घ. ५. 'द्वाभ्यां संगतं द्विसीत्यं द्विःकृष्टमित्यर्थः' इत्यनेकार्थकैरवाकरकौमुदी. ६. 'पारावत' ग-घ. ७. 'वादे' ग-घ. ८. 'मत्तगजे' ख-ग-घ. ९. 'नागानामञ्जनमनया नागाञ्जना' इति टीका. 'नागाङ्गना नागपत्न्यां' ग-घ. १०. 'निषूदने' ख. ११. 'निदर्शने' ग-घ. १२. 'प्रगमने यो' ख; 'प्रगते यो' ग-घ. १३. 'योनिजन्मयोः' ग-घ. १४. 'प्रयोगयोः' ग-घ. १५. 'सौर्पे' ख; 'शूर्पे' ग-घ. १६. 'विक्रान्ते' ग-घ. १७. 'प्रचलाकः कलापोऽस्त्यस्येति प्रचलाकी' इति टीकाकारः. १८. 'सैरिभ' ख-ग-घ. १९. 'भिदौ' ग-घ. २०. 'त्रिपत्रकः किंशुकः' इति टीका. 'त्रिपक्षके' ग-घ. २१. 'वीरजने' ख. २२. 'कुहकमिन्द्रजालम्' इत्यनेकार्थकैरवाकरकौमुदी. २३. 'जनार्दनः' ग-घ.

विष्वक्सेना तु फलिनी विश्राणनं विहायिते । संप्रेषणे परित्यागे विहननं तु पिञ्जने ॥ १५६४
वधेऽथ विश्वकर्मार्के मुनिभिद्देवशिल्पिनोः । विघ्नकारी विघातस्य कारके घोरदर्शने ॥ १५६५
विलेपनी स्याद्यवाग्वां [1]चारुवेषस्त्रियामपि । वृक्षादनो मधुच्छत्रे चलपत्रकुठारयोः ॥ १५६६
वृक्षादनी तु बन्दायां [2]विदार्यां गन्धकौषधे । वृषपर्वा तु शृङ्गारहरदैत्यकशेरुषु ॥ १५६७
विरोधनो [3]रविसुते सुगते बलिदानवे । श्वेतधामा घनसारे कलानाथाब्धिफेनयोः ॥ १५६८
श्लेष्मघना तु केतक्यां मह्यामथ समापनम् । परिच्छेदे समाधाने समाप्तिवधयोरपि ॥ १५६९
संमूर्च्छनमभिव्याप्तौ मोहे सनातनोऽच्युते । पितॄणामतिथौ रुद्रवेधसोः शाश्वते स्थिरे ॥ १५७०
सदादानो गन्धगजे हेरम्बेऽभ्रमतङ्गजे । संयमनं व्रते बन्धे संयमनी यमस्य पूः ॥ १५७१
समादानं [4]समीचीनग्रहणे नित्यकर्मणि । समापन्नं वधे क्लिष्टे समाप्तप्राप्तयोरपि ॥ १५७२
संवदनं तु संवादे समालोचे वशीकृतौ । [5]समुत्थानं निदानेऽभियोगे संवाहनं पुनः ॥ १५७३
वाहनेऽङ्गमर्दने च संप्रयोगी तु कामुके । कलाकेलौ सुप्रयोगे सरोजिनी सरोरुहे ॥ १५७४
सरोरुहिण्यां कासारे स्तनयित्नुः पयोमुचि । [6]मृत्यौ स्तनिते रोगे च सारसनमुरश्छदे ॥ १५७५
काञ्च्यां च सामयोनिस्तु समोत्थे [7]द्रुहिणे गजे । सामिधेनी समीदृचोः सुयामनो जनार्दने ॥ १५७६
वत्सराजे प्रसादेऽद्रिभेदे चाथ [8]सुदर्शनः । विष्णोश्चक्रे सुदर्शन्यमरावत्यां सुदर्शना ॥ १५७७
अज्ञायामौषधीभेदे मेरुजम्ब्वां [9]सेरीमिदि । सौदामिनी तडिद्भेदतडितोरप्सरोभिदि ॥ १५७८
हर्षयित्नुः सुते स्वर्णेऽवलेपो गर्वलेपयोः । दूषणेऽप्यपलापस्तु प्रेमापह्नवयोरपि ॥ १५७९
उपतापो गदे तापे जलकूप्यन्धुगर्भके । सरस्यां जीवपुष्पं तु दमनके फणिज्जके ॥ १५८०
नागपुष्पस्तु पुन्नागे चम्पके नागकेसरे । परिवापो जलस्थाने पर्युप्तिपरिवारयोः[10] ॥ १५८१
पिण्डपुष्पं जपायां स्यादशोके सरसीरुहे । बहुरूपः स्मरे विष्णौ सरटे घूणके शिवे ॥ १५८२
मेघपुष्पं तु [11]नादेये पिण्डाभ्रे सलिलेऽपि च । विप्रलापो [12]विरुद्धोक्तावनर्थकवचस्यपि ॥ १५८३
वृकधूपो वृक्षधूपे सिल्हकेऽथ वृषाकपिः । वासुदेवे शिवेऽग्नौ च हेमपुष्पं तु चम्पके ॥ १५८४
अशोकद्रौ जपापुष्पे राजजम्बूस्तु जम्बुभित् । पिण्डखर्जूरवृक्षश्चाप्यवष्टम्भस्तु काञ्चने ॥ १५८५
[13]संरम्भारम्भयोः स्तम्भे शातकुम्भोऽश्वमारके । शातकुम्भं तु कनकेऽभ्यागमः समरेऽन्तिके ॥ १५८६
घाते रोधेऽभ्युपगमेऽनुपमस्तु [14]मनोरमे । [15]अनुपमा सुप्रतीकस्त्रियामुपगमः पुनः ॥ १५८७
अङ्गीकारेऽन्तिकगतावु[16]पक्रमस्तु विक्रमे । उपधायां तदाद्याचिख्यासाचिकित्सयोरपि ॥ १५८८
आरम्भेऽथ जलगुल्मो जलावर्तेऽम्बुचत्वरे । कमठे दण्डयामस्तु दिवसे कुम्भजे यमे ॥ १५८९
[17]प्रवङ्गमः कपौ भेके पराक्रमस्तु विक्रमे । सामर्थ्ये चाभियोगे च महापद्मः पुनर्निधौ ॥ १५९०

---

१. 'वेश्च' ग-घ. २. 'विदारीगन्धयोरपि' ख. ३. 'रविविष्णुसुते च' ग-घ. ४. 'समासीम' ग-घ. ५. 'समुत्थीयतेऽस्मिन्निति समुत्थानम्' इति टीका. 'समुत्थाने' ग-घ. ६. 'मृतो स्वामिते' ग-घ. ७. 'द्रुहिणो ग' ग-घ. ८. 'सुखेन दृश्यते सुदर्शनः 'शासूसुधीत्यनः' पुंसि 'वाचष्पति'स्तु 'चक्रं सुदर्शनोऽस्त्रियामित्याह'—यथा—तस्य नेष्यति वपुः कबन्धुतां बन्धुरेष जगतां सुदर्शनः' इत्यनेकार्थकैरवाकरकौमुदी. 'सुदर्शनम्' ख-ग-घ. ९. 'सुरा' ग-घ. १०. इत ऊर्ध्वम् 'परिकम्पो भये कम्पे प्रातरूपोऽशरम्ययोः' इत्यधिकः पाठः ख-पुस्तके. ११. 'नादे स्यात् पि' ग-घ. १२. 'विरोधोक्ता' ग-घ. १३. 'संरम्भारब्धयोः' ग-घ. १४. 'भवेदयम्' ग-घ. १५. 'उपमारहितेऽनुपमेभ्यामुप' ग-घ. १६. 'उपगमस्तु' ख. १७. 'प्रवेण गच्छति प्रवङ्गमः' इति टीका. 'प्लवङ्गमः' ख-ग-घ.

नागसंख्याभिदोर्यातयामो भुक्तसमुज्झिते । जीर्णे च सार्वभौमस्तु दिग्गजे चक्रवर्तिनि ॥ १५९१
अनुशयः पश्चात्तापे दीर्घद्वेषानुबन्धयोः । अन्वाहार्यममावास्याश्राद्धमिष्टेश्च दक्षिणा ॥ १५९२
अवश्यायो हिमे दर्पेऽप्यपसव्यं तु दक्षिणे । प्रतिकूलेऽन्तशय्या भूशय्या पितृवनं मृतिः ॥ १५९३
उपकार्या राजगेहमुपकारोचितापि च । चन्द्रोदयौ शश्युदयोल्लोचौ चन्द्रोदयौषधौ ॥ १५९४
जलाशयमुशीरे स्याज्जलाशयो जलाश्रये । तण्डुलीयः शाकभेदे विडङ्गतरुतौप्ययोः ॥ १५९५
तृणशूल्यं मल्लिकायां केतकीशाखिनः फले । धनञ्जयो नागभेदे ककुभे देहमारुते ॥ १५९६
पार्थेऽग्नौ निरामयस्तु स्यादिड्डिके गतामये । प्रतिभयं भये भीष्मे प्रतिश्रयः सभौकसोः ॥ १५९७
परिधायः परिकरे जलस्थाननितम्बयोः । पाञ्चजन्यः पोटगले शङ्खे दामोदरस्य च ॥ १५९८
पौरुषेयं पुरुषेण कृतेऽस्य च हिते वधे । समूहे च विकारे च फलोदयो मुलाभयोः ॥ १५९९
बिलेशयो मूषिकेऽहौ भागधेयः पुनः करे । दायादे भागधेयं तु भाग्ये महालयः पुनः ॥ १६००
तीर्थे विहारपरमात्मनोर्महोदयं पुरे । महोदयः स्वाम्यमुक्त्योर्महामूल्यं महार्घके ॥ १६०१
पद्मरागमणौ मार्जालीयः शूद्रबिडालयोः । शरीरशोधने रौहिणेयो वत्से बुधे बले ॥ १६०२
समुच्छ्रयो वैरोन्नत्योः समुदायो गणे रणे । समुदयस्तूद्गमेऽपि संपरायस्तु संयुगे ॥ १६०३
आपद्युत्तरकाले च स्यात्समाह्वय आह्वये । पशुभिः पक्षिभिर्द्यूते स्थूलोच्चयो वरण्डके ॥ १६०४
गजानां मध्यमगते गण्डाश्माकात्स्न्र्ययोरपि । हिरण्मयो लोकधातौ सौवर्णेऽभिमरो वधे ॥ १६०५
स्वबलसाध्वसे युद्धेऽवसरो वत्सरे क्षणे । अरुष्करं व्रणकरे भल्लातकफलेऽपि च ॥ १६०६
अश्वतरो नागभेदे वेसरेऽनुत्तरः पुनः । निरुत्तरे च श्रेष्ठे चावस्करो गूथगुह्ययोः ॥ १६०७
अभिहारः संनहने चौरिकोद्यमयोरपि । अवहारस्तु युद्धादिविश्रान्तौ ग्राहचौरयोः ॥ १६०८
निमन्त्रणोपनेतव्येऽलंकारः कङ्कणादिषु । उपमादावकूपारः कूर्मराजसमुद्रयोः ॥ १६०९
अवतारस्तु नद्यादितीर्थेऽवतरणेऽपि च । अग्निहोत्रोऽनले हव्येऽसिपत्रो नरकान्तरे ॥ १६१०
कोशकारेऽर्धचन्द्रस्तु गलहस्तेन्दुखण्डयोः । चन्द्रके बाणभेदे चार्धचन्द्रा त्रिवृताभिदि ॥ १६११
आत्मवीरो बलवति स्यालपत्रे विदूषके । आडम्बरस्तु संरम्भे बृंहिते तूर्यनिस्वने ॥ १६१२
इन्दीवरं नीलोत्पलमिन्दीवरा शतावरी । उपकारस्तूपकृतौ विकीर्णकुसुमादिषु ॥ १६१३
उपचारस्तु लेम्बायां व्यवहारोपचर्ययोः । उदुम्बरः कुष्ठभेदे देहल्यां पण्डके तरौ ॥ १६१४
उदुम्बरं ताम्र उपह्वरं रहसि संनिधौ । उद्दन्तुरः कराले स्यादुत्तुङ्गोत्कटदन्तयोः ॥ १६१५
औदुम्बरो यमे रोगभेदे कर्मकरोऽन्तके । भृतिजीविनि भृत्ये च कर्मकरी तु बिम्बिका ॥ १६१६

१. 'अनशय्या' ख. २. 'नृतिः' ग-घ. ३. 'ताप्यो विटमाक्षिकः' इत्यनेकार्थकैरवाकरकौमुदी. ४. 'तृणैः शूल्यते तृणशूल्यम्' इति टीका. 'तृणमूल्यं' ख; 'तृणशून्यं' ग-घ. ५. 'इड्डिकः शिशुवाहकः' इति टीका. 'एडके' ख; 'इड्डिके' ग-घ. ६. 'अप्यवहिते' ख. ७. 'समुच्छ्रयणं समुच्छ्रयः' इति टीका. 'समुच्छ्रेयः' ग-घ. ८. 'समुदयनं समुदयः' इति टीका. 'समुदायः' ग-घ. ९. 'अपिशब्दाद्रणे रणेऽपि' इत्यनेकार्थकैरवाकरकौमुदी. १०. इत उत्तरम् 'अजगरः स्मृतः सर्पभेदेऽपि कवचे बुधैः' इति ख-पुस्तकेऽधिकः पाठः. ११. 'अरुः करोति अरुष्करम्, समासे समस्तस्येति षत्वम्' इति टीका. 'अरुस्करं' ग-घ. १२. 'व्रणकारे' ख. १३. 'अतिश्रेष्ठे च' ख. १४. 'गोप्य' ग-घ. १५. 'संहनने' ख. १६. 'चौर्यमद्यपयोरपि' ग-घ. १७. 'विश्रामे' ग-घ. १८. 'निमन्त्रणोपनेतव्यं शर्करादि स्वादूकृतं भक्ष्यम्' इति टीका. 'निमन्त्रणेऽपनेतव्ये' ग-घ. १९. 'श्यालपुत्रे' ख; 'श्याले पुत्रे' ग-घ. २०. 'सेवायाम्' ग-घ. २१. 'चार्ययोः' ग-घ. २२. 'देहल्यां' ख-ग-घ. २३. 'कर्मकारी' ग-घ.

मूर्वा च कर्णिकारस्तु कृतमाले द्रुमोत्पले । करवीरो हयमारे कृपणे दैत्यभिद्यपि ॥ १६१७
करवीरी पुत्रवत्यां सद्गव्यामदितावपि । कलिकारस्तु धूम्याटे पीतमुण्ड[1]करञ्जयोः ॥ १६१८
कर्णपूरः स्याच्छिरीषे नीलोत्पलवसन्तयोः । कटंभरा प्रसारिण्यां गोलायां गजयोषिति ॥ १६१९
कलम्बिकायां रोहिण्यां वर्षाभूमूर्वयोरपि । कालञ्जरो भैरवाग्र्योर्योगिचक्रस्य मेलके ॥ १६२०
कादम्बरं दधिसारे [2]शीधुमद्यप्रभेदयोः । कादम्बरी कोकिलायां [3]वाणीशारिकयोरपि ॥ १६२१
कुम्भकारः कुलाले स्त्रीकुम्भकारी कुलत्थिका । कृष्णसारः शिंशपायां मृगभेदे स्नुहीतरौ॥ १६२२
गिरिसारः पुनर्लोहे लिङ्गे मलयपर्वते । घनसारस्तु कर्पूरे दक्षिणावर्तपारदे ॥ १६२३
चर्मकारः पादूकृति चर्मकार्यौषधीभिदि । चक्रधरो विष्णुसर्पचक्रिषु ग्रामजालिनि ॥ १६२४
चराचरं जङ्गमे [5]स्यादिङ्गविष्टपयोरपि । चित्राटीरो [6]घण्टाकर्णबलिच्छागास्रबिन्दुभिः ॥ १६२५
अङ्कितभाले चन्द्रे च तालपत्रं तु कुण्डले । स्यात्तालपत्री रण्डायां तुङ्गभद्रो मदोत्कटे ॥ १६२६
तुङ्गभद्रा नदीभेदे तुलाधारस्तुलागुणे । वाणिजे [7]तुण्डकेरी तु [8]कर्पासी बिम्बिकापि च ॥ १६२७
[9]तोयधारो जलधरे सुनिषण्णाख्यभेषजे । दशपुरं पत्तने स्यान्मुस्तायां नीवृदन्तरे ॥ १६२८
दण्डधारो यमे राज्ञि दण्डयात्रा तु दिग्गजे । संयाने वरयात्रायां दिगम्बरस्तु शंकरे ॥ १६२९
अन्धकारे क्षपणके स्याद्वस्त्ररहितेऽपि च । दुरोदरः पुनर्द्यूते द्यूतकारे पणेऽपि च ॥ १६३०
देहयात्रा यमपुरीगमने भोजनेऽपि च । द्वैमातुरो जरासंधे हेरम्बेऽथ धराधरः ॥ १६३१
कृष्णेऽद्रौ [10]धाराधरस्तु पयोदकरवालयोः । धाराङ्कुरः [11]शीकरे स्यात्सुनासीरे जलदोपले ॥ १६३२
धार्तराष्ट्रः कौरवेऽहौ कृष्णास्यो[12]ऽङ्घ्रिसितच्छदे । धुन्धुमारो गृहधूमे नृपभेदेन्द्रगोपयोः ॥ १६३३
[13]पदालिकेऽप्यथ [14]धुरंधरो धुर्ये धवद्रुमे । धृतराष्ट्रः खगे सर्पे सुराज्ञि क्षत्रियान्तरे ॥ १६३४
धृतराष्ट्री हंसपद्यां नभश्चरः खगेऽम्बुदे । विद्याधरे समीरे च निशाचरस्तु राक्षसे ॥ १६३५
सर्पे घूके [15]शृगाले च निशाचरी तु पांसुला । निषद्वरः स्मरे पङ्के निषद्वरी पुनर्निशि ॥ १६३६
नीलाम्बरो बलभद्रे राक्षसे क्रूरलोचने । प्रतीहारो द्वारि द्वाःस्थे प्रतीकारः समे भटे ॥ १६३७
प्रतिसरश्चमूपृष्ठे नियोज्यकरसूत्रयोः । मन्त्रभेदे [16]व्रणशुद्धावारक्षे मण्डने स्रजि ॥ १६३८
कङ्कणेऽथ परिकरः पर्यङ्कपरिवारयोः । प्रगाढे गात्रिकाबन्धे विवेकारम्भयोर्गणे ॥ १६३९
परिवारः परिजनेऽसिकोशेऽथ परम्परः । मृगभेदे प्रपौत्रादौ परम्परान्वये वधे ॥ १६४०
परिपाट्यां परिसरः प्रान्तभूदेवयोर्मृतौ । [17]पक्षचरो यूथभ्रष्टपृथक्चारिगजे विधौ ॥ १६४१
पयोधरः कुचे मेघे कोशकारे [18]कशेरुणि । [19]नालिकेरे पात्रटीरस्त्वपट्व्यापारमन्त्रिणि ॥ १६४२

---

१. 'करञ्जो वृक्षः' इति टीका. 'करण्डयोः' ग-घ. २. 'सीधु' ख; 'सिन्धु' ग-घ. ३. 'वीणाशा' ख; 'वाणीसा' ग-घ. ४. 'अहौ' ग-घ. ५. 'इङ्गमद्भुतम्' इति टीका. 'इष्टवि' ग-घ. ६. 'घण्टाकर्णो यक्षस्तस्य बलिनिमित्तं यो हतश्छागस्तस्यास्रं रक्तं तस्य बिन्दवस्तैरङ्कितं भालं यस्य तस्मिन्नित्यर्थः' इति टीका. ७. 'तुण्ड्यते तुण्डकेरी' इति टीका. 'तुण्डकारी' ख. ८. 'कर्पासी वमनी' इति टीका. 'कार्पासी' ग-घ. ९. 'तोयं धरति तोयधारः' इति टीका. 'तोयाधारः' ख. १०. 'धारां धरति धाराधरः' इति टीका. 'धाराधारः' ख. ११. 'सुनासीरे शीकरे जलदोपले' ख. १२. 'अङ्घ्र्यसित' ग-घ. १३. 'पदालिकमौषधीभेदः' इति टीका. 'पलादि' ख; 'पादालि' ग-घ. १४. 'धुरां धारयति धुरंधरः, धारेर्धचेति खः' इति टीका. 'धुरंधुरः' ख. १५. 'सृगाले' ग-घ. १६. 'आरक्षे गजललाटमर्मणि' इति टीका. 'व्रणशुद्धे चारक्षे' ग-घ. १७. 'पक्षे चरति पक्षचरः' इति टीका. 'पक्षधरः' ग-घ. १८. 'कसेरु' ख. १९. 'नारिकेरे' ग-घ.

लोहकांस्ये रजतपात्रे सिं[1]ह्वाणकहुताशयोः । पारावारः पयोराशौ पारावारं तटद्वये ॥ १६४३
पारिभद्रौ तु मन्दारनिम्बौ पीताम्बरोऽच्युते । [2]नेटेऽपि पूर्णपात्रं तु जलादिपूर्णभाजने ॥ १६४४
[3]वर्द्धापके बलभद्रस्त्वनन्ते बलशालिनि । बलभद्रा कुमार्यां स्यात्त्रायमाणौषधावपि ॥ १६४५
[4]बार्बटीरश्च[5]पुण्याम्रास्थ्न्यङ्कुरे गणिकासुते । बिन्दुतन्त्रं पुनः शारिफलके चतुरङ्गके ॥ १६४६
महावीरोऽन्तिमजिने परपुष्टे जराटके । तार्क्ष्ये कर्के पवौ शूरे सिंहे मखहुताशने ॥ १६४७
महामात्रः प्रधाने स्यादारोहकसमृद्धयोः । मणिच्छिद्रा तु मेदायामृषभाख्यौषधावपि ॥ १६४८
रथकारस्तक्षणि स्यान्माहिष्यात्[6]करणीसुते । रागसूत्रं पट्टसूत्रे तुलासूत्रेऽपि च क्वचित् ॥ १६४९
लम्बोदरः स्यादु[7]ध्माने प्रमथानां च नायके । लक्ष्मीपुत्रो हये कामे व्यवहारः स्थितौ पणे ॥ १६५०
द्रुभेदेऽथ व्यतिकरो व्यसनव्यतिषङ्गयोः । [8]वक्रनक्रौ खलग्लुकौ विश्वंभरोऽच्युतेन्द्रयोः ॥ १६५१
विश्वंभरा तु मेदिन्यां विभाकरोऽग्निसूर्ययोः । विश्वकद्रुस्तु मृगयाकुक्कुरे पिशुने ध्वनौ ॥ १६५२
वीरभद्रो वीरणेऽश्वमेधाश्वे वीरसत्तमे । वीरतरो वीरश्रेष्ठे शरे वीरतरं पुनः ॥ १६५३
वीरणे वीतिहोत्रस्तु दिवाकरहुताशयोः । शतपत्रो दार्वाघाटे राजकीरमयूरयोः ॥ १६५४
शतपत्रं तु राजीवे संप्रहारो गतौ रणे । सहचरः पुनर्झि[10]ण्ट्यां वयस्ये प्रतिबन्धके ॥ १६५५
[11]समाहारस्तु संक्षेपे एकत्रकरणेऽपि च । समुद्रारुर्ग्राहभेदे से[12]तुबन्धे तिमिङ्गिले ॥ १६५६
सालसारस्तरौ हिङ्गौ सुकुमारस्तु कोमले । पुण्ड्रेऽक्षौ सूत्रधारस्तु शिल्पिभेदे नटेन्द्रयोः ॥ १६५७
अतिबलः स्यात्प्रबलेऽतिबला तु बलाभिदि । अक्षमाला लक्षसूत्रे वसिष्ठस्य च योषिति ॥ १६५८
अङ्कपाली परीरम्भे स्यात्कोट्यामुपमातरि । उलूखलो [13]गुग्गुलोदूखले कलंकलः पुनः ॥ १६५९
कोलाहले सर्जरसे [14]कन्दरालो जटि द्रुमे । गर्दभाण्डेऽप्यथ कमण्डलू पर्कटि[15]कुण्डिके ॥ १६६०
कुतूहलं शस्तेऽद्भुते खतमालो बलाहके । धूमेऽथ गण्डशैलोऽद्रिच्युतस्थूलाश्मभालयोः ॥ १६६१
गन्धफली तु प्रियङ्गौ [16]चम्पकस्य च कोरके[17] । जलाञ्चलं तु शैवाले [18]स्वतश्च जलनिर्गमे ॥ १६६२
दलामलं [19]पुनर्दमनके मरुबकेऽपि च । [20]ध्वनिलाला तु वल्लक्यां वेणुकाहलयोरपि ॥ १६६३
परिमलो विमर्दोत्थे हृद्यगन्धे विमर्दने । पोटगलो नलकाशे झषे बहुफलः पुनः ॥ १६६४
नीपे [21]बहुफला फल्गौ भस्मतूलं पुनर्हिमे । ग्रामकूटे [22]पांसुवर्षे भद्रकाल्यौषधीभिदि ॥ १६६५
गन्धोल्यां हरपत्न्यां च महाकालो महेश्वरे । किंपाके गणभेदे च मदकलो [23]मदिद्विपे ॥ १६६६
मदेनाव्यक्तवचने महानीलो मणेर्भिदि । नागभेदे भृङ्गराजे महाबलो बलीयसि ॥ १६६७
वायौ महाबलं सीसे महाबला बलाभिदि । मणिमाला [24]हारे स्त्रीणां दशनक्षतभिद्यपि ॥ १६६८

१. 'पिङ्गले च हु' ख. २. 'नटे च पीतसारस्तु गोमेदकमणौ स्मृतः। मलयजे पू' ख-पुस्तक एवं पाठः. 'तटे च' ग-घ. ३. 'वर्द्धनं वर्द्धस्तस्यासिरापको वर्द्धापकः' इति टीका. ४. 'वर्वटीरः' ख. ५. 'च भारोह' ख. ६. 'वैश्याशुद्रायां जाता करणी' इति टीका. ७. 'उद्गता ध्मानो वायुरस्य उद्ध्मानः' इति टीका. 'आध्माने' ख-ग-घ. ८. 'वक्रं नक्रं नासिकास्य वक्रनक्रः' इति टीका. 'वक्रनखौ' ख. ९. 'शवे' ग-घ. १०. 'झिण्टी' ओषधिः. ११. 'समारोहः' ख. १२. 'सेतुभेदे' ख. १३. 'गुग्गुलौ कण्डने' ख; 'गुग्गुलोदुम्बरे' ग-घ. १४. 'कन्दरां लाति कन्दरालः' इति टीका. 'कण्डरालः' ग-घ. १५. 'कण्डिके' ग-घ. १६. 'चषकस्य' ग-घ. १७. इतःपरम् 'चक्रवालोऽद्रिभेदे स्याच्चक्रवालं तु मण्डले' इति ख-पुस्तकेऽधिकः पाठः. १८. 'खाताश्च' ख. १९. 'दमनके तथा मरु' ख. २०. 'ध्वनिं लालयति ध्वनिलाला' इति टीका. 'ध्वनिनाला' ग-घ. २१. 'बहुफली' ग-घ. २२. 'पांशु' ग-घ. २३. 'मदिद्विपे मदवति द्विपे' इति टीका. 'मदद्विपे' ख-ग-घ. २४. 'स्त्रियां हारे द' ख; 'हारे स्त्रीणां द' ग-घ.

मुक्ताफलं घनसारे मौक्तिके लवलीफले । मृत्युफलो महाकाले मृत्युफली कदल्यथ ॥ १६६९
यवफलो मांसिकायां कुटजत्वचि सारयोः । वायुफलं तु जलदोपले शक्रशरासने ॥ १६७०
वातकेलिः कलालापे षिङ्गानां दन्तलेखने । वि[1]चकिलो दमनके मल्ल्यामथ बृहन्नलः ॥ १६७१
महापोटगले पार्थे सदाफल उदुम्बरे । नालिकेरे स्कन्धफले हस्तिमल्लः सुरद्विपे ॥ १६७२
विघ्नेशे हलाहलस्तु [2]हेयलालोरगे विषे । ज्येष्ठ[3]यां च हरिताली तु दूर्वागमनरेखयोः ॥ १६७३
कृपाणलतिकायां [4]चानुभावो भावसूचने । प्रभावे निश्चये चापह्नवः स्नेहापलापयोः ॥ १६७४
अभिषवः क्रतौ मद्यसंधानस्नानयोरपि । आदीनवः पुनर्दोषे परिक्लिष्टदुरन्तयोः ॥ १६७५
उपप्लवौ राहूत्पातौ कुशीलवस्तु चारणे । प्राचेतसे [5]याचके च जलबिल्वस्तु कर्कटे ॥ १६७६
जलचत्वरे पश्चाङ्गे जीवञ्जीवः खगान्तरे । द्रुमभेदे चकोरे च धामार्गवस्तु घोषके ॥ १६७७
अपामार्गेऽप्यथ [6]परिप्लवावाकुलवश्चलौ । पराभवस्तिरस्कारे नाशे पारशवोऽयसि ॥ १६७८
शूद्रायां विप्रतनये तनये च परस्त्रियाः । पुटग्रीवस्तु गर्गर्यां ताम्रस्य कलशेऽपि च ॥ १६७९
बलदेवस्तु कालिन्दीकर्षणे मातरिश्वनि । बलदेवा त्रायमाणा रोहिताश्वो हुताशने ॥ १६८०
हरिश्चन्द्रनृपसुते सहदेवस्तु पाण्डवे । सहदेवा बला[7]चण्डोत्पलयोः शारिवौषधे ॥ १६८१
सहदेवी तु सर्पाक्ष्यामपदेशस्तु कारणे । व्याजे लक्ष्येऽप्यपभ्रंशो भाषाभेदापशब्दयोः ॥ १६८२
पतने चाश्रयाशस्तु वह्नावाश्रयनाशके । उपदंशो[8]ऽवदंशे स्यान्मेहनामययोरपि ॥ १६८३
उपस्पर्शस्त्वाचमनस्नानयोः स्पर्शमात्रके । खण्डपर्शुः शिवे राहौ भार्गवे चूर्णलेपिनि ॥ १६८४
खण्डामलकभैषज्ये जीवितेशः प्रिये यमे । जीवितस्वामिजीवात्वोर्नागपाशस्तु योषिताम् ॥ १६८५
करणे वरुणास्त्रे च [9]प्रतिष्कशः पुरोगमे । वार्ताहरे सहाये च [10]पुरोडाशो हविर्भिदि ॥ १६८६
हुतशेषे सोमरसे चमस्यां पिष्टकस्य च । अम्बरीषो नृपे सूर्ये युधि भ्राष्ट्रकिशोरयोः ॥ १६८७
आम्राते खण्डपरशावनुकर्षोऽनुकर्षणे । रथस्याधो दारुणि [11]चानिमिषं सुरमत्स्ययोः ॥ १६८८
अनुतर्षोऽभिलाषे स्यात्[12]तृषाचषकयोरपि । अलम्बुषश्छर्दनेऽलम्बुषा स्वः[13]पण्ययोषिति ॥ १६८९
गण्डीर्यां किंपुरुषस्तु किन्नरे लोकभिद्यपि । देववृक्षो मन्दारादौ गुग्गुलौ विषमच्छदे ॥ १६९०
नन्दिघोषो वन्दिघोषे [14]स्यन्दने च किरीटिनः । परिवेषः परिवृत्तौ परिधौ परिवेषणे ॥ १६९१
परिघोषः स्यादवाच्ये निनादे जलदध्वनौ । पलङ्कषो यातुधाने पलङ्कषा तु किंशुके ॥ १६९२
गोक्षुरे गुग्गुलौ रास्ना लाक्षामुण्डीदिकासु च । भूतवृक्षस्तु शाखोटे श्योनाककलिवृक्षयोः॥ १६९३
महाघोषो महाशब्दे स्यान्महाघोषमापणे । महाघोषा शृङ्ग्यौषध्यां राजवृक्षः पियालके॥ १६९४
सुवर्णालुतरौ वातरूषः शक्रशराशने । वातूलोत्कोचयोश्चापि विशालाक्षो महेश्वरे ॥ १६९५

१. 'विष्यते विचकलः' इति टीका. 'विचिकिलः' ग-घ. २. 'हयबाले हले वि' ग-घ. ३. 'वृष्ट्यां च' ग-घ. ४. 'हरितालं तु तालके। अनुभावः प्रभावे स्यान्निश्चये भावसूचने । अपह्नवः पुनः स्नेहेऽपलापे चोरकर्मणि' ख-पुस्तकस्थः पाठः. ५. 'याचकोऽर्थी' इति टीका. 'यावके च' ख; 'याजकेऽपि' ग-घ. ६. 'परिप्लवतीति परिप्लवः' इति टीका 'परिप्लवा' ग-घ. ७. 'दण्डोत्प' ख-ग-घ. ८. 'विदंशे स्यान्मेण्ढ्ररोगेऽपि कीर्तितः' ख. ९. 'प्रतिकशवीति प्रतिष्कशः' इति टीका. 'प्रतिष्ठाशः' ग-घ. १०. 'पञ्चदशी तु पूर्णिमा । दर्शश्च पादपाशी तु खट्विकायामुदाहृता । शृङ्खलाकटके चापि पुरो' इति ख-पुस्तकेऽधिकः पाठः. ११. 'न निमिषति अनिमिषः' इति टीका. 'अनिमेषः' ग-घ. १२. 'तृष्णा च' ख. १३. 'पण्ययो' ग-घ. १४. 'स्यन्दने' ग-घ.

१० 41

तार्क्ष्ये विशालनेत्रे च वीरवृक्षोऽर्जुनद्रुमे । भल्लाते [1]सकटाक्षस्तु कटाक्षिणि धवद्रुमे ॥ १६९६
अधिवासः स्यान्निवासे संस्कारे धूपनादिभिः । अवध्वंसस्तु निन्दायां परित्यागेऽवचूर्णने ॥ १६९७
कलहंसो राजहंसे कादम्बे नृपसत्तमे । कुम्भीनसस्त्वहौ कुम्भीनसी [2]लवणमातरि ॥ १६९८
घनरसोऽम्बु कर्पूरे सान्द्रे सिद्धरसे द्रवे । मोरटे पीलुपर्ण्यां च चन्द्रहासोऽसिमात्रके ॥ १६९९
दशग्रीवकृपाणे च तामरसं तु पङ्कजे । ताम्रकाञ्चनयोर्दिव्यचक्षुस्त्वन्धे सुलोचने ॥ १७००
सुगन्धभेदे च निःश्रेयसं कल्याणमोक्षयोः । [3]नीलङ्गसा नदीभेदेऽप्सरोभेदे तडित्यपि ॥ १७०१
पुनर्वसुः स्यान्नक्षत्रे कात्यायनमुनावपि । पौर्णमासो यागभेदे पौर्णमासी तु पूर्णिमा ॥ १७०२
[4]मलीमसं पुनः पुष्पकासीसे मलिनायसोः । महारसः पुनरिक्षौ खर्जूरद्रौ कसेरुणि ॥ १७०३
मधुरसा तु मूर्वायां द्राक्षादुग्धिकयोरपि । राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे ॥ १७०४
रासेरसो रससिद्धिवलौ शृङ्गारहासयोः । षष्टीजागरके [5]रासे गोष्ठ्यां विश्वावसुः पुनः ॥ १७०५
निशि गन्धर्वभेदे च विभावसुस्तु भास्करे । हुताशने हारभेदे चन्द्रे स्वःश्रेयसं सुखे ॥ १७०६
परानन्दे च भद्रे च [6]सर्वरसस्तु धूणके । [7]वाद्यभाण्डे[8]ऽवग्रहस्तु ज्ञानभेदे गजालिके ॥ १७०७
प्रतिबन्धे वृष्टिरोधेऽप्यभिग्रहस्तु गौरवे । अभियोगेऽभिग्रहणेऽवरोहस्तु लतोद्गमे ॥ १७०८
तरोरङ्केऽवतरणेऽप्यश्वारोहोऽश्ववारके । अश्वारोहाश्वगन्धायामुपग्रहो[9]ऽनुकूलने ॥ १७०९
वन्द्युपयोगयोश्चोपनाहो वीणानिबन्धने । व्रणालेपनपिण्डे च [10]गन्धवहो मृगेऽनिले ॥ १७१०
गन्धवहा तु नासायां तमोपहो जिने रवौ । चन्द्रेऽग्नौ तनूरुहस्तु पुत्रे गरुति लोम्नि च ॥ १७११
प्रतिग्रहः सैन्यपृष्ठे ग्रहभेदे पतद्ग्रहे । क्रियाकारे दानद्रव्ये तद्ग्रहे स्वीकृतावपि ॥ १७१२
परिग्रहः परिजने पत्न्यां [11]स्वीकारमूलयोः । [[12]शापेऽथ परिवाहोऽम्बूच्छ्वासो राजार्हवस्तुनि॥ १७१३
परिवर्हः परिवारे पार्थिवोचितवस्तुनि ।] पितामहः पद्मयोनौ जनके जनकस्य च ॥ १७१४
[13]वरारोहो गजारोहे वरारोहा कटावपि । [[14]सर्वसहः सहिष्णौ स्यात्सर्वसहा पुनः क्षितौ ॥] १७१५

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहे चतुःस्वरकाण्डश्चतुर्थः ॥ ४ ॥

---

पञ्चस्वरकाण्डः ।

स्यादाच्छुरितकं हासनखघातविशेषयोः । कक्षावेक्षकः शुद्धान्तपालकोद्यानपालयोः ॥ १७१६
द्वाःस्थे [15]खिङ्गे कवौ रङ्गाजीवेऽथ कटखादकः । खादके काचकलशे [16]शृगालबलिपुष्टयोः[17] ॥ १७१७
कृमिकण्टकं चित्रायामुदुम्बरबिडङ्गयोः । स्याद्गोजागरिकं भक्ष्यकारके मङ्गलेऽपि च ॥ १७१८

---

१. 'सह कटाक्षैर्वर्तते सकटाक्षः' इति टीका. 'सङ्कटाक्षस्तु' ग-घ. २. 'लवणो राक्षसस्तस्य माता तस्मिन्' इत्यनेकार्थकैरवाकरकौमुदी. ३. 'नीलं जंस्यति नीलङ्गसा' इति टीका. 'नीलाङ्गसा' ग-घ. ४. 'मलोऽस्यास्ति मलीमसम्' इति टीका. 'मलीमसः' ख-ग-घ. ५. 'रसगो' ग-घ. ६. 'सर्वरासस्तु' ग-घ. ७. 'वाद्यभाण्डे च देशे च षड्रसान्वितवस्तुनि । अव' ख; 'वाद्यभेदेऽवग्र' ग-घ. ८. 'अवग्रहो ज्ञानभेदे अस्वातन्त्र्ये ग' इति ख-पुस्तकस्य पाठः. ९. 'अनुकूलवान्' ग-घ. १०. 'गन्धं वहति गन्धवहः, लिहादित्वादच्' इति टीका. 'गन्धवाहः' ग-घ. ११. 'मूल्ये च संग्रहे' ग-घ. १२. इति धनुश्चिह्नान्तर्गतपाठो ग-घ-पुस्तकयोस्त्रुटितः. १३. इतःप्राक् 'मदासहा स्यादम्लानकुसुमे माषपर्ण्यपि' इति ख-पुस्तकेऽधिकः पाठः. १४. इति धनुश्चिह्नान्तर्गतपाठः ख-पुस्तके त्रुटितः. १५. 'पिङ्गे' ख. १६. 'शृङ्गारे वलिपुच्छयोः' ग-घ. १७. 'उपकारिका पिष्टभेदोपकारेश्ववेश्मसु' इत्यधिकः पाठः ख-पुस्तके.

खिलिमिलिका खद्योते कण्ठीभेदे तडित्यपि । जलङ्करङ्कः स्यान्मेघे [1]नालिकेरतरोः फले ॥ १७१९
शङ्खे [2]नवफलिका तु नवे नवरजः स्त्रियाम् । नागवारिको [3]गणिस्थराजे राजेभहस्तिपे ॥ १७२०
चित्रमेखले[4] गरुडेऽप्यथ स्याद्व्यवहारिका । लोकयात्रेङ्गुदीवर्द्धनीष्वथ ब्रीहि[5]राजिकः ॥ १७२१
चीनाम्ने कामलिकायामप्यथो शतपर्विका । स्याद्[6]वचादूर्वयोः शीतचम्पकौ दी[7]पतर्पणौ ॥ १७२२
हेमपुष्पकश्चम्पके हेमपुष्पिका यूथिका । मलिनमुखस्तु गोलाङ्गूले प्रेतेऽ[8]नले खले ॥ १७२३
शीतमयूखः कर्पूरे चन्द्रेऽथ सर्वतोमुखः । विधावात्मनि [9]रुद्रे च सर्वतोमुखमम्बु खम् ॥ १७२४
कथाप्रसङ्गो [10]वातूले विषस्य च चिकित्सके । नाडीतरङ्गः [11]काकोले हिण्डके रत[12]हिण्डके ॥ १७२५
रतनारीचो मन्मथे शुनि स्त्रीणां च सीत्कृतौ । ऋषभध्वजः प्रथमजिनेन्द्रे शशिशेखरे ॥ १७२६
मुनिभेषजं [13]त्वगस्तिपथ्यायां लङ्घनेऽपि च । दशनोच्छिष्टो निःश्वासे चुम्बने दन्तवाससि ॥ १७२७
अवग्रहणं रीढायां रोधनेऽथावतारणम् । वस्त्राञ्चलार्चने [14]भूतावेशेऽथ प्रविदारणम् ॥ १७२८
दारणे युधि च परिभाषणं तु प्रजल्पने । नियमे निन्दोपालम्भोक्तौ चाथो मत्तवारणः ॥ १७२९
प्रासादवीथीवरण्डे मत्तहस्तिन्यपाश्रये । मण्डूकपर्णो [15]रक्तकक्षोणकयोः कपीतने ॥ १७३०
मण्डूकपर्णी मञ्जिष्ठाब्राह्म्योर्गोजिह्विकौषधे । स्याद्रोमहर्षणाख्या तु [16]रोमोद्गमे विभीतके ॥ १७३१
वातरायणः [17]कङ्कचे सायके शरसंक्रमे । निष्प्रयोजननरे चाप्यवलोकितमीक्षिते ॥ १७३२
अवलोकितस्तु बुद्धेऽपराजितोऽच्युते हरे । अजितेऽपराजिता तु दुर्गाश्वेताजयन्त्यपि ॥ १७३३
उपधूपित आसन्नमरणे धूपितेऽपि च । स्याद्गणाधिपतिर्विघ्ननायके पार्वतीपतौ ॥ १७३४
पृथिवीपतिस्तु भूपे कृतान्ते ऋषभौषधौ । मूर्द्धाभिषिक्तः [18]प्रधाने क्षत्रियक्षितिपालयोः ॥ १७३५
यादसांपतिः [19]पाश्यब्ध्योर्वसन्तदूत [20]आम्रके । पिके पञ्चमरागे वसन्तदूत्यतिमुक्तके ॥ १७३६
[21]पाटलायामथ सहस्रपादो यज्ञपूरुषे । कारण्डसूर्ययोर्योजनगन्धा व्यासमातरि ॥ १७३७
कस्तूरीशीतयोश्चातिसर्जनं वधदानयोः । अपवर्जनं निर्वाणे परित्यागे विहायिते ॥ १७३८
अभिनिष्ठान[22]स्तु वर्णे विसर्गेऽथानुवासनम् । स्नेहने धूपने चान्तावसायी श्वपचे [23]मुनौ ॥ १७३९
स्यादुपस्पर्शनं स्नाने स्पर्शाचमनयोरपि । उपसंपन्नं पर्याप्ते संस्कृतप्राप्तयो[24]र्मृतौ ॥ १७४०

---

१. 'नारिकेर' ग-घ. २. 'जललतायां च जलनायको मत्स्यके । काकाच्यां राजशफरे नवफलिका नूतने ॥ नवजातरजो नार्यामप्यथो नागवादिकः । गणिस्थराजे गरुडे राजकुञ्जरहस्तिपे ॥' इति ख-पुस्तकेऽधिकः पाठः. ३. 'गणिस्थराजो वृक्षः' इति टीका. 'गणस्थरा' ग-घ. ४. 'के प्रोक्तः स्यादथो व्य' ख. ५. 'ब्रीहिवद्राजयोऽस्य ब्रीहिराजिकः' इति टीका. 'ब्रीहिराजकः' ग-घ. ६. 'ऋचादू' ग-घ. ७. 'दिनत' ग-घ. ८. 'अनिले' ग-घ. ९. 'मद्रे च' ग-घ. १०. 'वार्तायाम्' ग-घ. ११. 'कङ्कोले' ख. १२. 'हिंसके' ख. १३. 'अगस्तिपथ्या हरीतकीभेदः' इति टीका. १४. 'भूतावशेषे' ग-घ. १५. 'रक्तके शोणके च' क-ख. १६. 'रोमाञ्चे च' ख. १७. 'उन्मत्ते निष्प्रयोजनपूरुषे । काण्डे च करपत्रे च कूटे च शरसंक्रमे ॥ समुद्धरणं वान्तान्ते जलस्योद्धरणे ग्रहेः । अवलोकितस्तु बुद्धे त्ववलोकितमीक्षिते ॥ स्यादपराजितो विष्णौ श्रीकण्ठे निष्पराजये । अपराजिता तु दुर्गा श्वेता चापि जयन्तिका ॥' इति ख-पुस्तकस्थः पाठः. १८. 'भूपाले प्रधाने क्षत्रियेऽपि च' इति ख-पुस्तकस्थः पाठः. १९. 'रम्भोधौ प्रतीचीदिक्पतावपि' इति ख-पुस्तक एवम्. २०. 'चूते स्यात्पिकपञ्चमरागयोः' इति ख-पुस्तके. २१. 'वसन्तदूती पाटलायामतिमुक्तकभूरुहि । सहस्रपादः कारण्डे भास्करे यज्ञपूरुषे ॥ योजनगन्धा कस्तूर्यां सीतायां व्यासमातरि ।' अत्रैवं पाठः ख-पुस्तके. २२. 'सुवर्णे' ख. २३. इतः परम् 'अपसर्जनं तु दाने परित्यागेऽतिसर्जने । विश्राणने च हिंसायामादेशे सेवकस्य च ॥' इत्यधिकः पाठः ख-पुस्तके. २४. 'धृते' ख.

कलानुनादी चटके चञ्चरीके कपिञ्जले । गन्धमादनः कप्यद्रिभिदोरेलिनि गन्धके ॥ १७४१
गन्धमादनी सुरायामथ आयानुजीविनः । वैकाश्विननटद्रुःस्थाः स्याद्धूमकेतनोऽनले ॥ १७४२
ग्रहभेदे च प्रतिपादनं बोधनदानयोः । पद्मलाञ्छनो धनदे लोकेशे रविवेधसोः ॥ १७४३
पद्मलाञ्छना तारायां सरस्वत्यां श्रियामपि । पीतचन्दनं स्याद्धरिद्रायां कश्मीरजन्मनि ॥ १७४४
महारजनं कुसुम्भे स्वर्णेऽथ मधुसूदनः । भ्रमरे केशवे मृत्युवञ्चनः श्रीफले हरे ॥ १७४५
द्रोणकाकेऽप्यथ वरचन्दनं देवदारुणि । कालेये वरवर्णिन्यङ्गनालाक्षाप्रियङ्गुषु ॥ १७४६
रोचनायां हरिद्रायामथ स्याच्छकुलादनी । कट्वीमांसीपिचुलिकाजलपिप्पलिकासु च ॥ १७४७
शालङ्कायनो नन्दिऋष्योः स्याच्छ्वेतवाहनः शशी । पार्थेऽथ सहस्रवेधी चुक्रे सहस्रवेधि तु ॥ १७४८
हिङ्गौ चामरपुष्पस्तु केतके चूतकाशयोः । गोरक्षजम्बूर्गोधूमधान्ये गोरक्षतण्डुले ॥ १७४९
धूलीकदम्बस्तिनिशे नीपे वरुणपादपे । शृगालजम्बूर्गोडुम्बे फले च बदरीतरोः ॥ १७५०
अभ्युपगमः समीपागमने स्वीकृतावपि । नक्षत्रनेमिः शीतांशुरेवत्यौत्तानपादिषु ॥ १७५१
कालानुसार्यं शैलेये कालेये शिंशिपातरौ । अथ स्याद्दुग्धतालीयं दुग्धाग्रदुग्धफेनयोः ॥ १७५२
वृषाकपायी जीवन्त्यां शतावर्युमयोः श्रियाम् । उत्पलपत्रमुत्पलदले स्त्रीणां नखक्षते ॥ १७५३
कपिलधारा त्रिदशापगायां तीर्थमित्यपि । तमालपत्रं तिलके तापिच्छे पत्रकेऽपि च ॥ १७५४
तालीसपत्रं तु तामलक्यां तालीसके क्वचित् । पादचत्वरः करके परदोषैकभाषिणि ॥ १७५५
सैकते छगलेऽश्वत्थद्रुमेऽथ पांसुचामरः । वर्द्धापके प्रशंसायां दूर्वाश्चिततटी भुवि ॥ १७५६
पुरोटौ धूलिगुच्छे पीतकावेरं तु कुङ्कुमे । पित्तले वस्वोकसारा त्विन्द्रस्य धनदस्य च ॥ १७५७
नलिनीपुर्योर्विप्रतिसारस्त्वनुशये रुषि । कौकृत्ये सर्वतोभद्रस्त्वोकोभित्काव्यचित्रयोः ॥ १७५८
निम्बेऽथ सर्वतोभद्रा गंम्भार्यां नटयोषिति । समभिहारस्त्वभीक्ष्णे भृशार्थेऽथासुतीबलः ॥ १७५९
शौण्डिके यज्वन्युद्दण्डपालो मत्स्याहिभेदयोः । स्यादेककुण्डलो बलभद्रे किंपुरुषेश्वरे ॥ १७६०
कूपीटपालस्तु केनिपाते जलनिधावपि । स्यात्पाण्डुकम्बलः श्वेतकम्बलग्रावभेदयोः ॥ १७६१

१. 'कलं मनोज्ञमनुवदति कलानुनादी' इति टीका. 'कालानुनादी' ख. २. 'अलौ च' ग-घ. ३. 'नटाश्विनवकद्रुःस्थाः' ख. ४. 'इत्येतच्छातकुम्भकुसुम्भयोः । मधुसूदनसंज्ञा तु भ्रमरे वनमालिनि । स्यान्मृत्युवञ्चनः शंभौ श्रीफलद्रोणकाकयोः । वरचन्दनमाख्यातं कालेये देवदारुणि । स्याद्वरवर्णिनी लाक्षाहरिद्रारोचनासु च । स्त्रीरत्ने च प्रियङ्गौ च स्यादथो शकुलादनी ।' एवं पाठः ख-पुस्तके. ५. 'कट्वीमांसीपिञ्जुलिका' ख; 'कटुमांसी किञ्जुलिका' ग-घ. ६. 'शालङ्कायनशब्दः स्यादृषिभेदेऽपि नन्दिनि । शिवकीर्तनशब्दस्तु भृङ्गिरीठे मुरद्विषि । श्वेतवाहन इत्याख्या शशाङ्के च धनंजये । स्यात्षष्टिहायनो धान्यविशेषे च मतङ्गजे । सहस्रवेधी चुक्रे स्यात्सहस्रवेधि रामठे । हरिचन्दनमाम्नातगोशीर्षे देवपादपे । हरिवाहन इत्युक्तो भास्करामरनाथयोः । भवेच्चामरपुष्पस्तु के' इत्यधिकः ख-पुस्तके पाठः. ७. 'धूलीकदम्बोऽस्तिनिशे' ग-घ. ८. 'गोडुम्ब औषधम्' इति टीका. 'गोडिम्बे' ग-घ. ९. 'कालानुसार्यः' ग-घ. १०. 'दुग्धाग्रे दुग्ध' ख. ११. इतः प्राक् 'भवेत्प्रवचनीयाख्या प्रवाच्ये च प्रवक्तरि' इत्यधिकः पाठः ख-पुस्तके. १२. 'तापिच्छस्तमालः' इति टीका. 'तापिञ्छ' ग-घ. १३. 'पांशु' ग-घ. १४. 'वस्वौकसारा' ग-घ. १५. 'पुरीनलिन्योर्वि' ख. १६. 'गम्भारी श्रीपर्णीवृक्षः' इति टीका. 'गम्भीर्याम्' ख. १७. 'भृशार्थे पौनःपुन्येऽपि कथ्यते । आसुतीबलशब्दस्तु यज्ञकर्तरि शौण्डिके । भवेदुद्दण्डपालस्तु मत्स्यसर्पप्रभेदयोः । एककुण्डल इत्येष बलभद्रे धनाधिपे । कूपीटपालशब्दस्तु केनिपाते पयोनिधौ । कूटपाकलो गजपित्तज्वरे पाकमारुते ॥' इत्यधिकः पाठः ख-पुस्तके.

सुरतताली[1] शिरःस्रग्दूत्योरथाशितंभवः । अन्नादौ तृप्तौ च नभश्चमसश्चन्द्रमाययोः ॥ १७६२
चित्रापूपे हिङ्गुनिर्यासो हिङ्गुरसनिम्बयोः । हिरण्यरेता ज्वलने सहस्रकिरणेऽपि च ॥ १७६३

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहे पञ्चस्वरकाण्डः पञ्चमः ॥ ५ ॥

---

षट्स्वरकाण्डः ।

ग्राममद्गुरिका युद्धश्[2]टङ्कयोर्मातुलपुत्रकः । धत्तूरकस्य च फले मातुलस्य च नन्दने ॥ १७६४
लूतामर्कटकः पुत्रीनवमालिकयोः कपौ । वर्णबिडोलकः काव्यच्छायाहृत्संधिचोरयोः ॥ १७६५
सिन्दूरतिलको[3] हस्ती सिन्दूरतिलकाङ्गना । दोहदलक्षणं गर्भे स्यात्संधौ यौवनस्य च ॥ १७६६
यौवनलक्षणं[4] वक्षोरुहे च लवणिम्नि च । अर्द्धपारापतश्[6]चित्रकण्ठे स्यात्तित्तिरावपि ॥ १७६७
प्रत्युद्गमनीयमुपस्थेये धौतांशुकद्वये । विष्वक्सेनप्रिया[7] त्रायमाणौषध्यां श्रियामपि ॥ १७६८

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहे षट्स्वरकाण्डः षष्ठः ॥ ६ ॥

---

अव्ययाधिकारः ।

अथाव्ययानि वक्ष्यन्ते प्राग्वदेव स्वरक्रमात् । अ[8] स्वल्पार्थेऽप्यभावेऽपि स्यादा स्मरणवाक्ययोः ॥ १७६९
आङीषदर्थेऽभिव्याप्तौ[9] क्रियायोगेऽवधावपि । आं[10] स्यादवधृतिस्मृत्योरा: संतापप्रकोपयोः ॥ १७७०
इ स्यात्खेदे प्रकोपोक्त्यावी[11] क्रोधे दुःखभावने । प्रत्यक्षे संनिधौ चाप्यु रोषोक्त्यामन्त्रणार्थयोः ॥ १७७१
उत्प्राधान्ये प्रकाशे च प्राबल्यास्वास्थ्यशक्तिषु । विभागे बन्धने मोक्षे[12]ऽभावे लाभोर्ध्वकर्मणोः ॥ १७७२
ऊं प्रश्नेऽङ्गीकृतौ रोषेऽप्यूं[13] प्रश्ने रोषवाचि चे । ऋ कुत्सावाक्ययोरेऐ हेहैशब्दाविव स्मृतौ ॥ १७७३
आमन्त्रणाह्वानयोरों प्रणवेऽङ्गीकृतावपि । ओऔशब्दौ तु होहौ च हूतौ संबोधनेऽपि च ॥ १७७४
कु पापीयसि कुत्सायामीषदर्थे निवारणे । कं सुखे[14] वारिशिरसोः किं प्रश्ने कुत्सितेऽपि च ॥ १७७५
चान्योन्यार्थसमाहारान्वाचयेषु समुच्चये । हेतौ पक्षान्तरे तुल्ययोगितावि नियोगयोः ॥ १७७६

---

१. ‘मन्त्रचूर्णलमिच्छन्ति वशीकरणवेदिनि । डाकिनीदोषमन्त्रज्ञे कुशाम्बुप्रोक्षणेऽपि च । भवेत्सुरतताली तु दूतिकायां शिरःस्रजि । आशितंभवमन्नादावाशितंभवस्तर्पणे । स्यादाषाढभवो भीमे नवीनजलदेऽपि च । स्याश्चमश्चमसश्चन्द्रेचितायूपेन्द्रजालयोः । हिङ्गुनिर्यास इत्येष निम्बे हिङ्गुरसेऽपि च ।’ इति ख-पुस्तकेऽधिकः पाठः. २. ‘श्टङ्क्यां ग्रामयुद्धेऽपि कीर्त्यते । स्यान्मदनशलाका तु सार्या कामोदयौषधौ । मातुलपुत्रको धत्तूरफले मातुलात्मजे’ इति ख-पुस्तकेऽधिकः पाठः. ३. ‘स्नानचिकित्सकश्चातुर्मास्यव्रतकरे नरे । स्नानचिकित्सकं प्रोक्तं नारीपुष्पतपस्ययोः ॥’ इत्यधिकः ख-पुस्तके. ४. ‘यौवनलक्षणा’ ख. ५. इतःपरम् ‘समुद्रनवनीतं स्यात्पीयूषे च सुधाकरे’ ख. ६. ‘अर्धेन पारापतोऽर्द्धपारापतः, द्वावपि पक्षिभेदौ’ इत्यनेकार्थकैरवाकरकौमुदी. ७. ‘विष्वक्सेनप्रिया लक्ष्म्यां त्रायमाणौषधावपि’ ख; ‘विश्वक्सेन’ ग-घ. ८. ‘अ स्यादभावे स्वल्पार्थे विष्णावेष त्वनव्ययम्’ ख. ९. ‘अभिव्यक्तौ क्रियाभेदे’ ग-घ. १०. ‘आ स्याद्वाक्ये च स्मरणे स्यादा वेधस्त्वनव्ययम्’ ख. ११. ‘कामदेवे त्वनव्ययम् । इ दुःखभावने क्रोधे ईर्लक्ष्म्यां स्यादनव्ययम् । उ संबुद्धौ रुषोक्तौ च शिववाची त्वनव्ययम् । उत्प्राधान्ये प्रकाशे च’ ख-पुस्तकस्यपाठोऽयम्. १२. ‘मोक्षे’ ख. १३. ‘ऊ रक्षणे रक्षके च सूर्ष्यां स्यूतावनव्ययम् । ऋ कुत्सायां च वाक्ये च देवमातर्यनव्ययम् । ॠ वाक्यकुत्सयोर्दैत्यजनन्यामप्यनव्ययम् । ऌ कुत्सायां विस्मये च ॡशब्दोऽपि तदर्थकः । देवमातरि वाराह्यां क्रमात्तावप्यनव्ययौ । एऐशब्दौ तु हेहैवत्स्मृत्यामन्त्रणहूतिषु । क्रमाच्चतुर्भुजे शंभावेऐ प्रोक्तावनव्ययौ । ओमित्यनुमितौ प्रोक्तं प्रणवे चाप्युपक्रमे । ओऔशब्दौ तु होहौवत्संबुद्ध्याह्वानयोर्मतौ । विधातरि क्रमाद्विष्णावोऔशब्दावनव्ययौ ।’ इत्येवं ख-पुस्तकस्थः पाठः. १४. ‘मुखे’ ख.

पादपूरणेऽवधृतौ तु विशेषेऽवधारणे । समुच्चये पादपूर्तौ धिग्निर्भर्त्सननिन्दयोः ॥ १७७७
नि स्यात्क्षेपे भृशार्थे च नित्यार्थे दानकर्मणि । संनिधानोपरमयोः [2]संशयाश्रयराशिषु ॥ १७७८
मोक्षेऽन्तभावेऽधोभावे बन्धने कौशलेऽपि च । नु प्रश्नेऽनुशयेऽतीतार्थे विकल्पवितर्कयोः ॥ १७७९
नञीषदर्थे सादृश्ये तद्विरुद्धतदन्ययोः । व्यतिक्रमे स्वरूपार्थे निषेधाभावयोरपि ॥ १७८०
निर्निश्चये क्रान्ताद्यर्थे निःशेषप्रतिषेधयोः । प्राक्पूर्वस्मिन्प्रभाते दिग्देशकालेष्वनन्तरे ॥ १७८१
अतीतेऽग्रेऽप्यथ प्र स्यादृताद्यर्थप्रकर्षयोः । वा समुच्चय एवार्थे उपमानविकल्पयोः ॥ १७८२
वि श्रेष्ठेऽतीते नानार्थे वै हेतौ पादपूरणे । शं कल्याणे सुखेऽर्थे स्वित्परिप्रश्नवितर्कयोः ॥ १७८३
सं संगार्थे प्रकृष्टार्थे शोभनार्थसमार्थयोः । स्मातीते पादपूर्तौ ह संबुद्धौ पादपूरणे ॥ १७८४
हा शुग्दुःखविषादेषु हि हेताववधारणे । विशेषे पादपूर्तौ च ही विस्मयविषादयोः ॥ १७८५
दुःखहेतौ च हं रोषभाषणेऽ[11]नुनयेऽपि च । हुं वितर्के परिप्रश्ने [12]स्यान्मनागल्पमन्दयोः ॥ १७८६
अङ्ग संबोधने हर्षे पुनरर्थे च किं च तु । साकल्यारम्भयोस्तिर्यक्स्यात्तिरश्चीनवक्रयोः ॥ १७८७
हिरुङ्मध्ये विनार्थेऽति प्रकर्षे लङ्घने भृशे । स्तुतावसंप्रतिक्षेपेऽप्यस्तु पीडानिषेधयोः ॥ १७८८
असूयायामनुज्ञायामाराद्दूरसमीपयोः । इति स्वरूपे सांनिध्ये विवक्षानियमे मते ॥ १७८९
हेतौ प्रकारप्रत्यक्ष[13]प्रकाशेष्ववधारणे । एवमर्थे समाप्तौ स्यादुत प्रश्नवितर्कयोः ॥ १७९०
समुच्चये विकल्पे च तावद्यावदिवावधौ । कार्त्स्न्येऽवधारणे माने प्रतीत्थंभूतभागयोः ॥ १७९१
प्रतिदाने प्रतिनिधौ वीप्सालक्षणयोरपि । पश्चात्प्रतीच्यां चरमे बतामन्त्रणखेदयोः ॥ १७९२
धृत्याश्चर्यानुकम्पासु यद्वत्प्रश्नवितर्कयोः । शश्वत्सह पुनर्नित्ये सकृत्सहैकवारयोः ॥ १७९३
स्वस्त्याशीः क्षेमपुण्यादौ साक्षात्प्रत्यक्षतुल्ययोः । हन्त दानेऽनुकम्पायां वाक्यारम्भविषादयोः १७९४
निश्चये च प्रमोदे चाप्यथो अथ समुच्चये । मङ्गले संशयारम्भाधिकारानन्तरेषु च ॥ १७९५
अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि । तथा स्यान्निश्चये पृष्टप्रतिवाक्ये समुच्चये ॥ १७९६
यथा निदर्शने [16]द्वौ तूद्देशे निर्देशसाम्ययोः । हेतूपपत्तौ च वृथा त्वविधौ स्यादनर्थके ॥ १७९७
अनु लक्षणवीप्सेत्थंभूतभागेषु संनिधौ । सादृश्यायामहीनेषु पश्चादर्थसहार्थयोः ॥ १७९८
नन्वाक्षेपे परिप्रश्ने प्रत्युक्ताववधारणे । वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञयोरपि ॥ १७९९
नानाविनोभयानेकार्थे तु स्थाने तु कारणे । युक्ते साम्येऽप्यप स्तेयेऽपकृष्टे वर्जने मुदि ॥ १८००
विपर्यये वियोगे च निर्देशे विकृतावपि । अपि संभावनाशङ्कागर्हणासु समुच्चये ॥ १८०१
प्रश्ने युक्तपदार्थेषु कामचारक्रियासु च । उपासन्नेऽधिके हीने सौदृश्यप्रतियत्नयोः ॥ १८०२
तद्योगव्याप्तिपूजासु शक्तावारम्भदानयोः । दाक्षिण्याचार्यकरणदोषाख्यानात्ययेषु च ॥ १८०३

१. 'पूर्णेऽवधूतौ च तु' ग-घ. २. 'संशये यथा, निरेकमेकोऽपि निराकरोति' इति टीका. 'संश्रयाश्रयराशिषु' ख-ग-घ-पुस्तकस्थः पाठः. ३. 'अनुनये' ख; 'अनुशाये तीर्थे स्यात्' ग-घ. ४. 'विशेष-' ग-घ. ५. 'अवान्तरे' ख-ग-घ. ६. 'अपि श्वित्स्वित्स्यात्प्र' ग-घ. ७. 'प्रसंगार्थे' ख. ८. 'समुच्चयोः' ग-घ. ९. इतःपरम् 'सु पूजायां भृशाथानुमतिकृच्छ्रसमृद्धिषु' इति ख-पुस्तकेऽधिकः पाठोऽयम्. १०. 'सुख' ग-घ. ११. 'अनुशये' ग-घ. १२. 'हूं लज्जायां निवारणे। मनागल्पे च मन्दे चाङ्ग संबोधनहर्षयोः । पुनरर्थे चाथ किं च संकल्पारम्भयोर्मतम् । तिर्यक्तिरोर्थे वक्रे च विहगादौ त्वनव्ययम्' । इत्येवं ख-पुस्तके. १३. 'प्रकर्षेष्व' ख. १४. 'वितर्के च यावत्तावदिवावधौ' ग-घ-पुस्तकयोरेवं पाठः. १५. 'प्रमादे' ग-घ. १६. 'हेतू' ख. १७. 'मरणोद्यमनार्थयोः' ख.

अभि वीप्सालक्षणयोरित्थंभूताभिमुख्ययोः । स्यादमा संनिधानार्थे सहार्थेऽलं निवारणे ॥ १८०४
अलंकरणसामर्थ्यपर्याप्तिष्वेवधारणे । एवं प्रकारे[3]ऽङ्गीकारेऽवधारणसमन्वयोः ॥ १८०५
कथं प्रश्ने प्रकारार्थे संभ्रमे संभवेऽपि च । काममसूयानुगमे प्रकामेऽनुमतावपि ॥ १८०६
किमु संभावनायां विमर्शे जोषं सुखे स्तुतौ । मौनलङ्घनयोश्चापि नाम प्राकाश्यकुत्सयोः ॥ १८०७
संभाव्याभ्युपगमयोरलीके विस्मये क्रुधि । नूनं तर्के निश्चिते च प्राध्वं नर्मानुकूलयोः ॥ १८०८
भृशं प्रकर्षेऽत्यर्थे च सामि त्वर्धे जुगुप्सिते । अयि प्रश्नेऽनुनये स्यादये क्रोधविषादयोः ॥ १८०९
संभ्रमे स्मरणे चान्तरन्ते स्वीकारमध्ययोः । उँररर्युरुरीवदूरी विस्तारेऽङ्गीकृतावपि ॥ १८१०
पराभिमुख्ये प्राधान्ये विमोक्षप्रातिलोम्ययोः । गतिधर्षणहिंसासु भृशार्थे विक्रमेऽपि च ॥ १८११
परि व्याधावुपरमे वर्जने लक्षणादिषु । आलिङ्गने च शोके च पूजायां दोषकीर्तने ॥ १८१२
भूषणे सर्वतोभावे व्याप्तौ निवसनेऽपि च । पुरा भविष्यदासन्ने चिरातीतप्रबन्धयोः ॥ १८१३
पुनरप्रथमे भेदे किल संभाव्यवार्तयोः । हेत्वरुच्योरलीके च खलु वीप्सानिषेधयोः ॥ १८१४
जिज्ञासायामनुनये वाक्यालंकरणेऽपि च । अवालम्बनविज्ञानवियोगव्याप्तिशुद्धिषु ॥ १८१५
ऐवौपम्ये परिभवे ईषदर्थेऽवधारणे । उषा रात्रौ तदन्ते च दोषा निशि निशामुखे ॥ १८१६
मङ्क्षु शीघ्रे भृशे तत्त्वेऽतो हेतोरपदेशवत् । निर्देशे पञ्चम्यर्थे चेतो यतश्च विभागवत् ॥ १८१७
पञ्चम्यर्थे नियमे च तत आदौ कथान्तरे । पञ्चम्यर्थे परिप्रश्ने तिरोऽन्तर्धौ तिरश्चि च ॥ १८१८
नीचैः स्वैराल्पनीचेषु प्रादुर्नामप्रकाश्ययोः । पुरोऽग्रे प्रथमे च स्यान्मिथोऽन्योन्यरहस्यपि ॥ १८१९
अहा[11] धिगर्थे शोके च करुणार्थविषादयोः । अह[12] क्षेपे नियोगे चाप्यहो प्रश्नविचारयोः ॥ १८२०
सह संबन्धसादृश्ययौगपद्यसमृद्धिषु । साकल्ये विद्यमाने च हीही विस्मयहास्ययोः ॥ १८२१
ननु[13] च प्रश्ने दुष्टोक्तौ सम्यग्वादे स्तुतावपि । अपष्ठु चारौ निर्दोषे किमुत प्रश्नवादयोः ॥ १८२२
विकल्पेऽतिशये चापि पुरस्तात्प्रथमेऽग्रतः । पूर्वस्यां च पुरार्थे चाभीक्ष्णं शीघ्रप्रकर्षयोः ॥ १८२३
पौनःपुन्ये संतते चावश्यं निश्चयनित्ययोः । इदानीं सांप्रतं वाक्यालंकारे तद्दिनं पुनः ॥ १८२४
दिनमध्ये प्रतिदिने सांप्रतं तूचितेऽधुना । समयानिकषा चान्तर्निकटे चान्तरा पुनः ॥ १८२५
विनार्थे संनिधौ मध्येऽभितोऽभिमुखकार्त्स्न्ययोः । समीपो[15]भयतः शीघ्रेष्वग्रतः प्रथमाग्रयोः ॥ १८२६
अन्ततो[16]ऽवयवोत्प्रेक्षा पञ्चम्यर्थेषु शासने । पुरतोऽग्राद्ययोः पूर्वेद्युर्धर्मोहप्रभातयोः ॥ १८२७
अहहेत्यद्भुते खेदेऽन्तरेणान्तर्विनार्थयोः । अहो बतानुकम्पायां खेदामन्त्रणयोरपि ॥ १८२८

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहेऽव्ययाधिकारः ।

इति श्रीहेमचन्द्राचार्यविरचितोऽनेकार्थसंग्रहः समाप्तः ।

---

१. 'निरर्थकौ' ग-घ. २. 'च वारणे' ख. ३. 'रोपमयोरङ्गीकारेऽवधारणे' ख. ४. 'उर्यूररी चोररी च ग-घ. ५. 'क्षुण्ठ्यासु' ग-घ. ६. इतःपरम् 'प्रादुः प्राकाश्ये वृत्तौ स्यात्संभाव्येऽपि प्रयुज्यते' ख. ७. 'प्रतीपयोः' ग-घ. ८. 'विक्रान्त' ग-घ. ९. 'इवौ' ख. १०. इतःपरम् 'शनैः शनैश्चरे स्वैरे संहः साहसतेजसोः' ख. ११. 'नञ्पूर्वाज्जहातेः क्विपि, अहा' इति टीका. 'अहो' ख-ग-घ. १२. 'नञ्पूर्वाज्जहातेर्डेः, 'अह' इति टीका. 'आह' ख-ग-घ. १३. 'अनु च' ख. १४. 'नानार्थे' ग-घ. १५. 'समयो' ग-घ. १६. 'अवस्थितोत्प्रे' ख.

॥ श्रीः ॥

# अभिधानसंग्रहः ।

## ( १ )

श्रीहेमचन्द्राचार्यविरचितो

## निघण्टुशेषः ।

विहितैकार्थनानार्थदेश्यशब्दसमुच्चयः । निघण्टुशेषं वक्ष्येऽहं नत्वार्हत्पादपङ्कजम् ॥ १

.................................... । .................................... ॥ २

.................................... । .................................... ॥ ३

.................................... । .................................... ॥ ४

.................................... । .................................... ॥ ५

.................................... । .................................... ॥ ६

.................................... । .................................... ॥ ७

.................................... । .................................... ॥ ८

.................................... । .................................... ॥ ९

.................................... । .................................... ॥ १०

.................................... । .................................... ॥ ११

.................................... । .................................... ॥ १२

.................................... । .................................... ॥ १३

.................................... । .................................... ॥ १४

.................................... । .................................... ॥ १५

.................................... । .................................... ॥ १६

.................................... । .................................... ॥ १७

................पुष्पः शुकवृक्षः शुकप्रियः । कपीतनः कर्णपूरो भण्डिलः श्यामवल्कलः ॥ १८

पाटल्यां पाटला स्थाली मोघा तोयाधिवासिनी । वसन्तकामयोर्दूती ....कुन्ती कालवृन्तिका ॥ १९

अन्यस्यां तत्र तु श्वेता पाटला काष्ठपाटला । शीतला श्वेतकुम्भीका कुबेराक्षी फलेरुहा ॥ २०

अगुरावगुरुर्लोहं वंशिकं विश्वरूपकम् । कृमिजं प्रवरं राजार्हं योगजमनार्यकम् ॥ २१

मल्लिगन्धेऽत्र मङ्गल्या कृष्णे तु काकतुण्डकः । श्रीखण्डे स्यान्मलयजं चन्दनं श्वेतचन्दनम् ॥ २२

गोशीर्षकं गन्धसारं भद्रश्रीस्तैलपर्णिकम् । फलकी सुरभिः सारं महार्हं रोहणोद्भवम् ॥ २३

अथ बर्बरके श्वेतं निर्गन्धं बर्बरोद्भवम् । स्याद्रक्तचन्दने क्षुद्रचन्दनं भास्करप्रियम् ॥ २४
ताम्रसारं रक्तसारं लोहितं हरिचन्दनम् । कुचन्दने तु पत्राङ्गं पत्तङ्गं पट्टरञ्जनम् ॥ २५
सुरङ्गकं रक्तकाष्ठं पत्तूरं तिलपर्णिका । अथ द्रुमोत्पलव्याधः परिव्याधः सुगन्धकः ॥ २६
निर्गन्धेऽस्मिन्कर्णिकारो निषीधः पीतपुष्पकः । पुंनागे तु महानागः केसरो रक्तकेसरः ॥ २७
देववल्लभकुम्भीकौ तुङ्गः पुरुषनामकः । अथागस्त्ये वङ्गसेनः शुकनासो मुनिद्रुमः ॥ २८
करवीरे कणवीरः श्वेतपुष्पोऽश्वमारकः । प्रतिहासः शतप्राशोऽश्वरोधः कुमुदोद्भवः ॥ २९
रक्तपुष्पेऽत्र लगुडश्चण्डातश्चण्डगुल्मकौ । कालस्कन्धस्तमाले स्यात्तापिच्छो रञ्जतो वसुः ॥ ३०
तमालपत्रे वत्साख्यं रोमशं तामसं दलम् । सूक्ष्मैलायां चन्द्रबाला द्राविडी निष्कुटिस्त्रुटिः ॥ ३१
कपोतवर्णिका तुच्छा कोरङ्गी बहुला तुला । स्थूलैलायां बृहदेला भद्रैला लक्सुगन्धिका ॥ ३२
त्रिदिवोद्भवा च पृथ्वीका कर्णिका त्रिपुटा पुटा । कर्पूरे घनसारः स्याद्धिमाह्वो हिमवालुकः ॥ ३३
सिताभ्रः शीतलरजः स्फटिकश्चन्द्रनामकः । कङ्कोलके कटुफलं कोमकं मागधोत्थितम् ॥ ३४
कोलं कोषफलं कोरं मारीचं द्वीपमित्यपि । लवङ्गे शिषरं दिव्यं भृङ्गारं वारिजं लवम् ॥ ३५
श्रीपुष्पं श्याह्वयं देवपुष्पं चन्दनपुष्पकम् । नलिकायां कपोताङ्घ्रिर्निर्मध्या शुषिरा नटी ॥ ३६
धमन्यञ्जनकेशी च शून्या विद्रुमवल्ल्यपि । अतिमुक्ते मण्डकः स्यात्पुण्ड्रको भ्रमरोत्सवः ॥ ३७
पराश्रयः सुवासन्ती कामुको माधवी लता । पिप्पले बोधिरश्वत्थः श्रीवृक्षश्चलपत्रकः ॥ ३८
मङ्गल्यः केशवावासः श्यामलो द्विरदाशनः । गर्दभाण्डे कन्दरालश्छायावृक्षः कमण्डलुः ॥ ३९
प्लक्षो वटप्लवः शुङ्गी सुपार्श्वश्चारुदर्शनः । कपीतने कपीनः स्यात्पीतनप्लवकावपि ॥ ४०
कर्पटो पर्कटी प्लक्षः सतीदो लक्षणे नटी । वटे वैश्रवणावासो न्यग्रोधो बहुपाद्भवः ॥ ४१
स्कन्धजन्मारक्तफलः क्षीरी शुङ्गी वनस्पतिः । उदुम्बरे जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥ ४२
सदाफलो वसुवृक्षः श्वेतवल्को मशक्यपि । काकोदुम्बरिकायां तु फाल्गुनी फल्गुवाटिका ॥ ४३
फलाराजी फलभारी फलयूर्जघनेफला । राजादने तु राजन्या क्षीरिका प्रियदर्शनः ॥ ४४
कपिप्रियो दृढस्कन्धो मधुराजफलो नृपः । पियाले तु राजवृक्षो बहुवल्को धनुष्पटः ॥ ४५
सन्नकद्रुः खरस्कन्धश्चारस्तापसवल्लभः । आम्रातके वर्षपाकी कपिचूतः कपिप्रियः ॥ ४६
कपीतनः पीतनकस्तनुक्षीरोऽम्रपाटकः । ................................................ ॥ ४७
अर्के विकीरण.................................... । क्षीरार्कपर्णो राजार्के ललर्कौ गणरूपकः ॥ ४८
एकाष्ठीलः सदापुष्पो मन्दारश्च प्रतापसः । त्रुट्यां वज्रो महावृक्षोऽसिपत्रः स्नुक्सुधा गुडा ॥ ४९
समन्तदुग्धा सेहुण्डः शण्डेरी चक्रकण्टकः । करमर्दे करमदः कराम्रकसुषेणकौ ॥ ५०
स्थलपर्केट आविग्नः कृष्णपाकफलोऽपि च । जम्बीरे जम्भलो जम्भो जम्भीलो दन्तहर्षणः ॥ ५१
वक्त्रशोधी दन्तशठो गम्भीरो रोचनोऽपि च । करुणे तु छागलाख्यो मल्लिकाकुसुमः प्रियः ॥ ५२
बीजपूरे बीजपूर्णः पूरकः फलपूरकः । सुपूरको मातुलुङ्गः केसराम्लोऽम्लकेसरः ॥ ५३
वराम्लो बीजको लुङ्गो रुचक्रो मध्यकेसरः । कृमिघ्नो गन्धकुसुमः केसरी साधुपादपः ॥ ५४
मातुलुङ्गी वर्धमाना मधुरा मधुकर्कटी । मधुवल्ली पूतिपुष्पा देववदूती महाबला ॥ ५५
अम्लिकायां चुक्रिकाम्का शुक्तिकाम्ली विकाम्लिका । चुक्रा चिञ्चा तिन्तिडीका तिन्तिडी गुरुपुष्पिका ॥

वृक्षाम्ले स्यादम्लवृक्षस्तिन्तिडीको महीरुहः। शाकाम्लमम्लशाकं चाम्लपूरो रक्तपूरकः॥ ५७
अथाम्लवेतसे भीमो भेदनो रक्तपूरकः। रुधिरस्रावकश्चुक्रं मांसारिर्चीनिकप्रियः॥ ५८
शाखाम्लो वेतसोऽम्लोऽम्लस्तिन्तिडीको रसाम्लकः। स शङ्खद्रावको हीनो लौहद्रावक उत्तमः॥५९
तावेव तु शतवेधिसहस्रवेधिनौ क्रमात्। कपित्थे वानरावासो गन्धपत्रः कपिप्रियः॥ ६०
पुष्पफलो दधिफलो दधित्थग्राहिमन्मथाः। अक्षिस्पंदो दन्तशठो राजाम्रश्चिरपाक्यपि॥ ६१
अश्मन्तके श्लक्ष्णपत्रः पाषाणावृक इन्द्रकः। अम्लपत्रस्ताम्रपत्रः कुशली यमलच्छदः॥ ६२
नारङ्गे स्यान्नागरङ्गस्त्वक्सुगन्धो मुखप्रियः। ऐरावतो योगसारो योगी तक्राधिवासनः॥ ६३
खदिरे स्याद्रक्तसारः कण्टकी दन्तधावनः। गायत्री चलपत्रश्च बहुशल्यः क्षितिक्षमः॥ ६४
सिते तु तत्र कदरः कार्मुकः कुब्जकण्टकः। सोमवल्को नेमिवृक्षः श्वेतसारः पथिद्रुमः॥ ६५
विट्खदिरे लिरिमिदो गोधास्कन्धो रिमेदकः। अहिमारो रिमः पूत्यरिमेदो मुखशोधनः॥ ६६
शाल्मली तूलिनी मोचा पिच्छिला विरजाविता। कुकुटी पूरणी रक्तकुसुमा घुणवल्लभा॥ ६७
कण्टकाढ्या नलफली पिच्छा तु तस्य वेष्टकः। कुत्सिते शाल्मलौ प्रोक्तो रोचनः कूटशाल्मलिः ६८
शिंशिपायां महाश्यामा पिच्छिला पाण्डुरच्छदा। कृष्णसाराङ्गारवर्णागुरुरल्पा तु शिंशिपा॥ ६९
कुशिंशिपा भस्मगर्भा कपिला भस्मपिङ्गला। बदर्यां कुवलिः कोलिः कर्कन्धुः फेनिलच्छदा॥ ७०
राष्ट्रवृद्धिकरी कोली सौवीरी वज्रशिल्पिका। घुटा घोण्टा कुहा घोट्टा व्याघ्रगृध्रनखीत्यपि॥ ७१
शम्यां सक्तुफला लक्ष्मीः शिवा तुङ्गाभिपादपः। अजप्रिया भस्मकाष्ठा शंकरः शिवकीलिका॥ ७२
शिवलोमायतफला लोमपामविनाशिनी। मङ्गल्या शुचिपत्रा च फले तस्यास्तु साङ्गरः॥ ७३
इङ्गुद्यां तापसतरुर्मार्जारः कण्टकीटकः। बिन्दुकस्तिक्तमज्जा च पूतिपुष्पफलोऽपि च॥ ७४
गुग्गुलौ तु पुरो दुर्गो महिषाक्षः पलङ्कषः। जटायुः कालनिर्यासो वासवोलूकनामकः॥ ७५
नक्तंचरः शिवधूपः कुम्भोलूखलकः शिवः। पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः॥ ७६
करीरे स्यात्तीक्ष्णसारः शाकपुष्पो मृदुफलः। मरुजन्मा तथा पत्रो ग्रन्थिलक्रकरावपि॥ ७७
विकङ्कते स्रुवावृक्षो ग्रन्थिलः स्वादुकण्टकः। केकणिः काकपादश्च व्याघ्रपादोपकण्टकः॥ ७८
बिल्वे महाफलः श्याद्दः शलाटुः पूतिमारुतः। महाकपित्थं शाण्डिल्यः शैलूषो नीलमल्लिका॥ ७९
श्रीवासः श्रीफलो हृद्यगन्धो मालूरकर्कटौ। हरीतक्यां जया पथ्या हैमवत्यभयामृता॥ ८०
कायस्था पूतना चेतक्यव्यथा श्रेयसी शिवा। बिभीतके भूतवासो वासन्तोऽक्षो बहेटकः॥ ८१
संवर्तकः कर्षफलः कलिवासः कलिद्रुमः। कर्षौ दोत्यो मधुबीजो धर्मद्वेषी बिभेदकः॥ ८२
आमलक्यां शिवाधात्री वयस्था षट्रसामृता। पर्वकाढ्या तिष्यफला माकन्दी श्रीफला च सा ८३
अरणावग्निमन्थः स्यात्तर्कारी वैजयन्तिका। जया जयन्ती नादेयी श्रीपर्णी गणिकारिका॥ ८४
तेजोमन्थो हविर्मन्थो..........वह्निशोधनः। अरलौ दुन्दुको दीर्घ.......वृन्तश्चाथ कुटंनटः॥ ८५
श्योनाकः शोषणो जम्बुः शुकनासः कटंभरः। मयूरजङ्घकटुङ्गः सल्लकः प्रियजीवकः॥ ८६
मण्डूकपर्णः पत्रोर्णो गोपवृक्षो मुनिद्रुमः। शिग्रौ शोभाञ्जनस्तीक्ष्णगन्धो मूलकपल्लवः॥ ८७
विद्रध्यरातिः काक्षीवो मुखभङ्गः सुभञ्जनः। दशोक्षीवः सुरङ्गी च मोचको मधुगुञ्जनः॥ ८८
श्वेतेऽत्र श्वेतमरिचो रक्ते तु मधुशिग्रुकः। तिनिशे रथकृन्नेमिर्वञ्जुलो रथसाधकः॥ ८९

दीर्घवृक्षश्च कवरो रथनामातिमुक्तकः । अश्मगर्भः सर्वसारः क्रमसंधारणोऽपि च ॥ ९०
पलाशे किंशुकः पर्णः·······त्रिपत्रकः । त्रिवृताख्यो रक्तपुष्पो बीजस्नेहः समिद्वरः ॥ ९१
क्षारश्रेष्ठो वातपोथो याज्ञिको ब्रह्मपादपः । धवे भारोद्वहो गौरः सकटाक्षो धुरंधरः ॥ ९२
कुलावो नन्दिनश्चापि सितः कृष्णश्च स द्विधा । श्रीपर्ण्यां काश्मरी कृष्णा वृन्तिका मधुपर्णिका ९३
गम्भारी सर्वतोभद्रा कट्फला भद्रपर्णिका । विहीरा कुमुदाहारी महाकुम्भी च कश्मरी ॥ ९४
नित्यभद्रा महाभद्रा काश्मर्यो मधुपर्ण्यपि । सप्तच्छदे शुक्तिपर्णो गन्धपुष्पः सवर्णकः ॥ ९५
स्थूलपर्णो दीपवृक्षः शारदो विषमच्छदः । मदगन्धिर्विशालत्वक्गजद्विट्शाल्मलीदलः ॥ ९६
शिरोरुर्गेहविटपः सुमनो ग्रहनाशनः । आरग्वधे कृतमालः कर्णिकारः सुवर्णकः ॥ ९७
पीतपुष्पो दीर्घफलः शम्पाकश्चतुरङ्गुलः । व्याधिघ्ना रेवतः स्थूलः प्रग्रहो राजपादपः ॥ ९८
आरोग्यशिम्बिका कर्णी स्वर्णशेफालिकेत्यपि । बीजके प्रियकः शौरिर्गौरो बन्धूकपुष्पकः ॥ ९९
कृष्णसर्जो महासर्जः कल्याणः पीवरोऽसनः । महाशालः पीतशालो जीवकः प्रियशालकः ॥ १००
सुगन्धिर्नीलनिर्यासस्तिष्यपुष्पोऽलकप्रियः । स तु द्विधा शिखिग्रीवः श्रेष्ठो गोमूत्रगन्धकः ॥ १०१
अश्वकर्णे दीर्घपत्रः कषायः सस्यसंवरः । सर्जकः·······शूरः कार्श्यशालो लतातरुः ॥ १०२
अर्जुने ककुभः सेव्यः सुवर्णो धूर्तपादपः । देवशाकः शक्रतरुर्नदीसर्जोऽर्जुनाभिधः ॥ १०३
शाके कोलफलो द्वा····दारुयोगी हलीमकः । गन्धसारः स्थिरसारः स्थिरको ध्रुवसाधनः ॥ १०४
अभ्रं····महापत्रो बलसारो बलप्रभः । धर्मणे तु धनुर्वृक्षो गोत्रवृक्षो रुजासहः ॥ १०५
महाबलो महावृक्षो राजार्हो धन्वनः फलम् । स्वादुफलो मृत्युफलः सारवृक्षः सुतेजनः ॥ १०६
सिल्हके तु सिद्धवृक्षः कोलिपत्रे तु जोरणः । महापत्रे लगादी स्याद्विषशङ्कुः पलाशकः ॥ १०७
पारिभद्रे द्रुकिलिमं किलिमं देववल्लभः । दारु वस्नेहविद्धं च देवद्रुः स्वर्गजो द्रुमः ॥ १०८
पीतपूतिमहादेवभद्रेन्द्रा काष्ठदारुणी । मधूके···· शाकः स्यान्माधवो मधुको मधुः ॥ १०९
मधुष्ठीलो मधुष्ठालो मधुकाष्ठो मधुस्रवः । रोध्रकोषमधुगुडपुष्पो गोलफलोऽपि च ॥ ११०
जलजेऽस्मिन्मधूलः स्याद्गिरिजो दीर्घपत्रकः । तीरवृक्षो गौरशालो ह्रस्वपुष्पफलोऽपि च ॥ १११
तिन्दुके स्फूर्जकस्तुष्टः कालस्कन्धो विरूपकः । निःस्यन्दनः कालशाको द्रावणो नीलसारकः॥ ११२
द्वितीयतिन्दुके कालस्तिन्दुर्मर्कटतिन्दुकः । काकेन्दुकः काकपीलुः कुपीलुकुलकावपि ॥ ११३
रोध्रे लोध्रः सिते तत्र शाबरस्तनुवल्कलः । उत्सादनो महारोध्रो नम्भः शबरपादपः ॥ ११४
रक्ते तु पट्टिका तिल्वः पट्टीलाक्षाप्रसादनः । तिरीटो मार्जनश्चिल्ली कानीनः क्रमुकः शिग्रुः ॥ ११५
स्थूलवल्को बृहत्पत्रः कृष्णरोध्रे तु गालवः । भूर्जे भुजो बहुपटो मृदुवल्को मृदुच्छदः ॥ ११६
रेखापत्रश्छत्रपत्रो बहुलत्वक्चर्मिणावपि । श्लेष्मान्तके भूतवृक्षः पिच्छिलो द्विजकुत्सितः ॥ ११७
वसन्तकुसुमः शेलुः कफेलुर्लेखशाटकः । विषघाती बहुवारः शीत उद्दालकस्तथा ॥ ११८
बकुले कण्टकीग्रन्थिफलाम्बुपनसामहुः । लकुचः क्षुद्रपनसस्तनु स्यात्कुब्जकं फलम् ॥ ११९
आम्रे रसालो माकन्दः कामाङ्गः पिकबान्धवः । वनपुष्पो शवश्चूतः परपुष्टमदोद्भवः ॥ १२०
मधुदूतो मधुफलः सुफलो मदिरासखः । वसन्तपादपोऽसौ तु सहकारोऽतिसौरभः ॥ १२१
क्षुद्राम्रे स्यात्कृमितरुर्लाक्षावृक्षो जतुद्रुमः । सुकोशको घनस्कन्धः केशाम्बुश्च सुरक्तसः ॥ १२२
टङ्को नीलकपित्थोऽन्यो राजपुत्रो नृपात्मजः । जम्ब्वां महाफला राजजम्बूर्नीलाम्बुकच्छदा ॥ १२३

सुगन्धिपत्रा सान्या तु काकजम्बूः कुजम्बुका । उशीरपत्रा नादेयी वैदेशी काकवल्लभा ॥ १२४
मदने छर्दनो राठः शल्यको विषनाशनः । करहाटो मरुबकः पिण्डी पिण्डीतकः फलः ॥ १२५
सूर्यपुत्रकर्कटकौ विषगन्धो विषोदरः । मश्यान्तकफलो राजपुत्रकः कफवर्धनः ॥ १२६
कुब्जके कामुकं श्यामसारः फुल्लो मिसिद्रुमः । निचुले तु नदीकान्तोऽम्बुजो हिज्जल इज्जलः ॥ १२७
गन्धपुष्पो गुच्छफलोऽनुवाकः कच्छकोल्यपि । वेतसे विदुलः शीतो नदीकूलप्रियो रथः ॥ १२८
अभ्रपुष्पः पत्रमाली वाणीरो वञ्जुलोऽपि च । स्यादम्बुवेतसे भीरुर्नादेयी बालभीरुकः ॥ १२९
विदुलो मञ्जरीनम्रः परिव्याधो निकुञ्जकः । वरुणे गन्धवृक्षः स्यात्तिक्तशाकः कुमारकः ॥ १३०
श्वेतपुष्पः श्वेतफलस्तमालो मारुतापहः । साधुवृक्षः श्वेववृक्षः सेतुरश्मरिकारिपुः ॥ १३१
अङ्कोटे स्यात्पातसारो दीर्घकीलो निकोचकः । अङ्कोलकस्ताम्रफलो रेचको गन्धपुष्पकः ॥ १३२
भल्लातके वीरतरुररुष्कोऽरुष्करो व्रणः । भौतिको भूतनुद्वह्निस्नेहः शोफकरो धनुः ॥ १३३
अग्निमुखी बहुपत्रो भल्ली सूर्याग्निसंज्ञकः । अरिष्ठे स्यात्कृष्णवर्णो रक्तबीजोऽर्थसाधनः ॥ १३४
शुभनामा पीतफेनः फेनिलो गर्भपातनः । निम्बे तु सर्वतोभद्रः पारिभद्रः सुतिक्तकः ॥ १३५
पिचुमन्दो यवनेष्टः शुकेष्टः शुकमालकः । अरिष्टो हिङ्गुनिर्यासो वेता नियमनोऽपि च ॥ १३६
महानिम्बे निम्बकश्च कार्मुको विषमुष्टिकः । रम्यकः क्षीबको वृक्षोऽक्षिपीलुः केशमुष्टिकः ॥ १३७
पीलौ स्रंसी सहस्राङ्गः शीतः करभवल्लभः । गुल्मारिर्गुडफलश्चाथास्मिंस्तु गिरिसंभवे ॥ १३८
अक्षोटः कर्परालश्च फलस्नेहो गुहाशयः । पारावाते तु साराम्लो रक्तमालः परावतः ॥ १३९
आरेवतः सारफलो महापारावतो महान् । कपोताण्डतुल्यफलो रुद्राक्षे तु महामुनिः ॥ १४०
स तु चतुर्मुखो ब्रह्मा द्विमुखस्तु वरागलः । षण्मुखस्तु कार्तिकेयः पञ्चमुखस्तु शंकरः ॥ १४१
माधवस्त्वेकवदनो विजयाशस्त्रधारणः । पुत्रंजीवे लक्षफलः कुमारजीवनामकः ॥ १४२
करञ्जे स्याभक्तमालः पूतीकश्चिरबिल्वकः । करजः श्लीपदारिश्च प्रकीर्यः कलिनाशनः ॥ १४३
भेदास्त्वस्य त्रयस्तत्र षड्ग्रन्था हस्तिवारुणी । मर्कट्यां तु कृतमाल उदकीर्यः प्रकीर्यकः ॥ १४४
अङ्गारवल्यां शार्ङ्गस्था कासघ्नी करतालिका । रोहीतके रोहितको रोही दाडिमपुष्पकः ॥ १४५
रोहडकः सदापुष्पो रोचना प्लीहरक्तहा । कट्फले तु सोमवल्कः कैटर्यो गोपभद्रिका ॥ १४६
कुम्भी कुमुदिका भद्रा श्रीपर्णी भद्रवत्यपि । दाडिमे कुट्टिमः कीरवल्लभः फलषाण्डवः ॥ १४७
करको दन्तबीजश्चाथोड्रपुष्पे जपा जवा । धातक्यां तु धातुपुष्पी बहुपुष्प्यग्निपुष्पिका ॥ १४८
ताम्रपर्णी सुभिक्षा च कुञ्जरा मद्यपावनी । सल्लक्यां वल्लकी ह्लादा सुवहा सुस्रवा रसा ॥ १४९
अश्वमूर्तिः कुन्दरुकी गजभक्ष्या महेरणा । गन्धवीरा गन्धकारी सुरभिर्वनकर्णिका ॥ १५०
एरण्डे तरुणश्चित्रो दीर्घदण्डो व्यडम्बकः । पञ्चाङ्गुलो वर्द्धमान आमण्डो रुवको रुवूः ॥ १५१
व्याघ्रपुच्छो व्याघ्रतलश्चञ्चुरुत्तानपत्रकः । गन्धर्वहस्तकश्चञ्चुरादण्डो हस्तिपर्णकः ॥ १५२
उरुबूको हस्तिकर्णः शुक्लो रक्तश्च स द्विधा । किम्पाके तु महाकालः काकर्दः काकमर्दकः ॥ १५३
कम्पिल्लके तु काम्पिल्लो रक्ताङ्गो रक्तचूर्णकः । चन्द्राह्वयो रोचनकः कर्कशाह्वः पटोदयः ॥ १५४
केतकच्छदनीयोऽम्बुप्रसादनफलः कतः । कार्पास्यां तु समुद्रान्ता बदरा तुण्डिकेर्यपि ॥ १५५
सा तु वन्या भरद्वाजी भद्रा चन्दनबीजिका । वन्दायां स्यात्तरुरुहा शौरवर्यदरोहिणी ॥ १५६
वृक्षादनी वृक्ष[illegible] जयन्ती कामपादपः । स तु क्षीरवृक्षभवो नन्दीवृक्षो जयद्रुमः ॥ १५७

आटरूषे वृषो वासा वाशिका वाजिदन्तकः। भिषङ्माता सिंहमुखः सिंहिका सिंहपर्णिका १५८
तुम्बरौ सानुजः सौरः सौरभो वनजोऽन्धकः। तीक्ष्णवल्कस्तीक्ष्णफलतीक्ष्णपत्रो महामुनिः॥ १५९
कदल्यां तु हस्तिविषा रम्भा मोचांशुमत्फला। काष्ठीला वारणवुशा स्यात्कालीरस इत्यपि॥ १६०
तगरे कालानुसार्यं चक्राख्यो मधुरो नृपः। तूले ···· ब्रह्मचारु ब्रह्मण्यं ब्रह्मकाष्ठकम्॥ १६१
ब्रह्मनिष्ठं च दापं च क्रमुकं ब्रह्मचारि च। मुष्कके मोक्षको घण्टा क्रन्दालो मोक्षमुष्ककौ॥ १६२
पाटलिर्गोलिहः क्षारश्रेष्ठः कृष्णः सितश्च सः। वंशे यवफलो वेणुः शतपर्वा तृणध्वजः॥ १६३
मस्करस्त्वचिसारस्त्वक्सारकर्मारतेजनाः। गाङ्गेरुक्यां विश्वदेवदेवाह्वलाङ्गवेधुका॥ १६४
खण्डारिष्टा नागबला खरबन्धनिकेत्यपि। दार्वी दारुहरिद्रायां पीता कटङ्कटेरिका॥ १६५
पीतद्रुमः पीतदारु पीतनं पीतचन्दनम्। पर्जनी कर्कटकिनी कालेयकः पचम्पचा॥ १६६
ग्रन्थिपर्णे श्लिष्टपर्णं विकीर्णं शीर्णरोमकम्। कुकुरं च तथा गुच्छं शुकपुष्पं शुकच्छदम्॥ १६७
स्थौणेयकं वह्निचूडा सुगन्धग्रन्थिकावपि। स्पृक्कायां ब्राह्मणी पङ्कमुष्टिकापि श्वनावधूः॥ १६८
समुद्रान्ता मरुन्माला निर्माल्या देवपुत्रिका। लङ्कातिका कोटिवर्षा देवी पङ्कजमुष्टिका॥ १६९
गोमी स्वर्णलतेन्द्राणी मरम्माला लता लघुः। विडङ्गे केरला मोघा तन्दुलः कृष्णतन्दुलः॥ १७०
वेल्लकः कृमिहा जन्तुघातको मृगगामिनी। इन्द्राक्षे ऋषभो वीरः श्रीमान्वृषभनामकः॥ १७१
धूर्धुरो गोपतिः शृङ्गी बन्धुरः पृथिवीपतिः। ऋद्धौ सिद्धिर्युगं योग्यं रथाङ्गं मङ्गलं तथा॥ १७२
ऋषिसृष्टसुखं लक्ष्मीर्वृद्धेरप्याह्वया अमी। पद्मके मालकः पीतो रक्तश्चरुसरइयवः॥ १७३
सुसभः शीतवीर्यश्च पाटलः पीतवर्णकः। कङ्कुष्ठे स्यात्काककुष्टः पुलकः काकपालकः॥ १७४
रेचनः शोधनो ह्रासो विडङ्गो रङ्गदायकः। परूषके स्यादल्पास्थिः परुषो नीलपर्णकः॥ १७५
परोऽपरः परश्चैव परिमण्डल इत्यपि। खर्जूरे लग्रुजः पिण्डी निःश्रेणिः स्वादुमस्तकः॥ १७६
खर्जूरिकायां स्याद्भूमिखर्जूरी काककर्कटी। ताले तलो लेख्यपत्रस्तृणराजो ध्वजद्रुमः॥ १७७
नालिकेरे रसफलो लाङ्गली कूर्चकेसरः। दाक्षिणात्यो दृढफलो नारिकेरो लतातरुः॥ १७८
पूगे गुवाकः क्रमुकः पूगी च नीलवल्कलः। एतस्य फलमुद्वेगं चिक्कणे तत्र चिक्कणम्॥ १७९
केतके तु रजःपुष्पो जम्बूलः क्रमुकच्छदः। हिन्ताले तु तृणराजो राजवृक्षो लताङ्कुरः॥ १८०
ताल्यां तु मृत्युपुष्पा स्यादेकपत्रफलापि च। खर्जूरतालखर्जूरीतालीहिन्तालकेतकाः॥ १८१
क्रमुको नालिकेरश्च स्युरेते तृणपादपाः॥ १८२

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे प्रथमो वृक्षकाण्डः।

---

सिन्दुवारे तु निर्गुण्डी सिन्दुको नीलसन्धिकः। शीतसहा च सुरसा चेन्द्राणी सिन्दुवारकः १८३
सा नीला वनशेफाली सुपुष्पा नीलमञ्जरी। श्वेता तु श्वेतसुरसा गोलोमा भूतकेश्यपि॥ १८४
शेफालिकायां सुवहा निर्गुण्डी नालिकासुता। सुरसा रक्तवृन्ता च श्वित्रघ्नी पुष्पवर्षिणी॥ १८५
सा तु शुक्ला भूतकेशी सत्यनाम्नी बहुक्षमा। प्रियङ्गौ प्रियकः कङ्गुः प्रियवल्ली प्रियालता॥ १८६
विष्वक्सेना गन्धफली कारम्भा फलिनी फली। गुन्द्रा गोवन्दनी श्यामा योषाह्वा पर्णभेदिनी १८७
मधुरायां यष्टीमधुस्तुश्लक्ष्णा मधुस्रवा। क्लीतकं च जलजासौ मधुपर्णी मधूलिका॥ १८८
अश्वगन्धायां तुरङ्गी कम्बुकाश्चावरोहकः। अश्वकन्दो बहुगन्धा पुत्रदा कोलकर्ण्यपि॥ १८९

मेषशृङ्गथामजशृङ्गी वर्तिका सर्पदंष्ट्रिका । सैव स्याद्दक्षिणावर्ता वृश्चिकाला विषाणिका ॥ १९०
उष्ट्रधूमकपुच्छा च काली च विषघातिनी । शृङ्गी तु कर्कटशृङ्ग्यां नताङ्गी शिशिरेफला ॥ १९१
कर्कटाह्वा महाघोषा वक्रा मञ्जरिशिम्बिका । निदिग्धिकायां कण्टाली दुःस्पर्शा कण्टकारिका॥१९२
व्याघ्री क्षुद्रा दुष्प्रधर्षा धावनी हेमपुष्पिका । बृहत्यां क्षुद्रभण्टाकी वार्ताकी राष्ट्रिका कुली ॥ १९३
विशदः सिंहनाक्रान्ता महोटिका महत्यपि । विदार्यां तु स्वादुकन्दा पुष्पकन्दा मृगालिका ॥ १९४
वृक्षादनी चर्मकषा भूकुष्माण्ड्यश्ववल्लभा । बिडालिका वृक्षपर्णी महाश्वेता परा तु सा ॥ १९५
क्षीरशुक्ला क्षीरकन्दा क्षीरवल्ली पयस्विनी । ऋष्यगन्धेक्षुगन्धेक्षुवल्ली क्षीरविदारिका ॥ १९६
पृश्निपर्ण्यां पृथक्पर्णी लाङ्गली क्रोष्टुपुच्छिका । शृगालवर्णा कलशी घृतिला धावनी गुहा ॥ १९७
सिंहपुच्छी चित्रपर्ण्यङ्घ्रिपर्णी तिलपर्ण्यपि । गोक्षुरे स्थलशृङ्गाटवनशृङ्गाटगोक्षुराः ॥ १९८
कण्टीषडङ्गी गोकण्टस्त्रिकण्टस्तु त्रिकस्त्रिकः । इक्षुगन्धा व्यालदंष्ट्रः स्वदंष्ट्रः स्वादुकण्टकः॥ १९९
पलङ्कषा कण्टफलः षडङ्गस्तूक्षुरः क्षुरः । दन्त्यां शीघ्रा विशल्या च चित्रोदुम्बरपर्णिका ॥ २००
मकूलको रामदूती निकुम्भो घुणवल्लभा । नागदन्त्यां हस्तिदन्ती वारुणी चापि त्रिभिटी ॥ २०१
मृगादनी मृगैर्वारुर्मृगाक्षी भुजगस्फटा । श्वेतपुष्पा मधुपुष्पा पर्वपुष्पा विषौषधिः ॥ २०२
अपामार्गे त्वधःशल्यः किणिही खरमञ्जरी । धामार्गवः शैखरिको वशिरः कपिपिप्पली ॥ २०३
कपिवल्ली मर्कटिका शिखर्योघाटदुर्ग्रहौ । प्रत्यक्पुष्पी पत्रपुष्पी केशवल्ली मयूरकः ॥ २०४
पुनर्नवायां वृश्चीरो दीर्घपत्रा शिलाटिका । विशाखः क्षुद्रवर्षाभूः कठिल्लः प्रावृषायणी ॥ २०५
शोफघ्नी चापरा लेषा कूरमण्डलपत्रकः । श्वेतमूला महावर्षा भूर्वर्षकेतुरित्यपि ॥ २०६
ज्योतिष्मत्यां स्वर्णलता कङ्गुनी लवणाग्निभा । पारावतपदी पण्या ज्योतिष्का कटभीत्यपि ॥ २०७
माषपर्ण्यां सूर्यपर्णी पाण्डुश्चापि महासहा । अश्वपुच्छा सिंहवृन्ता काम्बोजी कृष्णवृन्तिका॥ २०८
मुद्गपर्ण्यां काकमुद्गा वन्या मार्जारगन्धिका । शिवा क्षुद्रसहा ह्रासी रङ्गणी सूर्यपर्णिका ॥ २०९
भूम्यामलक्यामम्मला बहुपुत्रा वितुन्नकः । तामलक्युज्झटा ज्ञायतालिका तुन्नमालिनी ॥ २१०
हरिद्रायां वर्णवती काञ्चनी वरवर्णिनी । निशाख्या रञ्जनी गौरी पीतिका मेहघातिनी ॥ २११
वेश्या विटप्रिया पीता तथा हट्टविलासिनी । प्रपुन्नाटे तु दद्रुघ्नश्चक्राकश्चक्रमर्दकः ॥ २१२
मेषाक्षो मेषकुसुमः पद्माटैडगजावपि । मुण्ड्यां मुण्डतिका भिक्षुः श्रावणी जीवबोधिनी ॥ २१३
श्रवणा श्रवणशीर्षा प्रव्रजिता तपस्विनी । महाश्रावणिकायां लव्यथा कदम्बपुष्पिका ॥ २१४
ग्रन्थिका लोभनीया च छिन्नग्रन्थनिकापि च । वाकुच्यां स्यात्कालमेषी दुर्गन्धा कुष्ठनाशिनी ॥ २१५
पूतिपर्णी सोमराजी सुवल्ली सोमवल्लिका । अवल्गुजः कृष्णफला दुर्लेखा पूतिफल्यपि ॥ २१६
रास्नायां श्रेयसी रस्या रसनातिरसा रसा । एलापर्णी गन्धमूला सुवहा मारुतापहा ॥ २१७
नाकुल्यां सर्पगन्धा तु सुगन्धा वारिपत्रका । गन्धनाकुलिकायां तु सर्पाक्षी विषमर्दिनी ॥ २१८
महासुगन्धा सुवहा छत्राकी नकुलप्रिया । कुठेरके लर्जकः स्यात्क्षुद्रपत्रः कुठिञ्जरः ॥ २१९
वैकुण्ठस्तीक्ष्णगन्धश्च द्वितीयो वटपत्रकः । पर्णासो बिल्वगन्धश्च स तु कृष्णः सरालकः ॥ २२०
काकतालः कृष्णमल्ली मालुकः कृष्णमालुकः । तुलस्यां सुरसा प्रेतराक्षसी बहुमञ्जरी ॥ २२१
यस्या गौरी शक्रपत्नी भूतघ्नी देवदुन्दुभिः । फणिज्जके प्रस्थपुष्पः खरपत्रोऽत्रपत्रकः ॥ २२२
मरूपको मरुबको जम्भीरो मारुतः फणी । त्रायन्ती त्रायमाणायां कृतत्राणाङ्गिसानुजा ॥ २२३

वार्षिकं बदराघृष्टि वाराही बलभद्रिका । बलदेवा····सुत्राणा विष्वक्सेनप्रियापि च ॥ २२४
यवासके धन्वयासो यासो धन्वयवासकः । दूरमूलो दीर्घमूलो बालपत्रो मरुद्भवः ॥ २२५
कुनाशकोऽधिष्ठकण्टस्ताम्रमूली प्रचोदनः । दुस्पर्शः कच्छुरानन्ता समुद्रान्ता दुरालभा ॥ २२६
किराततिक्ते किरातो रामसेनः किरातकः । अनार्यतिक्तको हैमो भूनिम्बः काण्डतिक्तकः ॥ २२७
कुष्टे तु पाकलं रामं वानीरं वाप्यमुत्पलम् । वानीरजं वापिभाव्यं कौरवं व्याधिनामकम् ॥ २२८
वालके जलकेशाख्यं बर्हिष्ठं दीर्घरोमकम् । ह्रीवेरो दीव्यवज्जाणिपिङ्गमाचमनं रुचम् ॥ २२९
शठ्यां पलाशः षड्ग्रन्था गन्धाली हिमजा वधूः । कर्चुरः सुव्रता ग्रन्थमूली पृथुफलाशिका ॥ २३०
एलावालुके लैलेयं वालुकं हरिवालुकम् । सुगन्ध्यालूकमेल्वालु दुर्वणप्रसरं दृढम् ॥ २३१
कुङ्कुमे रक्तपर्यायं संकोचपिशुनं शुकम् । हीरं कुसुम्भं घुसृणं पीतं वाल्हीकपीतने ॥ २३२
काश्मीरजं वह्निशिखं वरं लोहितचन्दनम् । जात्यां तु रजनीपुष्पा मालती तैलभाविनी ॥ २३३
प्रियंवदा हृद्यगन्धा मनोज्ञा सुमनालता । तस्यास्तु कलिकायां स्यात्पत्री सौमनसायिनी ॥ २३४
जातीफले जातिकोशं शालूकं मालतीफलम् । मज्जसारं जात्यमृतं शौण्डं सौमनसंपुटम् ॥ २३५
यूथिकायां बालपुष्पा मागधी शङ्खयूथिका । गुणोहला पुण्यगन्धा चारुमोटा शिखण्डिनी ॥ २३६
अम्बष्ठा गणिका सा तु पीता स्याद्धेमपुष्पिका । कुन्दे माघ्यः सदापुष्पो मकरन्दो मनोहरः ॥ २३७
अट्टहासो भृङ्गमित्रं शाल्योदनो यमश्वसः । स्यान्नवमालिकायां तु मोमाली नवमालिनी ॥ २३८
सत्सला सुकुमाराति: सुरतिः शिशुगन्धिका । कान्ता विभावरी ग्रीष्मा ग्रैष्मिका शिखरिण्यपि ॥ २३९
मल्लिकायां शीतभीरुर्मदयन्ती प्रमोदनी । अष्टापदी तृणशूल्यं गवाक्षा भूपदीत्यपि ॥ २४०
वार्षिक्यां षट्पदानन्दी श्रीमती सुभगा प्रिया । सुवर्षा त्रिपुटा त्र्यक्षसुरूपा मुक्तबन्धनात् ॥ २४१
कुमार्यां तु वर्णिचारुकेसरा भृङ्गसंमता । तरणी रामतरणिर्गन्धाढ्या कन्यका सहा ॥ २४२
अमिलाने स्यादम्लानो··········महासहा । रक्तपुष्पः कुरुबकः पीतपुष्पः कुरण्टकः ॥ २४३
सैरेयके सहचरो झिण्टी महावरश्च सः । स तु रक्तः कुरबकः स्यात्पीतस्तु कुरण्टकः ॥ २४४
नील आर्तगलो दिसी बाण ओदनपाक्यपि । किंकिराते किंकिराटः पीतभद्रः प्रलोभ्यपि ॥ २४५
चित्रके वल्लरीव्यालः पाठीनो दारुणः कुटः । ज्योतिष्को जरणोऽग्न्याख्यो वलिनर्थी पिपाठिनः २४६
वासन्त्यां स्यात्प्रहसन्ती सुवसन्ता वसन्तजा । सेव्यालिबान्धवा शीतसंवासा सीतप्लावसा ॥ २४७
नील्यां श्रीफलिका काला दोलामेलाविशोधनी । तूणी तुच्छा भारवाही रञ्जनी मधुपर्णिका ॥ २४८
द्रोणी क्लीतकिका ग्राम्या नीलकेशी महारसा । दमने स्याद्ब्रह्मजटा मुनिर्दान्तर्षिपुत्रकौ ॥ २४९
गन्धोत्कटः पुण्डरीकः पाण्डुरागस्तपस्व्यपि । धत्तूरे धूर्तधत्तूरौ कितवो देवता शठः ॥ २५०
घण्टापुष्पस्तलफलो मातुलः कनकाह्वयः । उन्मत्तो मदनश्चास्य फलं मातुलपत्रकम् ॥ २५१
शङ्खपुष्पी क्षीरपुष्पी शिवब्रह्मकिरीटिनी । मधुपुष्पी मधुगन्धा शङ्खाह्वा शङ्खमालिनी ॥ २५२
धूसरच्छदना श्वेतपुष्पी वनविलासिनी । कर्चूरे द्राविडः काल्यो वेधान्यो गन्धमूलकः ॥ २५३
मोचामस्त्वजमोदायां मयूरो लोचमस्तकः । खराश्वा कारवी वस्तगन्धा हस्तिमयूरकः ॥ २५४
दीप्यो वह्नी ब्रह्मदर्भा लोचमर्कट इत्यपि । यवान्यां स्यादुग्रगन्धा यमनी यवसाह्वयः ॥ २५५
सहदेव्यां तथा दण्डोत्पला गोचन्दना वसा । गन्धवर्णा सितैः पुष्पैर्विश्वदेवानुसारुणैः ॥ २५६
पर्पटके वरतिक्तो रजः कवचनामकः । गोजिकायां शृङ्गवेरो दार्विका भूमिकालिका ॥ २५७

बलायां शीतपाकी स्यान्नृग्रोदन्योदनाह्वया । वाट्यालकस्तथा वाट्यपुष्पिका पीतपुष्पिका ॥ २५८
देवसहा सहदेवातिबला बाह्यपुष्पिका । ऋष्या प्रोक्ता ऋष्यगन्धा कङ्कता वर्षपुष्पिका ॥ २५९
वाट्यायिनी भूरिबला तिष्या वीर्या बृहद्दुला । महागन्धा गन्धबली मङ्गल्यार्थप्रसाधनी ॥ २६०
मुसल्यां तु तालमूली दुर्नामारिमे····विषा । वृष्यकन्दा तालपर्णी समूला बलदा शिवा ॥ २६१
हिङ्गौ जतुकवाल्हीकागूढगन्धानि रामठम् । सहस्रवेधि सूतघ्नं जरणं सूपधूपनम् ॥ २६२
हिङ्गुपत्र्यां पृथुः पृथ्वी दीर्घिका चारिपत्रिका । जातूका रामठी वंशपत्रा पिण्डा शिवाटिका ॥ २६३
कारवी करवी तन्वी बाष्पिका बिल्वकेत्यपि । काकजङ्घायां तु दासी लोमहीना प्रवाबलः ॥ २६४
नदीकान्तो नद्यास्या च पारावतपदीत्यपि । काकनासायां सुरङ्गा वायसी वायसाङ्गिका ॥ २६५
वारुणी तस्करस्नायुः काकतुण्डफला च सा । पाषाणभेदे नगभिच्छिलाभिच्चित्रपर्णकः ॥ २६६
हमुषायां विस्रगन्धा वपुषा मत्स्यगन्धिनी । सान्याश्वत्थफला ध्वाङ्क्षनामिका कच्छुनाशिनी ॥ २६७
घण्टारवायां स्यान्मत्स्यपुष्पिका श····घण्टिका । अल्पघण्टा बृहत्पुष्पी शणपुष्पी महाशणः ॥ २६८
शणे तु किंकिणी जाली जन्तुनन्तुर्महाशणः । शीघ्रप्ररोही बलवान्सुपुष्पः क्षेत्रमण्डनः ॥ २६९
कुसुम्भेऽग्निशिखं महारञ्जनं कमलोत्तरम् । शालपर्ण्यां दीर्घमूला त्रिपर्णी पीतिनी ध्रुवा ॥ २७०
विदारि गन्धातिगुहा स्थिरा भौमांशुमत्यपि । भार्ग्यां वर्वरकः पद्मा वन्दकोऽङ्गारवल्लिका ॥ २७१
गर्दभशाकब्राह्मण्यौ हञ्जी ब्राह्मणयष्टिका । आवर्तक्यां चर्मरङ्गा विभाण्डी पिच्छिका लता ॥ २७२
रक्तपुष्पा दुकिनी स्यान्महाजालिनिका च सा । नाकुल्यां स्मारक्षीपीडा वेत्रमूला विसर्पिणी ॥ २७३
शङ्खनी वृद्धपादा च यवतिक्तायसीश्वराः । तेजस्विन्यां पारिजाता पीताश्वघ्ना महौजसी ॥ २७४
तेजोवती तेजिनी च तेजोह्वावल्कलेत्यपि । पथिकायां तु तुलसी तालपत्री लवङ्गकम् ॥ २७५
कन्दपत्रत्वचं पत्रा मलपत्रकमुत्तरा । मांस्यां यशी कृष्णजटा नलदा जटिला जटा ॥ २७६
तपस्विन्यामिषी हिंस्रा क्रव्यादी पिशिता वसा । गन्धमांस्यां पुनः केशी भूतकेशी पिशाचिका ॥ २७७
सुलोमशा भूतजटा भूतनाकेशिकेत्यपि । सुरायां सुरभिर्दैत्या गन्धाढ्यां गन्धमादनी ॥ २७८
भूरिगन्धा गन्धवती कुटी गन्धकटी वसा । प्रपौण्डरीके शौण्डर्यं सानुजं पौण्डरीयकम् ॥ २७९
प्रपौण्डरीकं चक्षुष्यं सत्पुष्पं सानुमानकम् । जतुकायां तु जतुका जतुकृच्चक्रवर्तिनी ॥ २८०
जन्तुका जतुकारी च सहर्षा जननीजनी । मांसरोहायां विकसा वृत्ता चर्मकषा रुहा ॥ २८१
रक्तपाद्यां नमस्कारी समङ्गाञ्जलिकारिका । गण्डकाली शमीपत्रा राजा खदिरिका च सा ॥ २८२
तद्विशेषस्त्रिपादी स्यात्सुपादी हंसपादिका । विषग्रन्थिर्हंसपदी वृत्तमण्डलिकापि च ॥ २८३
अथ स्याज्जलपिप्पल्यां शारदी शकुलादनी । मत्स्यादनी मत्स्यगन्धा लाङ्गली तोयपिप्पली ॥ २८४
शिवमल्ल्यां पाशुपतः सुव्रतो वसुको वृकः । कुलपुष्पः किण्वमूलः पाण्डुरोगप्रियः कुलः ॥ २८५
अतिविषायां तु विश्वा भङ्गुरा श्वेतकन्दिका । उपविषा श्यामकन्दा शृङ्गी प्रतिविषारुणा ॥ २८६
मेदायां स्यान्मणिच्छिद्रा मधुरा शल्यपर्ण्यपि । महामेदायां तु वसुच्छिद्रा देवमणिर्वसुः ॥ २८७

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे द्वितीयो गुल्मकाण्डः ।

---

गुञ्जायां कृष्णला काकचिञ्चिका काकणिन्दिका । काकादनी काकनखी रक्तिका काकनन्तिका ॥ २८८
काकपीलुश्चक्रशल्या दुर्मेषा ताम्रिकोषटा । चूडामणिर्दुर्मोघा च शतपाकी शिखण्डिनी ॥ २८९
पाठायां श्रेयसी पापचेलिका वृद्धकर्णिका । वृकं तिक्ता वरतिक्ता प्राचीना स्थापिनी वृकी ॥ २९०



43

एकाष्ठीला रसाम्बष्ठाम्बष्ठकी वृकदन्तिका । शतावर्यां बहुसुता पीवरीन्दीवरी वरी ॥ २९१
शतमूला शतपदी शतवीर्या मधुस्रवा । नारायणी द्वीपिशत्रुर्द्वीपिकाभीरुपत्रिका ॥ २९२
महापुरुषदन्तोर्ध्वकण्टका वरकण्टका । सहस्रवीर्या····सुन्यभीरुः सवरणीत्यपि ॥ २९३
कटुकायां मत्स्यपित्ता रोहिणी कटुरोहिणी । अशोकरोहिणी कृष्णभेदा तिलकरोहिणी ॥ २९४
कटम्भरा काण्डरुहा राज्ञा तिक्तकरोहिणी । तिक्तारिष्टा कटुमेत्स्या चक्राङ्गी शकुलादनी ॥ २९५
कपिकच्छा महागुप्ता कण्डुरा दुरभिग्रहा । अजहा मर्कटी व्यण्डा कच्छुरा कपिकच्छुरा ॥ २९६
प्रव्यप्रोक्ता शूकशिम्बी लाङ्गली प्रावृषायणी । आर्यभी वह्निपर्याया कपिरोमा दुरालभा ॥ २९७
मञ्जिष्ठायां रक्तयष्टिः समङ्गा विकसारुणा । भण्डीरी मञ्जुका भण्डी जिङ्गी योजनवल्ल्यपि ॥ २९८
कालमेषी कालगोष्ठी मण्डूकपर्णिका ऽपि च । मरिचे मलिनं कृष्णं वेल्लजं धर्मपत्तनम् ॥ २९९
पवनेष्टं शिरोवृन्तं मूषणं कोलकं च तत् । पिप्पल्यां च पला कृष्णा वैदेही मागधी कणा ॥ ३००
शौण्डी श्यामोषणा कोलोपकुल्या कृष्णतन्दुला । तन्मूलं ग्रन्थिकं सर्वग्रन्थिकं चटकाशिरः ॥ ३०१
समूलकं कोलमूलं कटुग्रन्थिकमूषणम् । चविकायां तथा चव्यं चवनं कालवल्ल्यपि ॥ ३०२
तत्फले वसिरो हस्तिपिप्पली श्रेयसीत्यपि । गिरिपर्ण्यामरस्फोता विष्णुक्रान्ता पराजिता ॥ ३०३
सा तु श्वेता····नामा कटभी श्वेतपुष्पिका । श्वेतस्यन्दा खखुरश्च कृष्णा त्वव्यक्तगन्धिका ॥ ३०४
नीलस्यन्दा नीलपुष्पी महाश्वेताङ्गवन्दना । स्यादिन्द्रवारुणी त्वैन्द्री विषादनी गवादनी ॥ ३०५
इन्द्रैर्वारुः क्षुद्रफला गोडुम्बावगवाक्ष्यपि । द्वितीयेन्द्रवारुण्यां तु चित्रफला महाफला ॥ ३०६
आत्मरक्षा विशाला च त्रपुसी तुम्बसीत्यपि । वचायामुग्रगन्धोग्रा जटिला शतपर्विका ॥ ३०७
इक्षुकर्णिका गोलोमी लोमशा सूतनाशिनी । अन्या श्वेतवचा मेध्या षड्ग्रन्था हैमवत्यपि ॥ ३०८
शारिवायां गोपकन्या गोपवल्ली प्रतानिका । गोप्यास्फोता लता श्वेता शरटा काष्ठशारिवा ॥ ३०९
नागजिह्वाथ सा कृष्णभद्रा चन्दनशारिवा । भद्रवल्ली कृष्णवल्ली चन्दनोत्पलशारिवा ॥ ३१०
मूर्वायां मोरटा देवी मधुश्रेणी मधूलिका । देवश्रेणी मधुरसा गोकर्णी तेजनी स्रवा ॥ ३११
धनुःश्रेणी वापगुणी पीलुनी तिक्तवल्कली । पीलुपर्णी स्निग्धपर्णी ······················॥ ३१२
लाङ्गल्यां हलिनी नन्दा विशल्या गर्भपातिनी । अनन्ताग्निशिखा शक्रपुष्पिका कलिहारिका ॥ ३१३
गुडूच्याममृता सोमवल्ली वत्सादनी धरा । छिन्नोद्भवा छिन्नरुहा विषघ्नी देवनिर्मिता ॥ ३१४
विशल्या कुण्डली छिन्ना तन्त्रिका चक्रलक्षणा । देव्यनन्ता मधुपर्णी जीवन्त्यमृतवल्ल्यपि ॥ ३१५
देवताडे देवदाली वृत्तकोशा गरागरी । जीमूतकस्तालकश्च वेण्या सुविषघातिनी ॥ ३१६
कोशातक्यां कृतच्छत्रा जाली घोषा सुतिक्तका । मृदङ्गफलि····क्षटा घण्टाली रक्तवेधना ॥ ३१७
धामार्गवे पीतपुष्पो महाजला महाफला । कर्कोटकी कोशफला राजकोशातकीति च ॥ ३१८
हस्तिकोशातकी त्वन्या विशाला कर्कशच्छदा । क्षीरिण्यां स्यात्कटुपर्णी धर्षणी पीतदुग्धिका ॥ ३१९
फेनक्षीरा हेमक्षीरा पीतक्षीरा करीषणी । हेमाह्वया हेमशिखी हेमवती हिमावती ॥ ३२०
शङ्खिन्यां स्याद्वनहरी तस्करी चोरपुष्पिका । किङ्शिनी ग्रन्थिका चण्डा श्वेतशुभ्रा निशाचरी ॥ ३२१
आखुपर्ण्यां पुत्रश्रेणी न्यग्रोधा शम्बरी वृषा । चित्रोपचित्रा रण्डाख्युः प्रत्यक्श्रेणी द्रवत्यपि ॥ ३२२
पद्मिन्यां तु महावल्ली बिसिनी बिसनाभयः । पलासिनी नालकिनी नलिनी पुटकिन्यपि ॥ ३२३
कमले नलिनं पद्ममरविन्दं कुशेशयम् । परं शतसहस्राभ्यां पत्रं राजीवपुष्करे ॥ ३२४

बिसप्रसूनं नालीकं तामरसं महोत्पलम् । तज्जलात्सरसः पङ्कात्परे रुहजन्मजैः ॥ ३२५
पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहम् । रक्तोत्पलं कोकनदं कैरवेण्यां कुमुद्वती ॥ ३२६
उत्पले स्यात्कुवलयं कुवेलं कवलं वलम् । श्वेते तु कुमुदं चैव कैरवं गर्दमाह्वयम् ॥ ३२७
नीले तु स्यादिन्दीवरं हल्लकं रक्तसंधिकम् । सौगन्धिके तु कल्हारबीजकोशे वराटकः ॥ ३२८
पद्मनाले तु मृणालं······तन्तुलं बिसम् । किञ्जल्के केसरं नव्यदले संवर्तिका भवेत् ॥ ३२९
पद्मकन्दे करहाटशिफे शालूकमौत्पले । पद्मबीजे तु पद्माक्षं पद्मकर्कटिकेत्यपि ॥ ३३०
वारिपर्ण्यां तु पानीयपृष्ठगा कुम्भिका हटः । जलशूके जलनीली तथा शैवालशैवले ॥ ३३१

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे तृतीयो लताकाण्डः ।

---

शतपुष्पायां तु घोषा शताह्वा माधवी मिषिः । अतिछत्रा छत्रपुष्पा वाक्पुष्पा कारवी सहा ॥ ३३२
जीरके तु कणाजाजी जरणः कणजीरकः । कृष्णेऽस्मिन्कारवी पृथ्वी सुगन्धा सुषवी पृथुः ॥ ३३३
उपकुञ्ची कुञ्चिका च कालोपकुञ्चिकापि च । रसोने लशुनो म्लेच्छकन्दोरिष्टो महौषधम् ॥ ३३४
इमहाकन्दो पदोऽप्येष गृञ्जनो दीर्घपत्रकः । पलाण्डौ यवनेष्टः स्यात्सुकन्दो वक्त्रभूषणः ॥ ३३५
फरणः स तु हरितो लतार्को दुद्रुमोऽपि च । सप्तलायां बहुफेना सातला विन्दुलामली ॥ ३३६
सारी मरालिका दीप्ता फेना च मक्सिा यवा । प्रसारण्यां चारुपर्णी भद्रपर्णी प्रतानिका ॥ ३३७
भद्रबला भद्रलता भद्रकाली महाबला । सारणी सुप्रसारा च राजबला च सापि च ॥ ३३८
ब्राह्मी वयःस्था मत्स्याक्षी ब्राह्मणी सोमवल्लरी । सरस्वती सत्यवती सुब्र····ब्रह्मचारिणी ॥ ३३९
सूरणे कण्डुरः कन्दोऽर्शोघाती चित्रदण्डकः । वृद्धदारुके स्वावेगी जीर्णवालुकजुङ्गकौ ॥ ३४०
अजाण्टी भक्षगन्धा स्यादन्तकोटकपुष्प्यपि । सुवर्चलायां मण्डूकी बदरादित्यवल्लभा ॥ ३४१
मण्डूकपर्ण्यैकभक्तादित्यवल्ली सुखोन्निद्रा । भृङ्गराजे भृङ्गरजो भृङ्गारः केशरञ्जनः ॥ ३४२
अमारको भेकरजो भृङ्गो मार्कव इत्यपि । कासमर्दे खरिमर्दः कालं कतककर्कशः ॥ ३४३
वास्तुके तु शाकश्रेष्ठः प्रवालः क्षारपत्रकः । शाकवीरो वीरशाकस्ताम्रपुष्पः प्रसादकः ॥ ३४४
पालङ्क्यायां तु पालङ्क्या छुरिका मधुसूदनी । जीवन्त्यां स्याज्जीवनीयजीवनी जीववर्द्धिनी ॥ ३४५
माङ्गल्यनामधेया च शाकश्रेष्ठा यशस्करी । स्यादम्ललोणिकायां तु चाङ्गेरी चुक्रिका रसा ॥ ३४६
अम्बष्ठाम्लोलिका दन्तशठाटोलाम्लटोलकः । नरेन्द्रमाता क्षुद्राम्ली चतुष्पर्णी च लोणिका ॥ ३४७
तन्दुलीये मेघनादस्तन्दुली तन्दुलेरकः । गण्डीरको रक्तकाण्डो विषहार्यल्पमारिषः ॥ ३४८
समण्ठो तु तोयवृस्तिर्गण्डीरस्तोयमञ्जरी । समष्ठीला शोषहरी जलापामार्गतुल्यकः ॥ ३४९
अन्यः सुस्थलगण्डीरः कर्बरष्टक्कदेशजः । काकमाच्यां काकमाची काकसाह्वा वृषायणी ॥ ३५०
श्रीहस्तिन्यां तु भूरुण्डी कुरुण्डी काश्मरीरिपुः । सुनिषण्णे सुचिपत्रः स्वस्तिकः शिरिवारकः ॥ ३५१
श्रीवारकः शितिवरो वितुन्नः कुक्कुटः शितिः । मूलके तु महाकन्दो रुविष्यो हस्तिदन्तकः ॥ ३५२
वुस्तिका नीलकण्ठश्च सेकिमो हरिपर्णकः । चाणाक्यमूलके शालमर्कटो मरुसंभवः ॥ ३५३
विष्णुगुप्त····तोमिश्रः स्थालयो मर्कटोऽपि च । हिलमोच्यां शङ्खधरा जलब्राह्मी च मोचिका ॥ ३५४
कलम्ब्यां तु शतपर्वा केलम्बूर्यायसी च सा । कारवेल्ल्यां तु सुषवी कटिल्ला मृदुपर्णका ॥ ३५५
पटोले तु पाण्डुफलः कुलकः कर्कशच्छदः । राजीफलः कफहरो राजिमानमृताफलः ॥ ३५६
कर्कोटे तु किलासघ्नस्तिक्तपर्वः सुगन्धकः । कूष्माण्डके तु कर्कारुः कलिङ्ग्यां बहुपुत्रिका ॥ ३५७

तुम्ब्यां पिण्डफलेक्ष्वाकुस्तिक्तबीजा महाफला । अलाबूः क्षत्रियवरा कटुका लाबुनी च सा ॥ ३५८
चिर्भिट्यां प्रपुसी वालुक्येर्वारुर्व्योडिपत्रिका । ऊर्वारुः कर्करुः कर्कटीस्तत्रा····फलावरः ॥ ३५९
छर्दनीव विषाङ्कुश्च तस्याः पक्वफलस्फुटी । कूर्चके शृङ्गकः सर्जो दीर्घायुः कूर्चशीर्षकः ॥ ३६०
मङ्गल्यनामधेये प्रजीवकः प्रियजीवकः । ह्रस्वाङ्गको मधुरकः प्राणकश्चिरजीव्यपि ॥ ३६१
पुष्करमूले स्यान्मूलं वीरपुष्करनामकम् । पौष्करं पुष्करजटा कश्मीरं पद्मवर्णकम् ॥ ३६२
मस्तुगन्धायां तु गन्धा खरपुष्पा शक्रम्भरा । कर्वरी बर्बरी चुञ्ची पूतिमयूर इत्यपि ॥ ३६३
बिम्ब्यां रक्तफला गोल्हा प्रवालफलघोषिका । ओष्ठोपमफला तुण्डी तुण्डिका पीलुपर्ण्यपि ॥ ३६४

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे चतुर्थः शाककाण्डः ।

---

रोहिषं कामकं पौरं भूतिकं भूतिकतृणम् । स्तोगन्धिकं धिकं देवजग्धं शकलिपुद्गले ॥ ३६५
भूस्तृणं रोहितं छत्रातिच्छत्रकफटुम्बके । भूतिकं भूतिकतृणं माला तृणसुगन्धके ॥ ३६६
दर्भे दभ्रः खरो बर्हिर्वारास्तवीकुथः कुशः । सारीवानी रजो गुन्द्रा पवित्रा कुतसावपि ॥ ३६७
काशे स्यादिक्षुगन्धेक्षुकाण्डश्चामरपुष्पकः । वायसेक्षुः पोटगलः कासेक्षुः कोकिनां क्षकः ॥ ३६८
बलपवल्वजो बालकेशी दृढलतापि च । इक्षू रसालो गण्डीरी गण्डकी क्षुद्रपत्रकः ॥ ३६९
तस्यैकादश भेदाः स्युः पुण्ड्रकान्तारकादयः । नले नडः शून्यमध्यो गमनो नर्तको नटः ॥ ३७०
अरण्यनलको रन्ध्री पोटगलो विभीषणः । नलिनुर्मोमनलिका नाकुली लेखकाश्चिता ॥ ३७१
शरे तु मुञ्जो बाणाख्यः स्थूलदर्भः पितामहः । गुञ्जस्तजनको भद्रमुञ्जो याजनकक्षुरः ॥ ३७२
मुञ्जस्तु यज्ञिको मध्ये दृढत्वग्ब्रह्ममेखलः । अथ बालतृणे शष्पं शुकं शालिकमङ्कुलम् ॥ ३७३
तृणं स्यादर्जुनं घासे यवसं चारि इत्यपि । दुर्वायां तु शतपर्वा भार्गवी विजया जया ॥ ३७४
मङ्गल्या स्यादलानन्ता मरी प्रतानिका रुहा । सहस्रवीर्या श्यामाङ्गी हरिता हरिताल्यपि ॥ ३७५
श्वेतदूर्वा तु गोलोमी शतवीर्या शता लता । गण्डदूर्वायां गण्डाली वारुणी शकुलाक्षकः ॥ ३७६
मुस्तायां भद्रको भद्रमुस्ताराजकशेरुकः । गुन्द्री वरोहो गाङ्गेयः कुरुविन्दोऽम्बुदाह्वयः ॥ ३७७
कुटं नटे तु कैवर्तीमुस्तकं जीवनाह्वयम् । आकाण्डीरकं जीबुभ्रं गोनर्दं गोपुरप्लवम् ॥ ३७८
शतपुष्पं दारपुरं वानेयं परिपेलवम् । जलमुक्ता मुस्तकाभं शैवालदलसंभवम् ॥ ३७९
वीरणे तु वीरतरं वीरभद्रं सुमूलकम् । मूलेऽस्योशीरमभयं समगन्धि रणप्रियम् ॥ ३८०
लामज्जके तु नलदममृणालं लवं लघु । इष्टकापथकं शीघ्रं दीर्घमूलं जलाशयम् ॥ ३८१

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे पञ्चमस्तृणकाण्डः ।

---

अथ धान्ये सस्यं सीत्यं व्रीहिः स्तम्बकरि अपि । आशो स्यात्पाटलो व्रीहिर्गर्भपाकिणि षष्टिकः ॥ ३८२
शालौ तु कलमाद्याः स्युः कलमे तु कलायकः । लोहिते रक्तशालिः स्यान्महाशालौ सुगन्धिकः ३८३
यवे हयप्रियस्तार्क्ष्यशूकस्तोक्यस्तुसो हरित् । मङ्गल्यके स्यान्मसूरः कलाये तु सतीनकः ॥ ३८४
हरेणुः खण्डिकश्चाथ चणके हरिमन्थकः । माषे तु मदनो नन्दी सरी बीजवरो बली ॥ ३८५
मुद्गे तु प्रघनो लोभ्यो वलाटो हरितो हरिः । पीतेऽस्मिन्वसुखण्डीरः प्रवेलजयशारदाः ॥ ३८६
कृष्णे प्रवरवासन्तहरिमन्थजशिम्बिकाः । वनमुद्गे तु वरका निगूढककुलीमकाः ॥ ३८७
खण्डिको राजमुद्गे तु मकुष्ठकमयुष्ठकौ । गोधूमे सुमनो वल्ले निष्पावः शितिशिम्बिकः ॥ ३८८

कुलत्थे तु कालवृन्तस्ताम्रवृन्ते कुलत्थिका । आढक्यां तुवरी वर्णा स्यात्कुल्माषे तु यावकः ॥ ३८९
नीवारस्तु वनव्रीहिः श्यामाके श्यामकः समौ । कङ्गौ तु कङ्गुनी कङ्गुः प्रियङ्गौ पीततन्दुला ॥ ३९०
सा कृष्णा मधुका रक्ता शोधिता मुशटी शिता । पीतमाधव्यभोद्दाले कोद्रवः कोरदूषकः ॥ ३९१
चीनके तु काककङ्गुर्यवनाले तु योनलः । जूर्णाह्वयो देवधान्यं जोर्णाला बीजपुष्पिका ॥ ३९२
शणे भङ्गा मातुलानी स्यादुमात्वक्षुमातसी । गवेधुकायां गवेधुर्वन्यतिले तु जर्तिलः ॥ ३९३
षण्ढतिले तिलपिञ्जस्तिलपेजोऽथ सर्षपे । कदम्बकस्तु तुभोऽथ सिद्धार्थः श्वेतसर्षपः ॥ ३९४
माषादि तु शमीधान्यं शूकधान्यं यवादयः । स्यात्सस्यशूके किंसारुः कणिशं सस्यशीर्षकम् ॥ ३९५
स्तम्बे तु गुच्छो धान्यादेर्नालः काण्डोऽफले त्विह । पलालो धान्यत्वचि तु तुषे बुसे कडङ्गरः ॥ ३९६

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे षष्ठो धान्यकाण्डः ।

इति श्रीहेमचन्द्राचार्यविरचितो निघण्टुशेषः समाप्तः ।



॥ श्रीः ॥

# अभिधानसंग्रहः ।

( १० )

श्रीहेमचन्द्राचार्यविरचितं

## लिङ्गानुशासनम् ।

[1]पुंलिङ्गं [2]कटणथपभमयरषसस्वन्तमिमनलौ किश्तिब् ।
ननङौ घघञौ दः किर्भावे खोऽकर्तरि च कः स्यात् ॥ १
[3]हस्तस्तनौष्ठनखदन्तकपोलगुल्फकेशाध्वगुच्छदिवसर्तुपतद्ग्रहाणाम् ।
नि[4]र्यासना[5]करसकण्ठकुठारकोष्ठ[6]हैमारिवर्षविषबोलरथाशनीनाम् ॥ २
[7]श्वेतप्लवात्मगुरुजासिकफाभ्रपङ्कमन्थत्विषां जलधिशेवधिदेहभाजाम् ।
मानद्रुमाद्रिविषयाशुगशोणमासधान्याध्वराभिमरुतां सभिदां तु नाम ॥ ३
बर्होऽच्छदेऽहिर्वप्रे ग्रीष्माग्न्योर्हायनबर्हिषौ । मस्तुः सक्तौ स्फटिकेऽच्छो नीलमिश्रौ मणीनयोः ॥ ४
कोणेऽस्रश्चषके कोशस्तलस्तालचपेटयोः । अनातोद्ये घनो भूम्नि दारप्राणासुवत्स्वजाः ॥ ५
[8]कान्तश्चन्द्रार्कनामायःपरो यानार्थतो युगः । यश्च स्यादसमाहारे द्वन्द्वोऽश्ववडवाविति ॥ ६
[9]वाकोत्तरा नक्तकरह्लकाङ्का [10]न्युङ्खोत्तरा [11]सङ्गतरङ्गरङ्गाः ।
परागपूगौ स्तृगमस्तुलुङ्गकुडङ्गकालिङ्ग[12]तमङ्ग[13]मङ्गाः ॥ ७

१. वक्ष्यमाणं विशेषविधानमन्तरा पुंलिङ्गं स्यादित्यन्वयः. २. अकारान्तेषु कोपधा आनकवराटकादयः, टोपधा विटकरहाटादयः, णोपधा गुणक्षणादयः, थोपधा निशीथोपस्थादयः, पोपधाः क्षुपकल्पादयः, मोपधा दर्भनिकुम्भादयः, मोपधा गोधूमडिण्डिमादयः, योपधा लयतण्डुलीयादयः, रोपधाः कडंगरकुटरादयः, षोपधा गवाक्षघोषादयः, सोपधाः कूर्पासहंसादयः, सकारान्ताः पुरुदंशोदमूनःप्रभृतयः, नकारान्ता ग्रावसुपर्वादयः, उकारान्तास्तर्कुधात्वादयः, अन्तान्ताः सीमन्तपर्यन्तदिष्टान्तसिद्धान्तादयः, इमन्प्रत्ययान्ताः प्रथिमम्रदिमद्रढिमादयः, अल्(प्)प्रत्ययान्ताः प्रभवनियमादयः, कि(इक्)प्रत्ययान्ताः पनिप्रभृतयः, श्तिप्प्रत्ययान्ताः पचतिभवत्यादयः, नप्रत्ययान्ताः यत्नस्वप्नप्रभृतयः, नङ्प्रत्ययान्ता विश्नप्रश्नप्रभृतयः, घप्रत्ययान्ताः प्रच्छदोरच्छदप्रभृतयः, घञ्प्रत्ययान्ताः पादरोगप्रभृतयः, दा(घु)संज्ञकाद्विहितकिप्रत्ययान्ता आदिव्याधिप्रभृतयः, भावार्थकखप्रत्ययान्ता आशितंभवप्रभृतयः, कर्तृभिन्नार्थककप्रत्ययान्ता आखूत्थविघ्नप्रभृतयः. ३. सभेदानां हस्तादीनां निर्यासादीनां श्वेतादीनां जलध्यादीनां मानादीनां च नाम पुंलिङ्गं स्यादित्यन्वयः. ४. निर्यासनाम गुग्गुलुः श्रीवेष्ट इत्यादि. ५. रसनाम रसाः शृङ्गारादयस्तन्नाम. ६. किराततिक्तो हैमश्च काण्डतिक्तः किरातकः. ७. श्वेतः कपर्दस्तन्नाम. ८. चन्द्रकान्तः सूर्यकान्तः अयस्कान्त इत्यादि. ९. इतः परं स्वरान्तव्यञ्जनान्तक्रमेण शब्दानुदाहरिष्यन्ते. तत्र ककारोपान्त्यादिक्रमेणाकारान्ता उदाह्रियन्ते. अनुवाकशंयुवाकसूक्तवाकादयः. १०. खान्तः. ११. गान्ताः. १२. तमङ्ग इन्द्रकोशः. १३. मङ्गः धर्मः, नौशिरश्च.

वेगसमुद्रावपाङ्गवर्गौ घार्घो मेथसैपुच्छपिच्छगुच्छाः ।
वाजौजकिलिञ्जपुञ्जमुञ्जा अवटपट्टहठप्रकोष्ठकोष्ठाः ॥ ८
अङ्गुष्ठगण्डौ लगुडप्रगण्डकरण्डकूष्माण्डगुडाः शिखण्डः ।
वरण्डरुण्डौ च पिचण्डनाडीव्रणौ गुणभ्रूणमेलक्कुन्तौ ॥ ९
पोतः पिष्टातः पृषतश्चोत्पातव्रातावंर्थकपर्दौ ।
बुद्बुदगदमगेदा मकरन्दो जनपदगन्धस्कन्धमगाधः ॥ १०
अर्धसुदर्शनदेवनमहाभिजनजनाः परिघातनफेनौ ।
पूपापूपौ सूपकलापौ रेफः शोफस्तम्बनितम्बाः ॥ ११
शम्बाम्बौ पाञ्चजन्यतिष्यौ पुष्यः सिचयनिकाय्यरात्रपुंत्राः ।
मत्रामित्रौ कटप्रपुण्ड्राराः कल्लोलौल्लौ च खल्लतल्लौ ॥ १२
कण्डोलपोटगलपुद्गलकालबाला वेला गलो जगलहिङ्गुलगोलफालाः ।
स्यादेवलो बहुलतण्डुलपत्रपालवातूलतालजम्बुला भूमलो निचोलः ॥ १३
कामलकुद्दालावयवस्वाः शिवरौरवयावाः शिवदावौ ।
माधवपणवादीनवहावध्रुवकोटीशांशाः स्पशवंशौ ॥ १४
कुशोष्णीशपुरोडाशवृषकुल्माषसनिष्ककुहाः । अंहनिर्यूहकलहाः पक्षरात्रिशिवराश्यृषि ॥ १५
दुंदुभिर्वमतिवृष्णिपाण्यविज्ञातिरालिकलयोऽञ्जलिर्घृणिः ।
अग्निवह्निकृमयोऽहिदीदिविग्रन्थिकुक्षिवृतयोर्दनिर्ध्वनिः ॥ १६
गिरिरश्मिगुजायुकव्वौ हाहाहूहूश्च नग्नहूर्गमुतं । पादश्मानावात्मा पाप्मस्थेमोष्मयक्ष्माणः ॥ १७

इति पुंलिङ्गाधिकारः ।

---

स्त्रीलिङ्गं योनिमद्गुग्रीसेनावल्लितडिम्भिशाम् । वीचितन्द्रात्वटुमीवाजिह्वाशस्त्रीदयादिशाम् ॥ १८
शिंशपाघानदीवीणाज्योत्स्नावीरीतिथीधियाम् । अङ्गुलीकलसीकङ्गुहिङ्गुपत्रीसुरानसाम् ॥ १९
राजाशिलावचालालाशिम्बाकृष्णोष्णिकाश्रियाम् । स्पृक्कापण्यातसीधाय्यासरघारोचनाभुवाम् ॥ २०
हरिद्रामांसिदूर्वालूबलाकाकृष्णलागिराम् । ईस्तु प्राण्यङ्गवाचि स्यादीदूदेकस्वरं कृतः ॥ २१
पात्रादिवर्जितादन्तोत्तरपदः समाहारे । द्विगुरप्भावन्तान्तो वान्यस्तु सर्वो नपुंसकः ॥ २२
लिन्मिन्यनिण्यणिक्त्युकाः कचित्तिगल्पहूस्वकर्प् । विंशत्याद्याशताद्वन्द्वे सा चैक्ये द्वन्द्वमेययोः ॥ २३

---

१. घान्तः. २. चान्तः. ३ छान्ताः. ४ जान्ताः. ५. टान्तौ. ६. ठान्ताः. ७. डान्ताः. ८. णान्ताः. ९. तान्ताः. १०. थान्तः. ११. दान्ताः. १२. धान्ताः. १३. नान्ताः. १४. अह्रादेशान्ताः पूर्वाह्णप्रभृतयः. १५. पान्ताः. १६. फान्तौ. १७. बान्ताः. १८. यान्ताः. १९. कृतसमासान्तरात्रशब्दान्ताः पूर्वरात्रप्रभृतयः. २०. रान्ताः. २१. लान्ताः. २२. वान्ताः. २३. शान्ताः. २४. षान्तः. २५. सान्तः. २६. हान्ताः. २७. अह इति सप्ताहप्रभृतयः. २८. अथेदन्ताः. २९. अथोकारान्ताः. ३०. समुदितं दीर्घोकारान्तम्. ३१. अथ व्यञ्जनान्ताः. ३२. सभेदानां योनिमदादीनां वीच्यादीनां शिंशपाद्यादीनामङ्गुल्यादीनां राजादीनां स्पृक्कादीनां हरिद्रादीनां च नाम स्त्रीलिङ्गं स्यात्. ३३. शिंशपादिराकृतिगणः. ३४. हिङ्गुपत्री कम्बोजी. ३५. नसो नासिकायाः. ३६. प्राण्यङ्गवाचीकारान्तं यथा—गोधिपालिप्रभृतयः. ३७. ह्रीश्रीभूप्रभृतयः. ३८. लक्ष्मीतरीकूतूप्रभृतयः. ३९. लिदादिप्रत्ययान्ता यथा—जनता-गोत्रा-भूमि-श्रेनि-अटनि-धाणि-वेणि-काकणि-भूति-चिकीर्षाप्रभृतयः. ४०. तन्तिप्रभृतयः. ४१. अल्पे ह्रस्वे चार्थे कन्प्रत्ययान्ता यथा—क्रयिकापुटिकाप्रभृतयः.

स्रुग्गीतिलताभिदि ध्रुवा विडनरि वारि घटीभबन्धयोः ।
शल्यध्वनिवाद्यभित्सु तु क्ष्वेडा दुन्दुभिरक्षबिन्दुषु ॥ २४

गृह्या शाखापुरेऽश्मन्तेऽन्तिका कीला रताहतौ । रज्जौ रश्मिर्यवादिर्दोषादौ गञ्जा सुरागृहे ॥ २५

अहंपूर्विकादिर्वर्षामघा अप्कृत्तिका बहौ । वा तु जलौकोप्सरसः सिकतासुमनःसमाः ॥ २६

गायत्र्यादय [3]ईष्टका बृहतिका संवर्तिका सज्जिका-
दूषीके अपि पादुका झिरुकया पर्यस्तिका मानिका ।
नीका कञ्चुलिकालुका कलिकया राका पताकान्धिका
शूका पूपलिका त्रिका चविकयोल्का पञ्जिका पिण्डिका ॥ २७

ध्रुवका क्षिपका कनीनिका शम्बूका शिबिका गवेधुका ।
कणिका केका विपादिका मिहिका यूका मक्षिकाष्टका ॥ २८

कूर्चिका कूचिका टीका कोशिका कोणिकोर्मिका । जलौका प्राचिका धूका कालिका दीर्घिकोष्ट्रिका ॥

शलाका वालुकेषीका विहङ्गिकेषिके [4]उखा । परिखा विशिखा शाखा शिखा [5]भङ्गा सुरङ्गया ॥ ३०

[6]जङ्घा [7]चञ्चा [8]कच्छा पिच्छा पिञ्जा गुञ्जा खजा प्रजा । [10]झञ्झा [11]घण्टा जटा घोण्टा पोटा भिस्सटया छटा ॥ ३१

[12]विष्ठा मञ्जिष्ठया काष्ठा पाठा [13]शुण्डा गुडा जडा । वेडा वितण्डया [14]दोढा राढा रीढा च लीढया ॥ ३२

[15]घृणोर्णा वर्वणा स्थूणा दक्षिणा [16]लिखिता लता । तृणता त्रिवृता त्रेता गीता सीता सिता चिता ॥ ३३

मुक्ता वार्ता लूतानन्ता प्रसृता मार्जितामृता । [17]कन्था [18]मर्यादा गदेरुगन्धा गोधा स्वधा सुधा ॥ ३४

[20]सास्ना सूना धाना [21]पम्पा झम्पा रम्पा प्रपा [22]शिफा । [23]कम्बा [24]भम्भा सभा हम्भा [25]सीमा पामारुमे उमा ॥

[26]चिर्या पद्या पर्या योग्या छाया माया पेया कक्ष्या । दूष्या नस्या शम्या संध्या रथ्या कुल्या ज्या मङ्गल्या ॥

उपकार्या [27]जलार्द्रा प्रतिसीरा परम्परा । कण्डरा सृग्धरा होरा वागुरा शर्करा सिरा ॥ ३७

गुन्द्रा मुद्रा क्षुद्रा भद्रा भस्त्रा छत्रा यात्रा मात्रा । दंष्ट्रा [28]फेला वेला मेला गोला दोला शाला माला ३८

मेखला सिध्मला लीला रसाला सर्वेला बला । कुहाला शष्कुला हेला शिला सुवर्चला कला ॥ ३९

उपला शारिवा मूर्वा लट्वा खट्वा शिवा [30]दंशा । कशा कुशेशा [31]मञ्जूषा शेषा मूषेषया [32]हंसा ॥ ४०

वलसा विस्रसा भिस्सा नासा [33]वाह्रा गुहा स्वाहा । [34]कक्षा मिक्षा [35]रिक्षा [36]राक्षा [37]भङ्ग्यावल्यायतिखोटिः ४१

पेशिर्वासिर्वसतिविपणी [38]नाभिनाल्यालि पालिर्भल्लिः पल्लिर्भ्रुकुटिशकटी चर्वरिः शाटिभाटी ।
खाटिर्वर्तिर्व्रततिवमि[39]शुण्ठीतिरीतिर्वितर्दिर्देविर्नीविच्छविलिबिशठिश्रेढिर्जाल्याजिराजि ॥ ४२

रुचिः सूचिसाची खनिः खानिखारी खलिः कीलितूली क्रमिर्वापिधूली ।
कृषिः स्थालिहिण्डी त्रुटिर्वेदिनान्दी किकिः कुक्कुटिः काकलिः शुक्तिपङ्क्ती ॥ ४३

---

१. 'यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे' इति सूत्रोक्ता यवादयः शब्दाः, दोषादयश्चार्थाः. २. गायत्रीपङ्क्तिप्रभृतयः. ३. अथ कान्ताः. ४. खान्ताः. ५. गान्ताः. ६. घान्तः. ७. चान्तः. ८. छान्तौ. ९. जान्ताः. १०. झान्तः. ११. टान्ताः. १२. ठान्ताः. १३. डान्ताः. १४. ढान्ताः. १५. णान्ताः. १६. तान्ताः. १७. थान्तः. १८. दान्तौ. १९. धान्ताः. २०. नान्ताः. २१. पान्ताः. २२. फान्तः. २३. बान्तः. २४. भान्ताः. २५. मान्ताः. २६. यान्ताः. २७. रान्ताः. २८. लान्ताः. २९. वान्ताः. ३०. शान्ताः. ३१. षान्ताः. ३२. सान्ताः. ३३. हान्ताः. ३४. क्षान्ताः. ३५. रिक्षा यूकाण्डम्; लत्वे लिक्षा. ३६. राक्षा जतु; लत्वे लाक्षा. ३७. अथ ह्रस्वेकारान्ताः; द्वयोः समाहारः. ३८. त्रयाणां समाहारः. ३९. इतिशब्दः. ४०. जातिशब्दान्तः समाहारः.



44

किखिस्ताडिकम्बी शुतिः शारिरातिस्तटिः कोटिविष्टी वटिर्गृष्टिवीथी ।
दरिर्वल्लरिर्मञ्जरिः पुञ्जिभेरी शरारिस्तुरिः पिण्डमाढी भुषुण्ढिः ॥ ४४
राटिराटिरटविः परिपाटिः फालिगालिजनिकाकिनि कानिः ।
चारिहानिवलभि प्रधिकम्पी चुल्लिचुण्डितरयोंऽति····शाणी ॥ ४५
सनिः सानिमेनी मरिर्मोरिरश्र्योषधी विद्रधिर्झल्लरिः पारिरभ्रिः ।
शिरोधिः कविः कीर्तिर्गेश्रीकबर्यः कुमार्योढकी सेदनी ह्रादिनीली ॥ ४६
हरिण्यश्मरी कर्तनीस्थग्यपट्यः करीर्येकपद्यक्षवत्यः प्रतोली ।
कृपाणीकदल्यौ पलालींहंसन्यौ वृसी गृध्रसी घर्घरी कर्परी च ॥ ४७
काण्डी खल्ली मदी धटी गोणी षण्डाल्येषणी द्रुणी । तिलपर्णी केवली खटी नन्दीरसवत्यौ च पातली ॥
वाली गन्धोली काकली गोष्ठ्यजाजीन्द्राणी मत्स्यण्डी दामनी शिञ्जिनी च ।
शृङ्गी कस्तूरी देहली मौर्व्यैतिभ्यासन्दी क्षैरेयी दंष्ट्रुपर्शू········ ॥ ४९
कर्णान्दुकच्छू तनुरज्जुचञ्चु स्नायुंर्जुहूः सीमधुरौ स्फिगर्वाक् ।
द्वार्योदिवौ स्तुक्लगृचः शरद्वांश्छर्दिर्हरत्पामदृषद्दृशो नौः ॥ ५०

इति स्त्रीलिङ्गाधिकारः ।

---

नैलस्तुतत्तसंयुक्तरुयान्तं नपुंसकम् । वेधआदीन्विनासन्तं द्विस्वरं मेभकर्तरि ॥ ५१
धैनरत्ननभोभ्रहृषीकतमोघुसृणाङ्गणशुल्कशुभाम्बुरुहाम् ।
अघगूथजलांशुकदारुमनोविलपिच्छधनुर्दलताल्लुहृदाम् ॥ ५२
हलदुःखसुखागुरुहिङ्गुरुचलवचभेषजतुत्थकुसुम्भदृशाम् ।
मरिचास्थिशैलाभवसृक्कयकुम्भलदान्तिकवल्कलसिक्थयुधाम् ॥ ५३
सौवीरस्थानकह्लारक्षौमधौतेयकासृजाम् । लवणव्यञ्जनफलप्रसूनद्रवतां सभिद् ॥ ५४
पुरं सद्माङ्गयोश्छत्रशीर्षयोः पुण्डरीककके । मधु द्रवे ध्रुवं शश्वत्तर्कयोः खपुरं घटे ॥ ५५
अयूपे दैवेऽकार्यादौ युगं दिष्टं तथा कटु । अंसे द्वन्द्वं स्थले धन्वारिष्टमद्रुमपक्षिणोः ॥ ५६
धर्मं दानादिके तुल्यभागेऽर्धं ब्राह्मणं श्रुतौ । न्याय्ये सारं पद्ममिभबिन्दौ काममनुमतौ ॥ ५७
खलं भुवि तथा लक्षं वेध्येऽहः सुदिनैकतः । भूमोऽसंख्यात एकार्थे पथः संख्याव्ययोत्तरः ॥ ५८

---

१. चतुर्णां समाहारः. २. अथ दीर्घेकारान्ताः. ३. ईली खड्ग एकधारः. ४. हसन्त्यपि. ५. अतिमी. ६. अथ ह्रस्वोकारान्ताः. ७. अथ दीर्घोदन्ताः. ८. अथ द्योनौवर्जिता हलन्ताः. ९. अर्वागित्यव्ययमपि. १०. वार् इत्यस्य नपुंसकत्वमपि. ११. नान्ताः काञ्चनमित्यादयः, लान्ताश्चक्रवालमित्यादयः, स्त्वन्ता वस्तुमस्त्वित्यादयः, तान्ताः शीतद्वैतप्रभृतयः, त्तान्ता भित्तपित्तप्रभृतयः, संयुक्तरान्ता अग्रप्रभृतयः, संयुक्तरुशब्दान्ता अश्रुप्रभृतयः, संयुक्तयान्ता लक्ष्यद्रव्यप्रभृतयः. १२. कर्तृभिन्नार्थकमन्प्रत्ययान्ता भस्मसद्मप्रभृतयः. १३. धनादीनामघादीनां हलादीनां मरिचादीनां सौवीरादीनां लवणादीनां भेदसहितानां नाम नपुंसकम्. १४. शिलाभवं शैलेयम्. १५. अग्निसंयोगेन द्रवीभवतां सुवर्णादीनाम्. १६. छत्रे पुण्डरीकम्, शीर्षे कम्. १७. अयूपे युगम्, दैवे दिष्टम्, अकार्यमत्सरदूषणेषु कटु. १८. समासभिन्नेऽर्थे, १९. सुदिनाहम्, एकाहम्. २०. पाण्डुभूमम्, कृष्णभूमम्, इत्यादि. २१. द्विपथम्, विपथम्, इत्यादि,

द्वन्द्वैकत्वाव्ययीभावौ, क्रियाव्ययविशेषणे । [1]कृत्याः क्तानाः खल्भिन्नावे, ओ त्वाऽस्वादिः समूहजः ॥५९
[3]गायत्र्याद्यण्स्वार्थेऽव्यक्तमथानञ्कर्मधारयः । तत्पुरुषो वा बहूनां चेच्छाया शालां विना सभा ॥ ६०
राजवर्जितराजार्थराक्षसादेः परापि च । आदावुपक्रमोपज्ञे कन्थोशीनरनाम्नि च ॥ ६१
सेनाशालासुराच्छायानिशं वोर्णा शशात्परा । भाद्रणो गृहतः स्थूना [6]संख्यादन्ता शतादिका ॥६२

मौक्तिकं माक्षिकं सौप्तिकं क्षीतकं नाणकं नाटकं खेटकं तोटकम् ।
आह्निकं रूपकं जापकं जालकं वैणुकं गैरिकं कारकं वासुकम् ॥ ६३

रुचकं धान्याकनिःशलाकालीकालिकशल्कोपसूर्यकाल्कम् ।
कवककिवुकतोकतिन्तिडीकैडूकच्छत्राकत्रिकोल्मुकानि ॥ ६४

मार्द्वीककदम्बके बुकचिबुककुतुकमनूकचित्रके ।
कुब्जकं मधुपर्कशीर्षके शालूकं कुलकं प्रकीर्णकम् ॥ ६५

हल्लीसकपुष्पके खलिङ्गस्फिगमङ्गप्रगचोर्चबीजपिञ्जम् ।
[12]रिष्टं फाण्टं ललाटमिष्टव्युष्टकरोटकूपीटचीनपिष्टम् ॥ ६६

शृङ्गाटमोरटपिटान्यथ [13]पृष्ठगोष्ठे भाण्डाण्डतुण्डशौरणग्रहणेरिणानि ।
पिङ्गाणतीक्ष्णलवणद्रविणं पुराणं त्राणं शणं हिरणकारणकार्मणानि ॥ ६७

पर्याणर्णघ्राणपारायणानि श्रीपर्णोष्णे धोरणक्षूर्णभूतम् ।
प्रादेशान्ताश्मन्तशीतं निशान्तं वृन्तं तूस्तं वार्तवौहित्थमुक्थम् ॥ ६८

अच्छोदगोन्दकुसिदानि कुसीदतुन्दवृन्दास्पदं दैपदनिम्नसशिल्पतल्पम् ।
कूर्पत्रिपिष्टपपरीपवदन्तरीपरूपं च पुष्पनिकुरुम्बकुटुम्बशुल्बम् ॥ ६९

[23]प्रसभतलभगुल्माध्यात्मधामेर्मसूक्ष्मं किलिमतलिमतोक्मं युग्मतिग्मं [25]त्रिसंध्यम् ।
किसलयशयनीये सायखेयेन्द्रियाणि द्रुवयभयकैलत्रद्वापरक्षेत्रसत्रम् ॥ ७०

शृङ्गवेरमजिराभ्रपुष्करं तीरमुत्तरमगारनागरे । स्फारमक्षरकुकुन्दुरादरप्रान्तराणि शिबिरं कलेवरम् ७१

सिन्दूरमण्डूरकटीरचामरक्रूराणि दूरोंररवैरचत्वरम् ।
उशीरपर्यातालमुलूखलोर्तवे सत्त्वं च सान्त्वं दिवकिण्वपोतवम् ॥ ७२

विश्वं वृंशं पलिशमर्पिश[31]किल्विषानुतर्षापिषं मिषमृचीषमृजीषशीर्षे ।
पीयूष[32]सौध्वसमहानससाहसानि कासीसमत्ससतरसं यवसं बिसं च ॥ ७३

---

१. भावे कृत्यप्रत्ययान्ता एधनीयप्रभृतयः, भावे क्तान्ता हसितप्रभृतयः, भावेऽनान्ता हसनप्रभृतयः, भावे खल्-प्रत्ययान्ता दुर्भवदुराढ्यभवप्रभृतयः, भावे ञित्प्रत्ययान्ताः सांराविणसांकोटिनप्रभृतयः. २. 'ब्रह्मणस्त्वः' इत्यभि-व्याप्य भावार्थकप्रत्ययान्ता शुक्लत्व-शौक्ल्य-सख्य-स्तेय-कापेय-द्वैप-चापल-द्वैहायन-आचार्यक-प्रभृतयः. ३. गायत्रत्रैष्टु-भप्रभृतयः. ४. अव्यक्तलिङ्गकम्. ५. अथ 'अनञ्कर्मधारयस्तत्पुरुषः' इत्यधिक्रियते. ६. शतम्, सहस्रम्, इत्यादि. ७. अथ कान्ताः. ८. खान्ताः. ९. गान्ताः. १०. चान्तः. ११. जान्तौ. १२. टान्ताः. १३. ठान्तौ. १४. डान्ताः. १५. णान्ताः. १६. तान्ताः. १७. थान्तौ. १८. दान्ताः. १९. दं कलत्रम्; प्रमदादयोऽपि. २०. नान्तः. २१. पान्ताः. २२. बान्ताः. २३. भान्तौ. २४. मान्ताः. २५. यान्ताः. २६. रान्ताः. २७. अररं कपाटम्. २८. लान्तौ. २९. वान्ताः. ३०. शान्ताः. ३१. षान्ताः. ३२. सान्ताः.

मन्दाक्षवीक्षमथ सक्थि शेयातु यातु स्वाद्वाग्रु तुम्बुरु कशेरु शलालु चालु ।
[3]संयत्ककुन्महदहानि पृषत्पुरीतत्पर्वाणि रोम च भसच जगल्ललाम ॥ ७४

इति नपुंसकलिङ्गाधिकारः ।

---

पुंस्त्रीलिङ्गश्चतुर्दशेऽङ्के शङ्कुर्निरये च दुर्गतिः । दोर्मूले कक्ष आकरे गञ्जो भूरुहि बाणपिप्पलौ ॥ ७५
नाभिः प्राण्यङ्गके, प्रधिर्नेमौ, क्वचन बलिर्गृहे कुटः ।
श्रोण्यौषध्योः कटो, भ्रमो मोहे, पिण्डो वृन्दगोलयोः ॥ ७६
भकनीनिकयोस्तारो भेऽश्लेषहस्तश्रवणाः । कणः स्फुलिङ्गे लेशे च वराटो रज्जुशल्कयोः ॥ ७७
कुम्भः कलशौ तरणिः समुद्राकांशुयष्टिषु । भागधेयो राजदेये मेरुजम्ब्वां सुदर्शनः ॥ ७८
करेणुर्गजहस्तिन्योरल्याख्यापत्यतद्धितः । लाजवत्सदशौ भूम्नीहाद्याः प्रत्ययभेदतः ॥ ७९
[6]शुण्डिकचर्मप्रसेवकौ सल्लकमल्लकवृश्चिका अपि ।
शल्यकधुटिकौ पिपीलिकश्चुलुकहुडुकतुरुष्कतिन्दुकाः ॥ ८०
[7]शुङ्गोऽथ लञ्चभुजसांटसटाः सृपाटः कीटः किटस्फटघटा वरटः किलाटः ।
चोटश्चपेटफट[11]शुण्डगुडाः सशोर्णाः स्युर्वारिपर्णफण[13]गर्त[14]रथा[15]जमोदाः ॥ ८१
[16]विध[17]कूप[18]कलम्ब[19]जित्य[20]वेङ्कूराः सहचरमुद्गरनालिकेरहाराः ।
बहुकरकूसरौ कुठारशारौ वल्लरशफरमसूर[21]कीलरालाः ॥ ८२
पटोलः कम्बलो भल्लो [22]दंशो [23]गण्डूष[24]वेतसौ । लालसो रभसो [25]वीतिवितस्तिकुटयत्रुटिः ॥ ८३
ऊर्मिशम्यौ रत्न्यरत्नी अवीचिर्लव्यण्याणिश्रेणयः श्रोण्यरण्यौ ।
पार्ष्णिशल्यौ शाल्मलिर्यष्टिमुष्टी योनीमुन्यौ स्वातिगव्यूतिवस्त्यः ॥ ८४
मेथिर्मेधिमशी मषीषुधी ऋष्टिपाटलिजाटली ।
पृश्निस्तिथ्यशनी मणिः सृणिर्मौलिः केलिहलीमरीचयः ॥ ८५
[26]हन्वाखूकर्कन्धुसिन्धुमृत्युमन्ववट्वेर्वारुरुः । कन्दुः काकुः किष्कुर्बाहुगवेधू [27]रै [28]गौ[29]र्भाः ॥ ८६

इति पुंस्त्रीलिङ्गाः ।

---

पुंनपुंसकलिङ्गोऽब्जः शङ्खे पद्मोऽब्जसंख्ययोः । कंसो पुंसि कुशो बर्हिर्बालो ह्रीवेरकेशयोः ॥ ८७
द्वापरः संशये छेदे पिप्पलो विष्टरोतरौ । अब्दो वर्षे दरत्रासे कुकूलस्तुषपावके ॥ ८८
[30]परीवादपर्यङ्कयोजन्यतल्पौ [31]तपोघर्मवत्सानि माघोष्णहृत्सु ।
वटस्तुल्यतागोलभक्ष्येषु वर्णः सितादिस्वराद्यो रणे संपरायः ॥ ८९

---

१. अथेकारान्ताः. २. अथोकारान्ताः. ३. अथ व्यञ्जनान्ताः. ४. 'एकदशशत–' इत्यादिगणनायां चतुर्दशेऽङ्के. ५. अलेर्भ्रमरस्य नामानि. ६. अथ कान्ताः. ७. गान्तः. ८. चान्तः. ९. जान्ताः. १०. टान्ताः. ११. डान्ताः. १२. णान्ताः. १३. तान्तः. १४. थान्ताः. १५. दान्तः. १६. धान्तः. १७. पान्तः. १८. बान्तः. १९. यान्तः. २०. रान्ताः. २१. लान्ताः. २२. शान्तः. २३. षान्तः. २४. सान्ताः. २५. अथ ह्रस्वेकारान्ता यथालाभं दीर्घान्ता अपि. २६. अथोकारान्ताः. २७. ऐकारान्तः. २८. ओकारान्तः. २९. व्यञ्जनान्तः. ३०. यथासंख्येन. ३१. यथासंख्येन.

सैन्धवो लवणे, भूतः प्रेते, तमो विधुंतुदे । स्वदायौ केस्वरे, कृच्छ्रं व्रते, शुक्रोऽभिमासयोः ॥ ९०
कर्पूरस्वर्णयोश्चन्द्र उडावृक्षच्छदे दलः । धर्मः स्वभावे रुचको भूषाभिन्मातुलुङ्गयोः ॥ ९१
पाताले वाडवो वज्रः सीसे आमलकः फले । पिटङ्कलसत्त्वानि पिटकामांसजन्तुषु ॥ ९२
मेधुपिण्डौ सुरातन्वोर्नाम शेवालमध्ययोः । एकाद्रात्रः समाहारे तथा सूतककूलकौ ॥ ९३
वैनीतकभ्रमरकौ मरको वलीकवल्मीकवल्कपुलकाः फरकव्यलीकौ ।
किंजल्ककल्कमणिकस्तबकातङ्कवर्चस्कचूचुकतडाकतटाकतङ्काः ॥ ९४
बालकः फलकमालकालका मूलकस्तिलकपङ्कपातकाः ।
कोरकः करककन्दुकान्दुकाः नीकनिष्कचषका विशेषकः ॥ ९५
शाटककण्टकटङ्कविटङ्का मञ्चकमेचकनाकपिनाकाः ।
पुस्तकमस्तकमुस्तकशाका वर्णकमोदकमूषिकमुष्काः ॥ ९६
षण्डातकश्चरकरोचककञ्चुकानि मस्तिष्कयावककरण्डकतण्डकानि ।
आतङ्कशूकसरकाः कटकः सशुल्कः पिण्याकझर्झरकहंसकशङ्खपुङ्खाः ॥ ९७
नखमुखमधिकाङ्गः संयुगः पद्मरागो भगयुगमथ टङ्कोद्योगशृङ्गा निदाघः ।
क्रकचकवचकूर्चार्धर्चपुंच्छोञ्छकच्छाः व्रजमुटजनिकुञ्जौ कुञ्जमूर्जाम्बुजाश्च ॥ ९८
ध्वजमलयजकूटाः[12] कालकूटारकूटौ कवटकपटखेटाः कर्पटः पिष्टलोष्टौ ।
नटनिकटकिरीटाः कर्वटः कुक्कुटाट्टौ कुटयकुटविटानि त्र्यक्कटः कोट्टकुष्ठाः[13] ॥ ९९
कमठो वीरुण्डखण्डषण्डा निगडाक्रीडनडप्रकाण्डकाण्डाः ।
कोदण्डतरण्डमण्डमुण्डा दण्डाण्डौ दृढवीरबाणबाणाः ॥ १००
कार्षापणश्रवणपक्कणकंकणानि द्रोणापराह्णचरणानि तृणं सुवर्णम् ।
स्वर्णव्रणौ वृषणभूषणदूषणानि भाणस्तथा किणरणप्रवणानि चूर्णः ॥ १०१
तोरणपूर्तनिकेतनिवाताः पारतमन्तयुतप्रयुतानि ।
क्ष्वेडितमक्षतदैवतधूर्तैरावतलोहितहस्तशतानि ॥ १०२
व्रतोपवीतौ पलितौ वसन्तध्वान्तायुतद्यूतधृतानि पुस्तः ।
शुद्धान्तवुस्तौ रजतो मुहूर्तद्वैर्यूथयूथानि वरूथगूथौ ॥ १०३
प्रस्थं तीर्थं प्रोथमलिन्दः ककुदः कुकुदाष्टापदकुन्दाः ।
गुददोहदकुमुदच्छदकन्दार्बुदसौधंमथोत्सेधकबन्धौ ॥ १०४
श्राद्धायुधान्धौषधगन्धमादनप्रस्फोटना लग्नपिधानचन्दनाः ।
वितानराजादनशिश्नयौवनापीनोदपानासनकेतनाशनाः ॥ १०५
नलिनपुलिनमौना वर्धमानः समानौदनदिनशतमाना हायनस्थानमानाः ।
धननिधनविमानास्ताडनस्तेनवस्ता भवनभुवनयानोद्यानवातायनानि ॥ १०६

---

१. घने. २. नक्षत्रे ऋक्षम्. ३. यथासंख्येन. ४. यथासंख्येन. ५. अथ कान्ताः. ६. खान्ताः. ७. गान्ताः. ८. घान्तः. ९. चान्ताः. १०. छान्ताः. ११. जान्ताः. १२. टान्ताः. १३. ठान्तौ. १४. डान्ताः. १५. ढान्तः. १६. णान्ताः. १७. तान्ताः. १८. थान्ताः. १९. दान्ताः. २०. धान्ताः. २१. नान्ताः.

अभिधानद्वीपिनौ निपानः शयनं लशुनरसोनगृञ्जनानि ।
खलिनखलीनानुमानदीपाः कुणपकुतपावापचापशूर्पाः ॥ १०७

स्तूपोडुपौ विटपमण्डपशष्पबाष्पद्वीपानि विष्टपनिपौ [3]शेफडिम्बबिम्बाः ।
[4]जृम्भः कुसुम्भककुभौ कलभो निभो[5]ऽर्मसंक्रामसंक्रमललामहिमानि हेमः ॥ १०८

उद्यमकामोद्यामाश्रमकुट्टिमकुसुमसंगमा गुल्मः । क्षेमक्षौमौ [6]कम्बलिवाह्यौ मैरेयतूर्यौ च ॥ १०९

पूयाजन्यप्रमयसमया राजसूयो हिरण्यारण्ये संख्यं मलयवलयौ वाजपेयः कषायः ।
शल्यं कुल्याव्ययकवियवद्रोमयं फारिहार्यः [7]पारावारातिखरशिखरक्षेत्रवज्रोपवज्राः ॥ ११०

अलिंजरः कूवरकूरवेरनीहारहिञ्जीरसहस्रमेढ्राः ।
संसारसीरौ तुवरश्च सूत्रशृङ्गारपण्ड्रान्तरकर्णपूराः ॥ १११

नेत्रं वक्रपविश्रपत्रसमरोशीरान्धकारा वरः केदारप्रवरौ कुलीरशिशिरावाडम्बरो गह्वरः ।
क्षीरं कोटरचक्रचुक्रतिमिराङ्गारास्तुषारः शरः भ्राष्ट्रोपह्वरराष्ट्रतक्रजठरार्द्राः कुञ्जरः पञ्जरः ॥ ११२

कर्पूरनूपुरकुटीरविहारवारकान्तारतोमरदुरोदरवासराणि ।
कासारकेसरकरीरशरीरजीरमञ्जीरशेखरयुगंधरवज्रवप्राः ॥ ११३

[8]आलवालपलभालपलालाः पल्वलः खलचषालविशालाः ।
शूलमूलमुकुलास्तलतैलौ तूलकुड्मलतमालकपालाः ॥ ११४

कवलप्रवालबलशम्बलोत्पलोपलशीलशैलशकलाङ्कुलाञ्चलाः ।
कमलं मलं मुशलसालकुण्डलाः कललं नलं निगलनीलमङ्गलाः ॥ ११५

काकोलहलाहलौ हलं कोलाहलकङ्कालवल्कलाः । सौवर्चलधूमले फलं हालाहलजम्बालखण्डलाः ॥ ११६

लाङ्गलगरलाविन्द्रनीलगां[9]ण्डीवगाण्डिवाः । उल्वः पारशवः पार्श्वापूर्वत्रिदिवताण्डवम् ॥ ११७

निष्ठेवग्रीवशरावरावौ भावक्लीवशवानि । दैवः पूर्वः पल्लवनल्वौ [11]पांशं कुलिशं कर्कशकोशौ ॥ ११८

आकाशकाशकणिशाङ्कुशशी[12]र्षवेषोष्णीषाम्बरीषविषरोहिषमाषमेषाः ।
प्रत्यूषयूषमथ कोषकरीषकर्षवर्षामिषा [13]रसवुसेक्थसचिक्कसाश्च ॥ ११९

कर्पास आसो दिव्रसावतंसवीतंसमांसाः पनसोपवासौ ।
निर्यासमासौ चमसांसकांसलो[14]हानि बर्हो गृहगेहलोहाः ॥ १२०

पुण्याहदेहौ पटहस्तनूरुहो [15]लक्षो[16]ऽररि[17]स्थाणुकमण्डलूनि ।
चाटुश्चटुर्जन्तुकशिप्वणुस्तथा जीवातुकुस्तुम्बुरुजानुसानु ॥ १२१

कम्बुः शङ्कुर्दार्वगुरुवास्तुपलाण्डु हिङ्गुः शिग्रुर्दो[18]स्तितनुः सीध्वथ [19]भूमा ।
वेम प्रेम ब्रह्म गरुल्लोम विहायः कर्मोष्ठीवत्पक्ष्मधनुर्नाममहिम्नी ॥ १२२

इति पुंनपुंसकलिङ्गाः ।

---

१. पान्ताः. २. फान्तः. ३. बान्तौ. ४. भान्ताः. ५. मान्ताः. ६. यान्ताः. ७. रान्ताः. ८. लान्ताः. ९. तालव्यादिरपि. १०. वान्ताः. ११. शान्ताः. १२. षान्ताः. १३. सान्ताः. १४. हान्ताः. १५. क्षान्तः. १६. अररिरिकारान्तः. १७. अथोकारान्ताः. १८. दोष्शब्दस्य व्यञ्जनान्तस्यापि मध्ये पाठश्छन्दोनुरोधात्. १९. अथ व्यञ्जनान्ताः.

स्त्रीक्लीबयोर्नखं शुक्तौ विश्वं मधुकमौषधे । माने लक्षं मधौ कल्पं क्रोडाङ्के तिन्दुकं फले ॥ १२२

तरलं यवाग्वां पुष्पे पाटलं पटलं चये । वसन्ततिलकं वृत्ते कपालं भिक्षुभाजने ॥ १२३

[1]अर्धपूर्वपदो नाव[2]ष्ट्यकन्नेनटौ क्वचित् । चौरा[3]द्यमनोज्ञाद्यकञ्[4]कन्थानककशेरुके ॥ १२४

वंशिकवल्कोष्ठिक[5]कन्यकुब्जपी[6]ठानि [7]नैक्तम[8]वहित्थम् ।

[9]रशनं रसनाच्छोटनं[10]शुम्बं तुम्बं [11]महोदयं कांस्यम् ॥ १२५

मृगव्यचव्ये च वणिज्यवीर्य[12]नासीरमात्रापरमन्दिराणि ।

तमिस्रशखे नगरं मसूरलकक्षीरकादम्बर[13]कोहलानि ॥ १२६

स्थालीकदल्यौ स्थलजालपित्तलागोलायुगल्यो [14]बडिशं च [15]छर्दि च ।

[16]अलाबुजम्बू[17]रुषःसरःसदोरोदोर्चिषी दाम [18]गुणे त्रयट्तयट् ॥ १२७

इति स्त्रीनपुंसकलिङ्गाः ।

---

स्वतस्त्रिलिङ्गः सरकोऽनुतर्षे शललः शले । करकोऽब्दोपले कोशः शिम्बाखड्गपिधानयोः ॥ १२८

जीवः प्राणेषु, केदारे वलजः, पवने खलः । [19]बहुलं वृत्तनक्षत्रपुराद्याभरणाभिधा ॥ १२९

[20]भल्लातक आमलको हरीतकविभीतकौ । तारकाण्डकपिटक[21]स्फुलिङ्गा विडङ्ग[22]तेटौ ॥ १३०

पटः पुटो वटो वाटः कपाटशकटौ कटः । पेटो [23]मठः [24]कुण्डनीड[25]विषाणास्तूण[26]कङ्कतौ ॥ १३१

मुस्तः [27]कुथे[28]र्बुद[29]जृम्भ[30]दाडिमाः [31]पिठरप्रतिसरपात्रकंदराः ।

नखरो वलूरो दरः पुरश्छत्रः [32]कुवेलमृणालमण्डलाः ॥ १३२

नालप्रणालपटलार्गलशृङ्खलकन्दलाः । पूलावहेलौ [33]कलश[34]कटाहौ [35]षष्टि [36]रेण्विषु ॥ १३३

इति स्वतस्त्रिलिङ्गाः ।

---

परलिङ्गो द्वन्द्वो[37]ऽंशी, [38]ङेऽर्थो वाच्यवद[39]पत्यमिति नियताः ।

[40]अध्यारोपाभावे गुणवृत्तेराश्रयाद्वचनलिङ्गाः ॥ १३४

---

१. अर्धनावी अर्धनावम्. २. 'वैदग्ध्यं वैदग्धी, राजधानी राजधानम्, आस्थानी आस्थानम्' इत्यादयः. ३. मनोज्ञाद्यन्तर्गणवर्जितेभ्यश्चौरादिभ्यो योऽकञ्प्रत्ययस्तदन्तम् । चौरिका चौरकमित्यादि । मानोज्ञकमित्येव. ४. अथ कान्ताः. ५. जान्तः. ६. ठान्तः. ७. तान्तः. ८. थान्ताः. ९. नान्ताः. १०. बान्तौ. ११. यान्ताः. १२. रान्ताः. १३. लान्ताः. १४. शान्तः. १५. अथेकारान्तः. १६. अथोकारान्तः. १७. अथ व्यञ्जनान्ताः. १८. द्वयी द्वयम्, चतुष्टयी चतुष्टयम्. १९. बहुलं लक्ष्यानुसारेण. २०. अथ कान्ताः. २१. गान्तौ. २२. टान्ताः. २३. ठान्तः. २४. डान्तौ. २५. णान्तौ. २६. तान्तौ. २७. थान्तः. २८. दान्तः. २९. भान्तः. ३०. मान्तः. ३१. रान्ताः. ३२. लान्ताः. ३३. शान्तः. ३४. हान्तः. ३५. इकारान्तः. ३६. उकारान्तौ. ३७. अंशी तत्पुरुषो यथा—राजपुत्री, अर्धपिप्पली, द्वितीयभिक्षा, इत्येवमादयः. ३८. ङेर्यश्चतुर्थ्यर्थकोऽर्थशब्दोऽन्ते यस्य स वाच्यलिङ्गो यथा—द्विजार्थः सूपः, द्विजार्था यवागूः, द्विजार्थं पयः । ङे(ङे)ग्रहणात् धान्येनार्थो धान्यार्थ इत्येव । अर्थग्रहणात् कुण्डलहिरण्यमित्येव. ३९. अपत्यादयो नियतलिङ्गा यथा—अपत्यं दुहिता पुत्रश्च । रक्षः पुमान् स्त्री च । वेदाः प्रमाणम्, स्मृतयः प्रमाणम् । विद्या गुणः शौर्यं गुणः. ४०. गुणो विशेषणं प्रवृत्तिनिमित्तं तदाश्रया वृत्तिर्यस्य तस्य विशेष्यवशाद्वचनं लिङ्गं च भवतः । प्रवृत्तिनिमित्तस्य गुणद्रव्यक्रियाभेदात्त्रैविध्यम् । गुणवाची शुक्लः शुक्ला शुक्लम्, विद्वान् विदुषी विद्वत् ।

प्रकृतेर्लिङ्गवचने बाधन्ते स्वार्थिकाः क्वचित् । प्रकृतिर्हरीतक्यादिर्न लिङ्गमतिवर्तते ॥ १३५
वचनं तु खलतिकादिर्बह्वर्थत्वेऽति पूर्वपदभूता । स्त्रीपुंनपुंसकानां सह वचने स्यात्परं लिङ्गम् ॥ १३६
नान्ता संख्या डतिर्युष्मदस्मच्च स्युरलिङ्गकाः । पदं वाक्यमव्ययं चेत्यसंख्यं च तद्बहुलम् ॥ १३७

निःशेषनामलिङ्गानुशासनान्यभिसमीक्ष्य संक्षेपात् ।
आचार्यहेमचन्द्रः समदृभदनुशासनानि लिङ्गानाम् ॥ १३८

इत्याचार्यश्रीहेमचन्द्रविरचितं लिङ्गानुशासनं समाप्तम् ॥



द्रव्योपाधिः—दण्डी दण्डिनी दण्डि । क्रियोपाधिः—पाचकः पाचिका पाचकम् । इत्यादि । अस्त्रीति किम् । पवनाम्नो योगात्तद्भार्यायामध्यारोपेऽप्याश्रयलिङ्गतैव प्रष्ठस्य भार्या स एवायमित्यभेदोपचारेऽपि प्रष्ठी । एवं वरुणानी इन्द्रानी इत्यादयः.

१. यथा—ह्रस्वा कुटी कुटीरः. २. हरीतक्याः फलानि हरीतक्यः. ३. खलतिकस्यादूरभवानि वनानि खलतिकं वनानि. ४. बह्वर्था पूर्वपदभूता प्रकृतिर्वचनं नात्येति । यथा—पञ्चालाः कुरवः. ५. स्त्रीपुंसयोः पुंलिङ्गं यथा—स च ध्राटी च तौ । स्त्रीनपुंसकयोर्नपुंसकम् । पुंनपुंसकयोर्नपुंसकम् । स्त्रीपुंनपुंसकानां नपुंसकम् ॥

॥ श्रीः ॥

# अभिधानसंग्रहः ।

## ( ११ )

श्रीमज्जिनदेवमुनीश्वरविरचितः

## अभिधानचिन्तामणिशिलोञ्छः ।

अर्हं बीजं नमस्कृत्य गुरूणामुपदेशतः । श्रीहेमनाममालायाः शिलोञ्छः क्रियते मया ॥ १

सर्वीय इत्यपि जिने संभवः शंभवेऽपि च । श्रीसुव्रते मुनिरपि नेमौ नेमीत्यपीक्ष्यते ॥ २

षष्ठे गणेशे मण्डितपुत्रोऽपि कथितो बुधैः । मरुदेव्यपि विज्ञेया युगादिजिनमातरि ॥ ३

चक्रेश्वर्यामप्रतिचक्राप्यजितापिः कविभिरजितबला ।
श्यामा त्वच्युतदेव्यपि सुतारिकोक्ता सुतारापि ॥ ४

भद्रकृ[1]द्भद्रकरोऽपि श्रमणः श्रवणोऽपि च । भद्रं भन्द्रमपि प्राहुः प्रशस्तमपि कोविदाः ॥ ५

प्रव्रज्यापि परिव्रज्या शिष्योऽन्तेषदपि स्मृतः । इति प्रथमकाण्डस्य शिलोञ्छोऽयं समर्थितः ॥ ६

---

व्योमयानमपि प्रोक्तं विमानं बुधपुंगवैः । स्यात्समुद्रनवनीतं पेयूषमपि चामृतम् ॥ ७

कथ्यन्ते व्यन्तरा वानमन्तरा अपि सूरिभिः । द्योतस्तथा पृ[2]ष्णिर्मुष्णी प्रोक्ता रश्यभिधायकाः ॥ ८

समुद्रनवनीतं च विदुश्चन्द्रमसं बुधाः । चन्द्रिका चन्द्रिमापि स्यादिल्वला इन्वका अपि ॥ ९

अनुराधाप्यनूराधा गुरुः सप्तर्षिजोऽपि च । सौरिः सौरोऽपि राहुस्तु महकल्लोल इत्यपि ॥ १०

अभ्रपिशाचोऽपि तथा नाडिका नालिकापि च । रात्रौ यामवतीतुङ्ग्यौ निःसंपातो निशीथवत् ॥ ११

तमः स्या[3]दन्धतमसं वर्षाः स्युर्वरिषा अपि । खेऽन्तरीक्षं सांसृष्टकमपि तत्कालजे फले ॥ १२

मेघमाला कालिकापि वार्दलं चापि दुर्दिने । सूत्रामापीन्द्रे शतारः शतधारोऽपि चाशनौ ॥ १३

आश्विनेयौ स्वर्गवैद्यौ हर्यक्षोऽपि धनाधिपे । अजगवमजगावमपि शंकरधन्वनि ॥ १४

गौर्यां दाक्षायणीश्वर्यौ नारायणे जलेशयः । कौमोदकी कौपोदकी आर्द्रशब्दौ श्रियां मतौ ॥ १५

कन्तुः कंदर्पे सिद्धार्थः सुगते परिकीर्तितः । अङ्गे व्याख्याविवाहा(दा)भ्यां प्रज्ञप्तिरपि पञ्चमे ॥ १६

दृष्टिपातो द्वादशाङ्ग्यां कल्याणेऽबन्ध्यमप्यथ । निन्दा गर्हा जुगुप्साप्याक्षारणा रतिगालिषु ॥ १७

समाख्यापि समाज्ञावद्दुशतीवदुशत्यपि । काल्यापि कल्या संधायां समाधिरपि कथ्यते ॥ १८

व्रीडः सूकामन्दाक्षं च ह्रियामूहापि चोहवत् । तन्द्रिस्तन्द्री च निद्रायाम[4]हंप्रथमिकापि च ॥ १९

अहंपूर्विकायां केलीकिलोऽपि स्याद्विदूषके । मार्षवन्मारिषोऽपीति शिलोञ्छो देवकाण्डगः ॥ २०

---

१. 'भद्रोऽपि' इत्यभिधानचिन्तामणिः. २. 'घृष्णिरित्यन्ये' इत्यभिधानचिन्तामणिः. ३. 'बाहुलकाद्दीर्घत्वे—अन्धातमसमित्यपि' इत्यभिधानचिन्तामणिः. ४. 'अहमग्रिका च' इत्यभिधानचिन्तामणिः.



45

स्तनंधये स्तनपश्च क्षीरपश्चाभिधीयते । तारुण्यं स्याद्यौवनिका दशमीस्थो जरत्तरः ॥ २१

कवितापि कविः स्यात्कृतकर्मणि कृतकृत्यकृतिकृतार्थाश्च ।
कुटिलाशयोऽपि कुचरोऽन्धजडशठेष्वप्यनेडमूकस्तु ॥ २२

[1]वदन्यौ पृथगित्यन्ये दानशैलप्रियंवदौ । मूर्खे यथोद्गतोऽपीभ्ये श्रीमानपि बुधैः स्मृतः ॥ २३

विवधिकवीवधिकावपि वैवधिके प्रतिचरोऽपि भृत्ये स्यात् ।
संमार्जको बहुकरे बहुषान्यार्जक इतीष्यते च परैः ॥ २४

विहङ्गिकायां च विहङ्गमाप्यथौर्ध्वदेहिके । और्ध्वदैहिकमप्याहुरनृजौ शण्ठ इत्यपि ॥ २५
मायाविमायिकौ धूर्ते कपटे तूपधा मता । चौरश्चोरोऽपि विज्ञेयः स्तेयं स्तैन्यमपीष्यते ॥ २६
दाने प्रादेशनमपि क्षमा स्यात्क्षान्तिरित्यपि । क्रोधनः कोपनस्तृष्णक् पिपासितोऽपि कथ्यते ॥ २७
भक्षकः स्यादाशिरोऽपि मर्जितापि च मार्जिता । पेयूषमपि पीयूषं कूचिकापि च कूर्चिका ॥ २८
द्रप्से द्रप्स्यमपि प्रोक्तं विजिपिलं च पिच्छिले । व्योषे त्रिकटुकं जग्धौ जमनं जवनं तथा ॥ २९
आघ्राणोऽपि भवेत्तृप्तौ शौष्कलः पिशिताशिनि । मनोराज्यमनोगव्यावपि स्यातां मनोरथे ॥ ३०
कामुके कमनोऽपि स्यादाक्षारितोऽपि दूषिते । संशयालुः सांशयिको जागरितापि जागरी ॥ ३१
पूजितेऽपचायितोऽपि तुन्दिभोदरिकावपि । तुन्दिलो न्युब्जोऽपि कुब्जे खलतोऽप्यैन्द्रलुप्तके ॥ ३२
पामरोऽपि कच्छुरोऽतीसारक्यप्यतिसारकी । कण्डूतिरपि खर्जूतिर्विस्फोटो पिटके स्मृतः ॥ ३३
[2]कोढे मण्डलकमपि गुदकीलोऽपि वार्शसि । मेहः प्रमेहवद[3]ायुर्वेदकोऽपि चिकित्सके ॥ ३४
आयुष्मानपि दीर्घायुः कथ्यतेऽथ परीक्षकः । स्यादाक्षपाटलिकोऽपि पारिषद्योऽपि सभ्यवत् ॥ ३५
स्युर्नैमित्तिकनैमित्तमौहूर्ता गणके लिपौ । लिखितापि मषी मेला कुलिके कुलकोऽपि च ॥ ३६
अष्टापदे बुधैः शारिफलकोऽपि निगद्यते । मनोजवस्ताततुल्ये प्रभविष्णुरपि क्षमे ॥ ३७
जाङ्घिके जङ्घाकरोऽपि चानुगोऽप्यनुगामिनि । पर्येषणोपासनापि शुश्रूषायामधीयते ॥ ३८
आतिथ्योऽप्यतिथौ कुल्येऽभिजो गोत्रे तु संततिः । महेला योषिता च स्त्री तरुणी युवतीत्यपि ॥ ३९
स्ववासिनी चरिण्टी च चिरण्टी च चरण्ट्यपि । वधूट्यां पत्न्यां करात्ती गेहिनी सहधर्मिणी ॥ ४०
सधर्मचारिणी चापि स्नुषायां तु वधूट्यपि । प्रेमवत्यपि कान्तायां पणिग्राहो विवोढरि ॥ ४१
परिणेतोपयन्ता च यौतके दाय इत्यपि । दिधीषूर्दिधिषूर्जीवत्पत्नी जीवत्पतिः समे ॥ ४२
तुल्ये अवीरानिर्वीरे श्रवणाश्रवणे तथा । रण्डापि विधवा पुष्पवती स्यात्पुष्पितापि च ॥ ४३
पुष्पे कुसुममप्युक्तं पशुधर्मोऽपि मोहने । सहोदरे सगर्भोऽपि स्यादग्रजवदग्रिमः ॥ ४४
शण्ठः शठः पण्डुरपि क्लीबो माता जनित्र्यपि । चिहुरा अपि केशाः स्युः कर्णः शब्दग्रहोऽपि च ॥ ४५
नेत्रं विलोचनमपि सृक्कणीसृक्कणी अपि । दाढिका द्राढिकापि स्यात्कपोणिस्तु कफोणिवत् ॥ ४६
कूर्परे कुर्परः सिंहतले संहतलोऽपि च । चलुकोऽपि चलौ मुष्के स्यादाण्डः पेलकोऽपि च ॥ ४७
पत्पादङ्घ्रिश्च चरणे कीकसं हड्डमित्यपि । कपालं शकलमपि पृष्ठास्थनि कशारुका ॥ ४८
मज्जायामस्थितेजोऽपि नाडीषु नाडिनाटिके । शिङ्घाणकोऽपि शिङ्घाणः [4]स्तृणीका स्तृणिकापि च ॥ ४९

---

१. 'दानशीलप्रियवाचौ वदान्यौ पृथक्' इत्यभिधानचिन्तामणिः. २. 'कुण्ठयत्यङ्गम्' इत्यभिधानचिन्तामणिस्थव्युत्पत्त्या द्वितीयान्तं लभ्यते. ३. 'आयुर्वेदिकः' इत्यभिधानचिन्तामणिः. ४. 'सृणीका, सृणिका' इत्यभिधानचिन्तामणिः.

शान्तः षान्तश्च विड्गूथेऽशुचि वेशोऽपि वेषवत् । उत्सादनोच्छादने च [1]प्लवप्लावौ तथा समौ॥५०
वंशकं कृमिजग्धं चागरौ स्यादथ वाल्हिकम् । संकोचं पिशुनं वर्ण्यमसृक्संज्ञं च कुङ्कुमे ॥ ५१
जापके कालानुसार्यं यावनोऽपि च सिह्लके । मकुटोऽपि च कोटीरे चित्रकं च विशेषके ॥ ५२
वतंसोऽप्यवतंसे स्यात्पत्रभङ्ग्यां तु वल्लरी । मञ्जरी च पत्रात्पारितथ्या पर्यवतथ्यया ॥ ५३
कणान्दूरपि कर्णान्दुः परिहार्योऽपि कङ्कणः । किङ्किणी किङ्कणी तुल्ये आच्छादाच्छादने समे॥५४
कुर्पासेऽप्यङ्गिका कक्षापटे कक्षापुटोऽपि च । कुथे वर्णपरिस्तोम इत्युषण्डं जगुः परे ॥ ५५
तत्रास्तरणमिति च पल्यङ्कोऽप्यवसक्थिका । यमन्यपि प्रतिसीरा संस्तरः प्रस्तरोऽपि च ॥ ५६
पतद्ग्राहप्रतिग्राहावपि स्यातां पतद्ग्रहे । मकुरोऽप्यात्मदर्शोऽथ कशिपुः कसिपुः समे ॥ ५७
यावकालक्तकौ यावे तुल्ये व्यजनवीजने । गीरीयको गिरिकोऽपि बालक्रीडनके मतौ ॥ ५८
गण्डकोऽपि गन्दुको राट् मूर्धावसिक्त इत्यपि । भरतः सर्वदमनोऽप्यथ दाशरथावुभौ ॥ ५९
रामचन्द्ररामभद्रौ हनूमानपि मारुती । वाली सुग्रीवाग्रजोऽपि पार्थे बीभत्सुरित्यपि ॥ ६०
सातवाहनवत्सालवाहनोऽपि प्रकीर्तितः । परिच्छदे परिजनः परिवकर्णमित्यपि ॥ ६१
मन्त्री बुद्धिसहायोऽपि वेत्री वेत्रधरोऽपि च । हेमाध्यक्षे हैरिकोऽपि टङ्कपतिस्तु नैष्किके ॥ ६२
शुद्धान्ताध्यक्ष आन्तर्वेश्मिकान्तःपुरिकावपि । सहायसाप्तपदीनौ सख्यात्रसुहृदप्यरौ ॥ ६३
नये नीतिरपि स्कन्धावारेऽपि शिबिरो मतः । जयन्त्यपि वैजयन्त्यां पटाकापि प्रकीर्त्यते ॥ ६४
ध्वजः पताकादण्डोऽपि झम्फानं याप्ययानवत् । सादी सव्येष्ठोऽपि सूते कवचितोऽपि वर्मिते॥६५
कवचे दंशनं त्वक्कं तनुत्राणमपि स्मृतम् । अधियाङ्गं धियाङ्गं चाधिकाङ्गवदुदाहृतम् ॥ ६६
शिरस्कं खोलमप्याहुः स्यान्निषङ्ग्यपि तूणिनि । चापे धनूधनुशरासनान्यपि विदुर्बुधाः ॥ ६७
फरकस्फरकौ खेटे क्षुरिका छुरिका छुरी । ईलम्यां तरवालिकापि परिघः पलिघः समौ ॥ ६८
ऊर्जस्व्यूर्जस्वान्मगधो [2]मंषो बोधकरोऽर्थिकः । सौखशायनिकः सौख्यशय्यिकौ सौखसुप्तिके ॥ ६९
रणे संस्फेटसंफेटौ बले द्रविणमूर्क्तथा । अवस्कन्दोऽपि धाट्यां स्यान्नशनं च पलायने ॥ ७०
चारकोऽपि भवेद्गुप्तौ तापसे तु तपस्यपि । विप्रे ब्रह्मापि चाग्नीध्रा अनीध्रोऽप्यथ वृषी वृसी ॥ ७१
शसने शमनं चाथ दधिप्राज्यं पृषातके । अग्निहोत्र्यभ्याहितोऽप्यथोऽप्यवासे समाविमौ ॥ ७२
उपवस्त्रमौपवस्त्रमुपवीते प्रवक्ष्यते । ब्रह्मसूत्रं पवित्रं च वाल्मीकौ द्वाविमावपि ॥ ७३
मैत्रावरुण्यादिकवी पर्शुरामोऽपि भार्गवे । योगीशो याज्ञवल्क्योऽपि दाक्षीपुत्रोऽपि पाणिनौ ॥ ७४
स्फोटायनः स्फौटायनः कात्यो वररुचौ तथा । कारेणवः पालकाप्ये चाणक्यश्चणकात्मजे ॥ ७५
वैशेषके कणादोऽपि जैनोऽनेकान्तवाद्यपि । चार्वाके लौकायतिकः कृषिः [3]प्रसृतमित्यपि ॥ ७६
न्यासार्पणे परिदानं वणिक्प्रापणिकः स्मृतः । अयुते नियुतं पोते स्मृतं प्रवहणं बुधैः ॥ ७७
कर्णो पारित्रे दुर्गस्य गवेश्वरोऽपि गोमति । कर्षके क्षेत्रजीवोऽपि कोटीशो लोष्टभेदनः ॥ ७८
मार्द्वीकमपि मद्येऽनुतर्षोऽपि चषके स्मृतः । कुविन्दे तन्त्रवायोऽपि वेमा व्योमापि कीर्त्यते ॥ ७९
रजको धावकोऽप्युक्तः पादत्राणं च पादुका । तैलिकस्तैलंतुदोऽपि रथकारोऽपि वर्धकिः ॥ ८०
चित्रकारो लेखकश्च लेपकृल्लेपकोऽपि च । कुतूहले विनोदोऽपि सौनिकः खट्टिकोऽपि च ॥ ८१

---

१. 'आप्लवाप्लावौ' इत्यभिधानचिन्तामणिः. २. 'मङ्खः' इत्यभिधानचिन्तामणौ. ३. 'प्रमृतः' इत्यभिधानचिन्तामणौ.

कूटयन्त्रे पाशयन्त्रं समौ चाण्डालपुक्कसौ। इति तृतीयकाण्डस्य शिलोञ्छोऽयं समर्थितः॥ ८२

---

रत्नवती भुवि दिवस्पृथिव्यावपि रोदसी। माणिबन्धं माणिमन्तं सैन्धवे वसुके वसु॥ ८३
टङ्कनष्टङ्कण उपावर्तनं चापि नीवृति। जङ्गलः स्याज्जाङ्गलोऽपि मालवन्मालको मतः॥ ८४
पत्तने पट्टनमपि कुण्डिने कुण्डिनापुरम्। स्यात्कुण्डिनपुरमपि विपणौ पण्यवीथिका॥ ८५
सुरङ्गायां संधिरपि गृहे धाममपि स्मृतम्। उपकार्योपकर्यापि प्रसादे च प्रसादनः॥ ८६
शान्तीगृहं शान्तिगृहे प्राङ्गणं लङ्गणं मतम्। कपाटवत्कवाटोऽपि पक्षद्वारे खडक्किका॥ ८७
कुसूलवत्कुशूलोऽपि संपुटे पुट इत्यपि। पेटायां स्यात्पेटकोऽपि पेडापि कृतिनां मते॥ ८८
पवन्यपि समूहिन्यामयोर्नि मुशलं विदुः। कण्डोलके पिटकोऽपि चुल्ल्यामन्तीति कथ्यते॥ ८९
खजः खजाकोऽपि मथि विष्कम्भो कटकोऽस्य तु। अगोऽपि पर्वते क्रौञ्चः क्रोञ्चवन्मन्यते बुधैः॥९०
कखट्यपि खटिन्यां स्यात्ताम्रमौदुम्बरं विदुः। शातकुम्भमपि स्वर्णे पारदश्चपलोऽपि च॥ ९१
रसजातं रसाग्र्यं च तुत्थे दार्वीरसोद्भवे। गौक्षिके वैष्णवोऽपि स्याद्रोपित्तं हरितालके॥ ९२
मनःशिलायां नेपाली शिला च सुधियां मता। शृङ्गारमपि सिन्दूरे कुरुविन्दे तु हिङ्गुलः॥ ९३
बोलो गोपरसोऽप्युक्तो रत्नं माणिक्यमित्यपि। पद्मरागे शोणिरत्नं वैराट्टो राजपट्टवत्॥ ९४
नीलमणौ महानीलं कमन्धमपि वारिणि। धूमिकाधूममहिषी धूमर्यो महिकाः समाः॥ ९५
अकूवारोऽपि जलधौ मकरालय इत्यपि। निम्नगायां ह्रादिनी स्याज्जह्नुकन्यापि जाह्नवी॥ ९६
कलिन्दपुत्री कालिन्दी रेवा मेकलकन्यका। चान्द्रभागा चन्द्रभागा गोमती गोतमीत्यपि॥ ९७
चक्राण्यपि पुटभेदाः पङ्के चिखल्ल इत्यपि। उद्घातनोद्घाटने च घटीयन्त्रे प्रकीर्तिते॥ ९८
सरस्तडागस्तटाकोऽप्यथ तल्लश्च पल्वले। आशयाशशुष्मबर्हिर्बर्हिरुत्पदमूनसः॥ ९९
अग्नौ क्षणप्रभा विद्युद्गन्धवाहसदागती। वायौ चरणपेऽपि द्रुस्त्वक्त्वचा स्तबके पुनः॥ १००
गुलुञ्छलुञ्छयौ माकन्दरसालावपि चूतवत्। किंकिराते कुरुण्टककुरुण्डकावपि स्मृतौ॥ १०१
कर्कन्धूरपि कर्कन्धौ ह्रस्वादिश्चाटरूषकः। वाशा च स्नुहिः स्नुह्यपि पियालोऽपि प्रियालवत्॥ १०२
नार्यङ्गोऽपि च नारङ्गोऽक्षे विभेदक इत्यपि। भवेत्तमालस्तापिच्छो निर्गुण्डी सुन्दुवारवत्॥ १०३
जपा जवा मातुलुङ्गो मातुलिङ्गोऽपि कीर्तितः। धत्तूर इव धत्तूरो वंशस्त्वक्सार इत्यपि॥ १०४
ह्रीवेरं केशसलिलपर्यायैः स्मर्यते बुधैः। पङ्कजिन्यां कमलिनी कुमुदिनी कुमुद्वती॥ १०५
बिसप्रसूनं कमले कुमुत्कुमुदवन्मतम्। शेपालं च जलनीली सातीनोऽपि सतीनवत्॥ १०६
कुल्मासवत्कुल्माषोऽपि गवेधुका गवीधुका। कणिशं कनिशं रिद्धे धान्ये लावासितं मतम्॥ १०७
हालाहलं हालहलं मुस्तायां मुस्तकोऽपि च। कृमिः क्रिमिरपि गण्डूपदः किंचुलुकोऽपि च॥१०८
शम्बुका अपि शम्बूका वृश्चिको द्रुत इत्यपि। भसलो मधुकरोऽली पिक्को विक्कः करिः करी॥ १०९
व्यालो व्याडोऽप्यौपवाह्योऽप्युपवाह्योऽपि रावरा। शृङ्खले निगलोऽण्डुश्च कक्षा कक्ष्यापि वाल्हिके ११०
वाल्हीकोऽपि वल्गवागे खलिनं च खलीनवत्। मार्यो पुष्टे गोपतौ तु शंल इत्वर इत्यपि॥ १११
स्थौरी स्थूर्यपि ककुदे ककुत्ककुदमित्यपि। नैचिकं नैचिकी च स्यान्मलिनी बालगर्भिणी॥ ११२
पवित्रं गोमये छागे शुभोऽथ भषकः शुनि। सैरमा देवशुन्यां च यमरथोऽपि सैरिभे॥ ११३
पारिन्द्र इव पारीन्द्रः शरभेऽष्टापदोऽपि च। सृगालवच्छृगालोऽपि प्लवगः प्लवगोऽपि च॥ ११४
वानायुरपि वातायुरुन्दरोऽपि च मूषके। ह्रीकुर्वन्बिडालोऽपि गोकर्णोऽपि भुजंगमे॥ ११५

जलव्यालेऽलीगर्दोऽपि शेषः स्यादेककुण्डलः । आशीराशी च दंष्ट्रायां निर्मोके निलयन्यपि ॥ ११६
पतत्री पतत्रिरपि पिच्छं पिञ्छमपि स्मृतम् । परपुष्टान्यभृतौ च पिके बर्हिणि बर्हिणः ॥ ११७
वायसे बलिपुष्टोऽपि द्रोणोऽपि द्रोणकाकवत् । सारसा लक्ष्मणी कौञ्चा कुञ्चा चाषे दिविः किकी: ११८
किकिदीविरपि प्रोक्तष्टिट्टिभे टीटिभोऽपि च । कलविङ्के कुलिङ्गोऽपि दात्यूहे कालकण्ठकः ॥ ११९
दात्यूहोऽपि बलाका च बकेरुर्बिसकण्ठिका । मेधाव्यपि शुके तैलपायिकायां निशाटनी ॥ १२०
कपोते वारावतोऽपि मत्स्ये मच्छोऽथ तन्तुणे । स्मृतो वरुणपाशोऽपि नक्रे शङ्कुमुखोऽपि च ॥ १२१
उद्दारः कूर्म इत्येष तिर्यक्काण्डः शिलोञ्छितः ॥ १२२

---

नारकास्तु नैरयिकाः पाताले तु तलं रसा । इति पञ्चमकाण्डस्य शिलोञ्छोऽयं समर्थितः ॥ १२३

---

जीवोऽपि चेतने जन्तौ प्राणी जन्मोऽपि जन्मनि । जीवातुर्जीवितेऽथायुः पुंस्युदन्तोऽपि चायुषि ॥ १२४
संकल्पे स्याद्विकल्पोऽपि मनो नेन्द्रियमप्यथ । शर्म सौख्यं पीडा बाधा चर्चा चर्चोऽपि कथ्यते ॥ १२५
विप्रतीशारोऽनुशयेऽथार्था अपीन्द्रियार्थवत् । सुसीमस्तु सुषीमोऽपि कक्खटे खक्खटोऽपि च ॥ १२६
जरठे जरढोऽम्लेऽम्लो रावो रव इव स्मृतः । निषादो निषधो गर्जो गर्जा मद्रोऽपि मन्द्रवत् १२७
आकरो निकरे युग्मे जकुटोऽथ कनीयसि । कनिष्ठं विग्रहः शब्दप्रपञ्चे निखिले पुनः ॥ १२८
स्यान्निःशेषमनूनं च खण्डलं चापि खण्डवत् । मलीमसे कल्मषं च निकृष्टे याव्यरेपसी ॥ १२९
लडहं रमणीयं च रम्ये नित्ये सदातनम् । शाश्वतिकं च नेदीय इत्यन्तिकतमे स्मृतम् ॥ १३०
एकाकिन्यवगणोऽपि प्रागप्यादौ प्रकीर्तितम् । मध्यमे मध्यंदिनं च निरर्गलमनर्गले ॥ १३१
बहुरूपपृथग्रूपनानाविधाः पृथग्विधे । झम्पा झम्पो व्यवच्छिन्ने छादितं पिहितेऽपि च ॥ १३२
प्रकाशिते प्रादुष्कृतमवज्ञायामसूक्षणम् । बुधैरवमनानावगणने अपि कीर्तिते ॥ १३३
अन्दोलनमपि प्रेङ्खाथोदस्तमप्युदञ्चितम् । भिदा भिन्नोदितमपीरितेऽथाङ्गीकृते पुनः ॥ १३४
कक्षीकृतं स्वीकृतं च च्छिन्ने छातमपि स्मृतम् । प्राप्ते विन्नं विस्मृते च भवेत्प्रस्मृतमित्यपि ॥ १३५
अटाटाट्या पर्यटनमानुपूर्व्यमनुक्रमे । परीरम्भोऽपि संश्लेषे स्यादुद्घातोऽप्युपक्रमे ॥ १३६
जातौ जातमपि स्पर्धा संघर्षोऽप्यथ विक्रिया । विकारो विकृतिश्चापि विलम्भस्तु समर्पणम् ॥ १३७
दिष्ट्या समुपजोषं सर्वदा सदा सनत् सनात् । निर्भरे च सती हेतौ येन तेन च कीर्तितौ ॥ १३८
अहो संबोधनेऽपीति षष्ठ काण्डः शिलोञ्छितः ॥ १३९

---

वैक्रमेऽब्दे त्रिवस्विन्दुमिते (?) राधाद्यपक्षतौ । ग्रन्थोऽयं ददृभे श्रीमज्जिनदेवमुनीश्वरः ॥ १४०

इति हैमनाममालायाः शिलोञ्छः समर्थितः ।

---

# विज्ञापनम् ।

## प्राप्तकोषाः ।

**अमरसिंहः**—नामलिङ्गानुशासनम्. **केशवः**—कल्पद्रुः. **जिनदेवमुनीश्वरः**—अभिधानचिन्तामणिशिलोञ्छः. **दुर्गादासः**—शब्दार्णवः. **धनंजयः**—प्रमाणनाममाला. **पुरुषोत्तमदेवः**—एकाक्षरकोषः, त्रिकाण्डशेषः, द्विरूपकोषः, शब्दभेदप्रकाशः, हारावली. **भरतसेनमल्लिकः**—द्विरूपकोषः. **महीदासः**—मातृकानिघण्टुः. **महाक्षपणकः**—अनेकार्थध्वनिमञ्जरी. **महादेवः**—अव्ययकोषः. **महेश्वरः**—विश्वप्रकाशः, शब्दभेदप्रकाशः. **मेदिनिकरः**—नानार्थशब्दकोशः. **यादवः**—वैजयन्ती. **वररुचिः**—लिङ्गविशेषविधिः. **विश्वशंभुः**—एकाक्षरीनाममाला. **वेणीदत्तः**—पञ्चतत्त्वप्रकाशः. **शाश्वतः**—नानार्थसमुच्चयः. **शिवरामः**—लक्ष्मीनिवासः. **हरिदत्तः**—गणितनाममाला. **हलायुधः**—अभिधानरत्नमाला. **हर्षकीर्तिः**—शारदीनाममाला. **हेमचन्द्रः**—अनेकार्थसंग्रहः, अभिधानचिन्तामणिः, अभिधानचिन्तामणिपरिशिष्टम्, निघण्टुशेषः, लिङ्गानुशासनम्.

---

## अप्राप्तकोषाः ।

**अगस्त्यः**—शब्दसंग्रहनिघण्टुः. **अजयपालः**—नानार्थसंग्रहः. **अप्पयदीक्षितः**—नामसंग्रहमाला. **अमरसिंहः**—एकाक्षरनाममाला. **आदिनाथकविवर्यः**—कविजनसेवधिः. **कालिदासः**—प्रयुक्तपदमञ्जरी. **काशिनाथः**—शब्दार्णवः. **केशवः**—लघुनिघण्टुसारः. **क्षेमेन्द्रः**—लोकप्रकाशः. **गदसिंहः**—अनेकार्थध्वनिमञ्जरी. **गोपिनाथः**—शब्दमाला. **गोवर्धनः**—नामावली. **गोविन्दशर्मा**—शब्दसागरः. **चक्रपाणिदत्तः**—शब्दचन्द्रिका. **जटाधराचार्यः**—अभिधानतन्त्रम्. **जैमिनिः**—निघण्टुः. **तीर्थस्वामी**—कोमलकोशसंग्रहः. **त्रिविक्रमाचार्यः**—गीर्वाणभाषाभूषणम्. **दण्डनाथः**—नानार्थरत्नमाला. **दुर्गः**—नाममाला. **देवकीनन्दनः**—वैष्णवाभिधानम्. **धरणिदासः**—नानार्थसमुच्चयः. **धर्मराजः**—कविजीवनम्. **नत्किरकविः**—बालप्रबोधिका. **नन्दनभट्टाचार्यः**—वर्णाभिधानम्. **नरसिंहपण्डितः**—राजनिघण्टुः. **नारायणदासः**—राजवल्लभः. **नृसिंहमुनिः**—रत्नकोषः. **पद्मनाभः**—भूरिप्रयोगः. **पुण्डरीकविट्ठलः**—शीघ्रबोधिनीनाममाला. **पुरुषोत्तमदेवः**—वर्णदेशनम्. **पृथ्वीधराचार्यः**—रत्नकोषः. **बाणकविः**—शब्दचन्द्रिका. **बाल्हिकेयमिश्रः**—निघण्टुकैकाध्यायः. **बिह्लणः**—त्रिरूपकोषः. **भार्गवाचार्यः**—नामसंग्रहनिघण्टुः. **भोजः**—नाममाला. **मङ्खः**—मङ्खकोषः. **मथुरेशः**—शब्दरत्नावली. **मयूरः**—पदचन्द्रिका. **महीपः**—अनेकार्थतिलकः, शब्दरत्नाकरः. **माधवः**—एकाक्षरनिघण्टु. **मुरारिः**—सुप्रसिद्धपदमञ्जरी. **रत्नमालाकरः**—आयुर्वेदपर्यायरत्नमाला. **राक्षसः**—शब्दार्थनिर्णयः. **रामः**—कविदर्पणनिघण्टुः. **रामशर्मा**—उणादिकोशः. **रामेश्वरः**—शब्दमाला. **रूपचन्द्रः**—रूपमञ्जरीनाममाला. **वरदराजः**—नाममातृकानिघण्टुः. **वररुचिः**—ऐन्द्रनिघण्टुः. **वल्लभः**—कविमञ्जरी. **वामनभट्टः**—शब्दरत्नाकरः. **विक्रमादित्यः**—कविदीपिकानिघण्टुः. **विट्ठलाचार्यः**—शब्दचिन्तामणिः. **विश्वनाथः**—कोषकल्पतरुः. **वेङ्कटः**—शब्दार्थकल्पतरुः, शाब्दिकविद्वत्कविप्रमोदकः. **वेदान्ताचार्यः**—दशदीपनिघण्टुः. **शंकरः**—संयमिनाममाला. **शिवदत्तः**—शिवकोषः. **श्रीहर्षः**—द्विरूपकोषः, श्लेषार्थपदसंग्रहः. **सदाचार्यः**—एकाक्षरनिघण्टुः. **सारेश्वरः**—लिङ्गप्रकाशः. **सार्वभौममिश्रः**—भुवनप्रदीपिका. **सुन्दरगणिः**—शब्दरत्नाकरः. **सोमभवः**—अनेकार्थतिलकः. **सौभरिः**—एकार्थनाममाला, द्व्यक्षरनाममाला.

---

१. एते कोषा अस्माभिरभिधानसंग्रहे मुद्रिताः सन्ति.

एतद्भिन्नाः अमरदत्त–कात्य–गङ्गाधर–चन्द्रगोमि–तारपाल–दामोदर–धर्मदास–बोपालित–भागुरि–भोगीन्द्र–मङ्कुल–मार्तण्ड–रन्तिदेव–रभसपाल–राजशेखर–रुद्र–वाग्भट–वाचस्पति–वामन–विक्रमादित्य–विश्वरूप–व्याडि–शुभाङ्क–सज्जन–साहसाङ्क–हट्टचन्द्र–हर–इत्यादिकृताः कोषाः, अमरमाला–अशालतिप्रकाश–आनन्दकोष–एकवर्णसंग्रह–एकाक्षरकोष–उत्पलिनी–ऊष्मविवेक–कल्पतरुकोष–ग्रहाभिधान–जकारभेद–दण्डिकोष–धन्वन्तरिनिघण्टु–नक्षत्राभिधान–नानार्थमञ्जरी–पद्मकोष–वकारभेद–बीजकोष–बृहदमरकोष–महाखण्डनकोष–राजकोषनिघण्टु–लिङ्गप्रकाश–वर्णप्रकाशकोष–वात्स्यायनकोष–शब्दतरङ्गिणी–शब्ददीपिका–शब्दरत्नसमुच्चय–शब्दसारनिघण्टु–संसारावर्त–सकलग्रन्थदीपिका–सकारभेद–संजीवनी–सन्मुखवृत्तिनिघण्टु–सरसशब्दसरणि–सरस्वतीनिघण्टु–साध्यकोष–सारस्वताभिधान–हनुमन्निघण्टु-प्रभृतयः कोषाश्च सन्तीति श्रूयते। ते येषां सज्जनानां संग्रहे सन्ति, ते तेषां प्रेषणेनास्मानुपकुर्वन्त्वित्यभ्यर्थना

अभिधानसंग्रहकर्तॄणाम्।

# अभिधानसंग्रह।

प्राचीन संस्कृत ग्रन्थों के उद्धारका कार्य आजकल चारों ओर बडी धूमधामसे चल रहा है, यह अत्यन्त आनन्दकी बात है। तौभी संस्कृतभाषाज्ञान के मुख्य साधन प्राचीन कोषों की ओर जितना लक्ष्य होना चहिये उतना नहीं है। संस्कृत कोष सब श्लोकबद्ध होने के कारण कण्ठस्थ रह सकते हैं। और अवसर पर उनके श्लोकों की सद्यःस्फूर्ति होती है। इसलिये प्रत्येक संस्कृताभिमानी पुरुष को कोषों का संग्रह अवश्य कर्तव्य है। प्राचीन प्रधान कोष छप्पन[1] हैं यह लोकप्रसिद्धि है। परंतु उन में कईका तो आजकल नाममात्र ही शेष रह गया है। और जो क्वचित् उपलब्ध होते हैं उन के उद्धार कर्नेका भी यदि यत्न न किया जायगा तो उनवे भी सत्वर नष्ट होजाने का विशेष संभव है यह समझ कर, हमने बडे यत्नसे कईएक कोषों का संग्रह आजतक किया है, और अवशिष्ट कोषों की प्राप्ति के लिये भी यत्न कर रहे हैं। परंतु उनकी प्रतीक्षा न कर्के, सांप्रत जितने उपलब्ध हैं उनकोंही सब के उपयोग के लिये छापकर प्रसिद्ध कर्ना, और यही क्रम आगे भी प्रवृत्त रखना, ऐसा निश्चय किया है। यह सब कोष युगपत् एकही पुस्तक मे छापें तो काल बहुत लगैगा, और पुस्तक भी बहुत बडा हो जायगा, और उसके अनुरूप मूल्य भी अधिक होगा। इस लिये ग्राहकों के सौकर्यार्थ ऐसा नियम किया है कि जिस कोष के छापने का आरम्भ करें, उस को समाप्त करके ही खण्ड प्रकट करें। यदि छोटे छोटे कोष होंय तो एक खण्डमें दो तीन रक्खें। पुस्तक उत्तम कागदके ऊपर सुन्दर छापी जांयगी। जैसे जैसे ग्रन्थ तयार होगें वैसी वैसी उस उस समयपर सूचना दी जायगी। प्रत्येक कोष के पृष्ठाङ्क पृथक् पृथक् रहेंगे।

इस नियम के अनुसार प्रथम और द्वितीय खण्ड छप कर तयार है। प्रथम खण्ड मे अमरसिंहकृत 'नामलिङ्गानुशासन(अमरकोष)', और उसी का परिशिष्ट पुरुषोत्तमदेवकृत 'त्रिकाण्डशेष', और 'हारावली', 'एकाक्षरकोश' और 'द्विरूपकोश' ये पांच कोष संपूर्ण आये हैं। कीमत १ रुपया। और टपालखर्च २ आने है।

द्वितीयखण्ड मे हेमचन्द्रकृत 'अभिधानचिन्तामणि', 'अभिधानचिन्तामणिपरिशिष्ट', 'अनेकार्थसंग्रह', 'निघण्टुशेष' और 'लिङ्गानुशासन' ये पांच कोष और जिनदेवमुनीश्वरकृत 'अभिधानचिन्तामणिशिलोञ्छ' ये एक कोश संपूर्ण आये हैं। कीमत १। रुपया। और टपालखर्च ३ आने है।

तृतीयखण्ड मे महेश्वरकृत 'विश्वप्रकाश' और 'शब्दभेदप्रकाश' ये दो कोश आनेवाले हैं।

जिन को यह पुस्तकें लेनी हों वे अपने ग्राम और मूल्य भेजें कि पुस्तकें तयार होते ही भेजनेमें ठीक पडे।

**तुकाराम जावजी।**

'निर्णयसागर' छापेखाने के मालिक।

---

१. आगे यादी दी है उसपरसे इन कोश छप्पनसे भी जादे हैं ऐसा मालूम पडेगा।

116

